भ्यामित्याह हवीꣳषि निर्वपति गत्यै चत्वारि च ॥ अनु० ४ ॥

पञ्चमोऽनुवाकः ।

इन्द्रो वृत्रमहन् । सोऽपः । अभ्यम्रियत । तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत् । तदपोदक्रामत् । ते दर्भा अभवन् । यद्दर्भैरप उत्पुनाति । या एव मेध्या यज्ञियाः सदेवा आपः । ताभिरेवैना उत्पुनाति । द्वाभ्यामुत्पुनाति ॥ १ ॥

द्विपाद्यजमानः प्रतिष्ठित्यै । देवो वः सवितोत्पुनात्वित्याह । सवितृप्रसूत एवैना उत्पुनाति । अच्छिद्रेण पवित्रेणेत्याह । असौ वा आदित्योऽच्छिद्रं पवित्रम् । तेनैवैना उत्पुनाति । वसोः सूर्यस्य रश्मिभिरित्याह । प्राणा वा आपः । प्राणा वसवः । प्राणा रश्मयः ॥ २ ॥

प्राणैरेव प्राणान्त्सम्पृणक्ति । सावित्रियर्चा । सवितृप्रसूतं मे कर्मासदिति । सवितृप्रसूतमेवास्य कर्म भवति । पच्छो गायत्रिया त्रिष्पमृद्धत्वाय । आपो देवीरग्रे पुवो अग्रे गुव इत्याह । रूपमेवासामेतन्महिमानं व्याचष्टे । अग्र इमं यज्ञं नयताग्रे यज्ञपतिमित्याह । अग्र एव यज्ञं नयन्ति । अग्रे यज्ञपतिम् ॥ ३ ॥

युष्मानिन्द्रो वृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इत्याह। वृत्रꣳ ह हनिष्यन्निन्द्र आपो वव्रे। आपो हेन्द्रं वव्रिरे। सञ्ज्ञामेवासामेतत्सामानं व्याचष्टे। प्रोक्षिताःस्थेत्याह। तेनापः प्रोक्षिताः। अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामित्याह। यथादेवतमेवैनान् प्रोक्षति। त्रिः प्रोक्षति। त्र्यावृद्धि यज्ञः॥ ४॥

अथो रक्षसामपहत्यै। शुन्धध्वं दैव्याय कर्मणे देवयज्याया इत्याह। देवयज्याया एवैनानि शुन्धति। त्रिः प्रोक्षति। त्र्यावृद्धि यज्ञः। अथो मेध्यत्वाय। अवधूतꣳ रक्षोऽवधूता अरातय इत्याह। रक्षसामपहत्यै। अदित्यास्त्वगसीत्याह। इयं वा अदितिः॥ ५॥

अस्या एवैनत्त्वचं करोति। प्रति त्वा पृथिवी वेत्वित्याह प्रतिष्ठित्यै। पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति मेध्यत्वाय। तस्मात् पुरस्तात् प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते। तस्मात् प्रजामगं ग्राहुकाः। यज्ञो देवेभ्योऽनिलायत। कृष्णो रूपं कृत्वा। यत् कृष्णाजिने हविरध्यवहन्ति। यज्ञादेव तद्यज्ञं प्रयुङ्क्ते। हविषोऽस्कन्दाय॥ ६॥

अधिषवणमसि वानस्पत्यमित्याह। अधिषवणमे-

वैनत्करोति। प्रतित्वादित्यास्त्वग्वेत्वित्याह सत्त्वाय। अग्नेस्तनूरसीत्याह। अग्नेर्वा एषा तनूः। यदोषधयः। वाचो विसर्जनमित्याह। यदा हि प्रजा ओषधीनामश्नन्ति। अथ वाचं विसृजन्ते। देववीतये त्वा गृह्णामीत्याह ॥ ७ ॥

देवताभिरेवैनत्समर्द्धयति। अद्रिरसि वानस्पत्य इत्याह। ग्रावाणमेवैनत्करोति। स इदं देवेभ्यो हव्यꣳ सुशमिशमिष्वेत्याह* शान्त्यै। हविष्कृदेहीत्याह। य एव देवानाꣳ हविष्कृतः। तान्ह्वयति। त्रिर्ह्वयति। त्रिषत्या हि देवाः। इषमावदोर्जमावदेत्याह ॥ ८ ॥

इषमेवोर्जं यजमाने दधाति। द्युमद्वदत वयꣳ संघातं जेष्मेत्याह भ्रातृव्याभिभूत्यै। मनोः श्रद्धा देवस्य यजमानस्यासुरघ्नी वाक्। यज्ञायुधेषु प्रविष्टासीत्। तेऽसुरा यावन्तो यज्ञायुधानामुद्वदतामुपाशृण्वन्। ते पराभवन्। तस्मात् स्वानां मध्ये वसाय यजेत। यावन्तोऽस्य भ्रातृव्या यज्ञायुधानामुद्वदतामुपशृण्वन्ति। ते पराभवन्ति। उच्चैः समाहन्त वा आह विजित्यै॥ ॥ ९ ॥

* सुशमिशमिषमिष्वेत्याहेति ख पुस्तकपाठः ।

वृङ्क्ते एषामिन्द्रियं वीर्यम्। श्रेष्ठ एषां भवति। वर्षवृ-द्धमसि प्रति त्वा वर्षवृद्धं वेत्त्वित्याह। वर्षवृद्धा वा ओष-धयः। वर्षवृद्धा इषीकाः समृद्ध्यै। यज्ञꣳ रक्षाꣳस्यनुप्रा-विशन्। तान्यस्मा पशुभ्यो निरवादयन्त। तुषैरोषधी-भ्यः। परापूतꣳ रक्षः परापूता अरातय इत्याह। रक्ष-सामपहत्यै॥ १०॥

रक्षसां भागोऽसीत्याह। तुषैरेव रक्षाꣳसि निरव-दयते। अप उपस्पृशति मेध्यत्वाय। वायुर्वो विविन-क्त्वित्याह। पवित्रं वै वायुः। पुनात्येवैनान्। अन्तरि-क्षादिव वा एते प्रस्कन्दन्ति। ये शूर्पात्। देवो वः सवि-ता हिरण्यपाणिः प्रतिगृह्णात्वित्याह प्रतिष्ठित्यै। ह-विषोऽस्कन्दाय॥ त्रिष्फलीकर्त्तवा आह। त्र्यावृद्धि यज्ञः। अथो मेध्यत्वाय॥ ११॥

द्वाभ्यामुत्पुनाति रश्मयो नयन्त्यग्रे यज्ञपतिं यज्ञो-ऽदितिरस्कन्दाय गृह्णामीत्याह वदेत्याह विजित्या अप-हत्या अस्कन्दाय त्रीणि च॥ अनु० ५॥

षष्ठोऽनुवाकः।

अवधूतꣳ रक्षोऽवधूता अरातय इत्याह। रक्षसाम-पहत्यै। अदित्यास्त्वगसीत्याह। इयं वा अदितिः।

अस्या एवैनत्त्वचं करोति। प्रतित्वा पृथिवी वेत्त्वित्याह प्रतिष्ठित्यै। पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति मेध्यत्वाय। तस्मात् पुरस्तात् प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते। तस्मात् प्रजामृगं ग्राहुकाः। यज्ञो देवेभ्योनिलायत॥ १॥

कृष्णो रूपं कृत्वा। यत् कृष्णाजिने हविरधिपिनष्टि। यज्ञादेव तद्यज्ञं प्रयुङ्क्ते। हविषोऽस्कन्दाय। द्यावापृथिवी सहास्ताम्। ते शम्यामात्रमेकमहर्व्यैताꣳ शम्यामात्रमेकमहः। दिवः स्कम्भनिरसि प्रतित्वादित्यास्त्वग्वेत्त्वित्याह। द्यावापृथिव्योर्वीत्यै। धिषणासि पर्व्वत्या प्रतित्वा दिवः स्कम्भनिर्वेत्त्वित्याह। द्यावापृथिव्योर्विधृत्यै॥ ॥ २॥

धिषणासि पार्व्वतेयी प्रतित्वा पर्व्वतिर्वेत्त्वित्याह। द्यावापृथिव्योर्धृत्यै। देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्य्यू आस्ताम्। पूष्णो हस्ताभ्यामित्याह यत्यै। अधिवपामीत्याह। यथादेवतमेवैनानधिवपति। धान्यमसि धिनुहि देवानित्याह। एतस्य यजुषो वीर्य्येण॥ ॥ ३॥

यावदेका देवता कामयते यावदेका। तावदाहुतिः प्रथते। न हि तदस्ति। यत्तावदेव स्यात्। यावज्जुहोति। प्राणाय त्वापानाय त्वेत्याह। प्राणानेव यजमाने दधाति। दीर्घामनुप्रसितिमायुषे धामित्याह। आयुरेवास्मिन् दधाति। अन्तरिक्षादिव वा एतानि प्रस्कन्दन्ति॥ यानि दृषदः। देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्वित्याह प्रतिष्ठित्यै। हविषोऽस्कन्दाय। असंवपन्ती पिꣳषाणूनि कुरुतादित्याह मेध्यत्वाय॥ ४ ॥

निलायत विधृत्यै वीर्येण स्कन्दन्ति चत्वारि च ॥ अनु० ६ ॥

सप्तमोऽनुवाकः।

धृष्टिरसि ब्रह्म यच्छेत्याह धृत्यै। अपाग्नेऽग्निं मा मादं जहि निष्क्रव्यादꣳसेधा देवयजं वहेत्याह। य एवामा-क्रव्यात्। तमपहत्य। मेध्येऽग्नौ कपालमुपदधाति। निर्दग्धꣳ रक्षो निर्दग्धा अरातय इत्याह। रक्षाꣳस्येव निर्दहति। अग्निवत्युपदधाति। अस्मिन्नेव लोके ज्योतिर्धत्ते। अङ्गारमधिवर्त्तयति॥ १ ॥

अन्तरिक्ष एव ज्योतिर्धत्ते। आदित्यमेवामुष्मिँल्लोके ज्योतिर्धत्ते। ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति। य एवं वेद। ध्रुवमसि पृथिवीं दृꣳहेत्याह। पृथिवीमेवैतेन दृꣳहति। धर्त्रमस्यन्तरिक्षं दृꣳहेत्याह। अन्तरिक्षमेवैतेन दृꣳहति। धरुणमसि दिवं दृꣳहेत्याह। दिवमेवैतेन दृꣳहति ॥ २ ॥

धर्म्मासि दिशो दृꣳहेत्याह। दिश एवैतेन दृꣳहति। इमानेवैतैर्लोकान् दृꣳहति। दृꣳहन्तेऽस्मा इमे लोकाः प्रजया पशुभिः। य एवं वेद। चीण्यग्रे कपालान्युपदधाति। चय इमे लोकाः। एषां लोकानामाप्त्यै। एकमग्रे कपालमुपदधाति। एकं वा अग्रे कपालं पुरुषस्य सम्भवति ॥ ३ ॥

अथ द्वे। अथ चीणि। अथ चत्वारि। अथाष्टौ। तस्मादष्टाकपालं पुरुषस्य शिरः। यदेवं कपालान्युपदधाति। यज्ञो वै प्रजापतिः। यज्ञमेव प्रजापतिꣳ सꣳस्करोति। आत्मानमेव तत्सꣳस्करोति। तꣳ सꣳस्कृतमात्मानम् ॥ ४ ॥

अमुष्मिँल्लोकेनुपरैति। यदष्टावुपदधाति। गायत्रिया तत्सम्मितम्। यन्नव। चिवृता तत्। यद्दश। वि-

राजा तत्। यदेकादश। त्रिष्टुभा तत्। यद्द्वादश॥ ५ ॥

जगत्या तत्। छन्दःसम्मितानि स उपदधत्कपालानि। इमान् लोकाननु पूर्व्वं दिशो विधृत्यै दृꣳहति। अथायुः प्राणान् प्रजां पशून् यजमाने दधाति। स जातानस्मा अभितो बहुलान् करोति। चितः स्थेत्याह। यथा यजुरेवैतत्। भृगूणामङ्गिरसां तपसा तप्यध्वमित्याह। देवतानामेवैनानि तपसा तपति। तानि ततः सꣳस्थिते॥ यानि घर्म्मे कपालान्युपचिन्वन्ति वेधस इति चतुष्पदयर्चा विमुञ्चति। चतुष्पादः पशवः। पशुष्वेवोपरिष्टात् प्रतितिष्ठति॥ ६ ॥

वर्त्तयति दिवमेवैतेन दृꣳहति सम्भवति सꣳस्कृतमात्मानं द्वादश सꣳस्थिते चीणि च॥ अनु० ७॥

अष्टमोऽनुवाकः।

देवस्य त्वा सवितुः प्रसवइत्याह प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्य्यू आस्ताम्। पूष्णोहस्ताभ्यामित्याह यत्यै। संवपामीत्याह। यथा देवतमेवनानि संवपति। समापो अद्भिरग्मत समोषधयो रसेनेत्याह। आपो वा ओषधीर्जिन्वन्ति। ओष-

धयोऽपो जिन्वन्ति । अन्या वा एतासामन्या जिन्वन्ति ॥

॥ १ ॥

तस्मादेवमाह । सꣳरेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वमित्याह । आपो वै रेवतीः । पशवो जगतीः । ओषधयो मधुमतीः । आप ओषधीः पशून् । तानेवास्मा एकधा सꣳसृज्य । मधुमतः करोति । अद्भ्यः परिप्रजाताः स्थ समद्भिः पृच्यध्वमिति पर्य्याप्लावयति । यथा सुवृष्ट इमामनु विसृत्य ॥ २ ॥

आप ओषधीर्महयन्ति । तादृगेव तत् । जनयत्यै त्वा संयौमीत्याह । प्रजा एवैतेन दाधार । अग्नये त्वाग्नीषोमाभ्यामित्याह व्यावृत्त्यै । मखस्य शिरोऽसीत्याह । यज्ञो वै मखः । तस्यैतच्छिरः । यत् पुरोडाशः । तस्मादेवमाह ॥ ३ ॥

घर्म्मोऽसि विश्वायुरित्याह । विश्वमेवायुर्यजमाने दधाति । उरुप्रथस्वोरुते यज्ञपतिः प्रथतामित्याह । यजमानमेव प्रजया पशुभिः प्रथयति । त्वचं गृह्णीष्वेत्याह । सर्व्वमेवैनꣳ सतनु करोति । अथाप आनीय परिमार्ष्टि । माꣳस एव तत्त्वचं दधाति । तस्मात् त्वचा माꣳसं छन्नम् । घर्म्मो वा एषोऽशान्तः ॥ ४ ॥

अर्द्धमासेऽर्द्धमासे प्रवृज्यते। यत् पुरोडाशः। स ई-श्वरो यजमानꣳ शुचाप्रदहः। पर्य्यग्नि करोति। पशु-मेवैनमकः। शान्त्या अप्रदाहाय। त्रिः पर्य्यग्नि करो-ति। त्र्यावृद्धि यज्ञः। अथो रक्षसामपहत्य। अन्तरितꣳ रक्षोऽन्तरिता अरातय इत्याह॥ ५॥

रक्षसामन्तर्हित्यै। पुरोडाशं वा अधिश्रितꣳ रक्षाꣳ-स्यजिघाꣳसन्। दिवि नाको नामाग्नी रक्षोहा। स ए-वास्माद्रक्षाꣳस्यपाहन्। देवस्त्वा सविता श्रपयत्वित्या-ह। सवितृप्रसूत एवैनꣳ श्रपयति। वर्षिष्ठे अधिनाक इत्याह। रक्षसामपहत्यै। अग्निस्ते तनुवं मातिधागि-त्याहानतिदाहाय। अग्ने हव्यꣳ रक्षस्वेत्याह गुप्त्यै॥ ६॥

अविदहन्त श्रपयतेति वाचं विसृजते। यज्ञमेव हवीꣳष्यभिव्याहृत्य प्रतनुते। पुरोरुचमविदाहाय शृत्यै* करोति। मस्तिष्को वै पुरोडाशः। तं यन्नाभिवा-सयेत्। आविर्मस्तिष्कः स्यात्। अभिवासयति। तस्मा-द्गुहामस्तिष्कः। भस्मनाभिवासयति। तस्मान्माꣳसे-नास्थि च्छन्नम्॥ ७॥

वेदेनाभिवासयति। तस्मात्केशैः शिरश्छन्नं। अख-

* शृत्यै इति B चिह्नितपुस्तकपाठः।

लतिभावुको भवति। य एवं वेद। पशोर्वै प्रतिमा पुरोडाशः। सना यजुष्कमभिवास्यः। इत्थेव स्यात्। ईश्वरा यजमानस्य पशवः प्रमेतोः। सं ब्रह्मणा पृच्यस्वेत्याह। प्राणा वै ब्रह्म॥ ८ ॥

प्राणाः पशवः। प्राणैरेव पशून्त्सं पृणक्ति। न प्रमायुका भवन्ति। यजमानो वै पुरोडाशः। प्रजा पशवः पुरीषम्। यदेवमभिवासयति। यजमानमेव प्रजया पशुभिः समर्द्धयति। देवा वै हविर्भृत्वाब्रुवन्। कस्मिन्निदं म्रक्ष्यामह इति। सोऽग्निरब्रवीत् ॥ ९ ॥

मयि तनूः सन्निधध्वम्। अहं वस्तं जनयिष्यामि। यस्मिन् म्रक्ष्यध्व इति। ते देवा अग्नौ तनूः सन्यदधत। तस्मादाहुः। अग्निः सर्व्वा देवता इति। सोऽङ्गारेणापः। अभ्यपातयत्। तत एकतोऽजायत। स द्वितीयमभ्यपातयत् ॥ १० ॥

ततो द्वितोऽजायत। स तृतीयमभ्यपातयत्। ततस्त्रितोऽजायत। यदद्भ्योऽजायन्त। तदाप्यानामाप्यत्वम्। यदात्मभ्योऽजायन्त। तदात्म्यानामात्म्यत्वम्। ते देवा आप्येष्वमृजत। आप्या अमृजत सूर्य्याभ्युदिते। सूर्य्याभ्युदितः सूर्य्याभिनिम्रुक्ते ॥ ११ ॥

सूर्य्याभिनिम्रुक्तः कुनखिनि। कुनखी श्यावदति। श्यावदन्नग्रदिधिषौ। अग्रदिधिषुः परिवित्ते। परिवित्तो वीरहणि। वीरहा ब्रह्महणि। तद्ब्रह्महणं नात्यच्यवत। अन्तर्वेदि निनयत्यवरुध्यै। उल्मुकेनाभिगृह्णाति शृतत्वाय। शृतकामा इव हि देवाः ॥ १२ ॥

अन्याजिन्वन्त्यनुविस्रत्यैवमाहाशान्त आह गुथै छन्नं ब्रह्माब्रवीद् द्वितीयमभ्यपातयत् सूर्य्याभिनिम्रुक्तो देवाः ॥ अनु० ८ ॥

नवमोऽनुवाकः ।

देवस्य त्वा सवितुः प्रसव इति स्फ्यमादत्ते प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्ताम्। पूष्णो हस्ताभ्यामित्याह यत्यै। आदद इन्द्रस्य बाहुरसि दक्षिण इत्याह। इन्द्रियमेव यजमाने दधाति। सहस्रभृष्टिः शततेजा इत्याह। रूपमेवास्यै तन्महिमानं व्याचष्टे। वायुरसि तिग्मतेजा इत्याह। तेजो वै वायुः ॥ १ ॥

तेज एवास्मिन् दधाति। विपाद्वै नामासुर आसीत्। सोऽबिभेत्। यज्ञेन मा देवा अभिभविष्यन्तीति। स पृथिवीमभ्यवमीत्। सा मेध्याभवत्। अथो यदिन्द्रो

वृत्रमहन्। तस्य लोहितं पृथिवीमनु व्यधावत्। सा मेध्याभवत्। पृथिवि देवयजनीत्याह ॥ २ ॥

मेध्यामेवैनां देवयजनीं करोति। ओषध्यास्ते मूलं मा हिꣳसिषमित्याह। ओषधीनामहिꣳसायै। व्रजं गच्छ गोस्थानमित्याह। छन्दाꣳसि वै व्रजो गोस्थानः। छन्दाꣳस्येवास्मै व्रजं गोस्थानं करोति। वर्षतु ते द्यौरित्याह। वृष्टिर्वै द्यौः। वृष्टिमेवावरुन्धे। बधान देव सवितः परमस्यां परावतीत्याह ॥ ३ ॥

द्वौ वाव पुरुषौ। यश्चैव द्वेष्टि। यश्चैनं द्वेष्टि। तावुभौ बध्नाति परमस्यां परावति शतेन पाशैः। योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तमतो मामौगित्याहानिर्मुक्त्यै। अररुर्वै नामासुर आसीत्। स पृथिव्यामुपम्लुप्तो शयत्। तं देवा अपहतोऽररुः पृथिव्या इति पृथिव्या अपाघ्नन्। भ्रातृव्यो वा अररुः। अपहतोऽररुः पृथिव्या इति यदाह ॥ ४ ॥

भ्रातृव्यमेव पृथिव्या अपहन्ति। तेऽमन्यन्त। दिवं वा अयमितः पतिष्यतीति। तमररुस्ते दिवं मास्कानिति दिवः पर्यबाधन्त। भ्रातृव्यो वा अररुः। अररुस्ते दिवं मास्कानिति यदाह। भ्रातृव्यमेव दिवः परिबा-

धते। स्तम्बयजुर्हरति। पृथिव्या एव भ्रातृव्यमपहन्ति। द्वितीयꣳ हरति॥ ५॥

अन्तरिक्षादेवैनमपहन्ति। तृतीयꣳ हरति। दिव एवैनमपहन्ति। तूष्णीं चतुर्थꣳ हरति। अपरिमितादेवैनमपहन्ति। असुराणां वा इयमग्र आसीत्। यावदासीनः परापश्यति। तावद्देवानाम्। ते देवा अब्रुवन्। अस्त्वेव नो स्यामपीति॥ ६॥

कां नो दास्यथेति। यावत् स्वयं परिगृह्णीथेति। ते वसवस्त्वेति दक्षिणतः पर्य्यगृह्णन्। रुद्रास्त्वेति पश्चात्। आदित्यास्त्वेत्युत्तरतः। तेऽग्निना प्राञ्चोऽजयन्। वसुभिर्दक्षिणा। रुद्रैः प्रत्यञ्चः। आदित्यैरुदञ्चः। यस्यैवं विदुषो वेदिं परिगृह्णन्ति॥ ७॥

भवत्यात्मना। परास्य भ्रातृव्यो भवति। देवस्य सवितुः *सव इत्याह प्रसूत्यै। कर्म्म कृण्वन्ति वेधस इत्याह। इषितꣳ हि कर्म्म क्रियते। पृथिव्यै मेध्यञ्चामेध्यञ्च व्युदक्रामताम्। प्राचीनमुदीचीनं मेध्यम्। प्रतीचीनं दक्षिणा मेध्यम्। प्राचीमुदीचीं प्रवणां करोति। मेध्यामेवैनां देवयजनीं करोति॥ ८॥

* प्रसव इति D पुस्तकपाठः।

प्राञ्चीं वेद्यꣳसावुन्नयति। आहवनीयस्य परिगृहीत्यै। प्रतीची श्रोणी। गार्हपत्यस्य परिगृहीत्यै। अथो मिथुनत्वाय। उद्धन्ति। यदेवास्या अमेध्यम्। तदपहन्ति। उद्धन्ति। तस्मादोषधयः पराभवन्ति॥ ९॥

मूलं छिनत्ति। भ्रातृव्यस्यैव मूलं छिनत्ति। मूलं वा अतितिष्ठद्रक्षाꣳस्यनूत्पिपते। यद्धस्तेन छिन्द्यात्। कुनखिनीः प्रजाः स्युः। स्फ्येन छिनत्ति। वज्रो वै स्फ्यः। वज्रेणैव यज्ञाद्रक्षाꣳस्यपहन्ति। पितृदेवत्यातिखाता। इयतीं खनति॥ १०॥

प्रजापतिना यज्ञमुखेन सम्मिताम्। वेदिर्देवेभ्योऽनिलायत। तां चतुरङ्गुलेऽन्वविन्दन्। तस्माच्चतुरङ्गुलं खेया। चतुरङ्गुलं खनति। चतुरङ्गुले ह्योषधयः प्रतितिष्ठन्ति। आ प्रतिष्ठायै खनति। यजमानमेव प्रतिष्ठां गमयति। दक्षिणतो वर्षीयसीं करोति। देवयजनस्यैव रूपमकः॥ ११॥

पुरीषवतीं करोति। प्रजा वै पशवः पुरीषम्। प्रजयैवैनं पशुभिः पुरीषवन्तं करोति। उत्तरं परिग्राहं परिगृह्णाति। एतावती वै पृथिवी। यावती वेदिः। तस्या एतावत एव भ्रातृव्यं निर्भज्य। आत्मन उत्तरं प-

रिग्राहं परिगृह्णाति। ऋतमस्मृत सदनमस्मृत श्रीर-
सीत्याह। यथा यजुरेवैतत् ॥ १२ ॥

क्रूरमिव वा एतत्करोति। यद्वेदिं करोति। धा असि
स्वधा असीति योयुप्यते शान्त्यै। उर्वी चासि वस्वी चा-
सीत्याह। उर्वीमेवैनां वस्वीं करोति। पुरा क्रूरस्य वि-
सृपो विरप्शिन्नित्याह मेध्यत्वाय। उदादाय पृथिवीं
जीरदानुर्यामैरयन् चन्द्रमसि स्वधाभिरित्याह। यद्दे-
वास्या अमेध्यम्। तदपहत्य। मेध्यां देवयजनीं
कृत्वा ॥ १३ ॥

यद्दश्चन्द्रमसि मेध्यम्। तदस्यामेरयति। तां धी-
रासो अनुदृश्य यजन्त इत्याहानुख्यात्यै। *प्रोक्षणीरा-
सादय। इध्मा बर्हिरुपसादय। स्रुवञ्च स्रुचश्च सम्मृड्ढि।
पत्नीꣳ सन्नह्य। आज्येन देहीत्याहानुपूर्व्वतायै।
प्रोक्षणीरासादयति। आपो वै रक्षोघ्नीः ॥ १४ ॥

रक्षसामपहत्यै। स्फ्यस्य वर्त्मन्त्सादयति। यज्ञस्य
सन्तत्यै। उवाच हासितो दैवलः। एतावतीर्वा अमु-
ष्मिँल्लोक आप आसन्। यावतीः प्रोक्षणीरिति। त-

* प्रोक्षिणीति D पुस्तकपाठः।

स्यादृक्षीरासाद्याः। स्फ्यमुदस्यन्। यं द्विष्यात्तं ध्या-
येत्। शुचैवैनमर्पयति॥ १५॥

वै वायुराह परावतीत्याहाह द्वितीयꣳ हरतीति
परिगृह्णन्ति देवयजनीं करोति भवन्ति खनत्यकरेतत्
कृत्वा रक्षोघ्नीरर्पयति॥ अनु० ९॥

दशमोऽनुवाकः।

वज्रो वै स्फ्यः। यदन्वञ्चं धारयेत्। वज्रेऽध्वर्युः क्ष-
ण्वीत। पुरस्तात्तिर्यञ्चं धारयति। वज्रो वै स्फ्यः। वज्रे-
णैव यज्ञस्य दक्षिणतो रक्षाꣳस्यपहन्ति। अग्निभ्यां प्रा-
चश्च प्रतीचश्च। स्फ्येनोदीचश्चाधराचश्च। स्फ्येन वा
एष वज्रेणास्मै पाप्मानं भ्रातृव्यमपहत्य। उत्करेऽधि-
प्रवृश्चति॥ १॥

यथापधाय वृश्चन्त्येवम्। हस्तावव नेनिक्ते। आत्मा-
नमेव *पवते। स्फ्यं प्रक्षालयति मेध्यत्वाय। अथो पा-
प्मन एव भ्रातृव्यस्य न्यङ्गं छिनत्ति। इध्मा बर्हिरुपसा-
दयति युक्त्यै। यज्ञस्य मिथुनत्वाय। अथो पुरोरुचमे-
वैतां दधाति। उत्तरस्य कर्मणोऽनुख्यात्यै। न पुरस्तात्
प्रत्यगुपसादयेत्॥ २॥

* पवयते इति D, E पुस्तकपाठः।

यत् पुरस्तात् प्रत्यगुपसादयेत्। अन्यत्राहुतिपथा-दिध्मं प्रतिपादयेत्। प्रजा वै बर्हिः। अपराध्नुयाद्बर्हिषा प्रजानां प्रजननम्। पश्चात् प्रागुपसादयति। आहुति-पथेनेध्मं प्रतिपादयति। सम्प्रत्यैव बर्हिषा प्रजानां प्र-जननमुपैति। दक्षिणमिध्मम्। उत्तरं बर्हिः। आत्मा वा इध्मः॥ प्रजा बर्हिः। प्रजा ह्यात्मन उत्तरतरा तीर्थे। ततो मेधमुपनीय। यथादेवतमेवैनत् प्रतिष्ठापयति। प्रति-तिष्ठति प्रजया पशुभिर्यजमानः ॥ ३ ॥

वृश्चति सादयेदिध्मः पञ्च च ॥ अनु० १० ॥

तृतीयस्यां देवस्याश्वपशुं यो वै पूर्व्वेद्युः कर्म्मणेवा-मिन्द्रो वृत्रमहन्त्सोपोवधूतं धृष्टिर्देवस्येत्याह संवपामि देवस्य स्फ्यमाददे वज्रो वै स्फ्यो दश ॥ १० ॥

तृतीयस्यां यज्ञस्यानतिरेकाय पवित्रवत्यध्वर्य्युश्चा-धिषवणमस्यन्तरिक्ष एव रक्षसामन्तर्हित्यै द्वौ वाव पुरुषौ यद्दश्चन्द्रमसि मेध्यं पञ्चाशीतिः ॥ ८५ ॥

इति द्वितीयप्रपाठकः ॥

हरिः ॐ ॥

तृतीयकाण्डे तृतीयप्रपाठके

प्रथमोऽनुवाकः ।

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै । अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीत्याह मेध्यत्वाय । स्रुचः सम्मार्ष्टि । स्रुवमग्रे । पुमाꣳसमेवाभ्यः सꣳश्यति मिथुनत्वाय । अथ जुहूम् । अथोपभृतम् । अथ ध्रुवाम् । असौ वै जुहूः ॥ १ ॥

अन्तरिक्षमुपभृत् । पृथिवी ध्रुवा । इमे वै लोकाः स्रुचः । वृष्टिः सम्मार्जनानि । वृष्टिर्वा इमाँल्लोकाननुपूर्व्वं कल्पयति । ते ततः क्लृप्ताः समेधन्ते । समेधन्तेऽस्मा इमे लोकाः प्रजया पशुभिः । य एवं वेद । यदि कामयेत वर्षुकः पर्जन्यः स्यादिति । अग्रतः सम्मृज्यात् ॥ ॥ २ ॥

वृष्टिमेव नियच्छति । अर्वाचीनाग्रा हि वृष्टिः । यदि कामयेता वर्षुकः स्यादिति । मूलतः सम्मृज्यात् । वृष्टिमेवोद्यच्छति । तदु वा आहुः । अग्रत एवोपरिष्टात् सम्मृज्यात् । मूलतोऽधस्तात् । तदनुपूर्व्वं कल्पते । वर्षुको भवतीति ॥ ३ ॥

प्राचीमभ्याकारम्। अग्नेरन्तरतः। एवमिव ह्यन्नमद्यते। अथो अग्राद्वा ओषधीनामूर्जं प्रजा उपजीवन्ति। ऊर्ज एवान्नाद्यस्यावरुध्यै। अधस्तात् प्रतीचीम्। दण्डमुत्तमतः। मूलेन मूलं प्रतिष्ठित्यै। तस्मादरत्नौ प्राञ्च्युपरिष्टाल्लोमानि। प्रत्यञ्च्यधस्तात् ॥ ४ ॥

स्रुग्घ्येषा। प्राणो वै स्रुवः। जुहूर्दक्षिणो हस्तः। उपभृत्सव्यः। आत्मा ध्रुवा। अन्नꣳ सम्मार्जनानि। मुखतो वै प्राणोऽपानो भूत्वा। आत्मानमन्नं प्रविश्य। बाह्यतस्तनुवꣳ शुम्भयति। तस्मात् स्रुवमेवाग्रे सम्मार्ष्टि॥ मुखतो हि प्राणोऽपानो भूत्वा। आत्मानमन्नमाविशति। तौ प्राणापानौ। अव्यर्धुकः प्राणापानाभ्यां भवति। य एवं वेद ॥ ५ ॥

जुहूर्मृज्याद्भवतीति प्रत्यञ्च्यधस्तान्मार्ष्टि पञ्च च ॥ अनु० १ ॥

द्वितीयोऽनुवाकः।

दिवः शिल्पमवततम्। पृथिव्याः ककुभिः श्रितम्। तेन वयꣳ सहस्रवल्शेन। सपत्नं नाशयामसि स्वाहेति स्रुक्सम्मार्जनान्यग्नौ प्रहरति। आपो वै दर्भाः। रूपमेवैषामेतन्महिमानं व्याचष्टे। अनुष्टुभर्चा। आनुष्टुभः

प्रजापतिः । प्राजापत्यो वेदः । वेदस्याग्रँ स्रुक्सम्मार्ज-
नानि ॥ १ ॥

स्वेनैवैनानि छन्दसा । स्वया देवतया समर्धयति ।
अथो ऋग्वाव योषा । दर्भो वृषा । तन्मिथुनम् । मिथुन-
मेवास्य तद्यज्ञे करोति प्रजननाय । प्रजायते प्रजया
पशुभिर्यजमानः । तान्येके वृथैवापास्यन्ति । तत्तथा न
कार्य्यम् । आरब्धस्य यज्ञियस्य कर्म्मणः स विद्रोहः ॥
॥ २ ॥

यद्येनानि पशवोऽभितिष्ठेयुः । न तत्पशुभ्यः कम् ।
अद्भिर्मार्जयित्वोत्करे न्यसेत् । यद्वै यज्ञियस्य कर्म्मणो-
ऽन्यत्राहुतीभ्यः सन्तिष्ठते । उत्करो वाव तस्य प्रतिष्ठा ।
एताँ हि तस्मै प्रतिष्ठां देवाः समभरन् । यदद्भिर्मार्ज-
यति । तेन शान्तम् । यदुत्करे न्यस्यति । प्रतिष्ठामेवै-
नानि तद्गमयति ॥ ३ ॥

प्रतितिष्ठति प्रजया पशुभिर्यजमानः । अथो स्तम्ब-
स्य वा एतद्रूपम् । यत् स्रुक्सम्मार्जनानि । स्तम्बशो वा
ओषधयः । तासां जरत्कक्षे पशवो न रमन्ते । अप्रियो
ह्येषां जरत्कक्षः । यावदप्रियो ह वै जरत्कक्षः पशूनाम् ।
तावदप्रियः पशूनां भवति । यस्यैतान्यन्यत्राग्नेर्दध-

ति। नवदाव्यासु वा ओषधीषु पशवो रमन्ते ॥ ४ ॥

नवदावो ह्येषां प्रियः। यावत्प्रियो ह वै नवदावः पशूनाम्। तावत्प्रियः पशूनां भवति। यस्यैतान्यग्नौ प्रहरन्ति। तस्मादेतान्यग्नावेव प्रहरेत्। यतरस्मिन्त्समृज्यात्। पशूनां धृत्यै। यो भूतानामधिपतिः। रुद्रस्तन्तिचरो वृषा। पशूनस्माकं मा हिꣳसीः॥ एतदस्तु हुतं तव स्वाहेत्यग्निसम्मार्जनान्यग्नौ प्रहरति। एषा वा एतेषां योनिः। एषा प्रतिष्ठा। स्वामेवैनानि योनिम्। स्वां प्रतिष्ठां गमयति। प्रतितिष्ठति प्रजया पशुभिर्यजमानः ॥ ५ ॥

वेदस्याग्रꣳ स्रुक्सम्मार्जनानि विदोहो गमयति पशवो रमन्ते हिꣳसीः षट् च ॥ अनु० २॥

तृतीयोऽनुवाकः।

अयज्ञो वा एषः। यो पत्नीकः। न प्रजाः प्रजायेरन्। पत्न्यन्वास्ते। यज्ञमेवाकः। प्रजानां प्रजननाय। यत्तिष्ठन्ती सन्नह्येत। प्रियं ज्ञातिꣳ रुन्ध्यात्। आसीना सन्नह्यते। आसीना ह्येषा वीर्यं करोति ॥ १ ॥

यत्पश्चात् प्राच्यन्वासीत। अनया समदं दधीत।

देवानां पत्निया समदं दधीत। देशाद्दक्षिणत उदीच्य-न्वास्ते। आत्मनो गोपीथाय। आशासानासौ मनस-मित्याह। मेध्यामेवैनां केवलीं कृत्वा। आशिषा सम-र्द्धयति। अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कमित्या-ह। एतद्वै पत्नियै व्रतोपनयनम् ॥ २ ॥

तेनैवैनां व्रतमुपनयति। तस्मादाहुः। यश्चैवं वेद यश्च न। योक्त्रमेव युङ्क्ते। यमन्वास्ते। तस्यामुष्मिंल्लोके भवतीति योक्त्रेण। यद्योक्त्रम्। स योगः। यदास्ते। स क्षेमः ॥ ३ ॥

योगक्षेमस्य क्लृप्त्यै। युक्तं क्रियाता आशीःकामे यु-ज्याता इति। आशिषः समृद्ध्यै। ग्रन्थिं ग्रथ्नाति। आ-शिष एवास्यां परिगृह्णाति। पुमान् वै ग्रन्थिः। स्त्री पत्नी। तन्मिथुनम्। मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय। प्रजायते प्रजया पशुभिर्यजमानः ॥ ४ ॥

अथो अर्द्धो वा एष आत्मनः। यत्पत्नी। यज्ञस्य धृत्या अशिथिलम्भावाय। सुप्रजसस्त्वा वयꣳ सुपत्नी-रुपसेदिमेत्याह। यज्ञमेव तन्मिथुनीकरोति। ऊनेति-रिक्तं धीयाता इति प्रजात्यै। महीनां पयोऽस्योषधीनाꣳ रस इत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे। तस्य

ते क्षीयमाणस्य निर्वपामि देवयज्याया इत्याह। आ-
शिषमेवैतामाशास्ते ॥ ५ ॥

करोति व्रतोपनयनं क्षेमो यजमानः शास्ते ॥
अनु० ३ ॥

चतुर्थोऽनुवाकः।

घृतञ्च वै मधु च प्रजापतिरासीत्। यतो मध्वा-
सीत्। ततः प्रजा असृजत। तस्मान्मधुषि प्रजननमि-
वास्ति। तस्मान्मधुषा न प्रचरन्ति। यातयामहि।
आज्येन प्रचरन्ति। यज्ञो वा आज्यम्। यज्ञेनैव यज्ञं
प्रचरन्त्ययातयामत्वाय। पत्न्यवेक्षते ॥ १ ॥

मिथुनत्वाय प्रजात्यै। यद्वै पत्नी यज्ञस्य करोति।
मिथुनं तत्। अथो पत्निया एवैष यज्ञस्यान्वारम्भोऽन-
वच्छित्त्यै। अमेध्यं वा एतत्करोति। यत् पत्न्यवेक्षते। गा-
र्हपत्येऽधिश्रयति मेध्यत्वाय। आहवनीयमभ्युद्रवति।
यज्ञस्य सन्तत्यै। तेजोऽसि तेजोऽनु प्रेहीत्याह ॥ २ ॥

तेजो वा अग्निः। तेज आज्यम्। तेजसैव तेजः सम-
र्द्धयति। अग्निस्ते तेजो माविनैदित्याहाहिंसायै।
स्फ्यस्य वर्त्मन्त्सादयति। यज्ञस्य सन्तत्यै। अग्नेर्जिह्वा-
सि सुभूर्देवानामित्याह। यथा यजुरेवैतत्। धाम्ने धाम्ने

देवेभ्यो यजुषे यजुषे भवेत्याह। आशिषमेवैतामाशास्ते ॥ ३ ॥

तद्वा अतः पवित्राभ्यामेवोत्पुनाति। यजमानो वा आज्यम्। प्राणापानौ पवित्रे। यजमान एव प्राणापानौ दधाति। पुनराहारम्। एवमिव हि प्राणापानौ सञ्चरतः। शुक्रमसि ज्योतिरसि तेजोऽसीत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे। त्रिर्यजुषा। त्रय इमे लोकाः ॥ ४ ॥

एषां लोकानामाप्त्यै। त्रिः। व्यावृद्धि यज्ञः। अथो मेध्यत्वाय। अथाज्यवतीभ्यामपः। रूपमेवासामेतद्वर्णं दधाति। अपि वा उताहुः। यथा ह वै योषा सुवर्णं हिरण्यं पेशलं बिभ्रती रूपाण्यास्ते। एवमेता एतर्हीति। आपो वै सर्व्वा देवताः ॥ ५ ॥

एषा हि विश्वेषां देवानां तनूः। यदाज्यम्। तत्रोभयोर्मीमांसा। जामिः स्यात्। यद्यजुषाज्यं यजुषाप उत्पुनीयात्। छन्दसाप उत्पुनात्यजामित्वाय। अथो मिथुनत्वाय। सावित्रियर्चा। सवितृप्रसूतं मे कर्म्मासदिति। सवितृप्रसूतमेवास्य कर्म्म भवति॥ पच्छो गायत्रिया त्रिःषमृद्धत्वाय। अद्भिरेवौषधीः सन्नयति।

ओषधीभिः पशून्। पशुभिर्यजमानम्। शुक्रन्त्वा शुक्रायां ज्योतिस्त्वा ज्योतिष्यर्चिस्त्वार्चिषीत्याह सर्व्वत्वाय। पर्य्याप्त्या अनन्तरायाय॥ ६॥

ईक्षत आह शास्ते लोका देवता भवति षट् च॥ अनु० ४॥

पञ्चमोऽनुवाकः।

देवासुराः संयत्ता आसन्। स एतमिन्द्र आज्यस्यावकाशमपश्यत्। तेनावैक्षत। ततो देवा अभवन्। परासुराः। य एवं विद्वानाज्यमवेक्षते। भवत्यात्मना। परास्य भ्रातृव्यो भवति। ब्रह्मवादिनो वदन्ति। यदाज्येनान्यानि हवीꣳष्यभिघारयति॥ १॥

अथ केनाज्यमिति। सत्येनेति ब्रूयात्। चक्षुर्वै सत्यम्। सत्येनैवैनदभिघारयति। ईश्वरो वा एषोऽन्धो भवितोः। यश्चक्षुषाज्यमवेक्षते। निमील्यावेक्षेत। दाधारात्मं चक्षुः। अभ्याज्यं घारयति। आज्यं गृह्णाति॥ ॥ २॥

छन्दाꣳसि वा आज्यम्। छन्दाꣳस्येव प्रीणाति। चतुर्जुह्वां गृह्णाति। चतुष्पादः पशवः। पशूनेवावरुन्धे।

अष्टावुपभृति। अष्टाक्षरा गायत्री। गायत्रः प्राणः। प्राणमेव पशुषु दधाति। चतुर्ध्रुवायाम् ॥ ३ ॥

चतुष्पादः पशवः। पशुष्वेवोपरिष्टात् प्रतितिष्ठति। यजमानदेवत्या वै जुहूः। भ्रातृव्यदेवत्योपभृत्। चतुर्जुह्वां गृह्णन् भूयो गृह्णीयात्। अष्टावुपभृति गृह्णन् कनीयः। यजमानायैव भ्रातृव्यमुपस्तिं करोति। गौर्वै स्रुचः। चतुर्जुह्वां गृह्णाति। तस्माच्चतुष्पदी ॥ ४ ॥

अष्टावुपभृति। तस्मादष्टाशफा। चतुर्ध्रुवायाम्। तस्माच्चतुस्तना। गामेव तत्सꣳस्करोति। सास्मै सꣳस्कृतेषमूर्जं दुहे। यज्जुह्वां गृह्णाति। प्रयाजेभ्यस्तत्। यदुपभृति। प्रयाजानूयाजेभ्यस्तत्॥ सर्व्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यम् ॥ ५ ॥

अभिघारयति गृह्णाति ध्रुवायां चतुष्पदी प्रयाजानूयाजेभ्यस्तद्द्वे च ॥ अनु० ५ ॥

षष्ठोऽनुवाकः ।

आपो देवीरग्रे पुवो अग्रे गुव इत्याह। रूपमेवासामेतन्महिमानं व्याचष्टे। अग्र इमं यज्ञं नयताग्रे यज्ञपतिमित्याह। अग्र एव यज्ञं नयन्ति। अग्रे यज्ञपतिम्। युष्मानिन्द्रो वृणीत वृत्रतूर्य्ये यूयमिन्द्रमवृणीध्वं वृत्र-

तूर्य्य इत्याह। वृत्रꣳ ह हनिष्यन्निन्द्र आपो वव्रे। आपो हेन्द्रं वव्रिरे। सञ्ज्ञामेवासामेतत् सामानं व्याचष्टे। प्रोक्षिताः स्थेत्याह॥ १॥

तेनापः प्रोक्षिताः। अग्निर्देवेभ्योऽनिलायत। कृष्णो रूपं कृत्वा। स वनस्पतीन् प्राविशत्। कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहेत्याह। अग्नय एवैनं जुष्टं करोति। अथो अग्नेरेव मेधमवरुन्धे। वेदिरसि बर्हिषे त्वा स्वाहेत्याह। प्रजा वै बर्हिः। पृथिवी वेदिः॥ २॥

प्रजा एव पृथिव्यां प्रतिष्ठापयति। बर्हिरसि स्रुग्भ्यस्त्वा स्वाहेत्याह। प्रजा वै बर्हिः। यजमानः स्रुचः। यजमानमेव प्रजासु प्रतिष्ठापयति। दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य प्रोक्षति। एभ्य एवैनं लोकेभ्यः प्रोक्षति। अथ ततः सह स्रुचा पुरस्तात् प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति। प्रजा वै बर्हिः। यथा सूत्यै काल आपः पुरस्ताद्यन्ति॥ ३॥

तादृगेव तत्। स्वधा पितृभ्य इत्याह। स्वधाकारो हि पितृणाम्। ऊर्ग्भव बर्हिषद्भ्य इति दक्षिणायै श्रोणेरोत्तरस्यै निनयति सन्तत्यै। मासा वै पितरो बर्हिषदः। मासानेव प्रीणाति। मासा वा ओषधीर्वर्द्धयन्ति।

मासाः पचन्ति समृद्ध्यै । अनतिस्कन्दन् ह पर्जन्यो वर्षति । यत्रैतदेवं क्रियते ॥ ४ ॥

ऊर्जा पृथिवीं गच्छतेत्याह । पृथिव्यामेवोर्जं दधाति । तस्मात् पृथिव्या ऊर्जा भुञ्जते । ग्रन्थिं विस्रंऽसयति । प्रजनयत्येव तत् । ऊर्ध्वं प्राञ्चमुद्गूढं प्रत्यञ्चमायच्छति । तस्मात् प्राचीनऽ रेतो धीयते । प्रतीचीः प्रजा जायन्ते । विष्णोः स्तूपोसीत्याह । यज्ञो वै विष्णुः ॥ ॥ ५ ॥

यज्ञस्य धृत्यै । पुरस्तात् प्रस्तरं गृह्णाति । मुख्यमेवैनं करोति । इयं तं गृह्णाति । प्रजापतिना यज्ञमुखेन सम्मितम् । इयं तं गृह्णाति । यज्ञपुरुषा सम्मितम् । इयं तं गृह्णाति । एतावद्वै पुरुषे वीर्य्यम् । वीर्य्यसम्मितम् ॥६॥

अपरिमितं गृह्णाति । अपरिमितस्यावरुध्यै । तस्मिन् पवित्रे अपि सृजति । यजमानो वै प्रस्तरः । प्राणापानौ पवित्रे । यजमान एव प्राणापानौ दधाति । ऊर्णाम्रदसन्त्वा स्तृणामीत्याह । यथा यजुरेवैतत् । स्वासस्थं देवेभ्य इत्याह । देवेभ्य एवैनत्स्वासस्थं करोति ॥ ॥ ७ ॥

बर्हिः स्तृणाति । प्रजा वै बर्हिः । पृथिवी वेदिः । प्रजा

एव पृथिव्यां प्रतिष्ठापयति। अनतिदृश्नꣳ स्तृणाति। प्रजयैवैनं पशुभिरनतिदृश्नं करोति। धारयन् प्रस्तरं परिधीन् परिदधाति। यजमानो वै प्रस्तरः। यजमान एव तत्स्वयं परिधीन् परिदधाति। गन्धर्व्वोऽसि विश्वावसुरित्याह ॥ ८ ॥

विश्वमेवायुर्यजमाने दधाति। इन्द्रस्य बाहुरसि दक्षिण इत्याह। इन्द्रियमेव यजमाने दधाति। मित्रावरुणौ त्वोत्तरतः परिधत्तामित्याह। प्राणापानौ मित्रावरुणौ। प्राणापानावेवास्मिन्दधाति। सूर्य्यस्त्वा पुरस्तात् पात्वित्याह। रक्षसामपहत्यै। कस्याश्चिदभिशस्त्या इत्याह। अपरिमितादेवैनं पाति ॥ ९ ॥

वीतिहोत्रं त्वा कव इत्याह। अग्निमेव होत्रेण समर्द्धयति। द्युमन्तꣳ समिधीमहीत्याह समिध्यै। अग्ने बृहन्तमध्वर इत्याह वृध्यै। विशो यन्त्रे स्थ इत्याह। विशां यत्यै। उदीचीनाग्रे निदधाति प्रतिष्ठित्यै। वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीदेत्याह। देवतानामेव सदने प्रस्तरꣳ सादयति। जुहूरसि घृताचीनाम्नेत्याह ॥ १० ॥

असौ वै जुहूः। अन्तरिक्षमुपभृत्। पृथिवी ध्रुवा।

तासामेतदेव प्रियं नाम*। यद् घृताचीति। यद् घृताचीत्याह। प्रियेणैवैना नाम्ना सादयति। एता असदन्त्सुकृतस्य लोक इत्याह। सत्यं वै सुकृतस्य लोकः। सत्य एवैनाः सुकृतस्य लोके सादयति॥ ता विष्णो पाहीत्याह। यज्ञो वै विष्णुः। यज्ञस्य धृत्यै। पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियमित्याह। यज्ञाय यजमानायात्मने। तेभ्य एवाशिषमाशास्ते नार्त्यै॥ ११॥

स्वेत्याह पृथिवी वेदिर्यन्ति क्रियते विष्णुर्वीर्य्यसंमितं करोत्याह पाति नामेत्याह लोके सादयति षट् च॥ अनु० ६॥

सप्तमोऽनुवाकः।

अग्निना वै होत्रा। देवा असुरानभ्यभवन्। अग्नये समिध्यमानायानुब्रूहीत्याह भ्रातृव्याभिभूत्यै। एकविꣳशतिमिध्मदारूणि भवन्ति। एकविꣳशो वै पुरुषः। पुरुषस्याप्त्यै। पञ्चदशेध्मदारूण्यभ्यादधाति। पञ्चदश वा अर्द्धमासस्य रात्रयः। अर्द्धमासशः संवत्सर आप्यते। त्रीन् परिधीन् परिदधाति॥ १॥

ऊर्द्ध्वे समिधावादधाति। अनूयाजेभ्यः समिधम-

* धामेति D पुस्तकपाठः।

तिशिनष्टि। षट् सम्पद्यन्ते । षड्वा ऋतवः । ऋतूनेव प्रीणाति । वेदेनोपवाजयति । प्राजापत्यो वै वेदः । प्राजापत्यः प्राणः । यजमान आहवनीयः। यजमान एव प्राणं दधाति ॥ २ ॥

त्रिरुपवाजयति। त्रयो वै प्राणाः। प्राणानेवास्मिन् दधाति। वेदेनोपयत्य स्रुवेण प्राजापत्यमाघारमाघारयति। यज्ञो वै प्रजापतिः। यज्ञमेव प्रजापतिं मुखत आरभते*।अथो प्रजापतिः सर्व्वा देवताः। सर्व्वा एव देवताः प्रीणाति । अग्निमग्नीत्त्रिस्त्रिः सम्मृड्ढीत्याह । त्र्यावृद्धि यज्ञः ॥ ३ ॥

अथो रक्षसामपहत्यै । परिधीन्त्सम्मार्ष्टि। पुनात्येवैनान्। त्रिस्त्रिः सम्मार्ष्टि। त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय। अथो एते वै देवाश्वाः। देवाश्वानेव तत्सम्मार्ष्टि। सुवर्गस्य लोकस्य समष्ट्यै। आसीनोऽन्यमाघारमाघारयति ॥ ४ ॥

तिष्ठन्नन्यम्। यथा नौ वा रथं वा युञ्ज्यात्। एवमेव तदध्वर्युर्यज्ञं† युनक्ति। सुवर्गस्य लोकस्याभ्यूढ्यै ।

---

* आलभते इति D पुस्तकपाठः ।

† अध्वर्य्युर्युनक्तीति D पुस्तकपाठः ।

वहन्त्येनं ग्राम्याः पशवः। य एवं वेद। भुवनमसि वि-
प्रथस्वेत्याह। यज्ञो वै भुवनम्। यज्ञ एव यजमानं प्रज-
या पशुभिः प्रथयति। अग्ने यष्टरिदं नम इत्याह ॥ ५ ॥

अग्निर्वै देवानां यष्टा। य एव देवानां यष्टा। तस्मा
एव नमस्करोति। जुह्वेह्यग्निस्त्वाह्वयति देवयज्याया
उपभृदेहि देवस्त्वा सविताह्वयति देवयज्याया इत्या-
ह। आग्नेयी वै जुहूः। सावित्र्युपभृत्। ताभ्यामेवैने
प्रसूत आदत्ते। अग्नाविष्णू मावामवक्रमिषमित्याह।
अग्निः पुरस्तात्। विष्णुर्यज्ञः पश्चात् ॥ ६ ॥

ताभ्यामेव प्रतिप्रोच्यात्याक्रामति। विजिहाथां मा
मा सन्तासमित्याहाहिंसायै। लोकं मे लोककृतौ
कृणुतमित्याह। आशिषमेवैतामाशास्ते। विष्णोः स्था-
नमसीत्याह। यज्ञो वै विष्णुः। एतत् खलु वै देवाना-
मपराजितमायतनम्। यद्यज्ञः। देवानामेवापराजित
आयतने तिष्ठति। इत इन्द्रो अकृणोद्वीर्याणीत्याह ॥
॥ ७ ॥

इन्द्रियमेव यजमाने दधाति। समारभ्योर्ध्वो अध्व-
रो दिविस्पृशमित्याह* वृध्यै। आघारमाघार्यमाणम-

* दिविस्पृश इत्याहेति D पुस्तकपाठः।

नुसमारभ्यं। एतस्मिन् काले देवाः सुवर्गं लोकमायन्। साक्षादेव यजमानः सुवर्गं लोकमेति। अथो समृद्धेनैव यज्ञेन यजमानः सुवर्गं लोकमेति। अहुतो यज्ञो यज्ञपतेरित्याहानार्त्यै। इन्द्रावान्त्स्वाहेत्याह। इन्द्रियमेव यजमाने दधाति। बृहद्भा इत्याह ॥ ८ ॥

सुवर्गो वै लोको बृहद्भाः। सुवर्गस्य लोकस्य समष्ट्यै। यजमानदेवत्या वै जुहूः। भ्रातृव्यदेवत्योपभृत्। प्राण आघारः। यत्सꣳस्पर्शयेत्। भ्रातृव्येऽस्य प्राणं दध्यात्। असꣳस्पर्शयन्नत्याक्रामति। यजमान एव प्राणं दधाति। पाहि माग्ने दुश्चरितादा मा सुचरिते भजेत्याह ॥ ९ ॥

अग्निर्वाव पवित्रम्। वृजिनमनृतं दुश्चरितम्। ऋजुकर्मꣳ सत्यꣳ सुचरितम्। अग्निरेवैनं वृजिनादनृताद्दुश्चरितात्पाति। ऋजुकर्मे सत्ये सुचरिते भजति। तस्मादेवमाशास्ते। आत्मनो गोपीथाय। शिरो वा एतद्यज्ञस्य। यदाघारः। आत्मा ध्रुवा ॥ १० ॥

आघारमाघार्य्य ध्रुवाꣳ समनक्ति। आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति। द्विः समनक्ति। द्वौ हि प्राणापानौ। तदाहुः। त्रिरेव समञ्ज्यात्। त्रिधातु हि शिर

इति । शिर इवैतद्यज्ञस्य । अथो* वयो वै प्राणः । प्राणानेवास्मिन्दधाति ॥ मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्तामित्याह । ज्योतिरेवास्मा उपरिष्टाद्दधाति । सुवर्गस्य लोकस्यानुख्यात्यै ॥ ११ ॥

परिदधाति प्राणं दधाति हि यज्ञो धारयति नम इत्याह पश्चाद्दीर्य्याणीत्याह भा इत्याह भजेत्याह ध्रुवैवास्मिन्दधाति चीणि च ॥ अनु० ७ ॥

अष्टमोऽनुवाकः ।

धिष्णिया वा एते न्युप्यन्ते । यद्ब्रह्मा । यद्धोता । यदध्वर्युः । यदग्नीत् । यद्यजमानः । तान्यदन्तरेयात् । यजमानस्य प्राणान्त्सङ्कर्षेत् । प्रमायुकः स्यात् । पुरोडाशमपगृह्य सञ्चरत्यध्वर्युः ॥ १ ॥

यजमानायैव तल्लोकꣳ शिꣳषति । नास्य प्राणान् सङ्कर्षति । न प्रमायुको भवति । पुरस्तात् प्रत्यङ्ङासीनः । इडाया इडामादधाति । हस्त्याꣳ होत्रे । पशवो वा इडा । पशवः पुरुषः । पशुष्वेव पशून् प्रतिष्ठापयति† । इडायै वा एषा प्रजातिः ॥ २ ॥

* अथो इति पाठः D पुस्तके नास्ति ।

† प्रतितिष्ठतीति D पुस्तकपाठः ।

तां प्रजातिं यजमानोऽनु प्रजायते। द्विरङ्गुलावनक्ति पर्व्वणोः। द्विपाद्यजमानः प्रतिष्ठित्यै। सकृदुपस्तृणाति। द्विरादधाति। सकृदभिघारयति। चतुः सम्पद्यते। चत्वारि वै पशोः प्रतिष्ठानानि। यावानेव पशुः। तमुपह्वयते ॥ ३ ॥

मुखमिव प्रत्युपह्वयते। सम्मुखानेव पशूनुपह्वयते। पशवो वा इडा। तस्मात् सान्वारभ्या। अध्वर्य्युणा च यजमानेन च। उपहूतः पशुमानसानीत्याह। उप ह्येनौ ह्वयते होता। इडायै देवतानामुपहवे। उपहूतः पशुमान् भवति। य एवं वेद ॥ ४ ॥

यां वै हस्त्यामिडामादधाति। वाचः सा भागधेयम्। यामुपह्वयते। प्राणानाᳬ सा। वाचञ्चैव प्राणाᳬश्चावरुन्धे। अथ वा एतर्ह्युपहूतायामिडायाम्। पुरोडाशस्यैव बर्हिषदो मीमाᳬसा। यजमानं* देवा अब्रुवन्। हविर्नो निर्वपेति। नाहमभागो निर्वप्स्यमीत्यब्रवीत् ॥ ॥ ५ ॥

न मयाभागयानुवक्ष्यथेति वागब्रवीत्। नाहमभागा पुरोनुवाक्या भविष्यामीति पुरोनुवाक्या। नाह-

* तं देवा इति D पुस्तकपाठः।

मभागा याज्या भविष्यामीति याज्या। न मयाभागेन वषट्करिष्यथेति वषट्कारः। यद्यजमानभागं निधाय पुरोडाशं बर्हिषदं करोति। तानेव तद्भागिनः करोति। चतुर्द्धा करोति। चतस्रो दिशः। दिक्ष्वेव प्रतितिष्ठति। बर्हिषदं करोति॥ ६॥

यजमानो वै पुरोडाशः। प्रजा बर्हिः। यजमानमेव प्रजासु प्रतिष्ठापयति। तस्मादस्थान्याः प्रजाः प्रतितिष्ठन्ति। माꣳसेनान्याः। अथो खल्वाहुः। दक्षिणा वा एता हविर्यज्ञस्यान्तर्वेद्यवरुध्यन्ते। यत् पुरोडाशं बर्हिषदं करोतीति। चतुर्द्धा करोति। चत्वारो ह्येते हविर्यज्ञस्यर्त्विजः॥ ७॥

ब्रह्मा होताध्वर्य्युरग्नीत्। तमभिमृशेत्। इदं ब्रह्मणः। इदꣳ होतुः। इदमध्वर्य्योः। इदमग्नीध इति। यथैवादः सौम्येऽध्वरे। आदेशमृत्विग्भ्यो दक्षिणानीयन्ते। तादृगेव तत्। अग्नीधे प्रथमाया दधाति॥ ॥ ८॥

अग्निमुखा ह्यृद्धिः। अग्निमुखामेवर्द्धिं यजमान ऋध्नोति। सकृदुपस्तीर्य्य द्विरादधत्। उपस्तीर्य्य द्विरभिघारयति। षट् सम्पद्यन्ते। षड्वा ऋतवः। ऋतूनेव

प्रीणाति। वेदेन ब्रह्मणे ब्रह्मभागं परिहरति। प्राजापत्यो वै वेदः। प्राजापत्यो ब्रह्मा ॥ ९ ॥

सविता यज्ञस्य प्रसूत्यै। अथ काममन्येन। ततो होत्रे। मध्यं वा एतद्यज्ञस्य। यद्धोता। मध्यत एव यज्ञं प्रीणाति। अथाध्वर्य्यवे। प्रतिष्ठा वा एषा यज्ञस्य। यदध्वर्य्युः। तस्माद्धविर्यज्ञस्यैतामेवावृतमनु ॥ १० ॥

अन्या दक्षिणानीयन्ते। यज्ञस्य प्रतिष्ठित्यै। अग्निमग्नीत्सम्मृत्संकृत् सम्मृढ्ढीत्याह। पराङिव ह्येतर्हि यज्ञः। इषिता दैव्या होतार इत्याह। इषितꣳ हि कर्म्म क्रियते। भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीत्याह। आशिषमेवैतामाशास्ते। स्वगा दैव्या होतृभ्य इत्याह। यज्ञमेव तत्स्वगा करोति॥ स्वस्तिर्मानुषेभ्य इत्याह। आशिषमेवैतामाशास्ते। शंयोर्ब्रूहीत्याह। शंयुमेव बार्हस्पत्यं भागधेयेन समर्द्धयति ॥ ॥ ११ ॥

चरत्यध्वर्य्युः प्रजातिर्ह्रियते वेदाब्रवीद्धविषदं करोत्यृत्विजो दधाति ब्रह्मानकरोति चत्वारि च ॥

अनु० ८ ॥

नवमोऽनुवाकः।

अथ स्रुचावनुष्टुग्भ्यां वाजवतीभ्यां व्यूहति। प्रतिष्ठा वा अनुष्टुक्। अन्नं वाजः प्रतिष्ठित्यै। अन्नाद्यस्यावरुध्यै। प्राचीं जुहूमूहति। जातानेव भ्रातृव्यान् प्रणुदते। प्रतीचीमुपभृतम्। जनिष्यमाणानेव प्रतिनुदते। सर्विषूच एवापोह्य सपत्नान् यजमानः। अस्मिँल्लोके प्रतितिष्ठति॥ १॥

द्वाभ्यां। द्विप्रतिष्ठो हि। वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वेत्याह। यथा यजुरेवैतत्। स्रुक्षु प्रस्तरमनक्ति। इमे वै लोकाः स्रुचः। यजमानः प्रस्तरः। यजमानमेव तेजसानक्ति। त्रेधानक्ति। त्रय इमे लोकाः॥ २॥

एभ्य एवैनं लोकेभ्योऽनक्ति। अभिपूर्वमनक्ति। अभिपूर्वमेव यजमानं तेजसानक्ति। अक्तꣳ रिहाणा इत्याह। तेजो वा आज्यम्। यजमानः प्रस्तरः। यजमानमेव तेजसानक्ति। वियन्तु वय इत्याह। वय एवैनं कृत्वा। सुवर्गं लोकं गमयति॥ ३॥

प्रजां योनिं मा निर्मृक्षमित्याह। प्रजायै गोपीथाय। आप्यायन्तामाप ओषधय इत्याह। आप एवौषधीराप्याययति। मरुतां पृषतयस्थेत्याह। मरुतो वै

वृष्ट्या ईशते। वृष्टिमेवावरुन्धे। दिवं गच्छ ततो नो वृष्टिमेरयेत्याह। वृष्टिर्वै द्यौः। वृष्टिमेवावरुन्धे ॥ ॥ ४ ॥

यावद्वा अध्वर्युः प्रस्तरं प्रहरति। तावदस्यायुर्मीयते। आयुष्पा अग्नेऽस्यायुर्मे पाहीत्याह। आयुरेवात्मन्धत्ते। यावद्वा अध्वर्युः प्रस्तरं प्रहरति। तावदस्य चक्षुर्मीयते। चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीत्याह। चक्षुरेवात्मन्धत्ते। ध्रुवासीत्याह प्रतिष्ठित्यै। यं परिधिं पर्य्यधत्था* इत्याह ॥ ५ ॥

यथा यजुरेवैतत्। अग्ने देवपणिभिर्वीयमाण इत्याह। अग्नय एवैनं जुष्टं करोति। तं त एतमनु जोषम्भरामीत्याह। स जातानेवास्मा अनुकान् करोति। नेदेष त्वदपचेतया ता इत्याहानुख्यात्यै। यज्ञस्य पाथ उपसमितमित्याह। भूमानमेवोपैति। परिधीन् प्रहरति। यज्ञस्य समिष्ट्यै ॥ ६ ॥

स्रुचौ सम्प्रस्रावयति। यदेव तत्र क्रूरम्। तत्तेन शमयति। जुह्वामुपभृतम्। यजमानदेवत्या वै जुहूः। भ्रातृव्यदेवत्योपभृत्। यजमानायैव भ्रातृव्यमुपस्तिं

* पर्य्यधत्ता इति D) पुस्तकपाठः।

करोति। सꣳस्रावभागाः स्थेत्याह। वसवो वै रुद्रा आदित्याः सꣳस्रावभागाः। तेषां तद्भागधेयम् ॥ ७ ॥

तानेव तेन प्रीणाति। वैश्वदेव्यर्चा। एते हि विश्वे देवाः। त्रिष्टुग्भवति। इन्द्रियं वै त्रिष्टुक्। इन्द्रियमेव यजमाने दधाति। अग्नेर्वामपन्नगृहस्य सदसि सादयामीत्याह। इयं वा अग्निरपन्नगृहः। अस्या एवैने सदने सादयति। सुम्नाय सुम्निनी सुम्ने माधत्तमित्याह ॥ ८ ॥

प्रजा वै पशवः सुम्नम्। प्रजामेव पशूनात्मन्धत्ते। धुरि धुर्यौ पातमित्याह। जायापत्योर्गोपीथाय। अग्ने दब्धायो शीततनो इत्याह। यथा यजुरेवैतत्। पाहि माद्यदिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादित्याह। आशिषमेवैतामाशास्ते। अविषन्नः पितुं कृणु सुषदा योनिꣳ स्वाहेतीध्म संनहनान्यन्वाहार्यपचनेऽभ्याधाय फलीकरणहोमं जुहोति। अतिरिक्तानि वा इध्मसंनहनानि ॥ ९ ॥

अतिरिक्ताः फलीकरणाः। अतिरिक्तमाज्योच्छेपणम्। अतिरिक्त एवातिरिक्तं दधाति। अथो अतिरिक्तेनैवातिरिक्तमाप्त्वावरुन्धे। वेदिर्देवेभ्योऽनिलायत।

तां वेदेनान्वविन्दन्। वेदेन वेदिं विविदुः पृथिवीम्। सा पप्रथे पृथिवी पार्थिवानि। गर्भं बिभर्त्ति भुवनेष्व-न्तः। ततो यज्ञो जायते विश्वदानिरिति पुरस्तात्स्तम्ब-यजुषो वेदेन वेदिꣳ सम्मार्ष्ट्यनुवित्त्यै ॥ १० ॥

अथो यद्वेदश्च वेदिश्च भवतः। मिथुनत्वाय प्रजा-त्यै। प्रजापतेर्वा एतानि श्मश्रूणि। यद्वेदः। पत्निया उपस्थ आस्यति। मिथुनमेव करोति। विन्दते प्रजाम्। वेदꣳ होताहवनीयात्स्तृणन्नेति। यज्ञमेव तत्सन्तनो-त्योत्तरस्मादर्द्धमासात्। तꣳ सन्ततमुत्तरेऽर्द्धमास आ-लभते ॥ ११ ॥

तं काले काल आगते यजते। ब्रह्मवादिनो वदन्ति। स त्वा अध्वर्युः स्यात्। यो यतो यज्ञं प्रयुङ्क्ते। तदेनं प्रतिष्ठापयतीति। वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते। देवा गातु विदो गातुं वित्वा गातुमितेत्याह। यत एव यज्ञं प्रयुङ्क्ते। तदेनं प्रतिष्ठापयति। प्रतितिष्ठति प्रजया प-शुभिर्यजमानः ॥ १२ ॥

तिष्ठंतोमे लोका गमयति द्यौर्वृष्टिमेवावरुन्धे पर्य्य-धत्था इत्याह समिध्यै भागधेयं धत्तमित्याह वा इध्म संवृश्चनान्यनुवित्त्यै लभते यजमानः ॥ अनु० ९ ॥

दशमोऽनुवाकः।

यो वा अयथादेवतं यज्ञमुपचरति। आ देवताभ्यो वृश्च्यते। पापीयान् भवति। योऽयथादेवतम्। न देवताभ्य आवृश्च्यते। वसीयान् भवति। वारुणो वै पाशः। इमं विष्यामि वरुणस्य पाशमित्याह*। वरुणपाशादेवैनां मुञ्चति। सवितृप्रसूतो यथादेवतम्॥ १॥

न देवताभ्य आवृश्च्यते। वसीयान् भवति। धातुश्च योनौ सुकृतस्य लोक इत्याह। अग्निर्वै धाता। पुण्यं कर्म्म सुकृतस्य लोकः। अग्निरेवैनां धाता। पुण्ये कर्म्मणि सुकृतस्य लोके दधाति। स्योनं मे सहपत्याकरोमीत्याह। आत्मनश्च यजमानस्य चानार्त्यै सन्त्वाय। समायुषा सम्प्रजयेत्याह॥ २॥

आशिषमेवैतामाशास्ते पूर्णपात्रे। अन्ततोऽनुष्टुभा। चतुष्पदा एतच्छन्दः प्रतिष्ठितं पत्नियै पूर्णपात्रे भवति। अस्मिँल्लोके प्रतितिष्ठानीति। अस्मिन्नेव लोके प्रतितिष्ठति। अथो वाग्वा अनुष्टुक्। वाङ्मिथुनम्। आपो रेतः प्रजननम्। एतस्माद्वै मिथुनाद्विद्योतमानस्तनयन् वर्षति। रेतः सिञ्चन्॥ ३॥

* पाशः इत्याहेति D पुस्तकपाठः।

प्रजाः प्रजनयन्। यद्वै यज्ञस्य ब्रह्मणा युज्यते। ब्रह्मणा वै तस्य विमोकः। अद्भिः शान्तिः। विमुक्तं वा एतर्हि योक्त्रं ब्रह्मणा। आदायैनत्पत्नी सहाप उपगृह्णीते शान्त्यै। अञ्जलौ पूर्णपात्रमानयति। रेत एवास्यां प्रजां दधाति। प्रजया हि मनुष्यः पूर्णः। मुखं विमृष्टे॥ अवभृथस्यैव रूपं कृत्वोत्तिष्ठति ॥ ४ ॥

सवितृप्रसूतो यथादेवतं प्रजयेत्याह सिञ्चन् मृष्ट एकञ्च ॥ अनु० १० ॥

एकादशोऽनुवाकः।

परिवेषो वा एष वनस्पतीनाम्। यदुपवेषः। य एवं वेद। विन्दते परिवेष्टारम्। तमुत्करे। यं देवा मनुष्येषु। उपवेषमधारयन्। ये अस्मदपचेतसः। तानस्मभ्यमिहाकुरु। उपवेषोपविड्ढि नः ॥ १ ॥

प्रजां पुष्टिमथो धनम्। द्विपदो नश्चतुष्पदः। ध्रुवाननपगान् कुर्विति पुरस्तात् प्रत्यञ्चमुपगूहति। तस्मात् पुरस्तात् प्रत्यञ्चः शूद्रा अवस्यन्ति। स्थविमत उपगूहति। अप्रतिवादिन एवैनान् कुरुते*। धृष्टिर्वा उपवेषः।

* करोतीति [illegible] पुस्तकपाठः।

शुचार्त्तो वज्रो ब्राह्मणा सꣳशितः। योपवेषे शुक्। सा-
मुमृच्छतु यं द्विष्म इति ॥ २ ॥

अथास्मै नाम गृह्य प्रहरति। निरमुन्नुद ओकसः।
सपत्नो यः पृतन्यति। निर्बाध्येन हविषा। इन्द्र एणं
पराशरीत्। इहि तिस्रः परावतः। इहि पञ्च जनाँ
अति। इहि तिस्रोतिरोचनायावत्। सूर्यो असद्दिवि।
परमां त्वा परावतम् ॥ ३ ॥

इन्द्रो नयतु वृत्रहा। यतो न पुनरायसि। शश्व-
तीभ्यः समाभ्य इति। चिवृद्वा एष वज्रो ब्रह्मणा सꣳ-
शितः। शुचैवैनं विद्ध्वा। एभ्यो लोकेभ्यो निर्णुद्य। व-
ज्रेण ब्रह्मणा स्तृणुते। हतोऽसाववधिष्मामुमित्याह
स्तृत्यै। यं द्विष्यात्तं ध्यायेत्। शुचैवैनमर्पयति ॥
॥ ४ ॥

नो द्विष्म इति परावतमर्पयति ॥ अनु० ११ ॥

प्रत्युष्टं दिवः शिल्पमयज्ञो घृतञ्च वै देवासुराः स
एतमिन्द्र आपो देवीरग्निना* धिष्णिया अथ स्रुचौ यो
वा अयथादेवतं परिवेषो वा एकादश ॥ ११ ॥

---

* देवीरर्गाग्निनेति E पुस्तकपाठः।

प्रत्युष्टमर्यज्ञ एषा हि विश्वेषां देवानामूर्जा पृथिवी-
मथो रक्षसां तां प्रजातिं दाभ्यां तं काले काले नव-
सन्ततिः ॥ ७९ ॥

इति तृतीयप्रपाठकः ॥

हरिः ॐ ।

तृतीयकाण्डे चतुर्थप्रपाठके

प्रथमोऽनुवाकः ।

ब्रह्मणे ब्राह्मणमालभते । क्षत्राय राजन्यम् । मरु-
द्भ्यो वैश्यम् । तपसे शूद्रम् । तमसे तस्करम् । नारकाय
वीरहणम् । पाप्मने क्लीबम् । आक्रमायायोगूम् । का-
माय-पुंश्चलूम् । अतिक्रुष्टाय मागधम् ॥ १ ॥

गीताय सूतम् । नृत्ताय शैलूषम् । धर्माय सभाचरम् ।
नर्माय रेभम् । नरिष्ठायै भीमलम् । हसाय कारिम् ।
आनन्दाय स्त्रीषखम् । प्रमुदे कुमारीपुत्रम् । मेधायै
रथकारम् । धैर्याय तक्षाणम् ॥ २ ॥

श्रमाय कौलालम् । मायायै कार्मारम् । रूपाय
मणिकारम् । शुभे वपम् । शरव्याया इषुकारम् । हेत्यै

धन्वकारम्। कर्म्मणे ज्याकारम्। दिष्टाय रज्जुसर्गम्।
मृत्यवे मृगयुम्। अन्तकाय श्वनितम्॥ ३॥
सन्धये जारम्। गेहायोपपतिम्। निर्ऋत्यै परिवि-
त्तम्। आर्त्यै परिविविदानम्। अराध्यै दिधिषूप-
तिम्। पवित्राय भिषजम्। प्रज्ञानाय नक्षत्रदर्शम्।
निष्कृत्यै पेशस्कारीम्। बलायोपदाम्। वर्णायानूरु-
धम्॥ ४॥
नदीभ्यः पौञ्जिष्टम्। ऋक्षीकाभ्यो नैषादम्। पुरुष-
व्याघ्राय दुर्म्मदम्। प्रयुद्भ्य उन्मत्तम्। गन्धर्वाप्सराभ्यो
व्रात्यम्। सर्पदेवजनेभ्यो प्रतिपदम्। अवेभ्यः कितवम्।
इर्य्यताया अकितवम्। पिशाचेभ्यो बिदलकारम्। या
तुधानेभ्यः कण्टककारम्॥ ५॥
उत्सादेभ्यः कुब्जम्। प्रमुदे वामनम्। द्वार्भ्यः स्रामम्।
स्वप्नायान्धम्। अधर्म्माय बधिरम्। सञ्ज्ञानाय स्मर-
कारीम्। प्रकामोद्यायोपसदम्। आशिक्षायै प्रश्नि-
नम्। उपशिक्षाया अभिप्रश्निनम्। मर्य्यादायै प्रश्न-
विवाकम्॥ ६॥
ऋत्यै स्तेनहृदयम्। वैरहत्याय पिशुनम्। विवित्त्यै
क्षत्तारम्। औपद्रष्टाय सङ्ग्रहीतारम्। बलायानुच-

रम्। भूम्ने परिष्कन्दम्। प्रियाय प्रियवादिनम्। अरिष्ट्या अश्वसादम्। मेधाय वासः पल्पूलीम्। प्रकामाय रजयित्रीम्॥ ७॥

भायै दार्वाहारम्। प्रभाया आग्नेन्धम्। नाकस्य पृष्ठायाभिषेक्तारम्। ब्रध्नस्य विष्टपाय पात्रनिर्णेगम्। देवलोकाय पेशितारम्। मनुष्यलोकाय प्रकरितारम्। सर्व्वेभ्यो लोकेभ्य उपसेक्तारम्। अवर्त्यै वधायोपमन्थितारम्। सुवर्गाय लोकाय भागदुघम्। वर्षिष्ठाय नाकाय परिवेष्टारम्॥ ८॥

अर्मेभ्यो हस्तिपम्। जवायाश्वपम्। पुष्ट्यै गोपालम्। तेजसेऽजपालम्। वीर्य्यायाविपालम्। इरायै कीनाशम्। कीलालाय सुराकारम्। भद्राय गृहपम्। श्रेयसे वित्तधम्। अध्यक्षायानुक्षत्तारम्॥ ९॥

मन्यवे यस्तापम्। क्रोधाय निसरम्। शोकायाभिसरम्। उत्कूलविकूलाभ्यां त्रिस्थिनम्। योगाय योक्तारम्। क्षेमाय विमोक्तारम्। वपुषे मानस्कृतम्। शीलायां जनीकारम्। निर्ऋत्यै कोशकारीम्। यमायास्वम्॥ १०॥

यम्यै यमस्वम्। अथर्वभ्योऽवतोकाम्। संवत्सराय

पर्य्यारिणीम्। परिवत्सरायाविजाताम्। इदावत्स-रायापस्कद्वरीम्। इद्वत्सरायातीत्वरीम्। वत्सराय विजर्ज्जराम्। सम्वत्सराय पलिक्नीम्। वनाय वन-पम्। अन्यतोऽरण्याय दावपम्॥ ११॥

सरोभ्यो धैवरम्। वेशन्ताभ्यो दाशम्। उपस्थाव-रीभ्यो वैन्दम्। नड्वलाभ्यः शौष्कलम्। पार्य्याय कैव-र्त्तम्। अवार्य्याय मार्गारम्। तीर्थेभ्य आन्दम्। विष-मेभ्यो मैनालम्। स्वनेभ्यः पर्णकम्। गुहाभ्यः किरा-तम्। सानुभ्यो जम्भकम्। पर्व्वतेभ्यः किम्पूरुषम्॥ १२॥

प्रतिश्रुत्काया ऋतुलम्। घोषाय भषम्। अन्ताय बहुवादिनम्। अनन्ताय मूकम्। महसे वीणावादम्। क्रोशाय तूणवध्मम्। आक्रन्दाय दुन्दुभ्याघातम्। अव-रस्पराय शङ्खध्मम्। ऋभुभ्यो जिनसन्धायम्। साध्ये-भ्यश्चर्म्मम्णम्॥ १३॥

बीभत्सायै पौल्कसम्। भूत्यै जागरणम्। अभूत्यै स्वपनम्। तुलायै वाणिजम्। वर्णाय हिरण्यकारम्। विश्वेभ्यो देवेभ्यः सिध्मलम्। पश्चाद्दोषाय ग्लावम्। ऋत्यै जनवादिनम्। व्यृध्या अप्रगल्भम्। सꣳशराय प्रच्छिदम्॥ १४॥

हसाय पुꣳश्चलूमालभते। वीणावादं गणकं गीताय। यादसे शाबुल्याम्। नर्म्माय भद्रवतीम्। तूणवध्मं ग्रामण्यं पाणिसङ्घातं नृत्ताय। मोदायानुक्रोशकम्। आनन्दाय तलवम्॥ १५॥

अक्षराजाय कितवम्। कृताय सभाविनम्। त्रेताया आदिनवदर्शम्। द्वापराय बहिःसदम्। कलये सभास्थाणुम्। दुष्कृताय चरकाचार्य्यम्। अध्वने ब्रह्मचारिणम्। पिशाचेभ्यः सैलगम। पिपासायै गोव्यच्छम्। निर्ऋत्यै गोघातम्। क्षुधे गोविकर्त्तम्। क्षुत्तृष्णाभ्यां तम्। योगां विकृन्तं तं माꣳसं भिक्षमाण उपतिष्ठते॥ १६॥

भूम्यै पीठसर्पिणमालभते। अग्नये अꣳसलम्। वायवे चाण्डालम्। अन्तरिक्षाय वꣳशनर्त्तिनम्। दिवे खलतिम्। सूर्य्याय हर्य्यक्षम्। चन्द्रमसे मिर्म्मिरम्। नक्षत्रेभ्यः किलासम्। अह्ने शुक्लं पिङ्गलम्। रात्रियै कृष्णं पिङ्गाक्षम्॥ १७॥

वाचे पुरुषमालभते। प्राणमपानं व्यानमुदानꣳ समानं तान् वायवे। सूर्य्याय चक्षुरालभते। मनश्चन्द्रमसे। दिग्भ्यः श्रोत्रम्। प्रजापतये पुरुषम्॥ १८॥

अथैतान् रूपेभ्य आलभते। अतिह्रस्वमतिदीर्घम्। अतिकृशमत्यꣳसलम्। अतिशुक्लमतिकृष्णम्। अतिश्लक्ष्णमतिलोमशम्। अतिकिरिटमतिदन्तुरम्। अतिमिर्मिरमतिमेमिषम्। आशायै जामिम्। प्रतीक्षायै कुमारीम्॥ १९॥

ब्रह्मणे गीताय अमाय सन्धये नदीभ्य उत्सादेभ्य ऋत्यै भाया अर्मेभ्यो मन्यवे यम्यै दशदश सरोभ्यो द्वादश प्रतिश्रुत्कायै बीभत्सायै दशदश हसाय सप्ताक्षराजाय त्रयोदश भूम्यै दश वाचे षडथ नवैकान्नविꣳशतिः॥

ब्रह्मणे यम्यै नवदश॥

इति चतुर्थप्रपाठकः।

हरिः ॐ।

तृतीयकाण्डे पञ्चमप्रपाठके

प्रथमोऽनुवाकः।

सत्यं प्रपद्ये। ऋतं प्रपद्ये। अमृतं प्रपद्ये। प्रजापतेः प्रियां तनुवमनार्त्तां प्रपद्ये। इदमहं पञ्चदशेन वज्रे-

ण। द्विषन्तं भ्रातृव्यमवक्रामामि। योऽस्मान् द्वेष्टि। यञ्च वयं द्विष्मः। भूर्भुवः सुवः। हिं॥ १॥

सत्यं दश॥ अनु० १॥

द्वितीयोऽनुवाकः।

प्रवो वाजा अभिद्यवः। हविष्मन्तो घृताच्या। देवाञ्जिगाति सुम्नयुः। अग्न आयाहि वीतये। गृणानो हव्यदातये। निहोता सत्सि बर्हिषि। तं त्वा समिद्भिरङ्गिरः। घृतेन वर्द्धयामसि। बृहच्छोचाय विष्ठ्य। स नः पृथुः श्रवाय्यम्॥ १॥

अच्छादेव विवाससि। बृहदग्ने सुवीर्य्यम्। ईडेन्यो नमस्यस्तिरः। तमाꣳसि दर्शतः। समग्निरिध्यते वृषा। वृषो अग्निः समिध्यते। अश्वो न देववाहनः। तꣳ हविष्मन्त ईडते। वृषणं त्वा वयं वृषन्। वृषाणः समिधीमहि॥ २॥

अग्ने दीद्यतं बृहत्। अग्निं दूतं वृणीमहे। होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम्। समिध्यमानो अध्वरे। अग्निः पावक ईड्यः। शोचिष्केशस्तमीमहे। समिद्धो अग्न आहुत। देवान्यक्षि स्वध्वर। त्वꣳ हि

हव्यवाडसि ॥ आजुहोत दुवस्यत । अग्निं प्रयत्यध्वरे । वृणीध्वꣳ हव्यवाहनम् । त्वं वरुण उत मित्रो अग्ने । त्वां वर्द्धन्ति मतिभिर्वसिष्ठाः । त्वेवसु सुषणनानि सन्तु । यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

अवाय्यमिधीमह्यसि सप्त च ॥ अनु० २ ॥

तृतीयोऽनुवाकः ।

अग्ने महाँ असि ब्राह्मणभारत । असावसौ । देवेद्धोमन्विद्धः । ऋषिष्टुतो विप्रानुमदितः । कविशस्तो ब्रह्मसꣳशितो घृताहवनः । प्रणीर्यज्ञानाम् । रथीरध्वराणाम् । अतूर्त्तो होता । तूर्णिर्हव्यवाट् । आस्पात्रं जुहूर्देवानाम् ॥ १ ॥

चमसो देवपानः । अराँ इवाग्ने नेमिर्देवाꣳस्त्वं परिभूरसि । आवह देवान् यजमानाय । अग्निमग्न आवह । सोममावह । अग्निमावह । प्रजापतिमावह । अग्नीषोमावावह । इन्द्राग्नी आवह । इन्द्रमावह ॥ महेन्द्रमावह । देवाँ आज्यपाँ आवह । अग्निꣳ होत्रायावह । स्वम्महिमानमावह । आ चाग्ने देवान् वह । सुयजा च यज जातवेदः ॥ २ ॥

देवानामिन्द्रमावह षट् च ॥ अनु० ३ ॥

चतुर्थोऽनुवाकः ।

अग्निर्होता वेत्वग्निः । होत्रं वेतु प्राविचम् । स्मो व-
यम् । साधु ते यजमानदेवता । घृतवतीमध्वर्यो स्रुच-
मास्यस्व । देवायुवं विश्ववाराम् । ईडामहै देवाँ ईडे-
न्यान् । नमस्याम नमस्यान् । यजाम यज्ञियान् ॥ १ ॥
अग्निर्होता नव ॥ अनु० ४ ॥

पञ्चमोऽनुवाकः ।

समिधो अग्न आज्यस्य वियन्तु । तनूनपादग्न आ-
ज्यस्य वेतु । इडो अग्न आज्यस्य वियन्तु । बर्हिरग्न आ-
ज्यस्य वेतु । स्वाहाग्निम् । स्वाहा सोमम् । स्वाहाग्निम् ।
स्वाहा प्रजापतिम् । स्वाहाग्नीषोमौ । स्वाहेन्द्राग्नी ॥
स्वाहेन्द्रम् । स्वाहा महेन्द्रम् । स्वाहा देवाँ आज्य-
पान् । स्वाहाग्निꣳ होत्राज्जुषाणाः । अग्न आज्यस्य वि-
यन्तु ॥ १ ॥
इन्द्राग्नी पञ्च च ॥ अनु० ५ ॥

षष्ठोऽनुवाकः ।

अग्निर्वृत्राणि जङ्घनत् । द्रविणस्युर्विपन्यया । स-
मिद्धः शुक्र आहुतः । जुषाणो अग्निराज्यस्य वेतु । त्वꣳ

सोमासि सत्पतिः। त्वꣳ राजोत वृत्रहा। त्वं भद्रो असि क्रतुः। जुषाणः सोम आज्यस्य हविषो वेतु। अग्निः प्रत्नेन जन्मना। शुम्भानस्तनुवꣳ स्वाम्॥ कविर्विप्रेण वावृधे। जुषाणो अग्निराज्यस्य वेतु। सोम गीर्भिष्ट्वा वयम्। वर्द्धयामो वचोविदः। सुमृडीको न आविश। जुषाणः सोम आज्यस्य हविषो वेतु॥ १॥

स्वाꣳ षट् च॥ अनु० ६॥

सप्तमोऽनुवाकः।

अग्निमूर्द्धा दिवः ककुत्। पतिः पृथिव्या अयम्। अपाꣳ रेताꣳसि जिन्वति। भुवो यज्ञस्य रजसश्च नेता। यत्रानियुद्भिः सचसे शिवाभिः। दिवि मूर्द्धानं दधिषे सुवर्षाम्। जिह्वामग्ने चकृषे हव्यवाहम्। प्रजापते न त्वदेतान्यन्यः। विश्वा जातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु॥ १॥

वयꣳ स्याम पतयो रयीणाम्। स वेद पुत्रः पितरꣳ स मातरम्। स सूनुर्भुवत्स भुवत् पुनर्मघः। स द्यामौर्णोदन्तरिक्षꣳ स सुवः। स विश्वा भुवो अभवत्स आभवत्। अग्नीषोमा स वेदसा। स हूती वनतं गिरः। सं देवत्रा

बभूवथुः। युवमेतानि दिवि रोचनानि। अग्निश्च सोम सक्रतू अधत्तम्॥ २॥

युवꣳ सिन्धूꣳ रभिशस्ते रवद्यात्। अग्नीषोमावमुञ्चतं गृभीतान। इन्द्राग्नी रोचना दिवः। परि वाजेषु भूषथः। तद्वाञ्चेति प्रवीर्य्यम्। अथ वृत्रमुत सनोति वाजम्। इन्द्राग्नी अग्नीसहुरी सपर्य्यात्। इरज्यन्तावसव्यस्य भूरेः। सहस्तमा सहसा वाजयन्ता। एन्द्र सानसिꣳ रयिम्॥ ३॥

सजित्वानꣳ सदासहम्। वर्षिष्ठमूतये भर। प्रससाहिषे पुरुहूत शत्रून्। ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्राभर दक्षिणेनावसूनि। पतिः सिन्धूनामसि रेवतीनाम्। महाँ इन्द्रो य ओजसा। पर्जन्यो वृष्टिमाँ इव। स्तोमैर्वत्सस्य वावृधे। महाँ इन्द्रो नृवदाचर्षणिप्राः॥४॥

उतद्विबर्हा अमिनः सहोभिः। अस्मद्रियग्वावृधे वीर्य्याय। उरुः पृथुः सुकृतः कर्तृभिर्भूत्। पिप्रीहि देवा उशतो यविष्ठ। विद्वा ऋतूँ ऋतुपते यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने। त्वꣳ होतॄणामस्या यजिष्ठः। अग्निꣳ स्विष्टकृतम्। अयाडग्निरग्नेः प्रिया धामानि। अयाट् सोमस्य प्रिया धामानि॥ ५॥

अयाडग्नेः प्रिया धामानि। अयाट् प्रजापतेः प्रिया धामानि। अयाडग्नीषोमयोः प्रिया धामानि। अयाडिन्द्राग्नियोः प्रिया धामानि। अयाडिन्द्रस्य प्रिया धामानि। अयाण्महेन्द्रस्य प्रिया धामानि। अयाड्देवानामाज्यपानां प्रिया धामानि। यक्षदग्नेर्होतुः प्रिया धामानि। यक्षत्स्वं महिमानम्। आयजतामेज्या इषः॥ कृणोतु सो अध्वरा जातवेदाः। जुषताꣳ हविः। अग्ने यदद्य विशो अध्वरस्य होतः। पावक शोचे वेष्ट्वꣳ हि यज्वा। ऋता यजासि महिना वियद्भूः। हव्यावह यविष्ठया ते अद्य॥ ६॥

अस्त्वधत्तꣳ रयिं चर्षणिप्राः सोमस्य प्रिया धामानीषः षट् च॥ अनु० ७॥

अष्टमोऽनुवाकः।

उपहूतꣳ रथन्तरꣳ सह पृथिव्या। उपमा रथन्तरꣳ सह पृथिव्याह्वयताम्। उपहूतं वामदेव्यꣳ सहान्तरिक्षेण। उपमा वामदेव्यꣳ सहान्तरिक्षेणाह्वयताम्। उपहूतं बृहत्सह दिवा। उपमा बृहत्सह दिवाह्वयताम्। उपहूताः सप्त होत्राः। उपमा सप्तहोत्राह्वय-

ताम्। उप॑हूता धे॒नुः स॒हर्ष॑भा। उप॑मा धे॒नुः स॒हर्ष॑भाह्वयताम् ॥ १ ॥

उप॑हूतो भ॒क्षः सखा। उप॑मा भ॒क्षः सखा॑ह्वयताम्। उप॑हूता३ँ हो। इडोप॑हूता। उप॑हूतेडा। उपो॑ अ॒स्मा इडा॑ह्वयताम्। इडोप॑हूता। उप॑हूतेडा। मा॒न॒वी घृ॒तप॑दी मैत्रावरु॒णी। ब्रह्म॑दे॒व कृ॒तमुप॑हूतम् ॥ २ ॥

दैव्या॑ अध्व॒र्यव॒ उप॑हूताः। उप॑हूता मनु॒ष्याः। य इ॒मं य॒ज्ञमवा॑न्। ये य॒ज्ञप॑तिं वर्द्धा॑न्। उप॑हूते द्यावा॑पृथि॒वी। पू॒र्व्वजे॒ ऋ॒ताव॑री। दे॒वी दे॒वपु॑त्रे। उप॑हूतो॒ऽयं यज॑मानः। उत्त॑रस्यां दे॒वय॒ज्याया॒मुप॑हूतः। भू॒य॑सि ह॒विष्क॑रण॒ उप॑हूतः॥ दि॒व्ये धा॒मन्युप॑हूतः। इ॒दं मे॑ दे॒वा ह॒विर्जु॑षन्ता॒मिति॒ तस्मि॒न्नुप॑हूतः। विश्व॑मस्य प्रि॒यमुप॑हूतम्। विश्व॑स्य प्रि॒यस्योप॑हूत॒स्योप॑हूतः ॥ ॥ ३ ॥

स॒हर्ष॑भाह्वयता॒मुप॑हूत॒ꣳ ह॒विष्क॑रण॒ उप॑हूतश्च॒त्वारि॑ च ॥ अनु० ८ ॥

नवमोऽनु॒वाकः।

दे॒वं ब॒र्हिः। व॒सु॒वने॑ व॒सु॒धेय॑स्य वेतु। दे॒वो न॒राश॒ꣳसः। व॒सु॒वने॑ व॒सु॒धेय॑स्य वेतु। दे॒वो अ॒ग्निः स्वि॑ष्ट॒कृत्।

सुद्रविणामन्द्रः कविः। सत्यमन्मा यजी होता। होतु-
होतुरायजीयान्। अग्नेयान् देवानयाट्। याँ अपि
प्रेः॥ ये ते होत्रे अमत्सत। ताꣳ ससनुषीꣳ होत्रां देवं
गमाम्। दिवि देवेषु यज्ञमेरयेमम्। स्विष्टकृच्चाग्ने हो-
ताभूः। वसुवने वसुधेयस्य नमो वाकेवीहि॥ १॥

अपिप्रेः पञ्च च॥ अनु० ९॥

दशमोऽनुवाकः।

इदं द्यावापृथिवी भद्रमभूत्। आर्ध्म सूक्तवाकम्।
उत नमो वाकम्। ऋध्यास्म सूक्तोच्यमग्ने। त्वꣳ सूक्त-
वागसि। उपश्रितो दिवः पृथिव्योः। ओमन्वती तेऽ-
स्मिन् यज्ञे यजमान द्यावापृथिवी स्ताम्। शङ्गये जीर-
दानू। अत्रस्नू अप्रवेदे। उरुगव्यूती अभयं कृतौ॥ १॥

वृष्टिद्यावारीत्यापा। शम्भुवौ मयोभुवौ। ऊर्जस्वती
च पयस्वती च। सूपचरणा च स्वधिचरणा च। तयो-
राविदि। अग्निरिदꣳ हविरजुषत। अवीवृधत महो-
ज्यायोऽकृत। सोम इदꣳ हविरजुषत। अवीवृधत म-
होज्यायोऽकृत। अग्निरिदꣳ हविरजुषत॥ २॥

अवीवृधत महोज्यायोऽकृत। प्रजापतिरिदꣳ हवि-
रजुषत। अवीवृधत महोज्यायोऽकृत। अग्नीषोमावि-

दꣳ हविरजुषेताम्। अवीवृधेतां महो ज्यायोऽक्राताम्। इन्द्राग्नी इदꣳ हविरजुषेताम्। अवीवृधेतां महो ज्यायोऽक्राताम्। इन्द्र इदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽकृत। महेन्द्र इदꣳ हविरजुषत ॥ ३ ॥

अवीवृधत महो ज्यायोऽकृत। देवा आज्यपा आज्यमजुषन्त। अवीवृधन्त महो ज्यायोऽकृत। अग्निर्होत्रेणेदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽकृत। अस्यामृधद्धोत्रायां देवं गमायाम्। आशास्तेऽयं यजमानोऽसौ। आयुराशास्ते। सुप्रजास्त्वमाशास्ते। सजातवनस्यामाशास्ते ॥ ४ ॥

उत्तरां देवयज्यामाशास्ते। भूयो हविष्करणमाशास्ते। दिव्यं धामाशास्ते। विश्वं प्रियमाशास्ते। यदनेन हविषाऽऽशास्ते। तदश्यात्तदृध्यात्। तदस्मै देवा रासन्ताम्। तदग्निर्देवो देवेभ्योऽवनते। वयमग्नेर्मानुषाः। इष्टञ्च वीतञ्च ॥ उभे च नो द्यावापृथिवी अꣳहसः स्याताम्। इह गतिर्वामस्येदञ्च। नमो देवेभ्यः ॥ ५ ॥

अभयं कृतावकृताग्निरिदꣳ हविरजुषत महेन्द्र इदꣳ हविरजुषत सजातवनस्यामाशास्ते वीतञ्च त्रीणि च ॥ अनु० १० ॥

एकादशोऽनुवाकः ।

तच्छंयोरावृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवी स्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजम्। शन्नो अस्तु द्विपदे। शं चतुष्पदे ॥ १ ॥

तच्छंयोरष्टौ ॥ अनु० ११ ॥

द्वादशोऽनुवाकः ।

आप्यायस्व सन्ते। इह त्वष्टारमग्रियं तन्नस्तुरीयम्। देवानां पत्नीरुशतीरवन्तु नः। प्रावन्तु नस्तुजये वाजसातये। याः पार्थिवासो या अपामपि व्रते। ता नो देवीः सुहवाः शर्म्म यच्छत। उतग्ना वियन्तु देवपत्नीः। इन्द्राण्यग्नाय्यश्विनी राट्। आ रोदसी वरुणानी शृणोतु। वियन्तु देवीर्य ऋतुर्जनीनाम्॥ अग्निर्होता गृहपतिः स राजा। विश्वा वेद जनिमा जातवेदाः। देवानामुतयो मर्त्यानाम्। यजिष्ठः स प्रयजतामृता वा। वयमु त्वा गृहपते जनानाम्। अग्ने अकर्म्म समिधा बृहन्तम्। अस्थूरिणो गार्हपत्यानि सन्तु। तिग्मेन नस्तेजसा सꣳ शिशाधि ॥ १ ॥

जनीनामष्टौ च ॥ अनु० १२ ॥

त्रयोदशोऽनुवाकः ।

उपहूतꣳ रथन्तरꣳ सह पृथिव्या । उपमा रथन्तरꣳ सह पृथिव्याह्वयताम् । उपहूतं वामदेव्यꣳ सहान्तरिक्षेण । उपमा वामदेव्यꣳ सहान्तरिक्षेणाह्वयताम् । उपहूतं बृहत्सह दिवा । उपमा बृहत्सह दिवाह्वयताम् । उपहूताः सप्तहोत्राः । उपमा सप्तहोत्राह्वयन्ताम् । उपहूता धेनुः सहर्षभा । उपमा धेनुः सहर्षभाह्वयताम् ॥ १ ॥

उपहूतो भक्षः सखा । उपमा भक्षः सखाह्वयताम् । उपहूताꣳ३ हो । इडोपहूता । उपहूतेडा । उपो अस्माँ इडाह्वयताम् । इडोपहूता । उपहूतेडा । मानवी घृतपदी मैत्रावरुणी । ब्रह्म देवकृतमुपहूतम् ॥ ॥ २ ॥

दैव्या अध्वर्य्यव उपहूताः । उपहूता मनुष्याः । य इमं यज्ञमवान् । ये यज्ञपत्नीं वर्द्धान् । उपहूते द्यावापृथिवी । पूर्व्वजे ऋतावरी । देवी देवपुत्रे । उपहूतेयं यजमाना । इन्द्राणीवा विधवा । अदितिरिव सुपुत्रा ॥ उत्तरस्यां देवयज्यायामुपहूता । भूयसि हविष्करण उपहूता । दिव्ये धामन्नुपहूता । इदं मे

देवा हविर्जुषन्तामिति तस्मिन्नुपहूता। विश्वमस्याः प्रियमुपहूतम्। विश्वस्य प्रियस्योपहूतस्योपहूता॥३॥

सहर्षभाह्वयतामुपहूतꣳ सुपुत्रा षट् च॥

अनु० १३॥

सत्यं प्रवोऽग्ने महानग्निर्होता समिधोऽग्निर्देवानामग्निर्मन्द्रोपहूतं देवं बर्हिरिदं द्यावापृथिवी तच्छंयोराप्यायस्वोपहूतं त्रयोदश॥

सत्यं वयꣳ स्याम वृष्टि द्यावा नवविꣳशतिः॥२९॥

इति पञ्चमप्रपाठकः।

---

हरिः ॐ॥

तृतीयकाण्डे षष्ठप्रपाठके

प्रथमोऽनुवाकः।

अञ्जन्ति त्वामध्वरे देवयन्तः। वनस्पते मधुना दैव्येन। यदूर्ध्वस्तिष्ठाद्द्रविणेह धत्तात्। यद्वा क्षयो मातुरस्या उपस्थे। उच्छ्रयस्व वनस्पते। वर्ष्मन् पृथिव्या अधि। सुमिती मीयमानः। वर्चोधा यज्ञवाहसे। स-

मित्रस्य श्रयमाणः पुरस्तात्। ब्रह्मवन्वानो अजरꣳ सुवीरम्॥ १॥

आरे अस्मदमतिं बाधमानः। उच्छ्रयस्व महते सौभगाय। ऊर्द्ध ऊषु ण ऊतये। तिष्ठा देवो न सविता। ऊर्द्धो वाजस्य सनितायदञ्जिभिः। वाघद्भिर्विह्वयामहे। ऊर्द्धो नः पाह्यꣳहसो निकेतुना। विश्वꣳसमत्रिणं दह। कृधी न ऊर्द्धाञ्चरथाय जीवसे। विदा देवेषु नो दुवः॥ २॥

जातो जायते सुदिनत्वे अह्नाम्। समर्य आविदथे वर्द्धमानः। पुनन्ति धीरा अपसो मनीषा। देवया विप्र उदियर्त्ति वाचम्। युवा सुवासाः परिवीत आगात्। स उश्रेयान् भवति जायमानः। तं धीरासः कवय उन्नयन्ति। स्वाधियो मनसा देवयन्तः। पृथुपाजा अमर्त्त्यः। घृतनिर्णिक् स्वाहुतः॥ अग्निर्यज्ञस्य हव्यवाट्। तꣳ सबाधो यत स्रुचः। इत्था धिया यज्ञवन्तः। आचक्रुरग्निमूतये। त्वं वरुण उत मित्रो अग्ने। त्वां वर्द्धन्ति मतिभिर्वसिष्ठा। त्वे वसु सुषणनानि सन्तु। यूयं पात स्वस्तिभिः सदा नः॥ ३॥

सुवीरं दुवः स्वाहुतोऽष्टौ च॥ अनु० १॥

द्वितीयोऽनुवाकः ।

होता यक्षदग्निꣳ समिधा सुषमिधा समिद्धं नाभा पृथिव्याः सङ्गथे वामस्य। वर्ष्मं दिव इडस्पदे वेत्वाज्यस्य होतर्यज । होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपाम्। मध्वाद्य देवो देवेभ्यो देवयानान्पथो अनक्तु वेत्वाज्यस्य होतर्यज। होता यक्षं नराशꣳसं नृशस्तं नृꣳःप्रणेत्रम्। गोभिर्वपावान्त्स्याद्वीरैः शक्तीवान् रथैः प्रथमया वा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज। होता यक्षदग्निमिड ईडितो देवो देवाꣳ आवक्षद्दूतो हव्यवाडमूरः। उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज। होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा अस्मिन् यज्ञे विचप्रच प्रथताꣳ स्वासस्थं देवेभ्यः। एमेनदद्य वसवो रुद्रा आदित्याः सदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज ॥ १ ॥

होता यक्षद्दुरऋष्वाः कवष्यो कोषधावनीरुदाताभिर्जिहतां विपक्षोभिः श्रयन्ताम्। सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो वियन्त्वाज्यस्य होतर्यज । होता यक्षदुषासानक्ता बृहती सुपेशसा नृꣳः पतिभ्यो योनिं कृण्वाने। सꣳस्मयमाने इन्द्रेण देवैरेदं बर्हिः

सीदतां वीतामाज्यस्य होतर्यज। होता यक्षद्दैव्या होतारा मन्द्रा पोतारा कवी प्रचेतसा। स्विष्टमद्यान्यः करदिषा स्वभिगूर्त्तमन्य ऊर्जा स तव सेमं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य होतर्यज। होता यक्षत्तिस्रो देवीरपसामपस्तमा अच्छिद्रमद्येदमपस्तन्वताम्। देवेभ्यो देवीर्देवमपो वियन्त्वाज्यस्य होतर्यज। होता यक्षत्त्वष्टारमचिष्टमपाकꣳ रेतोधां विश्रवसं यशोधाम्। पुरुरूपमकामकर्शनꣳ सुपोषः पोषैः स्यात् सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज॥ होता यक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारꣳ शशमन्नरः। स्वदात्स्वधितिर्ऋतुथाद्य देवो देवेभ्यो हव्यावाड् वेत्वाज्यस्य होतर्यज। होता यक्षदग्निꣳ स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानाꣳ स्वाहा स्वाहाकृतीनाꣳ स्वाहा हव्यसूक्तीनाम्। स्वाहा देवाँ आज्यपान्त्स्वाहाग्निꣳ होत्राज्जुषाणा अग्न आज्यस्य वियन्तु होतर्यज॥ २॥

प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज चत्वारि च॥ अनु० २॥

अग्निं तनूनपातं नराशꣳसमग्निमिड ईडितो बर्हिर्दुर उषासानक्ता दैव्या तिस्रस्त्वष्टारं वनस्पतिमग्निम्॥

तृतीयोऽनुवाकः।

समिद्धो अद्य मनुषो दुरोणे। देवो देवान् यजसि जातवेदः। आ च वह मित्रमहश्चिकित्वान्। त्वं दूतः कविरसि प्रचेताः। तनूनपात् पथ ऋतस्य यानान्। मध्वा समञ्जन्त्स्वदया सुजिह्व। मन्मानि धीभिरुत यज्ञमृन्धन्। देवत्रा च कृणुह्यध्वरं नः। नराशंसस्य महिमानमेषाम्। उप स्तोषाम यजतस्य यज्ञैः॥ १॥

ते सुक्रतवः शुचयो धियन्धाः। स्वदन्तु देवा उभयानि हव्या। आजुह्वान ईड्यो वन्द्यश्च। आयाह्यग्ने वसुभिः सजोषाः। त्वं देवानामसि यह्व होता। स एनान् यक्षीषितो यजीयान्। प्राचीनं बर्हिः प्रदिशा पृथिव्याः। वस्तोरस्या वृज्यते अग्रे अह्नाम्। व्युप्रथते वितरं वरीयः। देवेभ्यो अदितये स्योनम्॥ २॥

व्यचस्वतीरुर्विया विश्रयन्ताम्। पतिभ्यो न जनयः शुम्भमानाः। देवीर्द्वारो बृहतीर्विश्वमिन्वाः। देवेभ्यो भवथ सुप्रायणाः। आ सुष्वयन्ती यजते उपाके। उषासानक्ता सदतां नियोनौ। दिव्ये योषणे बृहती सुरुक्मे। अधि श्रियꣳ शुक्रपिशं दधाने। दैव्या होतारा प्रथमा सुवाचा। मिमाना यज्ञं मनुषो यजध्यै॥ ३॥

प्रचोदयन्ता विदथेषु कारू। प्राचीनं ज्योतिः प्रदिशा दिशन्ता। आनो यज्ञं भारती तूयमेतु। इडा मनुष्वदिह चेतयन्ती। तिस्रो देवीर्बर्हिरेदꣳ स्योनम्। सरस्वतीः स्वपसः सदन्तु। य इमे द्यावापृथिवी जनित्री। रूपैरपिꣳशद्भुवनानि विश्वा। तमद्य होतरिषितो यजीयान्। देवं त्वष्टारमिह यक्षि विद्वान्॥ उपावसृजत्मन्या समञ्जन्। देवानां पाथ ऋतुथा हवीꣳषि। वनस्पतिः शमिता देवो अग्निः। स्वदन्तु हव्यं मधुना घृतेन। सद्यो जातो व्यमिमीत यज्ञम्। अग्निर्देवानामभवत् पुरोगाः। अस्य होतुः प्रदिश्यृतस्य वाचि। स्वाहाकृतꣳ हविरदन्तु देवाः॥ ४॥

यज्ञैः स्योनं यजध्यै विद्वानष्टौ च॥ अनु० ३॥

चतुर्थोऽनुवाकः।

अग्निर्होता नो अध्वरे। वाजीसन् परिणीयते। देवो देवेषु यज्ञियम्। परित्रिविष्ट्यध्वरम्। यात्यग्नी रथीरिव। आ देवेषु प्रयोदधत्। परिवाजपतिः कविः। अग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे॥ १॥

अग्निर्होता नो नव॥ अनु० ४॥

पञ्चमोऽनुवाकः ।

अजैदग्निः । असनद्वाजन्नि । देवो देवेभ्यो हव्या-
वाट् । प्राञ्जोभिर्हिन्वानः । धेनाभिः कल्पमानः । यज्ञ-
स्यायुः प्रतिरन् । उपप्रेष्य होतः । हव्या देवेभ्यः ॥ १ ॥
अजैदष्टौ ॥ अनु० ५ ॥

षष्ठोऽनुवाकः ।

दैव्याः शमितार उत मनुष्या आरभध्वम् । उपन-
यत मेध्यादुरः । आशासाना मेधपतिभ्यां मेधम् ।
प्रास्मा अग्निं भरत । स्तृणीत बर्हिः । अन्वेनं माता मन्य-
ताम् । अनु पिता । अनु भ्राता सगर्भ्यः । अनु सखा स
यूथ्यः । उदीचीनां अस्य पदो निधत्तात् ॥ १ ॥
सूर्यं चक्षुर्गमयतात् । वातं प्राणमन्ववसृजतात् ।
दिशः श्रोत्रम् । अन्तरिक्षमसुम् । पृथिवीꣳ शरीरम् ।
एकधास्य त्वचमाच्छ्यतात् । पुरा नाभ्या अपिशसो व-
पामुत्खिदतात् । अन्तरेवोष्माणं वारयतात् । श्येन-
मस्य वक्षः कृणुतात् । प्रशसा बाहू ॥ २ ॥
शलादोषणी । कश्यपेवाꣳसा । अच्छिद्रे श्रोणी ।
कवषोरू स्रेकपर्णाष्ठीवन्ता । षड्विꣳशतिरस्य वङ्क्रयः ।
ता अनुष्ठोच्यावयतात् । गात्रं गात्रमस्यानूनं कृणुतात् ।

ऊवध्य गोहं पार्थिवं खनतात्। अस्नारक्षः सꣳसृज-
तात्। वनिष्ठुमस्य माराविष्ट ॥ ३ ॥

उरूकं मन्यमानाः। नेदस्तोके तनये। रविता र-
वच्छमितारः। अध्रिगो शमीध्वम्। सुशमि शमीध्वम्।
शमीध्वमध्रिगो। अध्रिगुश्चापापश्च। उभौ देवानाꣳ
शमितारौ। ताविमं पशुꣳ श्रपयतां* प्रविद्वाꣳसौ। यथा
यथास्य श्रपणं तथा तथा ॥ ४ ॥

धत्ताद्वाह्न माराविष्ट तथा तथा ॥ अनु० ६ ॥

सप्तमोऽनुवाकः।

जुषस्व सप्रथस्तमम्। वचो देवप्सरस्तमम्। हव्या
जुह्वान आसनि। इमं नो यज्ञममृतेषु धेहि। इमा
हव्या जातवेदो जुषस्व। स्तोकानामग्ने मेदसो घृतस्य।
होतः प्राशान प्रथमो निषद्य। घृतवन्तः पावक ते।
स्तोकाश्चोतन्ति मेदसः। स्वधर्म्मं देव वीतये ॥ १ ॥

श्रेष्ठं नो धेहि वार्य्यम्। तुभ्यꣳ स्तोका घृतश्चुतः।
अग्ने विप्राय सन्त्य। ऋषिः श्रेष्ठः समिध्यसे। यज्ञस्य
प्राविता भव। तुभ्यꣳश्चोतन्त्यध्रिगो शचीवः। स्तोका-
सो अग्ने मेदसो घृतस्य। कविशस्तो बृहता भानुनागाः।

* श्रपायताम् D पुस्तकपाठः।

हव्या जुषस्व मेधिर। श्रोजिष्ठन्ते मध्यतो मेद उद्भृतम॥ प्र ते वयं ददामहे। श्रोतन्ति ते वसो स्तोका अधित्वचि। प्रतितान् देवशो विहि॥ २॥

देववीतय उद्भृतं चोणि च॥ अनु० ७॥

अष्टमोऽनुवाकः।

आ वृत्रहणा वृत्रहभिः शुष्मैः। इन्द्र यातं नमोभिरग्ने अर्वाक्। युवꣳ राधोभिरकवेभिरिन्द्र। अग्ने अस्मे भवतमुत्तमेभिः। होतायक्षदिन्द्राग्नी। छागस्य वपाया मेदसः। जुषेताꣳ हविः। होतर्यज। विह्यख्यन्मनसा वस्य इच्छन्। इन्द्राग्नी ज्ञास उत वा सजातान्॥ १॥

नान्यायवत् प्रमतिरस्ति मह्यम्। सवान्धियं वाजयन्तीमतक्षम्। होता यक्षदिन्द्राग्नी। पुरोडाशस्य जुषेताꣳ हविः। होतर्यज। त्वामीडते अजिरं दूत्याय। हविष्मन्तः सदमिन्मानुषासः। यस्य देवैरासदो बर्हिरग्ने। अहान्यस्मै सुदिना भवन्तु। होता यक्षदग्निम्॥ पुरोडाशस्य जुषताꣳ हविः। होतर्यज॥ २॥

सजातानग्निं द्वे च॥ अनु० ८॥

नवमोऽनुवाकः।

गीर्भिर्विप्रः प्रमतिमिच्छमानः। ईट्टे रयिं यशसं पू-

र्व्भाजम्। इन्द्राग्नी वृत्रहणा सुवज्रा। प्रणो नव्येभि-
स्तिरतं देष्णैः। माच्छेद्म रश्मीꣳरिति नाधमानाः। पि-
तृणाꣳ शक्तीरनु यच्छमानाः। इन्द्राग्निभ्यां कं वृषणो
मदन्ति। ताह्यद्रीधिषणाया उपस्थे। अग्निꣳ सुदी-
तिꣳ सुदृशं गृणन्तः। नमस्यामस्त्वेड्यं जातवेदः॥ त्वां
दूतमरतिꣳ हव्यवाहम्। देवा अकृण्वन्नमृतस्य ना-
भिम्॥ १॥

जातवेदो द्वे च॥ अनु० ९॥

दशमोऽनुवाकः।

त्वꣳ ह्यग्ने प्रथमो मनोता। अस्याधियो अभवो-
दस्म होता। त्वꣳ सीं वृषन्नकृणोर्दुष्टरीतु। सहो वि-
श्वस्मै सहसे सहध्यै। अधाहोतान्यसीदो यजीयान्।
इडस्पद इषयन्नीड्यः सन्। तं त्वा नरः प्रथमं देवय-
न्तः। महोराये चितयन्तो अनुग्मन्। वृते वयन्तं बहु-
भिर्वसव्यैः। त्वे रयिं जागृवाꣳसो अनुग्मन्॥ १॥

रुशन्तमग्निं दर्शतं बृहन्तम्। वपावन्तं विश्वहा दी-
दिवाꣳसम्। पदं देवस्य नमसा वियन्तः। श्रवस्यवः
श्रव आपन्नमृक्तम्। नामानि चिद्दधिरे यज्ञियानि।

भद्रायान्ते रणयन्त सन्दृष्टौ । त्वां वर्द्धन्ति क्षितयः पृथिव्याम् । त्वꣳ राय उभयासो जनानाम् । त्वं त्राता तरणे चेत्योभूः । पिता माता सदमिन्मानुषाणाम् ॥ ॥ २ ॥

सपर्य्येण्यः सप्रियो विक्ष्वग्निः । होता मन्द्रो निषसादा यजीयान् । तं त्वा वयं दम आदीदिवाꣳसम् । उपज्ञु बाधो नमसा सदेम । तं त्वा वयꣳ सुधियो नव्यमग्ने । सुम्नाय वर्द्धमहे देवयन्तः । त्वं विशो अनयो दीद्यानः । दिवो अग्ने बृहता रोचनेन । विशां कविं विश्पतिꣳ शश्वतीनाम् । नितोशनं वृषभं चर्षणीनाम् ॥ ॥ ३ ॥

प्रेतीषणिमिषयन्तं पावकम् । राजन्तमग्निं यजतꣳ रयीणाम् । सो अग्न ईजे शशमे च मर्त्तः । यस्त आनट् समिधा हव्यदातिम् । य आहुतिं परि वेदा नमोभिः । विश्वेत्सवामादधते त्वोतः । अस्मा उते महिमहे विधेम । नमोभिरग्ने समिधोत हव्यैः । वेदी सूनो सहसो गीर्भिरुक्थैः । आते भद्रायाꣳ सुमतौ यतेम ॥ ४ ॥

आयस्ततन्थ रोदसी विभासा । श्रवोभिश्च श्रवस्यस्तरुत्रः । बृहद्भिर्वाजैः स्थविरेभिरस्मे । रेवद्भिरग्न वि-

तरं विभाहि। नृवद्वसो सदमिद्धास्मे। भूरि तोकाय
तनयाय पश्वः। पूर्वीरिषो बृहती रारे अघाः। अस्मे
भद्रासौ अवसानि सन्तु। पुरूण्यग्ने पुरुधा त्वाया।
वसूनि राजन् वसुताते अश्याम्॥ पुरूणि हि त्वे पुरु-
वार सन्ति। अग्ने वसु विधते राजनि त्वे॥ ५॥

जागृवाꣳसो अनुग्मन्मानुषाणां चर्षणीनां यतेमा-
श्यां द्वे च॥ अनु० १०॥

### एकादशोऽनुवाकः।

आभरतꣳ शिक्षतं वज्रबाहू। अस्माँ इन्द्राग्नी
अवतꣳ शचीभिः। इमे नु ते रश्मयः सूर्यस्य। येभिः
सपित्वं पितरो न आयन्। होता यक्षदिन्द्राग्नी।
छागस्य हविष आत्तामद्य। मध्यतो मेद उद्भृतम्।
पुरा द्वेषोभ्यः। पुरा पौरुषेय्या गृभः। घस्तान्नूनम्॥
॥ १॥

घासे अज्राणां यवस प्रथमानाम्। सुमत्क्षराणाꣳ
शतरुद्रियाणाम्। अग्निष्वात्तानां पीवोपवसनानाम्।
पार्श्वतः श्रोणितः शितामत उत्सादतः। अङ्गादङ्गाद-
वत्तानाम्। करत एवेन्द्राग्नी। जुषेताꣳ हविः। होत-

यंज। देवेभ्यो वनस्पते हवीꣳषि। हिरण्यपर्ण प्रदिवस्ते अर्थम् ॥ २ ॥

प्रदक्षिणिद्रशनया नि यूयं। ऋतस्य वक्षि पथिभी रजिष्ठैः। होता यक्षद्वनस्पतिमभिहि। पिष्टतमया रभिष्टया रशनयाधित। यत्रेन्द्राग्नियोश्छागस्य हविषः प्रिया धामानि। यत्र वनस्पतेः प्रिया पाथाꣳसि। यत्र देवानामाज्यपानां प्रिया धामानि। यत्राग्नेर्होतुः प्रिया धामानि। तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षत्। रभीयाꣳसमिव कृत्वी ॥ ३ ॥

करं देवं देवो वनस्पतिः। जुषताꣳ हविः। होतर्यज। पिप्रीहि देवाꣳ उशतो यविष्ठ। विद्वाꣳ ऋतूꣳ ऋतुपते यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने। त्वꣳ होतृणामस्या यजिष्ठः। होता यक्षदग्निꣳ स्विष्टकृतम्। अयाडग्निरिन्द्राग्नियोश्छागस्य हविषः प्रिया धामानि। अयाड्वनस्पतेः प्रिया पाथाꣳसि॥ अयाड् देवानामाज्यपानां प्रिया धामानि। यक्षदग्नेर्होतुः प्रिया धामानि। यक्षत्स्वं महिमानम्। आयजता मेऽऽज्या इषः। कृणोतु सो अध्वरा जातवेदाः। जुषताꣳ हविः। होतर्यज ॥ ४ ॥

नूनमथ॑ कृत्वी पाथा॑ᳪसि सप्त च॑ ॥ अनु० ११ ॥

द्वादशोऽनुवाकः ।

उपो॑ह्यद्वि॑द॒थं वा॒जिनो॒ गूः । गी॒र्भिर्वि॑प्राः॒ प्रम॑ति-
मि॒च्छमा॑नाः । अर्व॑न्तो॒ न का॒ष्ठान्नक्ष॑माणाः । इ॒न्द्रा॒ग्नी
जोहु॑वतो॒ नर॒स्ते । वन॑स्पते रश॒नया॑भि॒धाय॑ । पि॒ष्टत॑-
मया व॒युना॑नि वि॒द्वान् । वह॑ दे॒वत्रा॒ दि॒धिषो॒ ह॒वीᳪ॑-
षि । प्र च॑ दा॒तार॑म॒मृते॑षु वोचः । अ॒ग्निᳪ॑ स्वि॑ष्ट॒कृत॑म् ।
अया॑ड॒ग्निरि॒न्द्रा॒ग्नियो॑श्छाग॑स्य ह॒विषः॑ प्रि॒या धामा॑-
नि ॥ १ ॥

अया॒ड्वन॒स्पतेः॑ प्रि॒या पाथा॑ᳪसि । अया॑ड् दे॒वाना॑-
माज्य॒पाना॑ं प्रि॒या धामा॑नि । यक्ष॑द॒ग्नेर्होतुः॑ प्रि॒या धा-
मा॑नि । यक्ष॒त्स्वं म॑हि॒मान॑म् । आय॑जता॒ मेऽऽज्या॒ इषः॑ ।
कृ॒णोतु॒ सो॑ अ॒ध्वरा॑ जा॒तवे॑दाः । जु॒षता॑ᳪ ह॒विः । अग्ने
यद॒द्य वि॒शो॑ अ॒ध्वरस्य होतः । पाव॑कशोचे॒ वेष्ट्वᳪ॑ हि
यज्वा॑ । ऋ॒ता य॒जासि॑ महि॒ना वि॒यद्भूः॑ ॥ ह॒व्याव॑ह यवि-
ष्ठया॒ ते॑ अ॒द्य ॥ २ ॥

धामा॑नि॒ भूरेक॑श्च ॥ अनु० १२ ॥

त्रयोदशोऽनुवाकः ।

दे॒वं ब॒र्हिः सु॑दे॒वं दे॒वैः स्या॒त् सु॒वीर॑ं वी॒रैर्व॒स्तोर्वृ॒ज्ये-

ताक्तोः प्रभिन्नियेतात्यन्यान्नाया बर्हिष्मतो मदेम वसु-
वने वसुधेयस्य वेतु यज। देवीर्द्वारः सङ्घाते विड्वी-
र्य्यामञ्छिथिराध्रुवा देवहूतौ वत्स ईमे नास्तरुण आ-
मिमीयात् कुमारो वा नवजातो मैना अर्वारेणुक-
काटः पृणग्वसुवने वसुधेयस्य वियन्तु यज। देवी उषा-
सा नक्ताद्यास्मिन यज्ञे प्रयत्यट्केतामपि नूनं दैवीर्वि-
शः प्रायासिष्टाᳲ सुप्रीते सुधिते वसुवने वसुधेयस्य
वीतां यज। देवो जोष्ट्री वसुधितो ययोरन्याद्या द्वेषाᳲ-
सि युयवदान्या वक्षद्वसुवार्य्याणि यजमानाय वसुवने
वसुधेयस्य वीतां यज। देवी ऊर्ज्जाहुती इषमूर्ज्जमन्या
वक्षत्सग्धिᳲसपीतिं मन्या नवेन पूर्व्वं *दयमानास्या-
मपुराणेन नवं तामूर्ज्जमूर्ज्जाहूतो ऊर्ज्जयमाने अधातां
वसुवने वसुधेयस्य वीतां यज। देवा दैव्या होतारा
नेष्टारा पोतारा हताघशᳲसा वाभरद्वसू वसुवने व-
सुधेयस्य वीतां यज। देवीस्तिस्रस्तिस्रो देवीरिडा सर-
स्वती भारती द्यां भारत्यादित्यैरस्पृक्षत् सरस्वतीमᳲ
रुद्रैर्यज्ञमावीदिहैवेडया वसुमत्या सधमादं मदेम वसु-
वने वसुधेयस्य वियन्तु यज। देवो नराशᳲसस्त्रिशी-

षी षडक्षः शतमिद्देनꣳ शितिपृष्ठा आदधति सहस्रमीं प्रवहन्ति मित्रावरुणे दस्य होत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाध्वर्य्यवं वसुवने वसुधेयस्य वेतु यज। देवो वनस्पतिर्वर्षप्रावा घृतनिर्णिग्द्यामग्रेणास्पृक्षदान्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृꣳहीद्वसुवने वसुधेयस्य वेतु यज। देवं बर्हिर्वारितीनां निधेधासि प्रच्युतीनामप्रच्युतं निकामधरणं पुरुस्पार्हं यशस्वदेना बर्हिषान्या बर्हीꣳष्यभिष्याम वसुवने वसुधेयस्य वेतु यज॥ देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्मा यजी होता होतुर्होतुरायजीयानग्ने यान्देवानयाडाꣳ अपिप्रेयें ते होत्रे अमत्सतताꣳ ससनुषीꣳ होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरयेमꣳ स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीहि यज॥१॥

यजैकञ्च॥ अनु० १३॥

*देवं बर्हिर्द्वीर्द्वारो देवी उषासानक्ता देवी जोष्ट्री देवी ऊर्जाहुती देवा दैव्या होतारा देवीस्तिस्रस्तिस्रो देवीर्देवो नराशꣳसो देवो वनस्पतिर्देवं बर्हिर्वारितीनां देवो अग्निः स्विष्टकृत्सुद्रविणा वीहि यज॥

* देवमित्यादि यजेत्यन्तः पाठः D. E. पुस्तकयोर्नास्ति।

चतुर्दशोऽनुवाकः।

देवं बर्हिः। वसुवने वसुधेयस्य वेतु। देवीर्द्वारः। वसुवने वसुधेयस्य वियन्तु। देवी उषासानक्ता। वसुवने वसुधेयस्य वीताम्। देवी जोष्ट्री। वसुवने वसुधेयस्य वीताम्। देवी ऊर्जाहुती। वसुवने वसुधेयस्य वीताम्॥ ॥ १॥

देवा दैव्या होतारा। वसुवने वसुधेयस्य वीताम्। देवीस्तिस्रस्तिस्रो देवीः। वसुवने वसुधेयस्य वियन्तु। देवो नराशꣳसः। वसुवने वसुधेयस्य वेतु। देवो वनस्पतिः। वसुवने वसुधेयस्य वेतु। देवं बर्हिर्वारितीनाम्। वसुवने वसुधेयस्य वेतु॥ २॥

देवो अग्निः स्विष्टकृत्। सुद्रविणा मन्द्रः कविः। सत्यमन्मायजी होता। होतुर्होतुरायजीयान्। अग्ने यान्देवानयाट्। याँ अपिप्रेः। ये ते होत्रे अमत्सत। ताꣳ ससनुषीꣳ होत्रां देवङ्गमाम्। दिवि देवेषु यज्ञमेरयेमम्। स्विष्टकृच्चाग्ने होताभूः॥ वसुवने वसुधेयस्य नमोवाके वीहि॥ ३॥

वीतां वेत्वभूरेकं च॥ अनु० १४॥

पञ्चदशोऽनुवाकः ।

अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोडाशं बध्नन्निन्द्राग्निभ्यां छागꣳ सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राग्निभ्यां छागेनाघस्तान्तं मेदस्तः प्रतिपचताग्रभीष्टामवीवृधेतां पुरोडाशेन त्वामद्यर्षे आर्षेयर्षीणां न पादवृणीतायं यजमानो बहुभ्य आसङ्गतेभ्य एष मे देवेषु वसुवार्य्या यक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आचशास्वाचगुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ॥ १ ॥

अग्निमद्यैकं ॥ अनु० १५ ॥ *

अञ्जन्ति होतायक्षत्समिद्धो अद्याग्निरजैद्दैव्या जुषस्वा. वृचहणा गीर्भिस्त्वꣳ ह्याभरतमुपोह्वयद्देवं बर्हिः सुदेवं देवं बर्हिरग्निमद्य पञ्चदश ॥

* D. E. पुस्तके निम्नस्थः पाठो वर्त्तते ।

अञ्जन्त्यग्निर्होता नो गीर्भिर्विप्र उपोह्वयद्विदयवाजिनां सप्तत्रिंशत् ॥ ३७ ॥

अञ्जन्त्युपावसृजन्नान्याकरदेवं देवो वनस्पतिरष्टत्रिंशत् ॥ ३८ ॥

अञ्जन्ति ते सुक्रतवो जुषस्वाभरतं देवो वनस्पतिः पञ्चचत्वारिꣳशत् ॥ ४५ ॥

हरिः ॐ॥

# तैत्तिरीय-ब्राह्मणे

## तृतीयकाण्डे सप्तमप्रपाठके

### प्रथमोऽनुवाकः।

सर्व्वान् वा एषोऽग्नौ कामान् प्रवेशयति। योऽग्नी-
नन्वाधाय व्रतमुपैति। स यदनिष्ट्वा प्रयायात्। अका-
मप्रीता एनं कामानानुप्रयायुः। अतेजा अवीर्य्यः
स्यात्। स जुहुयात्। तुभ्यं ता अङ्गिरस्तम। विश्वाः
सुक्षितयः पृथक्। अग्ने कामाय येमिर इति। का-
मानेवास्मिन्दधाति॥१॥

कामप्रीता एनं कामा अनुप्रयान्ति। तेजस्वी वी-
र्य्यावान् भवति। सन्ततिर्वा एषा यज्ञस्य। योऽग्नीन-
न्वाधाय व्रतमुपैति। स यदुद्वायति। विच्छित्तिरेवास्य
सा। तं प्राञ्चमुद्धृत्य। मनसोपतिष्ठेत। मनो वै प्रजा-
पतिः। प्राजापत्यो यज्ञः॥२॥

मनसैव यज्ञꣳ सन्तनोति। भूरित्याह। भर्ता वै प्र-
जापतिः। भूतिमेवोपैति। विवा एष इन्द्रियेण वीर्य्ये-
णर्द्धते। यस्याहिताग्नेरग्निरपक्षायति। यावच्छम्यया

प्रविध्येत्। यदि तावदपक्षायेत्। तꣳ सम्भरेत्। इदं त एकं पर उंत एकम् ॥ ३ ॥

तृतीयेन ज्योतिषा संविशस्व। संवेशनस्तनुवै चारुरेधि। प्रिये देवानां परमे जनित्र इति। ब्रह्मणैवैनꣳ सम्भरति। सैव ततः प्रायश्चित्तिः। यदि परस्तरामपक्षायेत। अनुप्रयायावस्येत्। सो एव ततः प्रायश्चित्तिः। ओषधीर्वा एतस्य पशून् पयः प्रविशति। यस्य हविषे वत्सा अपाकृताधयन्ति ॥ ४ ॥

तान् यद्दुह्यात्। यातयाम्ना हविषा यजेत। यन्न दुह्यात्। यज्ञपरुरन्तरियात्। वायव्यां यवागूंनिर्वपेत्। वायुर्वै पयसः प्रदापयिता। स एवास्मै पयः प्रदापयति। पयो वा ओषधयः। पयः पयः। पयसैवास्मै पयोऽवरुन्धे ॥ ५ ॥

अथोत्तरस्मै हविषे वत्सानपाकुर्य्यात्। सैव ततः प्रायश्चित्तिः। अन्यतरान् वा एष देवान् भागधेयेन व्यर्द्धयति। ये यजमानस्य सायं गृहमागच्छन्ति। यस्य सायं दुग्धꣳ हविरार्त्तिमार्च्छति। इन्द्राय व्रीहीन्निरुप्योपवसेत्। पयो वा ओषधयः। पय एवारभ्य गृहीत्वोपवसति। यत् प्रातः स्यात्। तच्छृतं कुर्य्यात् ॥ ६ ॥

अथेतर ऐन्द्रः पुरोडाशः स्यात्। इन्द्रिये एवास्मै समीची दधाति। पयो वा ओषधयः। पयः पयः। पयसैवास्मै पयोऽवरुन्धे। अथोत्तरस्मै हविषे वत्सानपाकुर्य्यात्। सैव ततः प्रायश्चित्तिः। उभयान् वा एष देवान् भागधेयेन व्यर्द्धयति। ये यजमानस्य सायञ्च प्रातश्च गृहमागच्छन्ति। यस्योभयꣳ हविरार्त्तिमार्च्छति॥ ७॥

ऐन्द्रं पञ्चशरावमोदनन्निर्वपेत्। अग्निं देवतानां प्रथमं यजेत्। अग्निमुखा एव देवताः प्रीणाति। अग्निं वा अन्वन्या देवताः। इन्द्रमन्वन्याः। ता एवोभयीः प्रीणाति। पयो वा ओषधयः। पयः पयः। पयसैवास्मै पयोऽवरुन्धे। अथोत्तरस्मै हविषे वत्सानपाकुर्य्यात्॥ ॥ ८॥

सैव ततः प्रायश्चित्तिः। अर्द्धो वा एतस्य यज्ञस्य मीयते। यस्य व्रत्येहन् पत्न्यनालम्भुका भवति। तामपरुध्य यजेत। सर्व्वेणैव यज्ञेन यजते। तामिष्ट्वोपह्वयेत। अमूहमस्मि। सा त्वम्। द्यौरहम्। पृथिवी त्वम्॥ सामाहम्। ऋक्त्वम्। तावेहि सम्भवाव। सह रेतो दधावहै। पुꣳसे पुत्राय वेत्तवै। रायस्पोषाय सुप्रजास्त्वाय

सुवीर्य्यायेति। अर्द्ध एवैनामुपह्वयते। सैव ततः प्रायश्चित्तिः ॥ ९ ॥

दधाति यत्र उत एकं धयन्ति रुन्धे कुर्य्यादार्त्त्यपा कुर्य्यात् पृथिवी त्वमष्टौ च ॥ अनु० १ ॥

सर्वान् विवै यदि परस्तरामन्यतरानुभयानद्धा वै।

द्वितीयोऽनुवाकः।

यद्धिःष्यंणेन जुहुयात्। अप्रजा अपशुर्यजमानः स्यात्। यदनायतने निनयेत्। अनायतनः स्यात्। प्राजापत्ययर्चा वल्मीकवपायामवनयेत्। प्राजापत्यो वै वल्मीकः। यज्ञः प्रजापतिः। प्रजापतावेव यज्ञं प्रतिष्ठापयति। भूरित्याह। भूतो वै प्रजापतिः ॥ १ ॥

भूतिमेवोपैति। तत्कृत्वा। अन्यां दुग्ध्वा पुनर्होतव्यम्। सैव ततः प्रायश्चित्तिः। यत्कोटावपन्नेन जुहुयात्। अप्रजा अपशुर्यजमानः स्यात्। यदनायतने निनयेत्। अनायतनः स्यात्। मध्यमेन पर्णेन द्यावापृथिव्यर्चान्तः परिधि निनयेत्। द्यावापृथिव्योरेवैनत्प्रतिष्ठापयति ॥ २ ॥

तत्कृत्वा। अन्यां दुग्ध्वा पुनर्होतव्यम्। सैव ततः

प्रायश्चित्तिः। यदवदृष्टेन जुहुयात्। अपरूपमस्यात्मं जायेत। किलासो वास्यादर्शसो वा। यत् प्रत्येयात्। यज्ञं विच्छिन्द्यात्। स जुहुयात्। मित्रोजनान् कल्पयति प्रजानन् ॥ ३ ॥

मित्रो दाधार पृथिवीमुतद्याम्। मित्रः कृष्टीरनिमिषाभिचष्टे। सत्याय हव्यं घृतवज्जुहोति *। मित्रेणैवनत्कल्पयति। तत्कृत्वा। अन्यां दुग्ध्वा पुनर्होतव्यम्। सैव ततः प्रायश्चित्तिः। यत् पूर्व्वस्यामाहुत्याꣳ हुतायामुत्तराहुतिः स्कन्देत्। द्विपाद्भिः पशुभिर्यजमानो व्यृध्येत। यदुत्तरयाभिजुहुयात् ॥ ४ ॥

चतुष्पाद्भिः पशुभिर्यजमानो व्यृध्येत। यत्र वेत्थ वनस्पते देवानां गुह्या नामानि। तत्र हव्यानि गामयेति वानस्पत्ययर्चा समिधमाधाय। तूष्णीमेव पुनर्जुहुयात्। वनस्पतिनैव यज्ञस्यार्त्तीं चानार्त्तीं चाहुती विदाधार। तत्कृत्वा। अन्यां दुग्ध्वा पुनर्होतव्यम्। सैव ततः प्रायश्चित्तिः। यत्पुरा प्रयाजेभ्यः प्राङ्गारः स्कन्देत्। अध्वर्य्यवे च यजमानाय चाकꣳ स्यात् ॥ ५ ॥

यद्दक्षिणा। ब्रह्मणे च यजमानाय चाकꣳ स्यात्।

* अहोतेति इति D. E. पुस्तकयोः पाठः।

यत्प्रत्यक्। होत्रे च पत्नियै च यजमानाय चार्कꣳ स्यात्। यदुदङ्। अग्नीधे च पशुभ्यश्च यजमानाय चार्कꣳ स्यात्। यदभिजुहुयात्। रुद्रोऽस्य पशून् घातुकः स्यात्। यन्नाभिजुहुयात्। अशान्तः प्रह्रियेत ॥ ६ ॥

स्रुवस्य बुध्नेनाभिनिदध्यात्। मा तमो मा यज्ञस्तमन्मा यजमानस्तमत्। नमस्ते अस्त्वायते। नमो रुद्र परायते। नमो यत्र निषीदसि। अमुं मा हिꣳसीरमुं मा हिꣳसीरिति येन स्कन्देत्। तं प्रहरेत्। सहस्रशृङ्गो वृषभो जातवेदाः। स्तोमपृष्ठो घृतवान्त्सुप्रतीकः। मा नो हासीन्मेत्थितो नेत्वाजहाम॥ गोपोषन्नो वीरपोषञ्च यच्छेति। ब्रह्मणैवैनं प्रहरति। सैव ततः प्रायश्चित्तिः ॥ ७ ॥

वै प्रजापतिः स्थापयति प्रजानन्नभिजुहुयात्स्याद्ध्रियेत जहाम चीणि च॥ अनु० २ ॥

(यद्धिःषष्ठेन यत्कीटा* यदवष्टेन यत्पूर्व्वस्यां यत्पुरा†‡)

---

* यत्कीटावषष्ठेन मध्यमेन यदववृष्टेनेति E पुस्तकपाठः।
यत्कीटा यन्मध्यमेन यदवष्टेनेति D पुस्तकपाठः।

† प्रयाजेभ्यः प्राङ्गारो यद्दक्षिणा यत् प्रत्यक् यदुदङ् इति E पुस्तकपाठः।
प्रयाजेभ्यः प्राङ्गारो यद्दक्षिणेति D पुस्तकपाठः।

‡ यद्धादि यत्पुरापर्य्यन्तः पाठोभाष्यानुमतत्वेन मूलान्तर्गतो नानुभूयते किन्तु सर्व्वादर्शपूर्तत्वान्मूलाक्षरेण लिखितः एतत्प्रदर्शनार्थं चिह्नद्वय क्रोडीकृतः।

तृतीयोऽनुवाकः।

वि वा एष इन्द्रियेण वीर्य्येणर्ध्यते। यस्याहिताग्ने-रग्निर्मथ्यमानो न जायते। यत्रान्यं पश्येत्। यत आ-हृत्य होतव्यम्*। अग्नावेवास्याग्निहोत्रꣳ हुतं भवति। यद्यन्यन्न विन्देत्। अजायाꣳ होतव्यम्। आग्नेयी वा एषा। यदजा। अजाग्नावेवास्याग्निहोत्रꣳ हुतं भवति॥१॥

अजस्य तु नाश्नीयात्। यदजस्याश्नीयात्। यामेवा-ग्नावाहुतिं जुहुयात्। तामद्यात्। तस्मादजस्य नाश्यम्। यद्यजान्न विन्देत्। ब्राह्मणस्य दक्षिणे हस्ते होतव्यम्। एष वा अग्निर्वैश्वानरः। यद्ब्राह्मणः। अग्नावेवास्याग्नि-होत्रꣳ हुतं भवति॥ २॥

ब्राह्मणन्तु वसत्यै नापरुन्ध्यात्। यद्ब्राह्मणं वसत्या अपरुन्ध्यात्। यस्मिन्नेवाग्नावाहुतिं जुहुयात्। तं भाग-धेयेन व्यर्द्धयेत्। तस्माद्ब्राह्मणो वसत्यै नापरुध्यः। यदि ब्राह्मणं न विन्देत्। दर्भस्तम्बे होतव्यम्। अग्निवान् वै दर्भस्तम्बः। अग्नावेवास्याग्निहोत्रꣳ हुतं भवति। द-र्भाꣳस्तु नाध्यासीत॥ ३॥

यद्दर्भानध्यासीत। यामेवाग्नावाहुतिं जुहुयात्।

* तत आहृत्य होतव्यमिति C पुस्तकपाठः।

तामध्यासीत। तस्माद्दर्भा नाध्यासितव्याः। यदि दर्भा-न्न विन्देत्। अप्सु होतव्यम्। आपो वै सर्वा देवताः। देवतास्वेवास्याग्निहोत्रꣳ हुतं भवति। आपस्तु न परि-चक्षीत। यदापः परिचक्षीत ॥ ४ ॥

यामेवाप्स्वाहुतिं जुहुयात्। तां परिचक्षीत। तस्मा-दापो न परिचक्ष्याः। मेध्या च वा एतस्या मेध्या च तनुवौ सꣳसृज्येते। यस्याहिताग्नेरन्यैरग्निभिरग्नयः सꣳसृज्यन्ते। अग्नये विविचये पुरोडाशमष्टाकपालं निर्वपेत्। मेध्याञ्चैवास्यामेध्याञ्च तनुवौ व्यावर्त्तयति। अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत्। अ-ग्निमेव व्रतपतिꣳ स्वेन भागधेयेनोपधावति। स एवैनं व्रतमालम्भयति ॥ ५ ॥

गर्भꣳ स्रवन्तमगदमकः। अग्निरिन्द्रस्त्वष्टा बृहस्प-तिः। पृथिव्यामवचुश्चोतैतत्। नाभिप्राप्नोति निरृतिं पराचैः। रेतो वा एतद्वाजिनमाहिताग्नेः। यदग्निहो-त्रम्। तद्यत् स्रवेत्। रेतोऽस्य वाजिनꣳ स्रवेत्। गर्भꣳ स्रवन्तमगदमकरित्याह। रेत एवास्मिन् वाजिनं द-धाति ॥ ६ ॥

अग्निरित्याह। अग्निर्वै रेतोधाः। रेत एव तद्दधाति।

इन्द्र इत्याह । इन्द्रियमेवास्मिन्दधाति। त्वष्टेत्याह । त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्। रूपमेव पशुषु दधाति । बृहस्पतिरित्याह। ब्रह्म वै देवानां बृहस्पतिः ॥ ब्रह्मणैवास्मै प्रजाः प्रजनयति । पृथिव्यामवचुश्चोतैतदित्याह।अस्यामेवैनत्प्रतिष्ठापयति। नाभिप्राप्नोति निर्ऋतिं पराचैरित्याह। रक्षसामपहत्यै ॥ ७॥

अजाग्नावेवास्याग्निहोत्रꣳ हुतं भवति भवत्यासीत परिचक्षीत लम्भयति दधाति देवानां बृहस्पतिः पञ्च च॥ अनु० ३ ॥

विवैयद्यन्यमजायां ब्राह्मणस्य दर्भस्तम्बेऽप्सु होतव्यम् ॥

चतुर्थोऽनुवाकः ।

याः पुरस्तात् प्रस्रवन्ति। उपरिष्टात् सर्वतश्च याः । ताभीरश्मिपवित्राभिः । श्रद्धां यज्ञमारभे। देवा गातु विदः।गातुं यज्ञाय विन्दत। मनसस्पतिना देवेन। वाताद्यज्ञः प्रयुज्यताम् । तृतीयस्यै दिवः। गायत्रिया सोम आभृतः॥ १ ॥

सोमपीथाय सन्नयितुम् । वक्लमन्तरमाददे ।

आपो देवीः शुद्धाः स्थ। इमा पात्राणि शुन्धत। उपा-
तङ्क्याय देवानाम्। पर्णवल्कमुत शुन्धत। पयो गृहेषु
पयो अघ्नियासु। पयो वत्सेषु पय इन्द्राय हविषे ध्रि-
यस्व। गायत्री पर्णवल्केन। पयः सोमं करोत्विमम्॥
॥ २ ॥

अग्निं गृह्णामि सुरथं यो मयो भूः। य उद्यन्तमारो-
हति सूर्य्यमह्ने। आदित्यं ज्योतिषां ज्योतिरुत्तमम्।
श्वो यज्ञाय रमतां देवताभ्यः। वसून् रुद्रानादित्यान्।
इन्द्रेण सह देवताः। ताः पूर्व्वः परिगृह्णामि। स्व आ-
यतने मनीषया। इमामूर्ज्जं पञ्चदशीं ये प्रविष्टाः।
तान् देवान् परिगृह्णामि पूर्व्वः ॥ ३ ॥

अग्निर्हव्यवाडिह तानावहतु। पौर्णमासꣳ हवि-
रिदमेषां मयि। आमावास्यꣳ हविरिदमेषां मयि।
अन्तराग्नी पशवः। देवसꣳसदमागमन्। तान् पूर्व्वः
परिगृह्णामि। स्व आयतने मनीषया। इह प्रजा विश्व-
रूपा रमन्ताम्। अग्निं गृहपतिमभिसंवसानाः। ताः
पूर्व्वः परिगृह्णामि ॥ ४ ॥

स्व आयतने मनीषया। इह पशवो विश्वरूपा र-
मन्ताम्। अग्निं गृहपतिमभिसंवसानाः। तान् पूर्व्वः

परिगृह्णाति*। स्व आयतने मनीषया। अयं पितृणा-
मग्निः। अवाड्ढव्या पितृभ्य आ। तं पूर्वः परिगृह्णामि।
अविषन्नः पितुं करत्। अजस्रं त्वाꣳ सभापालाः ॥ ५ ॥

विजयभागꣳ समिन्धताम्। अग्ने दीदाय मे सभ्य।
विजित्यै शरदः शतम्। अन्नमावसथीयम्। अभिह-
राणि शरदः शतम्। आवसथे श्रियं मन्त्रम्। अहि-
र्बुध्नियो नियच्छतु। इदमहमग्निं ज्येष्ठेभ्यः। वसुभ्यो
यज्ञं प्रब्रवीमि। इदमहमिन्द्रं ज्येष्ठेभ्यः ॥ ६ ॥

रुद्रेभ्यो यज्ञं प्रब्रवीमि। इदमहं वरुणं ज्येष्ठेभ्यः।
आदित्येभ्यो यज्ञं प्रब्रवीमि। पयस्वतीरोषधयः। पय-
स्वद्वीरुधां पयः। अपां पयसो यत्पयः। तेन मामिन्द्र-
सꣳसृज। अग्ने व्रतपते व्रतं चरिष्यामि। तच्छकेयं
तन्मे राध्यताम्। वायो व्रतपत आदित्यव्रतपते ॥ ७ ॥

व्रतानां व्रतपते व्रतं चरिष्यामि। तच्छकेयं तन्मे रा-
ध्यताम्। इमां प्राचीमुदीचीम्। इषमूर्ज्जमभिसꣳस्कृ-
ताम्। बहुपर्णामशुष्काग्राम्। हरामि पशुपामहम्।
यत्कृष्णो रूपं कृत्वा। प्राविशस्त्वं वनस्पतीन्। ततस्त्वा-
मेकविꣳशतिधा। सम्भरामि सुसम्भृता ॥ ८ ॥

---

* परिगृह्णामीति D. E. पुस्तकयोः पाठः।

त्रीन् परिधींꣳस्तिस्रः समिधः। यज्ञायुरनुसञ्च-
रान्। उपवेषं मेक्षणं धृष्टिम्। सम्भरामि सुसम्भृता।
या जाता ओषधयः। देवेभ्यस्त्रियुगं पुरा। तासां पर्व्व-
राध्यासम्। परिस्तरमाहरन्। अपां मेध्यं यज्ञियम्।
स देवꣳ शिवमस्तु मे ॥ ९ ॥

आच्छेता वो मारिषम्। जीवानि शरदः शतम्।
अपरिमितानां परिमिताः। सन्नह्ये सुकृताय कम्।
एनो मानिगां कतमच्च नाहम्। पुनरुत्थाय बहुला भ-
वन्तु। सकृदाच्छिन्नं बर्हिरूर्णामृदु। स्योनं पितृभ्य-
स्त्वा भराम्यहम्। अस्मिन्त्सीदन्तु मे पितरः सोम्याः।
पितामहाः प्रपितामहाश्चानुगैः सह ॥ १० ॥

त्रिवृत्पलाशे दर्भः। इयान् प्रादेशसम्मितः। यज्ञे
पवित्रं पोतृतमम्। पयो हव्यं करोतु मे। इमा प्राणा-
पानौ। यज्ञस्याङ्गानि सर्व्वशः। आप्याययन्तौ सञ्चर-
ताम्। पवित्रे हव्यशोधने। पवित्रे स्थो वैष्णवी। वायु-
र्वां मनसा पुनातु ॥ ११ ॥

अयं प्राणश्चापानश्च। यजमानमपि गच्छताम्।
यज्ञे ह्यभूतां पोतारौ। पवित्रे हव्यशोधने। त्वया वेदिं
विविदुः पृथिवीम्। त्वया यज्ञो जायते विश्वदानिः।

अच्छिद्रं यज्ञमन्वेषि विद्वान्। त्वया होता सन्तनोत्यर्द्धमासान्। त्रयस्त्रिꣳशोऽसि तन्तूनाम्। पवित्रेण सहागहि ॥ १२ ॥

शिवेयꣳ रज्जुरभिधानी। अघ्नियामुपसेवताम्। अप्रस्रꣳसाय यज्ञस्य। उखे उपदधाम्यहम्। पशुभिः सन्नीतम्बिभृताम्। इन्द्राय शृतं दधि। उपवेषोऽसि यज्ञाय। त्वां परिवेषमधारयन्। इन्द्राय हविः कृण्वन्तः। शिवः शग्मो भवासि नः ॥ १३ ॥

अमृण्मयं देवपात्रम्। यज्ञस्यायुषि प्रयुज्यताम्। तिरः पवित्रमतिनीताः। आपो धारय मातिगुः। देवेन सवित्रोत्पूताः। वसोः सूर्य्यस्य रश्मिभिः। गां दोह पवित्रे रज्जुम्। सर्व्वा पात्राणि शुन्धत। एता आचरन्ति मधुमद्दुहानाः। प्रजावतीर्यशसो विश्वरूपाः ॥ १४ ॥

बह्वीर्भवन्तीरुपजायमानाः। इह व इन्द्रो रमयतु गावः। पूषा स्थ। अयक्ष्मा वः प्रजया सꣳसृजामि। रायस्पोषेण बहुला भवन्तीः। ऊर्ज्जं पयः पिन्वमाना घृतञ्च। जीवो जीवन्तीरुप वः सदेयम्। द्यौश्चेमं यज्ञं पृथिवी च सन्दुहाताम्। धाता सोमेन सह वातेन वायुः। यजमानाय द्रविणं दधातु ॥ १५ ॥

उत्सन्दुहन्ति कलशं चतुर्बिलम्। इडां देवीं मधुमतीः सुवर्विदम्। तदिन्द्राग्नी जिन्वतः सूनृतावत्। तद्यजमानममृतत्वे दधातु। कामधुक्षः प्रणो ब्रूहि। इन्द्राय हविरिन्द्रियम्। अमूं यस्यां देवानाम्। मनुष्याणां पयोहितम्। बहुदुग्धीन्द्राय देवेभ्यः। हव्यमाप्यायतां पुनः ॥ १६ ॥

वत्सेभ्यो मनुष्येभ्यः। पुनर्दोहाय कल्पताम्। यज्ञस्य सन्ततिरसि। यज्ञस्य त्वा सन्ततिमनुसन्तनोमि। अदस्तमसि विष्णवे त्वा। यज्ञायापि दधाम्यहम्। अद्भिररिक्तेन पात्रेण। याः पूताः परिशेरते। अयं पयः सोमं कृत्वा। स्वां योनिमपि गच्छतु ॥ १७ ॥

पर्णवल्कः पवित्रम्। सौम्यः सोमाद्धि निर्म्मितः। इमौ पर्णञ्च दर्भञ्च। देवानाः हव्यशोधनौ। प्रातर्वेषाय गोपाय। विष्णो हव्यः हि रक्षसि। उभावग्नी उपस्तृणते। देवता उपवसन्तु मे। अहं ग्राम्यानुपवसामि। मह्यं गोपतये पशून् ॥ १८ ॥

आभृत इमं गृह्णामि पूर्व्वस्ताः पूर्व्वः परिगृह्णामि सभापाला इन्द्रज्येष्ठेभ्य आदित्यव्रतपते सुसम्भृता मे सह पुनातु गहिनो विश्वरूपा दधातु पुनर्गच्छतु पशून्॥ अनु० ४ ॥

याः पुरस्तादिमामूर्जमिह प्रजा इह पशवोऽयं पितृणामग्निः॥

पञ्चमोऽनुवाकः।

देवा देवेषु पराक्रमध्वम्। प्रथमा द्वितीयेषु। द्वितीयास्तृतीयेषु। त्रिरेकादशा इह मावत। इदꣳ शकेयं यदिदं करोमि। आत्मा करोत्वात्मने। इदं करिष्ये भेषजम्। इदं मे विश्वभेषजा। अश्विना प्रावतं युवम्। इदमहꣳ सेनाया अभीत्वर्य्यं॥ १॥

मुखमपोहामि। सूर्य्य ज्योतिर्विभाहि। महत इन्द्रियाय। आप्यायतां घृतयानिः। अग्निर्हव्यानुमन्यताम्। खमङ्क्ष्व त्वचमङ्क्ष्व। सुरूपं त्वावसुविदम्। पशूनां तेजसा। अग्नये जुष्टमभिघारयामि। स्योनं ते सदनं करोमि॥ २॥

घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्त्सीदामृते प्रतितिष्ठ। व्रीहीणां मेध सुमनस्यमानः। आर्द्रः प्रथस्नुर्भुवनस्य गोपाः। शृत उत्स्नाति जनिता मतीनाम्। यस्त आत्मा पशुषु प्रविष्टः। देवानां विष्ठामनु यो वितस्थे। आत्मन्वान्त्सोम घृतवान् हि भूत्वा। दे-

वान् गच्छ सुवर्विद् यजमानाय मह्यम्। इरा भूतिः पृथिव्यै रसो मोत्क्रमीत्॥ ३॥

देवाः पितरः पितरो देवाः। योऽहमस्मि स सन् यजे। यस्यास्मि न तमन्तरेमि। स्वम्म इष्टꣳ स्वन्दत्तम्। स्वम्पूर्त्तꣳ स्वꣳश्रातम्। स्वꣳहुतम्। तस्य मेऽग्निरुपद्रष्टा। वायुरुपश्रोता। आदित्योऽनुख्याता। द्यौः पिता॥ ॥ ४॥

पृथिवी माता। प्रजापतिर्बन्धुः। य एवास्मि स सन् यजे। मा भेर्मा संविक्था मा त्वा हिꣳसिषम्। मा ते तेजोऽपक्रमीत्। भरतमुद्धरे मनुषिञ्च। अवदानानि ते प्रत्यवदास्यामि। नमस्ते अस्तु मा मा हिꣳसीः। यदवदानानि ते वद्यन्। विलोमाकार्षमात्मनः॥ ५॥

आज्येन प्रत्यनज्म्येनत्। तत्त आप्यायतां पुनः। आज्यायो यवमाचात्। आव्याधात् कृत्यतामिदम्। मारूरुपाम यज्ञस्य। शुद्धꣳ स्विष्टमिदꣳ हविः। मनुना दृष्टां घृतपदीम्। मित्रावरुण समीरिताम्। दक्षिणार्द्धादसम्भिन्दन्। अवद्याम्येकतो मुखाम्॥ ६॥

इडे भागं जुषस्व नः। जिन्वगा जिन्वावतः। तस्यास्ते भक्षिवाणः स्याम। सर्व्वात्मानः सर्व्वगणाः। ब्रध्नपिन्व-

स्व । दद॑तो मे माक्षा॑यि । कु॒र्व॑तो मे॒ मोप॑दसत् ।
दि॒शां क्लृ॒प्तिर॑सि । दि॒शो मे कल्प॑न्ताम् । कल्प॑न्तां मे॒
दि॒शः ॥ ७ ॥

दैवी॑श्च मानु॑षीश्च । अ॒हो॒रा॒त्रे मे॑ कल्पेताम् । अ॒र्ध॒-
मा॒सा मे॑ कल्प॑न्ताम् । मासा॑ मे कल्प॑न्ताम् । ऋ॒तवो॑
मे कल्प॑न्ताम् । सं॒व॒त्स॒रो मे॑ कल्पताम् । क्लृ॒प्तिर॑सि॒ क-
ल्प॑तां मे । आशा॑नां त्वाशापा॒लेभ्यः॑ । च॒तुर्भ्यो॑ अ॒मृते॑-
भ्यः । इ॒दं भू॒तस्याध्य॑क्षेभ्यः ॥ ८ ॥

वि॒धेम॑ ह॒विषा॑ व॒यम् । भज॑तां भा॒गी भा॒गम् । मा
भा॒गो भ॑क्त । निर॑भा॒गं भ॑जामः । अ॒पस्पि॑न्व । ओष॑धी-
र्जिन्व । द्विपा॑त् पा॑हि । चतु॑ष्पादव । दि॒वो वृ॒ष्टिमेर॑य ।
ब्रा॒ह्मणाना॑मि॒दꣳ ह॒विः ॥ ९ ॥

सो॒म्याना॑ꣳ सोमपी॒थिना॑म् । निर्भ॑क्तो ब्राह्म॒णः ।
नेहा ब्रा॑ह्म॒णस्या॑स्ति । सम॑क्तां ब॒र्हिर्ह॒विषा॑ घृ॒तेन॑ । स-
मा॑दि॒त्यैर्वसु॑भिः सम्म॒रुद्भिः॑ । समिन्द्रे॑ण॒ विश्वे॑भिर्दे॒वे-
भि॑रङ्क्ताम् । दि॒व्यं नभो॑ गच्छतु॒ यत्स्वाहा॑ । इ॒न्द्रा॒णी-
वा॑विधवा॒ भू॑यासम् । अदि॑तिरिव सुपु॒त्रा । अ॒स्थू॒रि
त्वा॑ गार्हपत्य ॥ १० ॥

उपनि॒षदे॑ सुप्रजा॒स्त्वाय॑ । सम्पत्नी॒ पत्या॑ सुकृ॒तेन॑ ग-

च्छताम्। यज्ञस्य युक्तौ धुर्य्यावभूताम्। सञ्जानानौ विजहतामरातीः। दिवि ज्योतिरजरमारभेताम्। दश ते तनुवो यज्ञ यज्ञियाः। ताः प्रीणातु यजमानो घृतेन। नारिष्ठयोः प्रशिषमीडमानः। देवानां दैव्येऽपि यजमानोऽमृतोऽभूत्। यं वां देवा अकल्पयन्॥ ॥ ११॥

ऊर्जो भागꣳ शतक्रतू। एतद्वां तेन प्रीणाति। तेन तृप्यतमꣳहहौ। अहं देवानाꣳ सुकृतामस्मि लोके। ममेदमिष्टं न मिथुर्भवाति। अहन्नारिष्ठावनुयजामि विद्वान्। यदाभ्यामिन्द्रो अदधाद्भागधेयम्। अदारसृद्भवत देव सोम। अस्मिन् यज्ञे मरुतो मृडता नः। मा नो विददभिभामो अशस्तिः॥ १२॥

मा नो विदद्वृजना द्वेष्याया। ऋषभं वाजिनं वयम्। पूर्णमासं यजामहे। स नो दोहताꣳ सुवीर्य्यम्। रायस्पोषꣳ सहस्रिणम्। प्राणाय सुराधसे। पूर्णमासाय स्वाहा। अमावास्या सुभगा सुशेवा। धेनुरिव भूय आप्यायमाना। सा नो दोहताꣳ सुवीर्य्यम्॥ रायस्पोषꣳ सहस्रिणम्। अपानाय सुराधसे। अमावास्यायै स्वाहा। अभिस्तृणीहि परिधेहि वेदिम्। जामिं

मा हिंसीरमुया शयाना। होतृषदना हरिताः सुवर्णाः। निष्का इमे यजमानस्य ब्रध्ने ॥ १३ ॥

अभीत्वय्यं करोमि क्रमीत्पितात्मनं एकता मुखां मे दिशोर्ध्यक्षेभ्यो हविर्गार्हपत्याकल्पयन्नशस्त्तिः सा नो दोहताः सुवीर्यं सप्त च ॥ अनु० ५ ॥

षष्ठोऽनुवाकः।

परिस्तृणीत परिधत्ताग्निम्। परिहितोऽग्निर्यजमानं भुनक्तु। अपां रस ओषधीनां सुवर्णः। निष्का इमे यजमानस्य सन्तु कामदुघाः। अमुत्रामुष्मिंल्लोके। भूपते भुवनपते। महतो भूतस्य पते। ब्रह्माणं त्वा वृणीमहे। अहं भूपतिरहं भुवनपतिः। अहं महतो भूतस्य पतिः ॥ १ ॥

देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि। देवसवितरेतं त्वा वृणते। बृहस्पतिं दैव्यं ब्रह्माणम्। तदहं मनसे प्रब्रवीमि। मनो गायत्रियै। गायत्री त्रिष्टुभे। त्रिष्टुब्जगत्यै। जगत्यनुष्टुभे। अनुष्टुक् पङ्क्त्यै। पङ्क्तिः प्रजापतये ॥ २ ॥

प्रजापतिर्विश्वेभ्यो देवेभ्यः। विश्वे देवा बृहस्पतये।

बृहस्पतिर्ब्रह्मणे। ब्रह्म भूर्भुवः सुवः। बृहस्पतिर्देवानां ब्रह्मा। अहं मनुष्याणाम्। बृहस्पते यज्ञं गोपाय। इदं तस्मै हर्म्यं करोमि। यो वो देवाश्चरति ब्रह्मचर्य्यम्। मेधावी दिक्षु मनसा तपस्वी॥ ३॥

अन्तर्दूतश्चरति मानुषीषु। चतुः शिखण्डा युवतिः सुपेशाः। घृतप्रतीका भुवनस्य मध्ये। मर्मृज्यमाना महते सौभगाय। मह्यं धुक्ष्व यजमानाय कामान्। भूमिर्भूत्वा महिमानं पुपोष। ततो देवी वर्द्धयते पयाꣳसि। यज्ञिया यज्ञं विचयन्ति शच्च। ओषधीराप इह शक्करीश्च। यो मा हृदा मनसा यश्च वाचा॥ ४॥

यो ब्रह्मणा कर्म्मणा द्वेष्टि देवाः। यः श्रुतेन हृदयेनेष्णता च। तस्येन्द्रवज्रेण शिरश्छिनद्मि। ऊर्णाम्रदु प्रथमानꣳ स्योनम्। देवेभ्यो जुष्टꣳ सदनाय बर्हिः। सुवर्गे लोके यजमानꣳ हि धेहि। मां नाकस्य पृष्ठे परमे व्योमन्। चतुः शिखण्डा युवतिः सुपेशाः। घृतप्रतीका वयुनानि वस्ते। सास्तीर्य्यमाणा महते सौभगाय॥ ॥ ५॥

सा मे धुक्ष्व यजमानाय कामान्। शिवा च मे शग्मा चैधि। स्योना च मे सुषदा चैधि। ऊर्जस्वती च मे

पर्यस्वती चैधि । इषमूर्जं मे पिन्वस्व । ब्रह्मतेजो मे पिन्वस्व । क्षत्रमोजो मे पिन्वस्व । विशं पुष्टिं मे पिन्वस्व । आयुरन्नाद्यं मे पिन्वस्व । प्रजां पशून्मे पिन्वस्व ॥ ६ ॥

अस्मिन् यज्ञ उपभूय इन्नु मे । अविक्षोभाय परिधीन्दधामि । धर्त्ता धरुणो धरीयान् । अग्निर्द्वेषांऽसि निरितो नुदातै । विच्छिन्नद्मि विधृतीभ्यांऽ सपत्नान् । जातान् भ्रातृव्यान् ये च जनिष्यमाणाः । विशो यन्त्राभ्यां विधमाम्येनान् । अहंऽ स्वानामुत्तमोऽसानि देवाः । विशो यन्त्रे नुदमाने अरातिम् । विश्वं पाप्मानममतिं दुर्मरायुम् ॥ ७ ॥

सीदन्ती देवी सुकृतस्य लोके । धृतीस्थो विधृती स्वधृती । प्राणान्मयि धारयतम् । प्रजां मयि धारयतम् । पशून्मयि धारयतम् । अयं प्रस्तर उभयस्य धर्त्ता । धर्त्ता प्रयाजानामुतानूयाजानाम् । स दाधार समिधो विश्वरूपाः । तस्मिन्त्स्रुचो अध्यासादयामि । आरोह पथो जुहु देवयानान् ॥ ८ ॥

यत्रर्षयः प्रथमजा ये पुराणाः । हिरण्यपक्षाजिरा सम्भृताङ्गाः । वहासि मा सुकृतां यत्र लोकाः । अवाहं

बाध उपभृता सपत्नान्। जातान् भ्रातृव्यान् ये च जनिष्यमाणाः। दोहै यज्ञꣳ सुदुघामिव धेनुम्। अह-मुत्तरो भूयासम्। अधरे मत्सपत्नाः। यो मा वाचा मनसा दुर्मरायुः। हृदाराती यादभिदा संदभ्रे ॥ ९ ॥

इदमस्य चित्तमधरं ध्रुवायाः। अहमुत्तरो भूयासम्। अधरे मत्सपत्नाः। ऋषभोऽसि शाक्वरः। घृताचीनाꣳ सूनुः। प्रियेण नाम्ना प्रिये सदसि सीद। स्योनो मे सीद सुषदः पृथिव्याम्। प्रथयि प्रजया पशुभिः सुवर्गे लोके। दिवि सीद पृथिव्यामन्तरिक्षे। अहमुत्तरो भूयासम् ॥ १० ॥

अधरे मत्सपत्नाः। इयꣳ स्थाली घृतस्य पूर्णा। अच्छिन्नपयाः शतधार उत्सः। मारुतेन शर्म्मणा दैव्येन। यज्ञोऽसि सर्व्वतः श्रितः। सर्व्वतो मां भूतं भविष्यच्छ्रयताम्। शतं मे सन्त्वाशिषः। सहस्रं मे सन्तु सूनृताः। इरावतीः पशुमतीः। प्रजापतिरसि सर्व्वतः श्रितः ॥ ॥ ११ ॥

सर्व्वतो मां भूतं भविष्यच्छ्रयताम्। शतं मे सन्त्वाशिषः। सहस्रं मे सन्तु सूनृताः। इरावतीः पशुमतीः। इदमिन्द्रियममृतं वीर्य्यम्। अनेनेन्द्राय पशवो चि-

किल्बिषम्। तेन देवा अवतोपमाम्। इषमूर्जं यज्ञः सह ओजः सनेयम्। ऋतं मयि श्रयताम्। यत् पृथिवीमचरत् तत्प्रविष्टम् ॥ १२ ॥

येनासिञ्चद्बलमिन्द्रे प्रजापतिः। इदं तच्छुक्रं मधुवाजिनीवत्। येनोपरिष्टादधिनोन्महेन्द्रम्। दधि मां धिनोतु। अयं वेदः पृथिवीमन्वविन्दत्। गुहा सती गहने गह्वरेषु। स विन्दतु यजमानाय लोकम्। अच्छिद्रं यज्ञं भूरिकर्म्मा करोतु। अयं यज्ञः समसदद्धविष्मान्। ऋचा साम्ना यजुषा देवताभिः ॥ ॥ १३ ॥

तेन लोकान्त्सूर्यवतो जयेम। इन्द्रस्य सख्यममृतत्वमश्याम्। यो नः कनीय इह कामयातै। अस्मिन् यज्ञे यजानाय मह्यम्। अपतमिन्द्राग्नी भुवनान्नुदेताम्। अहं प्रजां वीरवतीं विदेय। अग्ने वाजजित्। वाजं त्वा सरिष्यन्तम्। वाजं जेष्यन्तम्। वाजिनं वाजजितम् ॥ १४ ॥

वाजजित्यायै सम्मार्ज्मि। अग्निमन्नादमन्नाद्याय। उपहूतो द्यौः पिता। उप मां द्यौः पिताह्वयताम्। अग्निराग्नीध्रात्। आयुषे वर्चसे। जीवात्वै पुण्याय। उप-

ह्वता पृथिवी माता। उप मां माता पृथिवी ह्वयताम्। अग्निराग्नीध्रात्॥ १५॥

आयुषे वर्चसे। जीवात्वै पुण्याय। मनो ज्योतिर्जुषतामाज्यम्। विच्छिन्नं यज्ञꣳ समिमं दधातु। बृहस्पतिस्तनुतामिमन्नः। विश्वे देवा इह मादयन्ताम्। यं ते अग्न आवृश्चामि। अहं वाक्षिपितश्चरन्। प्रजाञ्च तस्य मूलञ्च। नीचैर्देवा निवृश्चत॥ १६॥

अग्ने योनोऽभिदासति। समानो यश्च निष्ट्यः। इध्मस्येव प्रक्षायतः। मा तस्योच्छेषि किञ्चन। यो मां द्वेष्टि जातवेदः। यश्चाहं द्वेष्मि यश्च माम्। सर्वाꣳस्तानग्ने सन्दह। याꣳश्चाहं द्वेष्मि ये च माम्। अग्ने वाजजित्। वाजं त्वा ससृवाꣳसम्॥ १७॥

वाजं जिगिवाꣳसम्। वाजिनं वाजजितम्। वाजजित्यायै सम्मार्ज्मि। अग्निमन्नादमन्नाद्याय। वेदिर्बर्हिः शृतꣳ हविः। इध्मः परिधयः स्रुचः। आज्यं यज्ञऋचो यजुः। याज्याश्च वषट्काराः। सम्मे सन्नतयो नमन्ताम्। इध्म सन्नहने हुते॥ १८॥

दिवः खीलोऽवततः। पृथिव्या अध्युत्थितः। तेनासहस्रकाण्डेन। द्विषन्तꣳ शोचयामसि। द्विषन्मे बहु

शोचतु । ओषधे मो अहं शुचम् । यज्ञ नमस्ते यज्ञ । नमो नमश्च ते यज्ञ । शिवेन मे सन्तिष्ठस्व । स्योनेन मे सन्तिष्ठस्व ॥ १९ ॥

सुभूतेन मे सन्तिष्ठस्व । ब्रह्मवर्चसेन मे सन्तिष्ठस्व । यज्ञस्यर्द्धिमनु सन्तिष्ठस्व । उप ते यज्ञ नमः । उप ते नमः । उप ते नमः । त्रिष्फलीक्रियमाणानाम् । यो-न्यङ्गो अवशिष्यते । रक्षसां भागधेयम् । आपस्तत्प्रव-हतादितः ॥ २० ॥

उलूखले मुसले यच्च शूर्प्पे । आशिश्लेष दृषदि यत्क-पाले । अवप्रुषो विप्रुषः संयजामि । विश्वे देवा हवि-रिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीः । अग्नौ ताः सर्व्वाः स्विष्टाः सुहुता जुहोमि । उद्यन्नद्यमित्र-महः । सपत्नान्मे अनीनशः । दिवैनान्विद्युता जहि । निम्म्रोचन्नधरान् कृधि ॥ २१ ॥

उद्यन्नद्यविनो भज । पिता पुत्रेभ्यो यथा । दीर्घा-युत्वस्य हेशिषे । तस्य नो देहि सूर्य्य । उद्यन्नद्यमित्र-महः । आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य्य । हरिमाणञ्च नाशय । शुकेषु मे हरिमाणम् । रोपणा-कासु दध्मसि ॥ २२ ॥

अथो हारिद्रवेषु मे। हरिमाणं निदध्मसि। उदगादयमादित्यः। विश्वेन सहसा सह। द्विषन्तं मम रन्धयन्। मो अहं द्विषतोरधम्। योनः शपादशपतः। यश्च नः शपतः शपात्। उषाश्च तस्मै निम्रुक्च। सर्व्वं पापꣳ समूहताम्॥ योनः सपत्नो योरणः। मर्त्तोऽभिदासति देवाः। इध्मस्येव प्रक्षायतः। मातस्योच्छेषि किञ्चन। अवसृष्टः परापत। शरो ब्रह्मसꣳशितः। गच्छामित्रान् प्रविश। मैषां कञ्चनोच्छिषः॥ २३॥

पतिः प्रजापतये तपस्वी वाचा सौभगाय पशून्मे पिन्वस्व दुर्मरायुं देवयानानमेऽन्तरिक्षेऽहमुत्तरो भूयासं प्रजापतिरसि सर्व्वतः श्रितः प्रविष्टं देवताभिर्वाजजितं पृथिवी ह्वयतामग्निराग्नीध्राद्दश्वत ससृवाꣳसꣳ हुते स्योनेन मे सन्तिष्ठस्वेतः ऽधि दध्मस्यूहतामष्टौ च॥ अनु० ६॥

---

सप्तमोऽनुवाकः ।

*परिस्तृणीत भुवनस्य मध्ये मह्यं धुक्ष्व भुवनानि धस्ते सामे धुक्ष्व सक्षेदं पश्य । विधर्त्तरिदं पश्य । नाकेदं पश्य । रमतिः पनिष्ठा । ऋतं वर्षिष्ठम् । अमृतायान्याहुः । सूर्य्यो वरिष्ठो अक्षभिर्विभाति । अनु द्यावापृथिवी देवपुत्रे । दीक्षासि तपसो योनिः । तपोऽसि ब्रह्मणो योनिः ॥ १ ॥

ब्रह्मासि क्षत्रस्य योनिः । क्षत्रमस्यृतस्य योनिः । ऋतमसि भूरारभे । श्रद्धां मनसा । दीक्षां तपसा । विश्वस्य भुवनस्याधिपत्नीम् । सर्व्वे कामा यजमानस्य सन्तु । वातं प्राणं मनसान्वारभामहे । प्रजापतिं यो भुवनस्य गोपाः । स नो मृत्योस्त्रायतां पात्वंहसः ॥ ॥ २ ॥

ज्योग्जीवा जरामशीमहि । इन्द्रशाक्वरगायत्रीं प्रपद्ये । तां ते युनज्मि । इन्द्र शाक्वरत्रिष्टुभं प्रपद्ये । तां ते युनज्मि । इन्द्रशाक्वरजगतीं प्रपद्ये । तां ते युनज्मि । इन्द्रशाक्वरानुष्टुभं प्रपद्ये । तां ते युनज्मि । इन्द्रशाक्वरपङ्क्तिं प्रपद्ये ॥ ३ ॥

* एष प्रथमपादपर्य्यन्तः पाठः E पुस्तके नास्तीति बुद्धिरेव ।

तां ते युनज्मि। आहं दीक्षामरुहमृतस्य पत्नीम्। गायत्रेण छन्दसा ब्रह्मणा च। ऋतꣳ सत्येऽधायि। सत्यमृतेऽधायि। ऋतञ्च मे सत्यञ्चाभूताम्। ज्योतिरभूवꣳ सुवरगमम्। सुवर्गं लोकं नाकस्य पृष्ठम्। ब्रध्नस्य विष्टपमगम्। पृथिवी दीक्षा ॥ ४ ॥

तयाग्निर्दीक्षया दीक्षितः। ययाग्निर्दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। अन्तरिक्षं दीक्षा। तया वायुर्दीक्षया दीक्षितः। यया वायुर्दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। द्यौर्दीक्षा। तयादित्यो दीक्षया दीक्षितः। ययादित्यो दीक्षया दीक्षितः ॥ ५ ॥

तया त्वा दीक्षया दीक्षयामि। दिशो दीक्षा। तया चन्द्रमा दीक्षया दीक्षितः। यया चन्द्रमा दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। आपो दीक्षा। तया वरुणो राजा दीक्षया दीक्षितः। यया वरुणो राजा दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। ओषधयो दीक्षा ॥ ६ ॥

तया सोमो राजा दीक्षया दीक्षितः। यया सोमो राजा दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि।

वाग्दीक्षा। तया प्राणो दीक्षया दीक्षितः। यया प्राणो दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। पृथिवी त्वा दीक्षमाणमनुदीक्षताम्। अन्तरिक्षं त्वा दीक्षमाणमनुदीक्षताम्। द्यौस्त्वा दीक्षमाणमनुदीक्षताम् ॥ ७ ॥

दिशस्त्वा दीक्षमाणमनुदीक्षन्ताम्। आपस्त्वा दीक्षमाणमनुदीक्षन्ताम्। ओषधयस्त्वा दीक्षमाणमनुदीक्षन्ताम्। वाक् त्वा दीक्षमाणमनुदीक्षताम्। ऋचस्त्वा दीक्षमाणमनुदीक्षन्ताम्। सामानि त्वा दीक्षमाणमनुदीक्षन्ताम्। यजूꣳषि त्वा दीक्षमाणमनुदीक्षन्ताम्। अहश्च रात्रिश्च। कृषिश्च वृष्टिश्च। त्विषिश्चापचितिश्च ॥ ८ ॥

आपश्चौषधयश्च। ऊर्क्च सूनृता च। तास्त्वा दीक्षमाणमनुदीक्षन्ताम्। स्वे दक्षे दक्षपितेह सीद। देवानाꣳ सुम्ने महते रणाय। स्वासस्थस्तनुवा संविशस्व। पितेवैधि सूनव आसुशेवः। शिवो मा शिवमाविश। सत्यं म आत्मा। श्रद्धा मेऽक्षितिः ॥ ९ ॥

तपो मे प्रतिष्ठा। सवितृप्रसूता मा दिशो दीक्षयन्तु। सत्यमस्मि। अहं त्वदस्मि मदसि त्वमेतत्। ममा-

सि योनिस्तव योनिरस्मि। ममैव सन्वहं हव्यान्यग्ने। पुत्रः पित्रे लोककृज्जातवेदः। आजुह्वानः सुप्रतीकः पुरस्तात्। अग्ने स्वां योनिमासीद साध्या। अस्मिन्त्सधस्थे अध्युत्तरस्मिन् ॥ १० ॥

विश्वे देवा यजमानश्च सीदत। एकमिषे विष्णुस्त्वान्वेतु। द्वे ऊर्ज्जे विष्णुस्त्वान्वेतु। त्रीणि व्रताय विष्णुस्त्वान्वेतु। चत्वारि मा यो भवाय विष्णुस्त्वान्वेतु। पञ्च पशुभ्यो विष्णुस्त्वान्वेतु। षड्रायस्पोषाय विष्णुस्त्वान्वेतु। सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेतु। सखायः सप्तपदा अभूम। सख्यन्ते गमेयम् ॥ ११ ॥

सख्यात्ते मा योषम्। सख्यान्मे मा योष्ठाः। सासि सुब्रह्मण्ये। तस्यास्ते पृथिवी पादः। सासि सुब्रह्मण्ये। तस्यास्तेऽन्तरिक्षं पादः। सासि सुब्रह्मण्ये। तस्यास्ते द्यौः पादः। सासि सुब्रह्मण्ये। तस्यास्ते दिशः पादः ॥ १२ ॥

परोरजास्ते पञ्चमः पादः। सा न इषमूर्जं धुक्ष्व। तेज इन्द्रियम्। ब्रह्मवर्चसमन्नाद्यम्। विमिमे त्वा पयस्वतीम्। देवानां धेनुꣳ सुदुघामनपस्फुरन्तीम्। इन्द्रः सोमं पिबतु। क्षेमो अस्तु नः। इमां नराः कृणुत वेदिमेत्य। वसुमतीꣳ रुद्रवतीमादित्यवतीम् ॥ १३ ॥

वर्ष्मं दिवः । नाभा पृथिव्याः । यथायं यजमानो नरिष्येत् । देवस्य सवितुः सवे । चतुः शिखण्डा युवतिः सुपेशाः । घृतप्रतीका भुवनस्य मध्ये । तस्याः सुपर्णावधियौ निविष्टौ । तयोर्देवानामधिभागधेयम् । अपजन्यं भयन्नुद । अपचक्राणि वर्त्तय ॥ गृहः सोमस्य गच्छतम् । न वा उवेतन्म्रियसे नरिष्यसि । देवा इदेपि पथिभिः सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतः । तत्र त्वा देवः सविता दधातु ॥ १४ ॥

ब्रह्मणो योनिरःहसः पङ्क्तिं प्रपद्ये दीक्षाय यादित्यो दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयाम्योषधयो दीक्षाद्यौस्त्वा दीक्षमाणमनदीक्षतामपचितिश्चाक्षितिरुत्तरस्मिन्गमेयं दिशः पाद आदित्यवतीं वर्त्तय पञ्च च ॥ अनु० ७ ॥

अष्टमोऽनुवाकः ।

यदस्य पारे रजसः । शुक्रं ज्योतिरजायत । तन्नः पर्षदति द्विषः । अग्ने वैश्वानरः स्वाहा । यस्माद्भीषा वाशिष्ठाः । ततो नो अभयं कृधि । प्रजाभ्यः सर्वाभ्यो मृड । नमो रुद्राय मीढुषे । यस्माद्भीषा न्यषदः । ततो नो अभयं कृधि ॥ १ ॥

प्रजाभ्यः सर्व्वाभ्यो मृड। नमो रुद्राय मीढुषे। उदुत्त्व तिष्ठ प्रतितिष्ठ मारिषः। मेमं यज्ञं यजमानञ्च रीरिषः। सुवर्गे लोके यजमानꣳ हि धेहि। शन्न एधि द्विपदे शं चतुष्पदे। यस्माद्भीषा वेपिष्ठाः पलायिष्ठाः समज्ञास्थाः। ततो नो अभयं कृधि। प्रजाभ्यः सर्वाभ्यो मृड। नमो रुद्राय मीढुषे॥ २॥

य इदमकः। तस्मै नमः। तस्मै स्वाहा। न वा उ वेतन्म्रियसे। आशानां त्वा विश्वा आशाः। यज्ञस्य हि स्थ ऋत्वियौ। इन्द्राग्नी चेतनस्य च। हुताहुतस्य तृप्यतम्। अहुतस्य हुतस्य च। हुतस्य चाहु। तस्य च॥ अहुतस्य हुतस्य च। इन्द्राग्नी अस्य सोमस्य। वीतं पिबतं जुषेथाम्। मा यजमानं तमो विदत्। मर्त्विजो मो इमाः प्रजाः। मा यः सोममिमं पिबात्। सꣳसृष्टमुभयं कृतम्॥ ३॥

कृधि मीढुषे हुतस्य च सप्त च॥ अनु० ८॥

नवमोऽनुवाकः।

अनागसस्त्वा वयम्। इन्द्रेण प्रेषिता उप। वायुष्टे अस्त्वꣳशभूः। मित्रस्ते अस्त्वꣳशभूः। वरुणस्ते अस्त्वꣳ-

शुभूः। अपां क्षया ऋतस्य गर्भाः। भुवनस्य गोपाः
श्येना अतिथयः। पर्व्वतानां ककुभः प्रयुतो न पाता-
रः। वग्गुनेन्द्रꣳ ह्वयत। घोषेणामीवाꣳश्चातयत॥ १॥
युक्तास्थ वहत। देवा ग्रावाण इन्दुरिन्द्र इत्यवा-
दिषुः। ऐन्द्रमचुच्यवुः परमस्याः परावतः। आस्मात्
सधस्थात्। ओरोरन्तरिक्षात्। आसु भूतमसुषवुः। ब्रह्म-
वर्चसं म आसुषवुः। समरे रक्षाꣳस्यवधिषुः। अपहतं
ब्रह्मज्यस्य। वाक् च त्वा मनश्च श्रीणीताम्॥ २॥
प्राणश्च त्वापानश्च श्रीणीताम्। चक्षुश्च त्वा श्रोत्र-
ञ्च श्रीणीताम्। दक्षश्च त्वा बलञ्च श्रीणीताम्। ओ-
जश्च त्वा सहश्च श्रीणीताम्। आयुश्च त्वा जरा च श्री-
णीताम्। आत्मा च त्वा तनूश्च श्रीणीताम्। शृतोऽसि
शृतं कृतः। शृताय त्वा शृतेभ्यस्त्वा। यमिन्द्रमाहुर्वरुणं
यमाहुः। यं मित्रमाहुर्यमु सत्यमाहुः॥ ३॥
यो देवानां देवतमस्तपोजाः। तस्मै त्वा तेभ्य-
स्त्वा। मयि त्यदिन्द्रियं महत्। मयि दक्षो मयि क्रतुः।
मयि धायि सुवीर्य्यम्। त्रिशुग्घर्म्मो विभातु मे। आ-
कूत्या मनसा सह। विराजा ज्योतिषा सह। यज्ञेन
पयसा सह। तस्य दोहमशीमहि॥ ४॥

तस्य सुम्नमशीमहि। तस्य भक्षमशीमही। वाग्जुषाणा सोमस्य तृप्यतु। मित्रो जनान प्रसमित्र। यस्मान्न जातः परो अन्यो अस्ति। य आविवेश भुवनानि विश्वा। प्रजापतिः प्रजया संविदानः। त्रीणि ज्योतीꣳषि स च ते सषोडशी। एष ब्रह्मा य ऋत्वियः। इन्द्रो नाम श्रुतो गणे ॥ ५ ॥

प्रतेमहे विदथे शꣳसिषꣳहरी। य ऋत्वियः प्रतेवन्वे। वनुषो हर्य्यतं मदम्। इन्द्रो नाम घृतं पयः। हरिभिश्चारुसेचते। श्रुतोगण आत्वा विशन्तु। हरिवर्पसङ्गिरः। इन्द्राधिपतेऽधिपतिस्त्वं देवानामसि। अधिपतिं माम्। आयुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु॥ ॥ ६ ॥

इन्द्रश्च सम्राड्वरुणश्च राजा। तौ ते भक्षञ्चक्रतुरग्र एतम्। तयोरनु भक्षं भक्षयामि। वाग्जुषाणा सोमस्य तृप्यतु। प्रजापतिर्विश्वकर्म्मा। तस्य मनो देवं यज्ञेन राध्यासम्। अर्थे गा अस्य जहितः। अवसानपतेऽवसानं मे विन्द। नमो रुद्राय वास्तोष्पतये। आयने विद्रवणे ॥ ७ ॥

उद्याने यत्परायणे। आवर्त्तने विवर्त्तने। यो गो-

पायति तꣳ हुवे। यान्यपामित्यान्यप्रतीत्तान्यस्मि।
यमस्य बलिना चरामि। इहैव सन्तः प्रति तद्यातया-
मः। जीवाजीवेभ्यो निहराम एनत्। अनृणा अस्मि-
न्ननृणाः परस्मिन्। तृतीये लोके अनृणा स्याम। ये
देवयाना उत पितृयाणाः ॥ ८ ॥
सर्व्वान् पथो अनृणा आक्षीयेम। इदमूनुः श्रेयो व-
सानमागन्म। शिवे नो द्यावापृथिवी उभे इमे। गो-
मद्धनवदश्ववदूर्ज्जस्वत्। सुवीरा वीरैरनु सञ्चरेम।
अर्कः पवित्रꣳ रजसो विमानः। पुनाति देवानां भुव-
नानि विश्वा। द्यावापृथिवी पयसा संविदाने। घृतं
दुहाते अमृतं प्रपीने। पवित्रमर्क्को रजसो विमानः॥
पुनाति देवानां भुवनानि विश्वा। सुवर्ज्योतिर्यशो म-
हत्। अशीमहि गाधमुत प्रतिष्ठाम् ॥ ९ ॥
यातयतः श्रोणीताꣳ सत्यमाहुरशीमहि गणे कुरु
विद्रवणे पितृयाणा अर्क्को रजसो विमानस्त्रीणि च ॥
अनु० ९ ॥

दशमोऽनुवाकः।

उदस्तांप्सीत्सविता मित्रो अर्य्यमा। सर्व्वानमित्रा-

नवधीयुगेन । बृहन्तं मामकरद्दीरवन्तम् । रथन्तरे श्रयस्व स्वाहा पृथिव्याम् । वामदेव्ये श्रयस्व स्वाहा-न्तरिक्षे । बृहति श्रयस्व स्वाहा दिवि । बृहता त्वोपस्तम्नोमि । आ त्वा ददे यशसे वीर्याय च । अस्मास्वघ्निया यूयं दधायेन्द्रियं पयः । यस्ते द्रप्सो यस्त उदर्षः ॥ ॥ १ ॥

दैव्यः केतुर्विश्वं भुवनमाविवेश । स नः पाह्यरिष्ट्यै स्वाहा । अनु मा सर्वो यज्ञोऽयमेतु । विश्वे देवा मरुतः सामार्कः । आ प्रियश्छन्दाꣳसि निविदो यजूꣳषि । अस्यै पृथिव्यै यद्यज्ञियम् । प्रजापतेर्वर्त्तनिमनुवर्त्तस्व । अनु वीरैरनुराध्याम गोभिः । अन्वश्वैरनु सर्वैरुपुष्टैः । अनु प्रजयान्विन्द्रियेण ॥ २ ॥

देवा नो यज्ञमृजुधा नयन्तु । प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे । प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रतिप्रजायां प्रतितिष्ठामि भव्ये । विश्वमन्याभिवावृधे । तदन्यस्यामधिश्रितम् । दिवे च विश्वकर्मणे । पृथिव्यै चाकरन्नमः । अस्कान्द्यौः पृथिवीम् । अस्कानृषभो युवा गाः ॥ ३ ॥

स्कन्नेमा विश्वा भुवना । स्कन्नो यज्ञः प्रजनयतु ।

अस्कानजनि प्राजनि। आस्कन्नाज्जायते वृषा। स्कन्नात् प्रजनिषीमहि। ये देवा येषामिदं भागधेयं बभूव। येषां प्रयाज उतानूयाजाः। इन्द्रज्येष्ठेभ्यो वरुणराजभ्यः। अग्निहोतृभ्यो देवेभ्यः स्वाहा। उतत्यानो दिवामतिः ॥ ४ ॥

अदितिरूत्यागमत्। साशन्ता चीमयस्करत्। अपस्रिधः। उतत्यादैव्याभिषजा। शन्नस्करतो अश्विना। यूयातामस्मद्रपः। अपस्रिधः। शमग्निरग्निभिस्करत्। शन्नस्तपतु सूर्य्यः। शंवातो वात्वरपाः ॥ ५ ॥

अपः स्रिधः। तदित्पदं नविचिकेत विद्वान्। यन्मृतः पुनरप्येति जीवान्। चिवृद्यद्भुवनस्य रथवृत्। जीवोगर्भो न मृतः स जीवात्। प्रत्यस्मै पिपीषते। विश्वानि विदुषे भर। अरङ्गमाय जग्मवे। अपश्चाद् दध्वने नरे। इन्दुरिन्दुमवागात् ॥ इन्दोरिन्द्रोपात्। तस्य त इन्द विन्द्रपीतस्य मधुमतः। उपहूतस्योपहूतो भक्षयामि ॥ ॥ ६ ॥

उदर्ष इन्द्रियेण गामतिररपा अगाच्चीणि च ॥ अनु० १० ॥

एकादशोऽनुवाकः ।

ब्रह्म प्रतिष्ठामनसो ब्रह्मवाचः । ब्रह्म यज्ञानाꣳ हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनम् । यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहा कृता हुतिरेतु देवान् । आश्रावितमत्याश्रावितम् । वषट्कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनम् । यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहा कृता हुतिरेतु देवान् ॥ ॥ १ ॥

यद्वो देवा अतिपादयानि । वाचाचित् प्रयतं देव हेडनम् । अरायो अस्माँ अभिदुच्छुनायते । अन्यचास्मन्मरुतस्तन्निधेतन । ततम्म आपस्तदुतायते पुनः । स्वादिष्ठाधीतिरुचथाय शस्यते । अयꣳ समुद्र उत विश्वभेषजः । स्वाहाकृतस्य समुतृप्णुतर्भुवः । उद्वयं तमसस्परि । उदुत्यं चित्रम् ॥ २ ॥

इमं मे वरुणतत्वायामि । त्वन्नो अग्ने सत्वन्नो अग्ने । त्वमग्ने अयासि प्रजापते । इमं जीवेभ्यः परिधिं दधामि । मैषान्नुगादपरो अर्द्धमेतम् । शतं जीवन्तु शरदः पुरूचीः । तिरो मत्यं दधतां पर्वतेन । इष्टेभ्यः स्वा-

हा वषडनिष्टेभ्यः स्वाहा। भेषजं दुरिष्ट्यै स्वाहा नि-
ष्कृत्यै स्वाहा। दौराध्यै स्वाहा दैवीभ्यस्तनूभ्यः स्वाहा
॥ ३ ॥

ऋध्यै स्वाहा समृध्यै स्वाहा। यत इन्द्र भयामहे।
ततो नो अभयं कृधि। मघवंछग्धि तव तन्न ऊतये।
विद्विषो विमृधो जहि। स्वस्तिदा विशस्पतिः। वृचहा
विमृधोवशी। वृषेन्द्रः पुनरेतु नः। स्वस्तिदा अभयं
करः। आभिर्गीर्भिर्यदतोन ऊनम् ॥ ४ ॥

आप्यायय हरिवो वर्द्धमानः। यदा स्तोतृभ्यो महि
गोत्रारुजासि। भूयिष्ठभाजो अध ते स्याम। अनाज्ञातं
यदाज्ञातम्। यज्ञस्य क्रियते मिथु। अग्ने तदस्य कल्पय।
त्वꣳहि वेत्थ यथातथम्। पुरुषसम्मितो यज्ञः। यज्ञः
पुरुषसम्मितः। अग्ने तदस्य कल्पय॥ त्वꣳहि वेत्थ यथा-
तथम्। यत्पाकचामनसा दीनदक्षान्। यज्ञस्य मन्वते
मर्त्तासः। अग्निष्टद्धोता क्रतुविद्विजानन्। यजिष्ठो देवाँ
ऋतुशो यजाति ॥ ५ ॥

देवाꣳश्चिचं तनूभ्यः स्वाहोनं पुरुषसंमितोऽग्ने तदस्य
कल्पय पञ्च च ॥ ११ ॥

द्वादशोऽनुवाकः ।

यद्देवा देवहेडनम् । देवासश्चकृमा वयम् । आदित्यास्तस्मान्मा मुञ्चत । ऋतस्यर्तेन मामुत । देवा जीवनकाम्यायत् । वाचानृतमूदिम । अग्निर्मा तस्मादेनसः । गार्हपत्यः प्रमुञ्चतु । दुरितायानि चकृम । करोतु मामनेनसम् ॥ १ ॥

ऋतेन द्यावापृथिवी । ऋतेन त्वꣳ सरस्वति । ऋतान्मा मुञ्चताꣳहसः । यदन्यकृतमारिम । स जातशꣳसादुत वाजामि शꣳसात् । ज्यायसशꣳसादुतवा कनीयसः । अनाज्ञातं देवकृतं यदेनः । तस्मात् त्वमस्मान् जातवेदो मुमुग्धि । यद्वाचा यन्मनसा । बाहुभ्यामूरुभ्यामष्ठीवद्भ्याम् ॥ २ ॥

शिश्नैर्यदनृतं चकृमा वयम् । अग्निर्मा तस्मादेनसः । यद्धस्ताभ्यां चकर किल्बिषाणि । अक्षाणां वग्नुमुपजिघ्नमानः । दूरेपश्याच राष्ट्रभृच्च । तान्यप्सरसावनुदत्तामृणानि । अदीव्यं नृणं यदहं चकार । यद्वा दास्यन्त्सञ्जगारा जनेभ्यः । अग्निर्मा तस्मादेनसः । यन्मयि मातागर्भे सति ॥ ३ ॥

एनश्चकार यत्पिता । अग्निर्मा तस्मादेनसः । यदा पिपेष मातरं पितरम् । पुत्रः प्रमुदितो धयन् । अहिंसितौ पितरौ मया तत् । तदग्ने अनृणो भवामि । यदन्तरिक्षं पृथिवीमुत द्याम् । यन्मातरं पितरं वाजिहिंसिम । अग्निर्मा तस्मादेनसः । यदाशसा निशसा यत्पराशसा ॥ ४ ॥

यदेनश्चकृमा नूतनं यत्पुराणम् । अग्निर्मा तस्मादेनसः । अतिक्रामामि दुरितं यदेनः । जहामि रिप्रम्परमे सधस्थे । यत्र यन्ति सुकृतो नापि दुष्कृतः । तमारोहामि सुकृतान्नु लोकम् । त्रिते देवा अमृजतै तदेनः । त्रित एतन्मनुष्येषु मामृजे । ततो मा यदि किञ्चिदानशे । अग्निर्मा तस्मादेनसः ॥ ५ ॥

गार्हपत्यः प्रमुञ्चतु । दुरिता यानि चकृम । करोतु मामनेनसम् । दिवि जाता अप्सु जाताः । या जाता ओषधीभ्यः । अथो या अग्निजा आपः । ता नः शुन्धतु शुन्धनीः । यदापो नक्तं दुरितं चराम । यद्वा दिवा नूतनं यत्पुराणम् । हिरण्यवर्णास्तत उत्पुनीत नः ॥ इमम्मे वरुण तत्त्वायामि । त्वन्नो अग्ने स त्वन्नो अग्ने । त्वमग्ने अयासि ॥ ६ ॥

अनेनसमष्ठीवद्भ्याᳪ सति यत्पराशसा नशेऽग्निर्मा तस्मादेनसः पुनीत नस्त्रीणि च ॥ १२ ॥

गार्हपत्य·ऋतेन यद्वस्ताभ्यां यन्मयि माता यदा पिपेष यदन्तरिक्षं यदाशसातिक्रामामि चिते देवा गार्हपत्योदिविजाता यदापि इममे वरुण तत्वायामि त्वन्नो अग्ने स त्वन्नो अग्ने त्वमग्ने अयासि ॥

त्रयोदशोऽनुवाकः ।

यत्ते ग्राव्णेसा चिच्छिदुः ।मराजन् । प्रियाण्यङ्गानि स्वधितापरूᳪषि । तत्संधत्स्वाज्येनोत वर्द्धयस्व । अनागसो अधमित्संक्षयेम । यत्ते ग्रावा बाहुच्युतो अचुच्यवुः । नरो यत्ते दुदुहुर्द्दक्षिणेन । तत्त आप्यायतां तत्ते । निष्ट्यायतां देव सोम । यत्ते त्वचं बिभिदुर्यच्च योनिम् । यदा स्थानात् प्रच्युतो वेनसित्मना ॥ १ ॥

त्वया तत्सोम गुप्तमस्तु नः । सा नः सन्धा सत्परमे व्योमन् । अहाच्छरीरं पयसा समेत्य । अन्योन्यो भवति वर्णो अस्य । तस्मिन् वयमुपहूताः स्तवस्मः । आनो भज सदसि विश्वरूपे । नृचक्षाः सोम उतसुश्रुगस्तु । मा नो विहासीङ्गिर आवृणानः । अनागास्तनुवो वावृधानः । आनोरूपं वहतु जायमानः ॥ २ ॥

उपक्षरन्ति जुह्वो घृतेन। प्रियाण्यङ्गानि तव वर्द्ध-यन्तीः। तस्मै ते सोम नम इद्वषट् च। उप मा राज-न्त्सुकृते ह्वयस्व। संप्राणापानाभ्याꣳ समु चक्षुषा त्वम्। सꣳश्रोत्रेण गच्छस्व सोम राजन्। यत्त आस्थितꣳ शमु-तत्ते अस्तु। जानीतान्नः सङ्गमने पथीनाम्। एतं जानी-तात्परमे व्योमन्। वृकाः सधस्था विदरूपमस्य॥ ३॥

यदा गच्छात्पथिभिर्देवयानैः। इष्टापूर्ते कृणुतादा विरस्मै। अरिष्टो राजन्नगदः परेहि। नमस्ते अस्तु चक्षसे रघूयते। नाकमारोह सह यजमानेन। सूर्यं गच्छतात् परमे व्योमन्। अभूद्देवः सविता वन्द्यो नु नः। इदानीमह्न उपवाच्यो नृभिः। वि यो रत्ना भजति मा-नवेभ्यः। श्रेष्ठन्नो अत्र द्रविणं यथा दधत्॥ उप नो मित्रावरुणाविहावतम्। अन्वादीध्याथामिह नः स-खाया। आदित्यानां प्रसितिर्हेतिः। उग्रा शतापाष्ठा घ-विषा परि णो वृणक्तु। आप्यायस्व सन्ते॥ ४॥

त्मना जायमानोऽस्य दधत् पञ्च च॥ १३॥

चतुर्दशोऽनुवाकः।

यद्विदीक्षे मनसा यच्च वाचा। यद्वा प्राणैश्चक्षुषा

यच्च श्रोत्रेण। यद्रेतसा मिथुनेनाप्यात्मना। अङ्गो लोका दधिरे तेज इन्द्रियम्। शुक्रा दीक्षायै तपसो विमोचनीः। आपो विमोक्त्रीर्मयि तेज इन्द्रियम्। यदृचा साम्ना यजुषा। पशूनां चर्मन् हविषा दिदीक्षे। यच्छन्दोभिरोषधीभिर्वनस्पतौ। अङ्गो लोका दधिरे तेज इन्द्रियम्॥ १॥

शुक्रा दीक्षायै तपसो विमोचनीः। आपो विमोक्त्रीर्मयि तेज इन्द्रियम्। येन ब्रह्म येन क्षत्रम्। येनेन्द्राग्नी प्रजापतिः सोमो वरुणो येन राजा। विश्वे देवा ऋषयो येन प्राणाः। अङ्गो लोका दधिरे तेज इन्द्रियम्। शुक्रा दीक्षायै तपसो विमोचनीः। आपो विमोक्त्रीर्मयि तेज इन्द्रियम्। अपां पुष्पमस्योषधीनाꣳ रसः। सोमस्य प्रियं धाम॥ २॥

अग्नेः प्रियतमꣳ हविः स्वाहा। अपां पुष्पमस्योषधीनाꣳ रसः। सोमस्य प्रियं धाम। इन्द्रस्य प्रियतमꣳ हविः स्वाहा। अपां पुष्पमस्योषधीनाꣳ रसः। सोमस्य प्रियं धाम। विश्वेषां देवानां प्रियतमꣳ हविः स्वाहा। वयꣳ सोम व्रते तव। मनस्तनूषु पिप्रतः। प्रजावन्तो अशीमहि॥ ३॥

देवेभ्यः पितृभ्यः स्वाहा। सोमेभ्यः पितृभ्यः स्वाहा। कव्येभ्यः पितृभ्यः स्वाहा। देवास इह मादयध्वम्। सोम्यास इह मादयध्वम्। कव्यास इह मादयध्वम्। अनन्तरिताः पितरः सोम्याः सोमपीथात्। अपैतु मृत्युरमृतन्न आगन्। वैवस्वतो नो अभयं कृणोतु। पर्णं वनस्पतेरिव ॥ ४ ॥

अभि नः शीयताꣳ रयिः। स च तान्नः शचीपतिः। परं मृत्यो अनु परे हि पन्थाम्। यस्ते स्व इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि। मा नः प्रजाꣳ रीरिषोमोत वीरान्। इदमूनुः श्रेयोवसानमागन्म। यज्ञोजिद्धनजिदश्वजिद्यत्। पर्णं वनस्पतेरिव। अभि नः शीयताꣳ रयिः॥ स च तान्नः शचीपतिः ॥ ५ ॥

वनस्पतावङ्गो लोकाद्धिरे तेज इन्द्रियं धामाशी मह्नीवाभिनः शीयताꣳ रयिरेकञ्च ॥ अनु० १४ ॥

सर्वान्यद्भिःपर्णेन विवैयाः पुरस्ताद्देवा देवेषु परिस्तृणीत सक्षेदं यदस्य पारेनागस उदस्तात्सीद्ब्रह्मप्रतिष्ठा यद्देवा यत्ते ग्रावणा यद्दिदीक्षे चतुर्दश॥

सर्व्वान् भूतिमेव यामेवाप्स्वाहुतिं व्रतानां व्रतपते पर्णवल्कः सोम्यानामस्मिन् यज्ञेऽग्ने यो नो ज्योग्जीवाः

परोरजास्ते प्रतेमहे ब्रह्म प्रतिष्ठा गार्हपत्यस्त्रिंशदुत्त-
रशतम्॥ १३० ॥

इति सप्तमप्रपाठकः॥

---

हरिः ॐ ।

तृतीयकाण्डे अष्टमप्रपाठके

प्रथमोऽनुवाकः ।

साङ्ग्रहण्येष्ट्या यजते । इमां जनताꣳ सङ्गृह्णानीति । द्वादशारत्नी रशना भवति । *द्वादशमासाः संवत्सरः । संवत्सरमेवावरुन्धे । मौञ्जी भवति । ऊर्ग्वै मुञ्जाः । ऊर्जमेवावरुन्धे । चित्रा नक्षत्रं भवति । चित्रं वा एतत् कर्म्म ॥ १ ॥

यदश्वमेधः समृद्ध्यै । पुण्यनाम देवयजनमध्यवस्यति । पुण्यामेव तेन कीर्त्तिमभिजयति । अपदातीन्नृत्विजः समावहन्त्या सुब्रह्मण्यायाः । सुवर्गस्य लोकस्य समष्ट्यै । केशश्मश्रु वपते । नखानि निकृन्तते । दतो धावते । स्नाति । अहतं वासः परिधत्ते॥ पाप्मनोऽपहत्यै ।

---

* द्वादशारत्नी रशना भवति इति C पुस्तकपाठः ।

वाचं यत्वोपवसति। सुवर्गस्य लोकस्य गुप्त्यै। रात्रिं जा-
गरयन्त आसते। सुवर्गस्य लोकस्य समष्ट्यै ॥ २ ॥

कर्म्म धत्ते पञ्च च ॥ अनु० १ ॥

द्वितीयोऽनुवाकः।

चतुष्टय्य आपो भवन्ति। चतुःशफो वा अश्वः प्रा-
जापत्यः समृध्यै। ता दिग्भ्यः समाभृता भवन्ति। दिक्षु
वा आपः। अन्नं वा आपः। अद्भ्यो वा अन्नं जायते।
यदेवाद्भ्योऽन्नं जायते। तदवरुन्धे। तासु ब्रह्मौदनं पच-
ति। रेत एव तद्दधाति ॥ १ ॥

चतुःशरावो भवति। दिक्ष्वेव प्रतितिष्ठति। उभ-
यतो रुक्मौ भवतः। उभयत एवास्मिन् रुचं दधाति।
उद्धरति शृतत्वाय। सर्पिष्वान् भवति मेध्यत्वाय।
चत्वार आर्षेयाः प्राश्नन्ति। दिशामेव ज्योतिषि
जुहोति। चत्वारि हिरण्यानि ददाति। दिशामेव
ज्योतीꣳष्यवरुन्धे ॥ २ ॥

यदाज्यमुच्छिष्यते। तस्मिन् रशनान् युनक्ति।
प्रजापतिर्वा ओदनः। रेत आज्यम्। यदाज्ये रशनान्
युनक्ति। प्रजापतिमेव रेतसा समर्द्धयति। दर्भमयीं

रशना भवति। बहु वा एष कुचरो मेध्यमुपगच्छति। यदश्वः। पवित्रं वै दर्भाः ॥ ३॥

यद्दर्भमयी रशना भवति। पुनात्येवैनम्। पूतमेनं मेध्यमालभते। अश्वस्य वा आलब्धस्य महिमोदक्रामत्। समहर्त्विजः प्राविशत्। तन्महर्त्विजां महर्त्विक्त्वम्। यन्महर्त्विजः प्राश्नन्ति। महिमानमेवास्मिन् तद्दधाति। अश्वस्य वा आलब्धस्य रेत उदक्रामत्। तत्सुवर्णꣳ हिरण्यमभवत्॥ यत्सुवर्णꣳ हिरण्यं ददाति। रेत एव तद्दधाति। ओदने ददाति। रेतो वा ओदनः। रेतो हिरण्यम्। रेतसैवास्मिन् रेतो दधाति॥ ४ ॥

दधाति रुन्धे दर्भा अभवत् षट् च ॥ अनु० २ ॥

तृतीयोऽनुवाकः ।

यो वै ब्रह्मणे देवेभ्यः प्रजापतये प्रतिप्रोच्याश्वं मेध्यं बध्नाति। आ देवताभ्यो वृश्च्यते। पापीयान् भवति। यः प्रतिप्रोच्य। न देवताभ्य आवृश्च्यते। वसीयान् भवति। यदाह। ब्रह्मन्नश्वं मेध्यं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति। ब्रह्म वै ब्रह्मा। ब्रह्मण एव देवेभ्यः प्रजापतये प्रतिप्रोच्याश्वं मेध्यं बध्नाति॥

॥ १ ॥

न देवताभ्य आवृश्च्यते। वसीयान् भवति। देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्ताम्। पूष्णो हस्ताभ्यामित्याह यत्यै। व्यृद्धं वा एतद्यज्ञस्य। यदयजुष्केण क्रियते। इमामगृभ्णन् रशनामृतस्येत्यधिवदति यजुष्कृत्यै। यज्ञस्य समृद्ध्यै॥ २॥

तदाहुः। द्वादशारत्नी रशना कर्त्तव्या३ त्रयोदशारत्नी३रिति। ऋषभो वा एष ऋतूनाम्। यत् संवत्सरः। तस्य त्रयोदशो मासो विष्टपम्। ऋषभ एष यज्ञानाम्। यदश्वमेधः। यथा वा ऋषभस्य विष्टपम्। एवमेतस्य विष्टपम्। त्रयोदशमरत्निꣳ रशनायामुपादधाति॥ ३॥

यथर्षभस्य विष्टपꣳ सꣳस्करोति। तादृगेव तत्। पूर्व्व आयुषि विदथेषु कव्येत्याह। आयुरेवास्मिन्दधाति। तया देवाः सुतमा बभूवुरित्याह। भूतिमेवोपावर्त्तते। ऋतस्य सामन्त्सरमारपन्तीत्याह। सत्यं वा ऋतम्। सत्येनैवैनमृतेनारभते। अभिधा असीत्याह॥ ४॥

तस्मादश्वमेधयाजी सर्व्वाणि भूतान्यभिभवति। भुवनमसीत्याह। भूमानमेवोपैति। यन्तासीत्याह।

यन्तारमेवैनं करोति। धर्त्तासीत्याह। धर्त्तारमेवैनं करोति। सोऽग्निं वैश्वानरमित्याह। अग्नावेवैनं वैश्वानरे जुहोति। सप्रथसमित्याह ॥ ५ ॥

प्रजयैवैनं पशुभिः प्रथयति। स्वाहाकृत इत्याह। होम एवास्यैषः। पृथिव्यामित्याह। अस्यामेवैनं प्रतिष्ठापयति। यन्ताराड्यन्तासि यमनो धर्त्तासि धरुण इत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे। कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वेत्याह। आशिषमेवैतामाशास्ते। स्वगा त्वा देवेभ्य इत्याह॥ देवेभ्य एवैनꣳ स्वगा करोति। स्वाहा त्वा प्रजापतय इत्याह। प्राजापत्यो वा अश्वः। यस्या एव देवताया आलभ्यते। तयैवैनꣳ समर्द्धयति॥ ६ ॥

बध्नाति सम्टध्या उपादधात्यसीत्याह सप्रथसमित्याह देवेभ्य इत्याह पञ्च च ॥ अनु० ३ ॥

चतुर्थोऽनुवाकः।

यः पितुरनुजायाः पुत्रः। स पुरस्तान्नयति। यो मातुरनुजायाः पुत्रः। स पश्चान्नयति। विषूच्यमेवास्मात् पाप्मानं विहतः। यो अर्वन्तं जिघाꣳसति त-

मभ्यमीति वरुण इति श्वानं चतुरक्षं प्रसौति। परो मर्त्तः परश्वेति शुनश्चतुरक्षस्य प्रहन्ति। श्वेव वै पाप्मा भ्रातृव्यः। पाप्मानमेवास्य भ्रातृव्यꣳ हन्ति। सैध्रकं मुसलं भवति ॥ १ ॥

कर्म्म कर्म्मेवास्मै साधयति। पौꣳश्चलेयो हन्ति। पुꣳश्चल्वां वै देवाः शुचं न्यदधुः। शुचैवास्य शुचꣳ हन्ति। पाप्मा वा एतमीप्सतीत्याहुः। योऽश्वमेधेन यजत इति। अश्वस्याधस्पदमुपास्यति। वज्री वा अश्वः प्राजापत्यः। वज्रेणैव पाप्मानं भ्रातृव्यमवक्रामति। दक्षिणापप्ला-वयति ॥ २ ॥

पाप्मानमेवास्माच्छमलमपप्लावयति। ऐषीक उदूहो भवति। आयुर्वा इषीकाः। आयुरेवास्मिन् दधाति। अमृतं वा इषीकाः। अमृतमेवास्मिन् दधाति। वेतसशाखोपसम्बद्धा भवति। अप्सु योनिर्वा अश्वः। अप्सुजोवेतसः। स्वादेवैनं योनेर्निर्मिमीते॥ पुरस्तात् प्रत्यञ्चमभ्युदूहति। पुरस्तादेवास्मिन् प्रतीच्यमृतं दधाति। अहञ्च त्वञ्च वृत्रहन्निति ब्रह्मा यजमानस्य हस्तं गृह्णाति। ब्रह्मक्षत्रे एव सन्दधाति। अभिक्रत्वेन्द्र-भूरधज्मन्नित्यध्वर्य्युर्यजमानं वाचयत्यभिजित्यै ॥ ३ ॥

भवति स्रावयति मिमीते पञ्च च ॥ अनु० ४ ॥

पञ्चमोऽनुवाकः ।

चत्वार ऋत्विजः समुक्षन्ति । आभ्य एवैनं चतसृभ्यो दिग्भ्योऽभिसमीरयन्ति । शतेन राजपुत्रैः सहाध्वर्युः । पुरस्तात् प्रत्यङ् तिष्ठन् प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयꣳ राजा वृत्रं वध्यादिति । राज्यं वा अध्वर्युः । क्षत्रꣳ राजपुत्रः । राज्येनैवास्मिन् क्षत्रं दधाति । शतेनाराजभिरुग्रैः सह ब्रह्मा ॥ १ ॥

दक्षिणत उदङ्तिष्ठन् प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयꣳ राजा प्रतिधृष्योऽस्त्विति । बलं वै ब्रह्मा । बलमराजोऽग्रः । बलेनैवास्मिन् बलं दधाति । शतेन सूतग्रामणिभिः सह होता । पश्चात् प्राङ्तिष्ठन् प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयꣳ राजास्यै विशः ॥

॥ २ ॥

बहुग्वै बह्वश्वायै बह्वजाविकायै । बहुव्रीहियवायै बहुमाषतिलायै । बहुहिरण्यायै बहुहस्तिकायै । बहुदासपूरुषायै रयिमत्यै पुष्टिमत्यै । बहुरायस्पोषायै राजास्त्विति । भूमा वै होता । भूमा सूतग्रामण्यः । भूम्नै-

वास्मिन् भूमानं दधाति। शतेन क्षत्तसङ्गृहीतृभिः स-
होन्नाता। उत्तरतो दक्षिणातिष्ठन् प्रोक्षति॥ ३॥

अनेनाश्वेन मेध्येनेष्ट्वा। अयꣳ राजा सर्व्वमायुरे-
त्विति। आयुर्वा उन्नाता। आयुः क्षत्तसङ्गृहीतारः।
आयुषैवास्मिन्नायुर्दधाति। शतꣳ शतं भवन्ति। श-
तायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठ-
ति। चतुःशता भवन्ति। चतस्रो दिशः॥ दिक्ष्वेव प्रति-
तिष्ठति॥ ४॥

ब्रह्मा विश उक्षति दिश एकञ्च॥ अनु० ५॥

षष्ठोऽनुवाकः।

यथा वै हविषो गृहीतस्य स्कन्दति। एवं वा एतद-
श्वस्य स्कन्दति। यन्निक्तमनालब्धमुत्सृजन्ति। यत्स्तो-
क्या अन्वाह। सर्व्वहुतमेवैनं करोत्यस्कन्दाय। अस्क-
न्नꣳ हि तत्। यद्धुतस्य स्कन्दति। सहस्रमन्वाह। सहस्र-
सम्मितः सुवर्गो लोकः। सुवर्गस्य लोकस्याभिजित्यै॥
॥ १॥

यत् परिमिता अनु ब्रूयात्। परिमितमवरुन्धीत।
अपरिमिता अन्वाह। अपरिमितः सुवर्गो लोकः।

सुवर्गस्य लोकस्य समष्ट्यै। स्तोक्या जुहोति। या एव वर्ष्या आपः। ता अवरुन्धे। अस्यां जुहोति। इयं वा अग्निर्वैश्वानरः॥ २॥

अस्यामेवैनाः प्रतिष्ठापयति। उवाच ह प्रजापतिः। स्तोक्या सुवा अहमश्वमेधꣳ सꣳस्थापयामि। तेन ततः सꣳस्थितेन चरामीति। अग्नये स्वाहेत्याह। अग्नय एवैनं जुहोति। सोमाय स्वाहेत्याह। सोमायैवैनं जुहोति। सवित्रे स्वाहेत्याह। सवित्र एवैनं जुहोति॥
॥ ३॥

सरस्वत्यै स्वाहेत्याह। सरस्वत्या एवैनं जुहोति। पूष्णे स्वाहेत्याह। पूष्ण एवैनं जुहोति। बृहस्पतये स्वाहेत्याह। बृहस्पतय एवैनं जुहोति। अपां मोदाय स्वाहेत्याह। अद्भ्य एवैनं जुहोति। वायवे स्वाहेत्याह। वायव एवैनं जुहोति॥ ४॥

मित्राय स्वाहेत्याह। मित्रायैवैनं जुहोति। वरुणाय स्वाहेत्याह। वरुणायैवैनं जुहोति। एताभ्य एवैनं देवताभ्यो जुहोति। दश दश सम्पादं जुहोति। दशाक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे। प्रवा एषोऽस्माँल्लोकाच्च्यवते॥ यः पराचीराहुतीर्जुहो-

ति। पुनः पुनरभ्यावर्त्तं जुहोति। अस्मिन्नेव लोके प्रतितिष्ठति। एताꣳ ह वाव सोऽश्वमेधस्य सꣳस्थितिमुवाचास्कन्दाय। अस्कन्नꣳ हि तत्। यद्यज्ञस्य सꣳस्थितस्य स्कन्दति॥ ५॥

अभिजित्यै वैश्वानरः संविच एवैनं जुहोति वायव एवैनं जुहोति च्यवते षट् च॥ अनु० ६॥

सप्तमोऽनुवाकः।

प्रजापतये त्वा जुष्टं प्रोक्षामीति पुरस्तात् प्रत्यङ्तिष्ठन् प्रोक्षति। प्रजापतिर्वै देवानामन्नादो वीर्य्यावान्। अन्नाद्यमेवास्मिन् वीर्य्यं दधाति। तस्मादश्वः पशूनामन्नादो वीर्य्यावत्तमः। इन्द्राग्निभ्यां त्वेति दक्षिणतः। इन्द्राग्नी वै देवानामोजिष्ठौ बलिष्ठौ। ओज एवास्मिन् बलं दधाति। तस्मादश्वः पशूनामोजिष्ठो बलिष्ठः। वायवे त्वेति पश्चात्। वायुर्वै देवानामाशुः सारसारितमः॥ १॥

जवमेवास्मिन् दधाति। तस्मादश्वः पशूनामाशुः सारसारितमः। विश्वेभ्यस्त्वा देवेभ्य इत्युत्तरतः। विश्वे वै देवा देवानां यशस्वितमाः। यश एवास्मिन् दधा-

ति। तस्मादश्वः पशूनां यशस्वितमः। देवेभ्यस्त्वेत्यध-स्तात्। देवा वै देवानामपचिततमाः। अपचितिमे-वास्मिन् दधाति। तस्मादश्वः पशूनामपचिततमः॥ ॥ २ ॥

सर्व्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टात्। सर्व्वे वै देवा-स्त्विषिमन्तो हरस्विनः। त्विषिमेवास्मिन् हरो दधा-ति। तस्मादश्वः पशूनां त्विषिमान् हरस्वितमः। दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेत्याह। एभ्य एवैनं लो-केभ्यः प्रोक्षति। स ते त्वासते त्वाद्भ्यस्त्वौषधीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्य इत्याह। तस्मादश्वमेधयाजिनꣳ सर्व्वाणि भूतान्युपजीवन्ति। ब्रह्मवादिनो वदन्ति। यत्प्राजापत्योऽश्वः॥ अथ कस्मादेनमन्याभ्यो देवता-भ्योऽपि प्रोक्षतीति। अश्वे वै सर्व्वा देवता अन्वायत्ताः। तं यद्विश्वेभ्यस्त्वा भूतेभ्य इति प्रोक्षति। देवता एवा-स्मिन्नन्वायातयति। तस्मादश्वे सर्व्वा देवता अन्वाय-त्ताः ॥ ३ ॥

सारसारितमोऽपचिततमः प्राजापत्योऽश्वः पञ्च च॥ अन० ७॥

अष्टमोऽनुवाकः।

यथा वै हविषो गृहीतस्य स्कन्दति। एवं वा एतदश्वस्य स्कन्दति। यत्प्रोक्षितमनालब्धमुत्सृजन्ति। यदश्वचरितानि जुहोति। सर्व्वहुतमेवैनं करोत्यस्कन्दाय। अस्कन्नꣳ हि तत्। यद्धुतस्य स्कन्दति। ईङ्काराय स्वाहेङ्कृताय स्वाहेत्याह। एतानि वा अश्वचरितानि। चरितैरेवैनꣳ समर्द्धयति ॥ १ ॥

तदाहुः। अनाहुतयो वा अश्वचरितानि। नैता होतव्या इति। अथो खल्वाहुः। होतव्या एव। अच वावैवं विद्वानश्वमेधꣳ सꣳस्थापयति। यदश्वचरितानि जुहोति। तस्माद्धोतव्या इति। बहिर्धावा एनमेतदायतनाद्दधाति। भ्रातृव्यमस्मै जनयति ॥ २ ॥

यस्यानायतनेऽन्यत्राग्नेराहुतीर्जुहोति। साविचिया इष्ट्याः पुरस्तात्स्विष्टकृतः। आहवनीयेऽश्वचरितानि जुहोति। आयतन एवास्याहुतीर्जुहोति। नास्मै भ्रातृव्यं जनयति। तदाहुः। यज्ञमुखे यज्ञमुखे होतव्याः। यज्ञस्य क्लृप्त्यै। सुवर्गस्य लोकस्यानुख्यात्या इति। अथो खल्वाहुः ॥ ३ ॥

यद्यज्ञमुखे यज्ञमुखे जुहुयात्। पशुभिर्यजमानं व्य-

र्द्धयेत्। अवसुवर्गाल्लोकात्पद्येत। पापीयान्त्स्यादिति। सकृदेव होतव्याः। न यजमानं पशुभिर्व्यर्द्धयति। अभिसुवर्गं लोकं जयति। न पापीयान् भवति। अष्टाचत्वारिꣳशतमश्वरूपाणि जुहोति। अष्टाचत्वारिꣳशदक्षरा जगती॥ जागतोऽश्वः प्राजापत्यः समृद्ध्यै। एकमतिरिक्तं जुहोति। तस्मादेकः प्रजास्वर्धुकः॥ ४॥

अर्द्धयति जनयति खल्वाहुर्जगती चीणि च॥ अनु० ८॥

नवमोऽनुवाकः।

विभूर्मात्रा प्रभूः पित्रेत्याह। इयं वै माता। असौ पिता। आभ्यामेवैनं परिददाति। अश्वोऽसि हयोऽसीत्याह। शास्त्येवैनमेतत्। तस्माच्छिष्टाः प्रजा जायन्ते। अत्योऽसीत्याह। तस्मादश्वः सर्वान् पशूनत्येति। तस्मादश्वः सर्वेषां पशूनाꣳ श्रैष्ठ्यं गच्छति॥ १॥

प्रयशः श्रैष्ठ्यमाप्नोति। य एवं वेद। नरोऽस्यर्वासि सप्तिरसि वाज्यसीत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे। ययुर्नामासीत्याह। एतद्वा अश्वस्य प्रियं नामधेयम्। प्रियेणैवैनं नामधेयेनाभिवदति। तस्मा-

द्य्यामित्रौ सङ्गत्य। नाम्ना चेध्वयते। मित्रमेव भव-
तः ॥ २ ॥

आदित्यानां पत्वान्विहीत्याह। आदित्यानेवैनं ग-
मयति। अग्नये स्वाहा स्वाहेन्द्राग्निभ्यामिति पूर्व्वहो-
मां जुहोति। पूर्व्व एव द्विषन्तं भ्रातृव्यमतिक्रामति।
भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वेत्युत्सृजति सर्व-
त्वाय। देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रो-
क्षितं गोपायतेत्याह। शतं वै तल्प्या राजपुत्रा देवा
आशापालाः। तेभ्य एवैनं परिददाति। ईश्वरो वा
अश्वः प्रमुक्तः परां परावतं गन्तोः। इह धृतिः स्वाहेह
विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहेति च-
तृषु पत्सु जुहोति ॥ ३ ॥

एता वा अश्वस्य बन्धनम्। ताभिरेवैनं बध्नाति।
तस्मादश्वः प्रमुक्तो बन्धनमागच्छति। तस्मादश्वः प्रमु-
क्तो बन्धनं न जहाति। राष्ट्रं वा अश्वमेधः। राष्ट्रे खलु
वा एते व्यायच्छन्ते। येऽश्वं मेध्यꣳ रक्षन्ति। तेषां य
उदृचं गच्छन्ति। राष्ट्रादेव ते राष्ट्रं गच्छन्ति। अथ य
उदृचं न गच्छन्ति॥ राष्ट्रादेव ते व्यवच्छिद्यन्ते। परा
वा एष सिच्यते। यो बलोऽश्वमेधेन यजते। यदमित्रा

अश्वं विन्देरन्। हन्येतास्य यज्ञः। चतुःशता रक्षन्ति। यज्ञस्याघाताय। अथान्यमानीय प्रोक्षेयुः। सैव ततः प्रायश्चित्तिः ॥ ४ ॥

गच्छति भवतः पत्सु जुहोति न गच्छन्ति नव च ॥ अनु० ९ ॥

दशमोऽनुवाकः ।

प्रजापतिरकामयताश्वमेधेन यजेयेति। स तपोऽतप्यत। तस्य तेपानस्य। सप्तात्मनो देवता उदक्रामन्। सा दीक्षाभवत्। स एतानि वैश्वदेवान्यपश्यत्। तान्यजुहोत्। तैर्वै स दीक्षामवारुन्ध। यद्वैश्वदेवानि जुहोति। दीक्षामेव तैर्यजमानोऽवरुन्धे ॥ १ ॥

सप्त जुहोति। सप्त हि ता देवता उदक्रामन्। अन्वहं जुहोति। अन्वहमेव दीक्षामवरुन्धे। त्रीणि वैश्वदेवानि जुहोति। चत्वार्यौद्ग्रहणानि। सप्त सम्पद्यन्ते। सप्त वै शीर्षण्याः प्राणाः। प्राणा दीक्षा। प्राणैरेव प्राणां दीक्षामवरुन्धे ॥ २ ॥

एकविंशतिं वैश्वदेवानि जुहोति। एकविंशतिर्वै देवलोकाः। द्वादश मासाः पञ्चर्तवः। त्रय इमे लोकाः।

असावादित्य एकविꣳशः। एष सुवर्गो लोकः। तद्दै-व्यं क्षत्रम्। सा श्रीः। तद्ब्रध्नस्य विष्टपम्। तत्स्वारा-ज्यमुच्यते ॥ ३ ॥

त्रिꣳशतमौद्ग्रहणानि जुहोति। त्रिꣳशदक्षरा वि-राट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे। त्रेधा विभज्य देवता जुहोति। त्र्यावृतो वै देवाः। त्र्यावृत इमे लोकाः। एषां लोकानामाप्त्यै। एषां लोकानां कॢप्त्यै। अप वा एतस्मात् प्राणाः क्रामन्ति ॥ ४ ॥

यो दीक्षामतिरेचयति। सप्ताहं प्रचरन्ति। सप्त वै शीर्षण्याः प्राणाः। प्राणा दीक्षा। प्राणैरेव प्राणान् दी-क्षामवरुन्धे। पूर्णाहुतिमुत्तमां जुहोति। सर्व्वं वै पूर्णा-हुतिः। सर्व्वमेवाप्नोति। अथो इयं वै पूर्णाहुतिः। अस्यामेव प्रतितिष्ठति ॥ ५ ॥

रुन्धे प्राणान् दीक्षामवरुन्ध उच्यते क्रामन्ति ति-ष्ठति ॥ अनु० १० ॥

एकादशोऽनुवाकः।

प्रजापतिरश्वमेधमसृजत। तꣳ सृष्टं न किञ्चनोद-यच्छत्। तं वैश्वदेवान्येवोदयच्छन्। यद्वैश्वदेवानि जु-

होति। यज्ञस्योद्यत्यै। स्वाहाधिमाधीताय स्वाहा। स्वाहाधीतं मनसे स्वाहा। स्वाहा मनः प्रजापतये स्वाहा। काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहेति प्राजापत्ये मुख्ये भवतः। प्रजापतिमुखाभिरेवैनं देवताभिरुद्यच्छते ॥ १ ॥

अदित्यै स्वाहादित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहेत्याह। इयं वा अदितिः। अस्या एवैनं प्रतिष्ठायोद्यच्छते। सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा सरस्वत्यै पावकायै स्वाहेत्याह। वाग्वै सरस्वती। वाचैवैनमुद्यच्छते। पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरं धिषाय स्वाहेत्याह। पशवो वै पूषा। पशुभिरेवैनमुद्यच्छते। त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीयाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहेत्याह॥ त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्। रूपमेव पशुषु दधाति। अथो रूपैरेवैनमुद्यच्छते। विष्णवे स्वाहा विष्णवे निखुर्यपाय स्वाहा विष्णवे निभूयपाय स्वाहेत्याह। यज्ञो वै विष्णुः। यज्ञायैवैनमुद्यच्छते। पूर्णाहुतिमुत्तमां जुहोति। प्रत्युत्तब्ध्यै सयत्वाय ॥ २ ॥

यच्छते पुरुरूपाय स्वाहेत्याहाष्टौ च॥ अनु० ११॥

द्वादशोऽनुवाकः।

सावित्रमष्टाकपालं प्रातर्निर्वपति। अष्टाक्षरा गायत्री। गायत्रं प्रातःसवनम्। प्रातःसवनादेवैनं गायत्रियाश्छन्दसोऽधिनिर्म्मिमीते। अथो प्रातःसवनमेव तेनाप्नोति। गायत्रीं छन्दः। सवित्रे प्रसवित्र एकादशकपालं मध्यन्दिने। एकादशाक्षरा त्रिष्टुप्। त्रैष्टुभं माध्यन्दिनꣳ सवनम्। माध्यन्दिनादेवैनꣳ सवनात् त्रिष्टुभश्छन्दसोऽधिनिर्म्मिमीते ॥ १ ॥

अथो माध्यन्दिनमेव सवनं तेनाप्नोति। त्रिष्टुभं छन्दः। सवित्र आसवित्रे द्वादशकपालमपराह्णे। द्वादशाक्षरा जगती। जागतं तृतीयसवनम्। तृतीयसवनादेवैनं जगत्याश्छन्दसोऽधिनिर्म्मिमीते। अथो तृतीयसवनमेव तेनाप्नोति। जगतीं छन्दः। ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः। इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहेति चतस्र आहुतीर्जुहोति॥ चतस्रो दिशः। दिग्भिरेवैनं परिगृह्णाति। आश्वत्थो व्रजो भवति। प्रजापतिर्देवेभ्योऽनिलायत। अश्वो रूपं कृत्वा। सोऽश्वत्थे संवत्सरम-

तिष्ठत्। तदश्वत्थस्याश्वत्थत्वम्। यदाश्वत्थो वृक्षो भवति। स्व एवैनं योनौ प्रतिष्ठापयति॥ २॥

त्रिष्टुभश्छन्दसोऽधिनिर्म्मिमीते जुहोति नव च॥ अनु० १२॥

त्रयोदशोऽनुवाकः।

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामित्याह। ब्राह्मण एव ब्रह्मवर्चसं दधाति। तस्मात् पुरा ब्राह्मणो ब्रह्मवर्चस्यजायत। आस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतामित्याह। राजन्य एव शौर्य्यं महिमानं दधाति। तस्मात् पुरा राजन्य इषव्यः शूरो महारथोऽजायत। दोग्ध्री धेनुरित्याह। धेन्वामेव पयो दधाति। तस्मात् पुरा दोग्ध्री धेनुरजायत। वोढानड्वानित्याह॥ १॥

अनडुह्येव वीर्य्यं दधाति। तस्मात् पुरा वोढानड्वानजायत। आशुः सप्तिरित्याह। अश्व एव जवं दधाति। तस्मात् पुराशुरश्वोऽजायत। पुरन्धिर्योषेत्याह। योषित्येव रूपं दधाति। तस्मात् स्त्री युवतिः प्रिया भावुका। जिष्णू रथेष्ठा इत्याह। आह वै तत्र जिष्णू रथेष्ठा जायते॥ २॥

यच्चैतेन यज्ञेन यजन्ते। सभेयो युवेत्याह। यो वै पूर्व्ववयसी। स सभेयो युवा। तस्माद्युवा पुमान् प्रियो भावुकः। आस्य यजमानस्य वीरो जायतामित्याह। आ ह वै तत्र यजमानस्य वीरो जायते। यच्चैतेन यज्ञेन यजन्ते। निकामे निकामे नः पर्जन्यो वर्षत्वित्याह। निकामे निकामे ह वै तत्र पर्जन्यो वर्षति॥ यच्चैतेन यज्ञेन यजन्ते। फलिन्यो न ओषधयः पच्यन्तामित्याह। फलिन्यो ह वै तत्रौषधय पच्यन्ते। यच्चैतेन यज्ञेन यजन्ते। योगक्षेमो नः कल्पतामित्याह। कल्पते ह वै तत्र प्रजाभ्यो योगक्षेमः। यच्चैतेन यज्ञेन यजन्ते॥ ३॥

अनड्वानित्याह जायते वर्षति सप्त च॥ अनु० १३॥

चतुर्दशोऽनुवाकः।

प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्। स आत्मन्नश्वमेधमधत्त। तं देवा अब्रुवन्। एष वाव यज्ञः। यदश्वमेधः। अप्येव नोऽत्रास्त्विति। तेभ्य एतानन्नहोमान् प्रायच्छत्। तानजुहोत्। तैव स देवानप्रीणात्। यदन्नहोमान् जुहोति॥ १॥

देवानेव तैर्यजमानः प्रीणाति। आज्येन जुहोति।

अग्नेर्वा एतद्रूपम् । यदाज्यम् । यदाज्येन जुहोति ।
अग्निमेव तत्प्रीणाति । मधुना जुहोति । महत्यै वा एत-
द्देवतायै रूपम् । यन्मधु । यन्मधुना जुहोति ॥ २ ॥

महतीमेव तद्देवतां प्रीणाति । तण्डुलैर्जुहोति । व-
सूनां वा एतद्रूपम् । यत्तण्डुलाः । यत्तण्डुलैर्जुहोति ।
वसूनेव तत्प्रीणाति । पृथुकैर्जुहोति । रुद्राणां वा एत-
द्रूपम् । यत्पृथुकाः । यत्पृथुकैर्जुहोति ॥ ३ ॥

रुद्रानेव तत्प्रीणाति । लाजैर्जुहोति । आदित्यानां
वा एतद्रूपम् । यल्लाजाः । यल्लाजैर्जुहोति । आदित्या-
नेव तत्प्रीणाति । करम्भैर्जुहोति । विश्वेषां वा एतद्देवा-
नाꣳ रूपम् । यत्करम्भाः । यत्करम्भैर्जुहोति ॥ ४ ॥

विश्वानेव तद्देवान् प्रीणाति । धानाभिर्जुहोति ।
नक्षत्राणां वा एतद्रूपम् । यद्धानाः । यद्धानाभिर्जुहोति ।
नक्षत्राण्येव तत्प्रीणाति । सक्तुभिर्जुहोति । प्रजापतेर्वा
एतद्रूपम् । यत्सक्तवः । यत्सक्तुभिर्जुहोति ॥ ५ ॥

प्रजापतिमेव तत्प्रीणाति । मसूस्यैर्जुहोति । सर्वा-
सां वा एतद्देवतानाꣳ रूपम् । यन्मसूस्यानि । यन्म-
सूस्यैर्जुहोति । सर्वा एव तद्देवताः प्रीणाति । प्रियङ्गु-
तण्डुलैर्जुहोति । प्रियाङ्गा ह वै नामैते । एते वै देवा अ-

श्वस्याङ्गानि समदधुः । यत्प्रियङ्गुतण्डुलैर्जुहोति ॥ अ-श्वस्यैवाङ्गानि सन्दधाति । दशान्नानि जुहोति । दशा-क्षरा विराट् । विराट् कृत्स्नस्यान्नाद्यस्यावरुध्यै ॥ ६ ॥

जुहोति मधुना जुहोति पृथुकैर्जुहोति करम्भैर्जुहो-ति सक्तुभिर्जुहोति प्रियङ्गुतण्डुलैर्जुहोति चत्वारि च ॥ अनु० १४ ॥

अन्नहोमानाज्येनाग्नेर्मधुना तण्डुलैः पृथुकैर्लाजैः करम्भैर्धानाभिः सक्तुभिर्मसस्यैः प्रियङ्गुतण्डुलैर्दशा-न्नानि द्वादश ॥

पञ्चदशोऽनुवाकः ।

प्रजापतिरश्वमेधमसृजत । तꣳ सृष्टꣳ रक्षाꣳस्यजि-घाꣳसन् । स एतान् प्रजापतिर्नक्तꣳ होमानपश्यत् । तानजुहोत् । तैर्वै स यज्ञाद्रक्षाꣳस्यपाहन् । यन्नक्तꣳ होमाञ्जुहोति । यज्ञादेवतैर्यजमानो रक्षाꣳस्यपह-न्ति । आज्येन जुहोति । वज्रो वा आज्यम् । वज्रेणैव यज्ञाद्रक्षाꣳस्यपहन्ति ॥ १ ॥

आज्यस्य प्रतिपदं करोति । प्राणो वा आज्यम् । मुखत एवास्य प्राणं दधाति । अन्नहोमान् जुहोति । शरीरवदेवावरुन्धे । व्यत्यासं जुहोति । उभयस्यावरु-

ध्यै। नक्तं जुहोति। रक्षसामपहत्यै। आज्येनान्ततो जुहोति॥ २॥

प्राणो वा आज्यम्। उभयत एवास्य प्राणं दधाति। पुरस्ताच्चोपरिष्टाच्च। एकस्मै स्वाहेत्याह। अस्मिन्नेव लोके प्रतितिष्ठति। द्वाभ्याꣳ स्वाहेत्याह। अमुष्मिन्नेव लोके प्रतितिष्ठति। उभयोरेव लोकयोः प्रतितिष्ठति। अस्मिꣳश्चामुष्मिꣳश्च। शताय स्वाहेत्याह॥ शतायुर्वै पुरुषः शतवीर्य्यः। आयुरेव वीर्य्यमवरुन्धे। सहस्राय स्वाहेत्याह। आयुर्वै सहस्रम्। आयुरेवावरुन्धे। सर्वस्मै स्वाहेत्याह। अपरिमितमेवावरुन्धे॥ ३॥

एव यज्ञाद्रक्षाꣳस्यपहन्त्यन्ततो जुहोति शताय स्वाहेत्याह सप्त च॥ अनु० १५॥

षोडशोऽनुवाकः।

प्रजापतिं वा एष ईप्सतीत्याहुः। योऽश्वमेधेन यजत इति। अथो आहुः। सर्व्वाणि भूतानीति। एकस्मै स्वाहेत्याह। प्रजापतिर्वा एकः। तमेवाप्नोति। एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेत्यभिपूर्व्वमाहुतीर्जुहोति। अभिपूर्व्वमेव सुवर्गं लोकमेति। एकोत्तरं जुहोति॥ १॥

एकवदेव सुवर्गं लोकमेति। सन्ततं जुहोति। सुवर्गस्य लोकस्य सन्तत्यै। शताय स्वाहेत्याह। शतायुर्वै पुरुषः शतवीर्य्यः। आयुरेव वीर्य्यमवरुन्धे। सहस्राय स्वाहेत्याह। आयुर्वै सहस्रम्। आयुरेवावरुन्धे। अयुताय स्वाहा नियुताय स्वाहा प्रयुताय स्वाहेत्याह॥ ॥ २ ॥

त्रय इमे लोकाः। इमानेव लोकानवरुन्धे। अर्बुदाय स्वाहेत्याह। वाग्वा अर्बुदम्। वाचमेवावरुन्धे। न्यर्बुदाय स्वाहेत्याह। यो वै वाचो भूमा। तान्यर्बुदम्। वाच एव भूमानमवरुन्धे। समुद्राय स्वाहेत्याह॥ ३ ॥

समुद्रमेवाप्नोति। मध्याय स्वाहेत्याह। मध्यमेवाप्नोति। अन्ताय स्वाहेत्याह। अन्तमेवाप्नोति। परार्द्धाय स्वाहेत्याह। परार्द्धमेवाप्नोति। उषसे स्वाहा व्युष्ट्यै स्वाहेत्याह। रात्रिर्वा उषाः। अहर्व्युष्टिः॥ अहोरात्रे एवावरुन्धे। अथो अहोरात्रयोरेव प्रतितिष्ठति। ता यदुभयीर्दिवा वा नक्तं वा जुहुयात्। अहोरात्रे मोहयेत्। उषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वाहोद्यते स्वाहेत्यनुदिते जुहोति। उदिताय स्वाहा सुव-

गाय स्वाहा लोकाय स्वाहेत्युदिते जुहोति। अहोरा-
त्रयोरव्यतिमोहाय ॥ ४ ॥

एकोत्तरं जुहोति प्रयुताय स्वाहेत्याह समुद्राय
स्वाहेत्याहाहव्युष्टिः सप्त च॥ अनु० १६ ॥

सप्तदशोऽनुवाकः।

विभूर्मात्रा प्रभूः पित्रेत्यश्वनामानि जुहोति। उभ-
योरेवैनं लोकयोर्नामधेयं गमयति। आयनाय स्वाहा
प्रायणाय स्वाहेत्युद्रावां जुहोति। सर्व्वमेवैनमस्कन्नꣳ
सुवर्गं लोकं गमयति। अग्नये स्वाहा सोमाय स्वा-
हेति पूर्व्वहोमां जुहोति। पूर्व्व एव द्विषन्तं भ्रातृव्यम-
तिक्रामति। पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्याह।
यथा यजुरेवैतत्। अग्नये स्वाहा सोमाय स्वाहेति पू-
र्व्वदीक्षा जुहोति। पूर्व्व एव द्विषन्तं भ्रातृव्यमतिक्रा-
मति ॥ १ ॥

पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्येकविꣳशिनीं
दीक्षां जुहोति। एकविꣳशतिर्वै देवलोकाः। द्वादश-
मासाः पञ्चर्त्तवः। त्रय इमे लोकाः। असावादित्य
एकविꣳशः। एष सुवर्गो लोकः। सुवर्गस्य लोकस्य स-

मध्यै। भुवो देवानां कर्म्मणेत्यृतुदीक्षा जुहोति। ऋतूनेवास्मै कल्पयति। अग्नये स्वाहा वायवे स्वाहेति जुहोत्यनन्तरित्यै ॥ २ ॥

अर्वाङ् यज्ञः सङ्क्रामत्वित्याप्तीर्जुहोति। सुवर्गस्य लोकस्याप्त्यै। भूतं भव्यं भविष्यदिति पर्य्याप्तीर्जुहोति। सुवर्गस्य लोकस्य पर्य्याप्त्यै। आ मे गृहा भवन्त्वित्याभूर्जुहोति। सुवर्गस्य लोकस्याभूत्यै। अग्निना तपोऽन्वभवदित्यनुभूर्जुहोति। सुवर्गस्य लोकस्यानुभूत्यै। स्वाहाधिमाधीताय स्वाहेति समस्तानि वैश्वदेवानि जुहोति। समस्तमेव द्विषन्तं भ्रातृव्यमतिक्रामति ॥ ३ ॥

दद्भ्यः स्वाहा हनूभ्याꣳ स्वाहेत्यङ्गहोमां जुहोति। अङ्गे अङ्गे वै पुरुषस्य पाप्मोपश्लिष्टः। अङ्गादङ्गादेवैनं पाप्मनस्तेन मुञ्चति। अञ्ज्येताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यश्वरूपाणि जुहोति। रूपैरेवैनꣳ समर्द्धयति। ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहेत्योषधिहोमां जुहोति। द्वय्यो वा ओषधयः। पुष्पेभ्योऽन्याः फलं गृह्णन्ति। मूलेभ्योऽन्याः। ता एवोभयीरवरुन्धे ॥ ॥ ४ ॥

वनस्पतिभ्यः स्वाहेति वनस्पतिहोमां जुहोति।

आरण्यस्यान्नाद्यस्यावरुध्यै। मेषस्त्वा पचतैरवत्वित्य-
पाव्यानि जुहोति। प्राणा वै देवा अपाव्याः। प्राणा-
नेवावरुन्धे। कूप्याभ्यः स्वाहाद्भ्यः स्वाहेत्यपाꣳ होमां
जुहोति। अप्सु वा आपः। अन्नं वा आपः। अद्भ्यो वा
अन्नं जायते। यदेवाद्भ्योऽन्नं जायते॥ तदवरुन्धे॥ ५॥

पूर्व्वदीक्षा जुहोति पूर्व्व एव द्विषन्तं भ्रातृव्यमति-
क्रामत्यनन्तरित्यै क्रामति रुन्धे जायत एकञ्च॥

अनु० १७॥

अष्टादशोऽनुवाकः।

अम्भाꣳसि जुहोति। अयं वै लोकोऽम्भाꣳसि। तस्य
वसवोऽधिपतयः। अग्निर्ज्योतिः। यदम्भाꣳसि जुहोति।
इममेव लोकमवरुन्धे। वसूनाꣳ सायुज्यं गच्छति।
अग्निं ज्योतिरवरुन्धे। नभाꣳसि जुहोति। अन्तरिक्षं
वै नभाꣳसि॥ १॥

तस्य रुद्रा अधिपतयः। वायुर्ज्योतिः। यन्नभाꣳसि
जुहोति। अन्तरिक्षमेवावरुन्धे। रुद्राणाꣳ सायुज्यं
गच्छति। वायुं ज्योतिरवरुन्धे। महाꣳसि जुहोति।
असौ वै लोको महाꣳसि। तस्यादित्या अधिपतयः।
सूर्य्यो ज्योतिः॥ २॥

यन्महाꣳसि जुहोति। अमुमेव लोकमवरुन्धे। आदित्यानाꣳ सायुज्यं गच्छति। सूर्य्यं ज्योतिरवरुन्धे। नमो राज्ञे नमो वरुणायेति यव्यानि जुहोति। अन्नाद्यस्यावरुध्यै। मयो भूर्वातो अभिवातूस्रा इति गव्यानि जुहोति। पशूनामवरुध्यै। प्राणाय स्वाहा व्यानाय स्वाहेति सन्ततिहोमां जुहोति। सुवर्गस्य लोकस्य सन्तत्यै ॥ ३ ॥

सिताय स्वाहासिताय स्वाहेति प्रमुक्तीर्जुहोति। सुवर्गस्य लोकस्य प्रमुक्त्यै। पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्याह। यथा यजुरेवैतत्। दत्वते स्वाहा दन्तकाय स्वाहेति शरीरहोमां जुहोति। पितृलोकमेव तैर्यजमानोऽवरुन्धे। कस्त्वा युनक्ति स त्वा युनक्तिति परिधीन् युनक्ति। इमे वै लोकाः परिधयः। इमानेवास्मै लोकान् युनक्ति। सुवर्गस्य लोकस्य समष्ट्यै ॥ ४ ॥

यः प्राणतो य आत्मदा इति महिमानौ जुहोति। सुवर्गो वै लोको महः। सुवर्गमेव ताभ्यां लोकं यजमानोऽवरुन्धे। आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामिति समस्तानि ब्रह्मवर्चसानि जुहोति। ब्रह्मवर्चसमेव तैर्यजमानोऽवरुन्धे। जज्ञिबीजमिति जु-

होत्यनन्तरित्यै। अग्नये समनमत् पृथिव्यै समनमदिति सन्नतिहोमां जुहोति। सुवर्गस्य लोकस्य सन्नत्यै। भूताय स्वाहा भविष्यते स्वाहेति भूताभव्यौ होमौ जुहोति। अयं वै लोको भूतम् ॥ ५ ॥

असौ भविष्यत्। अनयोरेव लोकयोः प्रतितिष्ठति। सर्व्वस्याप्त्यै। सर्व्वस्यावरुध्यै। यदक्रन्दः प्रथमं जायमान इत्यश्वस्तोमीयं जुहोति। सर्व्वस्याप्त्यै। सर्व्वस्य जित्यै। सर्व्वमेव तेनाप्नोति। सर्व्वं जयति। योऽश्वमेधेन यजते॥ य उचैनमेवं वेद। यज्ञꣳ रक्षाꣳस्यजिघाꣳसन्। स एतान् प्रजापतिर्नक्तꣳ होमानपश्यत्। तानजुहोत्। तैर्वै स यज्ञाद्रक्षाꣳस्यपाहन्। यन्नक्तꣳ होमां जुहोति। यज्ञादेव तैर्यजमानो रक्षाꣳस्यपहन्ति। उषसे स्वाहा व्युष्ट्यै स्वाहेत्यन्ततो जुहोति। सुवर्गस्य लोकस्य समष्ट्यै ॥ ६ ॥

वै नभाꣳसि सूर्य्यो ज्योतिः सन्तत्यै समष्ट्यै भूतं यजते नव च॥ अनु० १८॥

ऊनविंशोऽनुवाकः।

एकयूपो वैकादशिनी वा। अन्येषां यज्ञानां यूपा

भवन्ति। एकविꣳशिन्यश्वमेधस्य। सुवर्गस्य लोकस्या-
भिजित्यै। बैल्वो वा खादिरो वा पालाशो वा। अ-
न्येषां यज्ञक्रतूनां यूपा भवन्ति। राज्जुदाल एकविꣳ-
शत्यरत्निरश्वमेधस्य। सुवर्गस्य लोकस्य समष्ट्यै। ना-
न्येषां पशूनां तेजन्या अवद्यन्ति। अवद्यन्त्यश्वस्य॥ १॥

पाप्मा वै तेजनी। पाप्मनोऽपहत्यै। प्लक्षशाखायाम-
न्येषां पशूनामवद्यन्ति। वेतसशाखायामश्वस्य। अप्सु
योनिर्वा अश्वः। अप्सुजो वेतसः। स्व एवास्य योनाव-
वद्यति। यूपेषु ग्राम्यान् पशून् नियुञ्जन्ति। आरोकेष्वा-
रण्यान् धारयन्ति। पशूनां व्यावृत्त्यै॥ आ ग्राम्यान्
पशून् लभन्ते। प्रारण्यान्त्सृजन्ति। पाप्मनोऽपहत्यै॥
॥ २॥

अश्वस्य व्यावृत्त्यै त्रीणि च॥ अनु० १९॥

विंशोऽनुवाकः।

राज्जुदालमग्निष्ठं मिनोति। भ्रूणहत्याया अपह-
त्यै। पैतुद्रवावभितो भवतः। पुण्यस्य गन्धस्यावरुध्यै।
भ्रूणहत्यामेवास्मादपहत्य। पुण्येन गन्धेनोभयतः प-
रिगृह्णाति। षड्बैल्वा भवन्ति। ब्रह्मवर्चसस्यावरुध्यै।
षट् खादिराः। तेजसोऽवरुध्यै॥ १॥

षट् पालाशाः। सोमपीथस्यावरुध्यै। एकविंशतिः सम्पद्यन्ते। एकविंशतिर्वै देवलोकाः। द्वादशमासाः पञ्चर्तवः। चय इमे लोकाः। असावादित्य एकविंशः। एष सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै। शतं पशवो भवन्ति ॥ २ ॥

शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति। सर्व्वं वा अश्वमेध्याप्नोति। अपरिमिता भवन्ति। अपरिमितस्यावरुध्यै। ब्रह्मवादिनो वदन्ति। कस्मात् सत्यात्। दक्षिणतोऽन्येषां पशूनामवद्यन्ति। उत्तरतोऽश्वस्येति। वारुणो वा अश्वः ॥ ३ ॥

एषा वै वरुणस्य दिक्। स्वायामेवास्य दिश्यवद्यति। यदितरेषां पशूनामवद्यति। शतदेवत्यं तेनावरुन्धे। चितेऽग्नावधिवैतसे कटेऽश्वं चिनोति। अप्सु योनिर्वा अश्वः। अप्सुजो वेतसः। स्व एवैनं योनौ प्रतिष्ठापयति। पुरस्तात् प्रत्यञ्चं तूपरं चिनोति। पश्चात् प्राचीनं गोमृगम् ॥ ४ ॥

प्राणापानावेवास्मिन्त्सम्यञ्चौ दधाति। अश्वं तूपरं गोमृगमिति सर्वहुत एतान् जुहोति। एषां लोकानामभिजित्यै। आत्मनाभिजुहोति। सात्मानमे-

वैनꣳ सतनुं करोति । सात्मामुष्मिँल्लोके भवति । य एवं वेद । अथो वसोरेव धारां तेनावरुन्धे । इल्लुवदाय स्वाहा बलिवदाय स्वाहेत्याह । संवत्सरो वा इल्लुवर्दः ॥ परिवत्सरो बलिवर्दः । संवत्सरादेव परिवत्सरादायुरवरुन्धे । आयुरेवास्मिन्दधाति । तस्मादश्वमेधयाजी जरसा विस्रसामुं लोकमेति ॥ ५ ॥

तेजसोऽवरुध्यै भवन्त्यश्वो गोमृगमिल्लुवर्दश्चत्वारि च ॥ अनु० २० ॥

एकविंशोऽनुवाकः ।

एकविꣳशोऽग्निर्भवति । एकविꣳशस्तोमः । एकविꣳशतिर्यूपाः । यथा वा अश्वावर्षभावा हयाणः सꣳस्फुरेरन् । एवमेतत्स्तोमाः सꣳस्फुरन्ते । यदेकविꣳशाः । ते यत्संमृच्छेरन् । हन्येतास्य यज्ञः । द्वादश एवाग्निः स्यादित्याहुः । द्वादशस्तोमः ॥ १ ॥

एकादशं यूपाः । यद्द्वादशोऽग्निर्भवति । द्वादश मासाः संवत्सरः । संवत्सरेणैवास्मा अन्नमवरुन्धे । यद्दश यूपा भवन्ति । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । य एकादशः । स्तन एवास्यै सः ॥ ॥ २ ॥

दृश्ह एवैनां तेन। तदाहुः। यद्द्वादशोऽग्निः स्याद्द्वादशस्तोम एकादश यूपाः। यथा स्थूरिणायायात्। तादृक् तत्। एकविꣳश एवाग्निः स्यादित्याहुः। एकविꣳशस्तोमः। एकविꣳशतिर्यूपाः। यथा प्रष्टिभिर्याति। तादृगेव तत्॥ ३ ॥

यो वा अश्वमेधे तिस्रः ककुभो वेद। ककुद्ध राज्ञां भवति। एकविꣳशोऽग्निर्भवति। एकविꣳशस्तोमः। एकविꣳशतिर्यूपाः। एता वा अश्वमेधे तिस्रः ककुभः। य एवं वेद। ककुद्ध राज्ञां भवति। यो वा अश्वमेध त्रीणि शीर्षाणि वेद। शिरो ह राज्ञां भवति॥ एकविꣳशोऽग्निर्भवति। एकविꣳशस्तोमः। एकविꣳशतिर्यूपाः। एतानि वा अश्वमेधे त्रीणि शीर्षाणि। य एवं वेद। शिरो ह राज्ञां भवति ॥ ४ ॥

द्वादशस्तोमः स एव तच्छिरो ह राज्ञां भवति षट् च॥ अनु० २१ ॥

द्वाविंशोऽनुवाकः।

देवा वा अश्वमेधे पवमाने। सुवर्गं लोकं न प्राजानन्। तमश्वः प्राजानात्। यदश्वमेधेऽश्वेन मेध्येनो-

दश्वो बहिष्पवमानꣳ सर्पन्ति। सुवर्गस्य लोकस्य प्रज्ञात्यै। न वै मनुष्यः सुवर्गं लोकमञ्जसा वेद। अश्वो वै सुवर्गं लोकमञ्जसा वेद। यदुद्गातोद्गायेत्। यथा क्षेत्रज्ञोऽन्येन पथा प्रतिपादयेत्। तादृक्तत्॥ १॥

उद्गातारमपरुध्य। अश्वमुद्गीथाय वृणीते। यथा क्षेत्रज्ञोऽञ्जसा नयति। एवमेवैनमश्वः सुवर्गं लोकमञ्जसा नयति। पुच्छमन्वारभन्ते। सुवर्गस्य लोकस्य समष्ट्यै। हिङ्करोति। सामैवाकः। हिङ्करोति। उद्गीथ एवास्य सः॥ २॥

वडबा उपरुन्धन्ति। मिथुनत्वाय प्रजात्यै। अथो यथोपगातार उपगायन्ति। तादृगेव तत्। उदगासीदश्वो मेध्य इत्याह। प्राजापत्यो वा अश्वः। प्रजापतिरुद्गीथः। उद्गीथमेवावरुन्धे। अथो ऋक्सामयोरेव प्रतितिष्ठति। हिरण्येनोपाकरोति॥ ज्योतिर्वै हिरण्यम्। ज्योतिरेव मुखतो दधाति। यजमाने च प्रजासु च। अथो हिरण्यज्योतिरेव यजमानः सुवर्गं लोकमेति॥ ३॥

तत्स उपाकरोति चत्वारि च॥ अनु० २२॥

त्रयोविंशोऽनुवाकः ।

पुरुषो वै यज्ञः। यज्ञः प्रजापतिः। यदश्वे पशून्नियुञ्जन्ति। यज्ञादेव तद्यज्ञं प्रयुङ्क्ते। अश्वं तूपरं गोमृगम्। तानग्निष्ठ आलभते। सेनामुखमेव तत्सꣳश्यति। तस्माद्राजमुखं भीष्मं भावुकम्। आग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे। पूर्व्वाग्निमेव तं कुरुते ॥ १ ॥

तस्मात् पूर्व्वाग्निं पुरस्तात्स्थापयन्ति। पौष्णमन्नञ्च। अन्नं वै पूषा। तस्मात् पूर्व्वाग्नावाहार्य्यमाहरन्ति। ऐन्द्रापौष्णमुपरिष्टात्। ऐन्द्रो वै राजन्योऽन्नं पूषा। अन्नाद्येनैवैनमुभयतः परिगृह्णाति। तस्माद्राजन्योऽन्नादो भावुकः। आग्नेयौ कृष्णग्रीवौ बाह्वोः। बाह्वोरेव वीर्य्यं धत्ते ॥ २ ॥

तस्माद्राजन्यो बाहुबली भावुकः। त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः। सक्थ्योरेव वीर्य्यं धत्ते। तस्माद्राजन्य ऊरुबली भावुकः। शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे। ब्रह्मवर्चसमेवोपरिष्टाद्धत्ते। अथो कवचे एवैते अभितः पर्य्यूहते। तस्माद्राजन्यः सन्नद्धो वीर्य्यं करोति। धात्रे पृषोदरमधस्तात्। प्रतिष्ठामेवैतां कुरुते॥ अथो इयं वै धाता। अस्यामेव प्रतितिष्ठति। सौर्य्यं बलक्षं पुच्छे।

उत्सेधमेव तं कुरुते। तस्मादुत्सेधं भये प्रजा अभि-
सꣳश्रयन्ति ॥ ३ ॥

कुरुते धत्ते कुरुते पञ्च च ॥ अनु० २३ ॥

साङ्ग्रहण्या चतुष्टय्यो यो वै यः पितुश्चत्वारो यथा
निक्तं प्रजापतये त्वा यथा प्रोक्षितं विभूराह प्रजाप-
तिरकामयताश्वमेधेन प्रजापतिर्न किञ्चन सावित्रमा
ब्रह्मन् प्रजापतिर्देवेभ्यः प्रजापतीरक्षाꣳसि प्रजापति-
मीप्सति विभूरश्वनामान्यं भाꣳस्येकयूपो राज्जुदाल-
मेकविꣳशो देवाः पुरुषस्त्रयोविꣳशतिः ॥ २३ ॥

साङ्ग्रहण्या तस्मादश्वमेधयाजी यत्परिमिता यद्य-
ज्ञमुखे यो दीक्षां देवानेव तैस्त्रय इमे लोकाः सिता-
यं प्राणापानावेवास्मिन् तस्माद्राजन्य एकनवतिः ॥
॥ ९१ ॥

इति अष्टमप्रपाठकः ॥

हरिः ॥ ओम् ॥

हरिः ॐ।

# तैत्तिरीय-ब्राह्मणे

## तृतीयकाण्डे नवमप्रपाठके

### प्रथमोऽनुवाकः।

प्रजापतिरश्वमेधमसृजत। सोऽस्मात्सृष्टोऽपाक्रामत्। तमष्टादशिभिरनुप्रायुङ्क्त। तमाप्नोत्। तमाप्त्वाष्टादशिभिरवारुन्ध। यदष्टादशिन आलभ्यन्ते। यज्ञमेव तैराप्त्वा यजमानोऽवरुन्धे। संवत्सरस्य वा एषा प्रतिमा। यदष्टादशिनः। द्वादशमासाः पञ्चर्त्तवः॥ १॥

संवत्सरोऽष्टादशः। यदष्टादशिन आलभ्यन्ते। संवत्सरमेव तैराप्त्वा यजमानोऽवरुन्धे। अग्निष्ठेऽन्यान् पशूनुपाकरोति। इतरेषु यूपेष्वष्टादशिनो जामित्वाय। नव नवालभ्यन्ते सवीर्य्यत्वाय। यदारण्यैः सꣳस्थापयेत्। व्यवस्येतां पितापुत्रौ। व्यध्वानः क्रामेयुः। विदूरं ग्रामयोर्ग्रामान्तौ स्याताम्॥ २॥

ऋक्षीकाः पुरुषव्याघ्राः परिमोषिण आ व्याधिनीस्तस्करा अरण्येष्वाजायेरन्। तदाहुः। अपशवो वा एते। यदारण्याः। यदारण्यैः सꣳस्थापयेत्। क्षिप्रे

यजमानमरण्यं मृतꣳ हरेयुः। अरण्यायतना ह्यार-
ण्याः पशव इति। यत्पशून्नालभेत। अनवरुद्धा अस्य
पशवः स्युः। यत्पर्य्यग्निकृतानुत्सृजेत् ॥ ३ ॥

यज्ञवेशसं कुर्य्यात्। यत् पशूनालभते। तेनैव प-
शूनवरुन्धे। यत्पर्य्यग्निकृतानुत्सृजत्ययज्ञवेशसाय। अ-
वरुद्धा अस्य पशवो भवन्ति। न यज्ञवेशसं भवति।
न यजमानमरण्यं मृतꣳ हरन्ति। ग्राम्यैः सꣳस्थापय-
ति। एते वै पशवः क्षेमो नाम। सं पितापुत्राववस्य-
तः॥ समध्वानः क्रामन्ति। समन्तिकं ग्रामयोर्ग्रामान्तौ
भवतः। नर्क्षीकाः पुरुषव्याघ्राः परिमोषिण आ-
व्याधिनीस्तस्करा अरण्येष्वाजायन्ते ॥ ४ ॥

ऋतवः स्यातामुत्सृजेत्त्यतस्त्रीणि च ॥ अनु० १ ॥

द्वितीयोऽनुवाकः।

प्रजापतिरकामयतोभौ लोकाववरुन्धीयेति। स
एतानुभयान् पशूनपश्यत्। ग्राम्याꣳश्चारण्याꣳश्च।
तानालभत। तैर्वै स उभौ लोकाववारुन्ध। ग्राम्यैरेव
पशुभिरिमं लोकमवारुन्ध। आरण्यैरमुम्। यद्ग्राम्यान्
पशूनालभते। इममेव तैर्लोकमवरुन्धे। यदारण्यान्॥
॥ १ ॥

अमुं तैः। अनवरुद्धो वा एतस्य संवत्सर इत्याहुः।
य इत इतश्चातुर्मास्यानि संवत्सरं प्रयुङ्क्त इति। एता-
वान्वै संवत्सरः। यच्चातुर्मास्यानि। यदेते चातुर्मास्याः
पशव आलभ्यन्ते। प्रत्यक्षमेव तैः संवत्सरं यजमानो
ऽवरुन्धे। विवा एष प्रजया पशुभिर्ऋध्यते। यः संव-
त्सरं प्रयुङ्क्ते। संवत्सरः सुवर्गो लोकः ॥ २ ॥

सुवर्गं तु लोकं नापराध्नोति। प्रजा वै पशव एका-
दशिनी। यदेत ऐकादशिनाः पशव आलभ्यन्ते। सा-
क्षादेव प्रजां पशून् यजमानोऽवरुन्धे। प्रजापतिर्विरा-
जमसृजत। सा सृष्टाश्वमेधं प्राविशत्। तां दशिभिर-
नु प्रायुङ्क्त। तामाप्नोत्। तामाप्ता दशिभिरवारुन्ध।
यद्दशिन आलभ्यन्ते ॥ ३ ॥

विराजमेव तैराप्ता यजमानोऽवरुन्धे। एकादश
दश त आलभ्यन्ते। एकादशाक्षरा त्रिष्टुप्। त्रैष्टुभाः
पशवः। पशूनेवावरुन्धे। वैश्वदेवो वा अश्वः। नाना-
देवत्याः पशवो भवन्ति। अश्वस्य सर्वत्वाय। नाना-
रूपा भवन्ति। तस्मान्नानारूपाः पशवः॥ बहु-
रूपा भवन्ति। तस्माद्बहुरूपाः पशवः समृद्ध्यै॥
॥ ४ ॥

आरण्यान् लोकोदृशिनं आलभ्यन्ते नानारूपाः पशवो द्वे च ॥ अनु० २ ॥

तृतीयोऽनुवाकः।

अस्मै वै लोकाय ग्राम्याः पशव आलभ्यन्ते। अमुष्मा आरण्याः। यद्ग्राम्यान् पशूनालभते। इममेव तैर्लोकमवरुन्धे। यदारण्यान्। अमुं तैः। उभयान् पशूनालभते। ग्राम्याꣳश्चारण्याꣳश्च। उभयोर्लोकयोरवरुध्यै। उभयान् पशूनालभते ॥ १ ॥

ग्राम्याꣳश्चारण्याꣳश्च। उभयस्यान्नाद्यस्यावरुध्यै। उभयान् पशूनालभते। ग्राम्याꣳश्चारण्याꣳश्च। उभयेषां पशूनामवरुध्यै। त्रयस्त्रयो भवन्ति। त्रय इमे लोकाः। एषां लोकानामाप्त्यै। ब्रह्मवादिनो वदन्ति। तस्मात् सत्यात् ॥ २ ॥

अस्मिन् लोके बहवः कामा इति। यत्समानीभ्यो देवताभ्योऽन्येऽन्ये पशव आलभ्यन्ते। अस्मिन्नेव तल्लोके कामान् दधाति। तस्मादस्मिन् लोके बहवः कामाः। त्रयाणां त्रयाणाꣳ सह वपा जुहोति। त्र्यावृतो वै देवाः। त्र्यावृत इमे लोकाः। एषां लोकानामाप्त्यै। एषां

लोकानां क्लृप्त्यै। पर्य्यग्निकृतानारण्यानुत्सृजन्त्यहिꣳ-
सायै ॥ ३ ॥

उभयान् पशूनालभते सत्यादहिꣳसायै ॥ अनु० ३ ॥

चतुर्थोऽनुवाकः।

युञ्जंति ब्रध्नमित्याह*। असौ वा आदित्यो ब्रध्नः।
आदित्यमेवास्मै युनक्ति। अरुषमित्याह। अग्निर्वा
अरुषः। अग्निमेवास्मै युनक्ति। चरन्तमित्याह। वायु-
र्वै चरन्। वायुमेवास्मै युनक्ति। परितस्थुष इत्याह ॥
॥ १ ॥

इमे वै लोका परितस्थुषः। इमानेवास्मै लोकान्
युनक्ति। रोचन्ते रोचना दिवीत्याह। नक्षत्राणि वै
रोचना दिवि। नक्षत्राण्येवास्मै रोचयति। युञ्जन्त्यस्य
काम्येत्याह। कामानेवास्मै युनक्ति। हरीविपक्षसे-
त्याह। इमे वै हरीविपक्षसा। इमे एवास्मै युनक्ति ॥
॥ २ ॥

शोणा धृष्णू नृवाहसेत्याह। अहोरात्रे वै नृवा-
हसा। अहोरात्रे एवास्मै युनक्ति। एता एवास्मै दे-
वता युनक्ति। सुवर्गस्य लोकस्य समष्ट्यै। केतुं कृण्व-

* C पुस्तके तु युञ्जति ब्रध्नमित्याहेति पाठः।

न्नकेतव इति ध्वजं प्रतिमुञ्चति। यश एवैनꣳ राज्ञां गमयति। जीमूतस्येव भवति प्रतीकमित्याह। यथा यजुरेवैतत्। ये ते पन्थानः सवितः पूर्व्यास इत्यध्वर्युर्यजमानं वाचयत्यभिजित्यै ॥ ३ ॥

परा वा एतस्य यज्ञ एति। यस्य पशुरुपाकृतोऽन्यत्र वेद्या एति। एतꣳ स्तोतरेतेन पथा पुनरश्वमावर्त्तयासि न इत्याह। वायुर्वै स्तोता। वायुमेवास्य परस्ताद्दधात्यावृत्त्यै। यथा वै हविषो गृहीतस्य स्कन्दति। एवं वा एतदश्वस्य स्कन्दति। यदस्योपाकृतस्य लोमानि शीयन्ते। यद्वालेषु काचानावयन्ति। लोमान्येवास्य तत्सम्भरन्ति ॥ ४ ॥

भूर्भुवः सुवरिति प्राजापत्याभिरावयन्ति। प्राजापत्यो वा अश्वः। स्वयैवैनं देवतया समर्द्धयन्ति। भूरिति महिषी। भुव इति वावाता। सुवरिति परिवृक्ती। एषां लोकानामभिजित्यै। हिरण्ययाः काचा भवन्ति। ज्योतिर्वै हिरण्यम्। राष्ट्रमश्वमेधः ॥ ५ ॥

ज्योतिश्चैवास्मै राष्ट्रञ्च समीची दधाति। सहस्रं भवन्ति। सहस्रसम्मितः सुवर्गो लोकः। सुवर्गस्य लोकस्याभिजित्यै। अप वा एतस्मात्तेज इन्द्रियं पशवः श्रीः

क्रामन्ति। योऽश्वमेधेन यजते। वसवस्त्वा अञ्जन्तु गाय-
त्रेण छन्दसेति महिष्यभ्यनक्ति। तेजो वा आज्यम्।
तेजो गायत्री। तेजसैवास्मै तेजोऽवरुन्धे ॥ ६ ॥

रुद्रास्त्वा अञ्जन्तु त्रैष्टुभेन छन्दसेति वा वाता। तेजो
वा आज्यम्। इन्द्रियं त्रिष्टुप्। तेजसैवास्मा इन्द्रियम-
वरुन्धे। आदित्यास्त्वा अञ्जन्तु जागतेन छन्दसेति परि-
वृक्ती। तेजो वा आज्यम्। पशवो जगती। तेजसैवास्मै
पशूनवरुन्धे। पत्नयोऽभ्यञ्जन्ति। श्रिया वा एतद्रूपम्॥
॥ ७ ॥

यत्पत्नयः। श्रियमेवास्मिन् तद्दधति। नास्मात्तेज
इन्द्रियं पशवः श्रीरपक्रामन्ति। लाजी३ञ्छाची३न्य-
शो ममां३ इत्यतिरिक्तमन्नमश्वायोपाहरन्ति। प्र-
जामेवान्नादीन् कुर्व्वते। एतद्देवा अन्नमत्तैतदन्नमद्धि
प्रजापत इत्याह। प्रजायामेवान्नाद्यं दधते। यदि ना-
वजिघ्रेत्। अग्निः पशुरासीदित्यवघ्रापयेत्। अवहैव
जिघ्रति॥ आक्रान्वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठं
पृथिवी सधस्थमित्यश्वमनुमन्त्रयते। एषां लोकाना-
मभिजित्यै। समिद्धो अञ्जन् कृदरं मतीनामित्यश्व-
स्याप्रियो भवन्ति सरूपत्वाय॥ ८ ॥

परितस्थुष इत्याहेमे एवास्मै युनक्त्यभिजित्यै भरन्त्यश्वमेधो रुन्धे रूपं जिघ्रति चीणि च ॥ अनु० ४ ॥

पञ्चमोऽनुवाकः।

तेजसा वा एष ब्रह्मवर्चसेन व्यृध्यते। योऽश्वमेधेन यजते। होता च ब्रह्मा च ब्रह्मोद्यं वदतः। तेजसा चैवैनं ब्रह्मवर्चसेन च समर्द्धयतः। दक्षिणतो ब्रह्मा भवति। दक्षिणत आयतनो वै ब्रह्मा। बार्हस्पत्यो वै ब्रह्मा। ब्रह्मवर्चसमेवास्य दक्षिणतो दधाति। तस्माद्दक्षिणोर्द्धो ब्रह्मवर्चसितरः। उत्तरतो होता भवति ॥१॥

उत्तरत आयातनो व होता। आग्नेयो वै होता। तेजो वा अग्निः। तेज एवास्योत्तरतो दधाति। तस्मादुत्तरोर्द्धस्तेजस्वितरः। यूपमभितो वदतः। यजमानदेवत्यो वै यूपः। यजमानमेव तेजसा च ब्रह्मवर्चसेन च समर्द्धयतः। किꣳ स्विदासीत् पूर्व्वचित्तिरित्याह। द्यौर्वै वृष्टिः पूर्व्वचित्तिः ॥ २ ॥

दिवमेव वृष्टिमवरुन्धे। किꣳ स्विदासीद्बृहद्वय इत्याह। अश्वो वै बृहद्वयः। अश्वमेवावरुन्धे। किꣳ स्विदासीत् पिशङ्गिलेत्याह। रात्रिर्वै पिशङ्गिला। रात्रि-

मेवावरुन्धे। किꣳ स्विदासीत् पिलिप्पिलेत्याह। श्रीर्वै पिलिप्पिला। अन्नाद्यमेवावरुन्धे ॥ ३ ॥

कःस्विदेकाकी चरतीत्याह। असौ वा आदित्य एकाकी चरति। तेज एवावरुन्धे। क उस्विज्जायते पुनरित्याह। चन्द्रमा वै जायते पुनः। आयुरेवावरुन्धे। किꣳ स्विद्धिमस्य भेषजमित्याह। अग्निर्वै हिमस्य भेषजम्। ब्रह्मवर्चसमेवावरुन्धे। किꣳ स्विदावपनं महदित्याह ॥ ४ ॥

अयं वै लोक आवपनं महत्। अस्मिन्नेव लोके प्रतितिष्ठति। पृच्छामि त्वा परमं तं पृथिव्या इत्याह। वेदिर्वै परोऽन्तः पृथिव्याः। वेदिमेवावरुन्धे। पृच्छामि त्वा भुवनस्य नाभिमित्याह। यज्ञो वै भुवनस्य नाभिः। यज्ञमेवावरुन्धे। पृच्छामि त्वा वृष्णो अश्वस्य रेत इत्याह। सोमो वै वृष्णो अश्वस्य रेतः॥ सोमपीथमेवावरुन्धे। पृच्छामि वाचः परमं व्योमेत्याह। ब्रह्म वै वाचः परमं व्योम। ब्रह्मवर्चसमेवावरुन्धे ॥ ५ ॥

होता भवति वै वृष्टिः पूर्व्वचित्तिरन्नाद्यमेवावरुन्धे महदित्याह सोमो वै वृष्णो अश्वस्य रेतश्चत्वारि च ॥

अनु० ५ ॥

षष्ठोऽनुवाकः ।

अप वा एतस्मात् प्राणाः क्रामन्ति । योऽश्वमेधेन यजते । प्राणाय स्वाहा व्यानाय स्वाहेति सन्नुप्यमान आहुतीर्जुहोति । प्राणानेवास्मिन् दधाति । नास्मात् प्राणा अपक्रामन्ति । अवन्ती स्थावन्तीस्त्वावन्तु । प्रियं त्वा प्रियाणाम् । वर्षिष्ठमाप्यानाम् । निधीनां त्वा निधिपतिꣳ हवामहे वसो ममेत्याह । अपैवास्मैतद्नुवते ॥ १ ॥

अथो धुवन्त्येवैनम् । अथोऽन्ये वास्मै ह्नुवते । त्रिः परियन्ति । त्रय इमे लोकाः । एभ्य एवैनं लोकेभ्यो धुवते । त्रिः पुनः परियन्ति । षट् सम्पद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनं धुवते । अप वा एतेभ्यः प्राणाः क्रामन्ति ॥ २ ॥

ये यज्ञे धुवनं तन्वते । नवकृत्वः परियन्ति । नव वै पुरुषे प्राणाः । प्राणानेवात्मन्दधते । नैभ्यः प्राणा अपक्रामन्ति । अम्बे अम्बाल्यम्बिक इति पत्नीमुदानयति । अह्वतैवैनाम् । सुभगे काम्पीलवासिनीत्याह । तप एवैनामुपनयति । सुवर्गे लोके सम्प्रोर्ण्वाथामित्याह ॥ ३ ॥

सुवर्गमेवैनां लोकं गमयति। आहमजानि गर्भध-
मात्वमजासि गर्भधमित्याह। प्रजा वै पशवो गर्भः।
प्रजामेव पशूनात्मन्धत्ते। देवा वा अश्वमेधे पवमाने।
सुवर्गं लोकं न प्राजानन्। तमश्वः प्राजानात्। यत्
सूचीभिरसि पथात् कल्पयन्ति। सुवर्गस्य लोकस्य
प्रज्ञात्यै। गायत्री त्रिष्टुप् जगतीत्याह॥ ४॥

यथा यजुरेवैतत्। त्रय्यः सूच्यो भवन्ति। अयस्मय्यो
रजता हरिण्यः। अस्य वै लोकस्य रूपमयस्मय्यः। अ-
न्तरिक्षस्य रजताः। दिवो हरिण्यः। दिशो वा अय-
स्मय्यः। अवान्तरदिशा रजताः। ऊर्द्ध्वा हरिण्यः।
दिश एवास्मै कल्पयति॥ कस्त्वाछ्यति कस्त्वा विशास्ती-
त्याहाहिंऽसायै॥ ५॥

ह्रुवते क्रामन्त्यूर्ण्णाथामित्याह जगतीत्याह कल्पय-
त्येकञ्च॥ अनु० ६॥

सप्तमोऽनुवाकः।

अप वा एतस्माच्छ्री राष्ट्रं क्रामति। योऽश्वमेधेन य-
जते। ऊर्द्ध्वामेनामुच्छ्रयतादित्याह। श्रीर्वै राष्ट्रमश्वमे-
धः। श्रियमेवास्मै राष्ट्रमूर्द्ध्वमुच्छ्रयति। वेणुभारं गिरा-

विवेत्याह। राष्ट्रं वै भारः। राष्ट्रमेवास्मै पर्य्यूहति। अथास्यामध्यमेधतामित्याह। श्रीर्वै राष्ट्रस्य मध्यम्॥ ॥ १ ॥

श्रियमेवावरुन्धे। शीते वाते पुनन्निवेत्याह। क्षेमो वै राष्ट्रस्य शीतो वातः। क्षेममेवावरुन्धे। यद्धरिणी यवमत्तीत्याह। विड्वै हरिणी। राष्ट्रं यवः। विशञ्चैवास्मै राष्ट्रञ्च समीचीं दधाति। न पुष्टं पशुमन्यत इत्याह। तस्माद्राजा पशून्न पुष्यति ॥ २ ॥

शूद्रा यदर्य्यजारा नपोषाय धनायतीत्याह। तस्माद्वैशी पुत्रं नाभिषिञ्चन्ते। इयं यका शकुन्तिकेत्याह। विड्वै शकुन्तिका। राष्ट्रमश्वमेधः। विशञ्चैवास्मै राष्ट्रञ्च समीचीं दधाति। आहलमिति सर्पतीत्याह। तस्माद्राष्ट्राय विशः सर्पन्ति। आहतं गभे पस इत्याह। विड्वै गभः ॥ ३ ॥

राष्ट्रं पसः। राष्ट्रमेव विश्याहन्ति। तस्माद्राष्ट्रं विशं घातुकम्। माता च ते पिता च त इत्याह। इयं वै माता। असौ पिता। आभ्यामेवैनं परिददाति। अग्रं वृक्षस्य रोहत इत्याह। श्रीर्वै वृक्षस्याग्रम्। श्रियमेवावरुन्धे ॥ ४ ॥

प्रसुलामीति त पिता गर्भे मुष्टिमतꣳसयदित्याह। विड्वै गर्भः। राष्ट्रं मुष्टिः। राष्ट्रमेव विश्याहन्ति। तस्माद्राष्ट्रं विशं घातुकम्। अप वा एतेभ्यः प्राणाः क्रामन्ति। ये यज्ञे पूतं वदन्ति। दधिक्राव्णो अकारिषमिति सुरभिमतीमृचं वदन्ति। प्राणा वै सुरभयः। प्राणानेवात्मन्दधते॥ नैभ्यः प्राणा अपक्रामन्ति। आपो हिष्ठा मयो भुव इत्यद्भिर्मार्जयन्ते। आपो वै सर्वा देवताः। देवताभिरेवात्मानं पवयन्ते॥ ५॥

राष्ट्रस्य मध्यं पुष्यति गर्भो रुन्धे दधते चत्वारि च॥
अनु० ७॥

### अष्टमोऽनुवाकः।

प्रजापतिः प्रजाः सृष्ट्वा प्रेणानुप्राविशत्। ताभ्यः पुनः सम्भवितुं नाशक्नोत्। सोऽब्रवीत्। ऋध्नवदित्सः। यो मेतः पुनः सम्भरदिति। तं देवा अश्वमेधेनैव समभरन्। ततो वै त आर्ध्नुवन्। योऽश्वमेधेन यजते। प्रजापतिमेव सम्भरत्यृध्नोति। पुरुषमालभते॥ १॥

वैराजो वै पुरुषः। विराजमेवालभते। अथो अन्नं वै विराट्। अन्नमेवावरुन्धे। अश्वमालभते। प्राजा-

पत्यो वा अश्वः। प्रजापतिमेवालभते। अथो श्रीर्वा एकशफम्। श्रियमेवावरुन्धे। गामालभते॥ २॥

यज्ञो वै गौः। यज्ञमेवालभते। अथो अन्नं वै गौः। अन्नमेवावरुन्धे। अजावी आलभते भूम्ने। अथो पुष्टिर्वै भूमा। पुष्टिमेवावरुन्धे। पर्यग्निकृतं पुरुषञ्चारण्याꣳश्चोत्सृजन्त्यहिꣳसायै। उभौ वा एतौ पशू आलभ्येते। यश्चावमो यश्च परमः॥ तेऽस्योभये यज्ञे बद्धाः। अभीष्टा अभिप्रीताः। अभिजिता अभिहुता भवन्ति। नैनं दंक्ष्णवः पशवो यज्ञे बद्धाः। अभीष्टा अभिप्रीताः। अभिजिता अभिहुताहिꣳसन्ति। योऽश्वमेधेन यजते। य उ चैनमेवं वेद॥ ३॥

लभते गामालभते परमोऽष्टौ च॥ अनु० ८॥

नवमोऽनुवाकः।

प्रथमेन वा एष स्तोमेन राध्वा। चतुष्टोमेन कृतेनायानामुत्तरेहन्। एकविꣳशे प्रतिष्ठायां प्रतितिष्ठति। एकविꣳशात् प्रतिष्ठाया ऋतूनन्वारोहति। ऋतवो वै पृष्ठानि। ऋतवः संवत्सरः। ऋतुष्वेव संवत्सरे प्रतिष्ठाय। देवता अभ्यारोहति। शक्करयः पृष्ठं

भवन्त्यन्यदन्यच्छन्दः। अन्येऽन्ये वा एते पशव आलभ्यन्ते ॥ १ ॥

उतेव ग्राम्याः। उतेवारण्याः। अहरेव रूपेण समर्द्धयति। अथो अह्न एवैष बलिर्ह्रियते। तदाहुः। अपशवो वा एते। यदजावयश्चारण्याश्च। एते वै सर्व्वे पशवः। यद्गव्या इति। गव्यान् पशूनुत्तमेऽहन्नालभते ॥ २ ॥

तेनैवोभयान् पशूनवरुन्धे। प्राजापत्या भवन्ति। अनभिजितस्याभिजित्यै। सौरीर्नव श्वेतावशा अनूबन्ध्या भवन्ति। अन्तत एव ब्रह्मवर्चसमवरुन्धे। सोमाय स्वराज्ञे नो वाहावनड्वाहाविति द्वन्द्विनः पशूनालभते। अहोरात्राणामभिजित्यै। पशुभिर्वा एष व्यृध्यते। योऽश्वमेधेन यजते। छगलं कल्माषं किकिदीविं विदीगयमिति त्वाष्ट्रान् पशूनालभते॥ पशुभिरेवात्मानꣳ समर्द्धयति। ऋतुभिर्वा एष व्यृध्यते। योऽश्वमेधेन यजते। पिशङ्गास्त्रयो वा सन्ता इत्यृतुपशूनालभते। ऋतुभिरेवात्मानꣳ समर्द्धयति। आ वा एष पशुभ्यो वृश्चते। योऽश्वमेधेन यजते। पर्य्यग्निकृता उत्सृजन्त्यनाव्रस्काय ॥ ३ ॥

लभ्यन्ते लभते त्वाष्ट्रान् पशूनालभतेऽष्टौ च ॥

अनु० ९ ॥

दशमोऽनुवाकः।

प्रजापतिरकामयत महानन्नादः स्यामिति। स एतावश्वमेधे महिमानावपश्यत्। तावगृह्णीत। ततो वै स महानन्नादोऽभवत्। यः कामयेत महानन्नादः स्यामिति। स एतावश्वमेधे महिमानौ गृह्णीत। महानेवान्नादो भवति। यजमानदेवत्या वै वपा। राजा महिमा। यद्वपां महिम्नोभयतः परियजति॥ यजमानमेव राज्येनोभयतः परिगृह्णाति। पुरस्तात् स्वाहाकारा वा अन्ये देवाः। उपरिष्टात् स्वाहाकारा अन्ये। ते वा एतेऽश्व एव मेध्य उभयेऽवरुध्यन्ते। यद्वपां महिम्नोभयतः परियजति। तानेवोभयान् प्रीणाति॥ ॥ १ ॥

परियजति षट् च॥ अनु० १० ॥

एकादशोऽनुवाकः।

वैश्वदेवो वा अश्वः। तं यत्प्राजापत्यं कुर्यात्। या देवता अपि भागाः। ता भागधेयेन व्यर्द्धयेत्। देव-

ताभ्यः समदं दध्यात्। स्तेगान् दंष्ट्राभ्यां मण्डूकान् जम्भ्येभिरिति। आज्यमवदानं कृत्वा प्रतिसङ्ख्याय-माहुतीर्जुहोति। या एव देवता अपि भागाः। ता भागधेयेन समर्धयति। न देवताभ्यः समदं दधाति ॥ १ ॥

चतुर्दशैतानन्नुवाकान् जुहोत्यनन्तरित्यै। प्रयासाय स्वाहेति पञ्चदशं। पञ्चदश वा अर्द्धमासस्य रात्रयः। अर्द्धमासशः संवत्सर आप्यते। देवासुराः संयत्ता आसन्। तेऽब्रुवन्नग्नयः स्विष्टकृतः। अश्वस्य मेध्यस्य वयमुद्धारमुद्धरामहै। अथैतानभिभवामेति। ते लोहितमुदहरन्त। ततो देवा अभवन् ॥ २ ॥

परासुराः। यत् स्विष्टकृद्भ्यो लोहितं जुहोति भ्रातृव्याभिभूत्यै। भवत्यात्मना। परास्य भ्रातृव्यो भवति। गोमृगकण्ठेन प्रथमामाहुतिं जुहोति। पशवो वै गोमृगः। रुद्रोऽग्निः स्विष्टकृत्। रुद्रादेव पशूनन्तर्दधाति। अथो यत्रैषाहुतिर्हूयते। न तत्र रुद्रः पशूनभिमन्यते ॥ ३ ॥

अश्वशफेन द्वितीयामाहुतिं जुहोति। पशवो वा एकशफम्। रुद्रोऽग्निः स्विष्टकृत्। रुद्रादेव पशूनन्तर्दधाति। अथो यत्रैषाहुतिर्हूयते। न तत्र रुद्रः पशू-

नभिमन्यते। अयस्मयेन कमण्डलुना तृतीयाम्। आहुतिं जुहोत्यायास्यो वै प्रजाः। रुद्रोऽग्निः स्विष्ट-कृत्। रुद्रादेव प्रजा अन्तर्दधाति॥ अथो यच्चैषाहुति-र्हूयते। न तत्र रुद्रः प्रजा अभिमन्यते॥ ४॥

दधात्यभवन्मन्यते प्रजा अन्तर्दधाति द्वे च॥ अनु० ११॥

द्वादशोऽनुवाकः।

अश्वस्य वा आलब्धस्य मेध उदक्रामत्। तदश्व-स्तोमीयमभवत्। यदश्वस्तोमीयं जुहोति। स मेधमे-वैनमालभते। आज्येन जुहोति। मध्या वा आज्यम्। मेधोऽश्वस्तोमीयम्। मेधेनैवास्मिन्मेधं दधाति। षट्-त्रिंशतं जुहोति। षट्त्रिंशदक्षरा बृहती॥ १॥

बार्हताः पशवः। सा पशूनां मात्रा। पशूनेव मा-त्रया समर्द्धयति। ता यद्भूयसीर्वा कनीयसीर्वा जुहु-यात्। पशून्मात्रया व्यर्द्धयेत्। षट्त्रिंशतं जुहोति। षट्त्रिंशदक्षरा बृहती। बार्हताः पशवः। सा पशूनां मात्रा। पशूनेव मात्रया समर्द्धयति॥ २॥

अश्वस्तोमीयं हुत्वा द्विपदा जुहोति। द्विपाद्व पु-

रुषो द्विप्रतिष्ठः। तदेनं प्रतिष्ठया समर्धयति। तदाहुः। अश्वस्तोमीयं पूर्व्वꣳ होतव्या३ द्विपदा३ इति। अश्वो वा अश्वस्तोमीयम्। पुरुषो द्विपदाः। अश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति। तस्माद्द्विपाच्चतुष्पादमत्ति। अथो द्विपद्येव चतुष्पदः प्रतिष्ठापयति॥ द्विपदा हुत्वा। नान्यामुत्तराहुतिं जुहुयात्। यदन्यामुत्तराहुतिं जुहुयात्। प्र प्रतिष्ठायाश्च्यवेत। द्विपदा अन्ततो जुहोति प्रतिष्ठित्यै॥ ३॥

बृहत्यर्द्धयति स्थापयति पञ्च च॥ अनु० १२॥

त्रयोदशोऽनुवाकः।

प्रजापतिरश्वमेधमसृजत। सोऽस्मात् सृष्टोऽपाक्रामत्। तं यज्ञक्रतुभिरन्वैच्छत्। तं यज्ञक्रतुभिर्नान्वविन्दत्। तमिष्टिभिरन्वैच्छत्। तमिष्टिभिरन्वविन्दत्। तदिष्टीनामिष्टित्वम्। यत्संवत्सरमिष्टिभिर्यजते। अश्वमेव तदन्विच्छति। सावित्रियो भवन्ति॥ १॥

इयं वै सविता। यो वा अस्यां नश्यति योऽनिलयते। अस्यां वाव तं विन्दन्ति। न वा इमां कश्चनेत्याहुः। तिर्य्यङ् नोर्ध्वोऽत्येतुमर्हतीति। यत् सावित्रियो

भवन्ति। सवितृप्रसूत एवैनमिच्छति। ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः। यत्सायं धृतीर्जुहोति। अश्वस्य यत्यै धृत्यै॥ २॥

यत्प्रातरिष्टिभिर्यजते। अश्वमेव तदन्विच्छति। यत्सायं धृतीर्जुहोति। अश्वस्यैव यत्यै धृत्यै। तस्मात्सायं प्रजाः क्षेम्या भवन्ति। यत् प्रातरिष्टिभिर्यजते। अश्वमेव तदन्विच्छति। तस्माद्दिवा नष्टैष एति। यत् प्रातरिष्टिभिर्यजते सायं धृतीर्जुहोति। अहोरात्राभ्यामेवैनमन्विच्छति॥ अथो अहोरात्राभ्यामेवास्मै योगक्षेमं कल्पयति॥ ३॥

भवन्ति धृत्या एनमन्विच्छत्येकञ्च॥ अनु० १३॥

चतुर्दशोऽनुवाकः।

अप वा एतस्माच्छ्री राष्ट्रं क्रामति। योऽश्वमेधेन यजते। ब्राह्मणौ वीणागाथिनौ गायतः। श्रिया वा एतद्रूपम्। यद्वीणा। श्रियमेवास्मिन् तद्धत्तः। यदा खलु वै पुरुषः श्रियमश्नुते। वीणास्मै वाद्यते। तदाहुः। यदुभौ ब्राह्मणौ गायेताम्॥ १॥

प्रभ्रंशुकास्माच्छ्रीः स्यात्। न वै ब्राह्मणे श्रीरमत

इति। ब्राह्मणोऽन्यो गायेत्। राजन्योऽन्यः। ब्रह्म वै ब्राह्मणः। क्षत्रꣳ राजन्यः। तथा हास्य ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवति। तदाहुः। यदुभौ दिवा गायेताम्। अपास्माद्राष्ट्रं क्रामेत्॥ २॥

न वै ब्राह्मणे राष्ट्रꣳ रमत इति। यदा खलु वै राजा कामयते। अथ ब्राह्मणं जिनाति। दिवा ब्राह्मणो गायेत्। नक्तꣳ राजन्यः। ब्रह्मणो वै रूपमहः। क्षत्रस्य रात्रिः। तथा हास्य ब्रह्मणा च क्षत्रेण चोभयतो राष्ट्रं परिगृहीतं भवति। इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेत्। इष्टापूर्त्तं वै ब्राह्मणस्य॥

॥ ३॥

इष्टापूर्त्तेनैवैनꣳ स समर्द्धयति। इत्यजिना इत्ययुध्यथा इत्यमुꣳ सङ्ग्राममहन्निति राजन्यः। युद्धं वै राजन्यस्य। युद्धेनैवैनꣳ स समर्द्धयति। अक्लृप्ता वा एतस्यर्त्तव इत्याहुः। योऽश्वमेधेन यजत इति। तिस्रोऽन्यो गायति तिस्रोऽन्यः। षट्सम्पद्यन्ते। षड्वा ऋतवः। ऋतूनेवास्मै कल्पयत॥ ताभ्याꣳ सꣳस्थायाम्। अनोयुक्ते च शते च ददाति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति॥ ४॥

गायेतां कामेद्ब्राह्मणस्य कल्पयतश्चत्वारि च ॥ अनु० १४ ॥

पञ्चदशोऽनुवाकः।

सर्व्वेषु वा एषु लोकेषु मृत्यवोऽन्वायत्ताः। तेभ्यो यदाहुतीर्न जुहुयात्। लोके लोक एनं मृत्युर्विन्देत्। मृत्यवे स्वाहा मृत्यवे स्वाहेत्यभिपूर्व्वमाहुतीर्जुहोति। लोकाल्लोकादेव मृत्युमवयजते। नैनं लोके लोके मृत्युर्विन्दति। यदमुष्मै स्वाहामुष्मै स्वाहेति जुहुयात् सञ्चक्षीत। बहुं मृत्युममित्रं कुर्वीत। मृत्यवे स्वाहेत्येकस्मा एवैकां जुहुयात्। एको वा अमुष्मिंल्लोके मृत्युः॥ ॥ १ ॥

अशनया मृत्युरेव। तमेवामुष्मिंल्लोकेऽवयजते। भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति। भ्रूणहत्यामेवावयजते। तदाहुः। यद्भ्रूणहत्या पात्याथ। कस्माद्यज्ञेऽपि क्रियत इति। अमृत्युर्वा अन्यो भ्रूणहत्याया इत्याहुः। भ्रूणहत्या वाव मृत्युरिति। यद्भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति॥ २ ॥

मृत्युमेवाहुत्या तर्पयित्वा परिपाणं कृत्वा। भ्रूणघ्ने

भेषजं करोति। एताꣳ ह वै मुण्डिभ औदन्यवः। भ्रूणहत्यायै प्रायश्चित्तिं विदाञ्चकार। यो हास्यापि प्रजायां ब्राह्मणꣳ हन्ति। सर्व्वस्मै तस्मै भेषजं करोति। वरुणाय स्वाहेत्यवभृथ उत्तमामाहुतिं जुहोति। वरुणो वै जुम्बकः। अन्तत एव वरुणमवयजते। खलतेर्विक्लिधस्य शुक्लस्य पिङ्गाक्षस्य मूर्द्धन् जुहोति॥ एतद्वै वरुणस्य रूपम्। रूपेणैव वरुणमवयजते॥ ३॥

लोके मृत्युर्जुहोति मूर्द्धन् जुहोति द्वे च॥ अनु० १५॥

षोडशोऽनुवाकः।

वारुणो वा अश्वः। तं देवतया व्यर्द्धयति। यत् प्राजापत्यं करोति। नमो राज्ञे नमो वरुणायेत्याह। वारुणो वा अश्वः। स्वयैवैनं देवतया समर्द्धयति। नमोऽश्वाय नमः प्रजापतय इत्याह। प्राजापत्यो वा अश्वः। स्वयैवैनं देवतया समर्द्धयति। नमोऽधिपतय इत्याह॥ १॥

धर्म्मो वा अधिपतिः। धर्म्ममेवावरुन्धे। अधिपतिरस्यधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासमित्याह। अधिपतिमेवैनꣳ समानानां करोति। मां धेहि

मयि धेहीत्याह। आशिषमेवैतामाशास्ते। उपाकृताय स्वाहेत्युपाकृते जुहोति। आलब्धाय स्वाहेति नियुक्ते जुहोति। हुताय स्वाहेति हुते जुहोति। एषां लोकानामभिजित्यै ॥ २ ॥

प्रवा एष एभ्यो लोकेभ्यश्च्यवते। योऽश्वमेधेन यजते। आग्नेयमैन्द्राग्नमाश्विनम्। तान् पशूनालभते प्रतिष्ठित्यै। यदाग्नेयो भवति। अग्निः सर्व्वा देवताः। देवता एवावरुन्धे। ब्रह्म वा अग्निः। क्षत्रमिन्द्रः। यदैन्द्राग्नो भवति ॥ ३ ॥

ब्रह्मक्षत्रे एवावरुन्धे। यदाश्विनो भवति। आशिषामवरुध्यै। त्रयो भवन्ति। त्रय इमे लोकाः। एष्वेव लोकेषु प्रतितिष्ठति। अग्नयेंऽहोमुचेऽष्टाकपाल इति दशहविषमिष्टिं निर्वपति। दशाक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे॥ अग्नेर्मन्वे प्रथमस्य प्रचेतस इति याज्यानुवाक्या भवन्ति सर्व्वत्वाय ॥ ॥ ४ ॥

अधिपतय इत्याहाभिजित्या ऐन्द्राग्नो भवति रुन्ध एकञ्च ॥ अनु० १६ ॥

सप्तदशोऽनुवाकः।

यद्यश्वमुपतपद्विन्देत्। आग्नेयमष्टाकपालं निर्वपेत्। सौम्यं चरुम्। सावित्रमष्टाकपालम्। यदाग्नेयो भवति। अग्निः सर्व्वा देवताः। देवताभिरेवैनं भिषज्यति। यत्सौम्यो भवति। सोमो वा ओषधीनाꣳ राजा। याभ्य एवैनं विन्दति॥ १॥

ताभिरेवैनं भिषज्यति। यत् सावित्रो भवति। सवितृप्रसूत एवैनं भिषज्यति। एताभिरेवैनं देवताभिर्भिषज्यति। अगदो हैव भवति। पौष्णं चरुं निर्वपेत्। यदि श्लोणः स्यात्। पूषा वै श्लोण्यस्य भिषक्। स एवैनं भिषज्यति। अश्लोणो हैव भवति॥ २॥

रौद्रं चरुं निर्वपेत्। यदि महती देवताभिमन्येत। एतद्देवत्यो वा अश्वः। स्वयैवैनं देवतयाभिषज्यति। अगदो हैव भवति। वैश्वानरं द्वादशकपालं निर्वपेन्मृगाखरे यदि नागच्छेत्। इयं वा अग्निर्वैश्वानरः। इयमेवैनमर्चिभ्यां परिरोधमानयति। आहैव सुत्यमहं गच्छेति। यद्यधीयात्॥ ३॥

अग्नयेꣳहोमुचेऽष्टाकपालः। सौर्य्यं पयः। वायव्य आज्यभागः। यजमानो वा अश्वः। अꣳहसा वा एष

गृहीतः । यस्याश्वो मेधाय प्रोक्षितोऽध्येति । यदꣳहो-मुचे निर्वपति । अꣳहस एव तेन मुच्यते । यजमानो वा अश्वः । रेतसा वा एष व्यृध्यते ॥ ४ ॥

यस्याश्वो मेधाय प्रोक्षितोऽध्येति । सौर्य्यꣳ रेतः । यत्सौर्य्यं पयो भवति । रेतसैवैनꣳ स समर्द्धयति । यजमानो वा अश्वः । गर्भैर्वा एष व्यृध्यते । यस्याश्वो मेधाय प्रोक्षितोऽध्येति । वायव्या गर्भाः । यद्वायव्य आज्यभागो भवति । गर्भैरेवैनꣳ स समर्द्धयति ॥ अथो यस्यैषाश्वमेधे प्रायश्चित्तिः क्रियते । इष्ट्वा वसीयान् भवति ॥ ५ ॥

विन्दत्यश्वोणो हैव भवत्यधीयाद्व्यध्यते गर्भैरेवैनꣳ स समर्द्धयति द्वे च ॥ अनु० १७ ॥

अष्टादशोऽनुवाकः ।

तदाहुः । द्वादश ब्रह्मौदनान्त्सꣳस्थिते निर्वपेत् । द्वादशभिर्वेष्टिभिर्यजेतेति । यदिष्टिभिर्यजेत । उपनामुक एनं यज्ञः स्यात् । पापीयाꣳस्तु स्यात् । आप्तानि वा एतस्य छन्दाꣳसि । य ईजानः । तानि क एतावदाशु पुनः प्रयुञ्जीतेति । सर्व्वा वै सꣳस्थिते यज्ञे वागाप्यते ॥ १ ॥

साम्ना भवति या तयाम्नी। क्रूरीकृतेव हि भवत्य-रुष्कृता। सा न पुनः प्रयुज्येत्याहुः। द्वादशैव ब्रह्मौ-दनान्त्सꣳस्थिते निर्वपेत्। प्रजापतिर्वा ओदनः। यज्ञः प्रजापतिः। उपनामुक एनं यज्ञो भवति। न पापी-यान् भवति। द्वादश भवन्ति। द्वादशमासाः संवत्स-रः॥ संवत्सर एव प्रतितिष्ठति॥ २॥

आप्यते संवत्सर एकञ्च॥ अनु० १८॥

ऊनविंशोऽनुवाकः।

एष वै विभूर्नाम यज्ञः। सर्व्वꣳ ह वै तच्च विभु भव-ति। यत्रैतेन यज्ञेन यजन्ते। एष वै प्रभूर्नाम यज्ञः। सर्व्वꣳ ह वै तच्च प्रभु भवति। यत्रैतेन यज्ञेन यजन्ते। एष वा ऊर्जस्वान्नाम यज्ञः। सर्व्वꣳ ह वै तच्चोर्जस्वद्भ-वति। यत्रैतेन यज्ञेन यजन्ते। एष वै पयस्वान्नाम यज्ञः॥ १॥

सर्व्वꣳ ह वै तच्च पयस्वद्भवति। यत्रैतेन यज्ञेन य-जन्ते। एष वै विधृतो नाम यज्ञः। सर्व्वꣳ ह वै तच्च विधृतं भवति। यत्रैतेन यज्ञेन यजन्ते। एष वै व्यावृत्तो नाम यज्ञः। सर्व्वꣳ ह वै तच्च व्यावृत्तं भवति। यत्रैतेन

यज्ञेन यजन्ते। एष वै प्रतिष्ठितो नाम यज्ञः। सर्व्वꣳ ह वै तत्र प्रतिष्ठितं भवति॥ २॥

यत्रैतेन यज्ञेन यजन्ते। एष वै तेजस्वी नाम यज्ञः। सर्व्वꣳ ह वै तत्र तेजस्वि भवति। यत्रैतेन यज्ञेन यजन्ते। एष वै ब्रह्मवर्चसी नाम यज्ञः। आ ह वै तत्र ब्राह्मणो ब्रह्मवर्चसी जायते। यत्रैतेन यज्ञेन यजन्ते। एष वा अतिव्याधी नाम यज्ञः। आ ह वै तत्र राजन्योऽतिव्याधी जायते। यत्रैतेन यज्ञेन यजन्ते॥ एष वै दीर्घो नाम यज्ञः। दीर्घायुषो ह वै तत्र मनुष्या भवन्ति। यत्रैतेन यज्ञेन यजन्ते। एष वै क्लृप्तो नाम यज्ञः। कल्पते ह वै तत्र प्रजाभ्यो योगक्षेमः। यत्रैतेन यज्ञेन यजन्ते॥ ३॥

पयस्वान्नाम यज्ञः प्रतिष्ठितं भवत्यतिव्याधी जायते यत्रैतेन यज्ञेन यजन्ते षट् च॥ अनु० १८॥

एष वै विभूः प्रभूरूर्जस्वान् पयस्वान् विधृतो व्यावृत्तः प्रतिष्ठितस्तेजस्वी ब्रह्मवर्चस्यतिव्याधी दीर्घः क्लृप्तो द्वादश॥

विंशोऽनुवाकः ।

तार्प्येणाश्वꣳ सञ्ज्ञपयन्ति । यज्ञो वै तार्प्यम् । यज्ञेनवैनꣳ समर्द्धयन्ति । यामेन साम्ना प्रस्तोतानूपतिष्ठते । यमलोकमेवैनं गमयति । तार्प्ये च कृत्यधीवासे चाश्वꣳ सञ्ज्ञपयन्ति । एतद्वै पशूनाꣳ रूपम् । रूपेणैव पशूनवरुन्धे । हिरण्यकशिपु भवति । तेजसोऽवरुध्यै ॥

॥ १ ॥

रुक्मो भवति । सुवर्गस्य लोकस्यानुख्यात्यै । अश्वो भवति । प्रजापतेराप्त्यै । अस्य वै लोकस्य रूपं तार्प्यम् । अन्तरिक्षस्य कृत्यधीवासः । दिवो हिरण्यकशिपु । आदित्यस्य रुक्मः । प्रजापतेरश्वः । इममेव लोकं तार्प्येणाप्नोति ॥ अन्तरिक्षं कृत्यधीवासेन । दिवꣳ हिरण्यकशिपुना । आदित्यꣳ रुक्मेण । अश्वेनैव मेध्येन प्रजापतेः सायुज्यꣳ सलोकतामाप्नोति । एतासामेव देवतानाꣳ सायुज्यम् । सार्ष्टिताꣳ समानलोकतामाप्नोति । योऽश्वमेधेन यजते । य उ चैनमेवं वेद ॥ २ ॥

अवरुध्या आप्नोत्यष्टौ च ॥ अनु० २० ॥

एकविंशोऽनुवाकः।

आदित्याश्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्द्धन्त। तेऽङ्गिरस आदित्येभ्यः। अमुमादित्यमश्वꣳ श्वेतं भूतं दक्षिणामनयन्। तेऽब्रुवन्। यन्नोनेष्ट। सवर्योऽभूदिति। तस्मादश्वꣳ सवयेत्याह्वयन्ति। तस्माद्यज्ञे वरो दीयते। यत् प्रजापतिरालब्धोऽश्वोऽभवत्। तस्मादश्वो नाम॥
॥ १ ॥

यच्छ्वयदरुरासीत्। तस्मादर्वा नाम। यत्सद्यो वाजान्त्समजयत्। तस्माद्वाजी नाम। यदसुराणां लोकानादत्त। तस्मादादित्यो नाम। अग्निर्वा अश्वमेधस्य योनिरायतनम्। सूर्योऽग्नेर्योनिरायतनम्। यदश्वमेधेऽग्नौ चित्य उत्तरवेदिमुपवपति। योनिमन्तमेवैनमायतनवन्तं करोति॥ २ ॥

योनिमानायतनवान् भवति। य एवं वेद। प्राणापानौ वा एतौ देवानाम्। यदर्काश्वमेधौ। प्राणापानावेवावरुन्धे। ओजोबलं वा एतौ देवानाम्। यदर्काश्वमेधौ। ओजोबलमेवावरुन्धे। अग्निर्वा अश्वमेधस्य योनिरायतनम्। सूर्य्योऽग्नेर्योनिरायतनम्॥ यदश्वमेधेऽग्नौ चित्य उत्तरवेदिं चिनोति। तावर्काश्वमेधौ।

अर्काश्वमेधावेवावरुन्धे। अथो अर्काश्वमेधयोरेव प्रतितिष्ठति ॥ ३ ॥

नाम करोति सूर्य्योऽग्नेर्योनिरायतनं चत्वारि च ॥ अनु० २१ ॥

द्वाविंशोऽनुवाकः।

प्रजापतिं वै देवाः पितरम्। पशुं भूतं मेधायालभन्त। तमालभ्योपावसन्। प्रातर्यष्टास्मह इति। एकं वा एतद्देवानामहः। यत्संवत्सरः। तस्मादश्वः पुरस्तात् संवत्सर आलभ्यते। यत्प्रजापतिरालब्धोऽश्वोऽभवत्। तस्मादश्वः। यत्सद्यो मेधोऽभवत् ॥ १ ॥

तस्मादश्वमेधः। वेदुकोऽश्वमाशुं भवति। य एवं वेद। यद्वैतत्प्रजापतिरालब्धोऽश्वोऽभवत्। तस्मादश्वः प्रजापतेः पशूनामनुरूपतमः। आस्य पुत्रः प्रतिरूपो जायते। य एवं वेद। सर्व्वाणि भूतानि सम्भृत्यालभते। समेनं देवास्तेजसे ब्रह्मवर्चसाय भरन्ति। योऽश्वमेधेन यजते ॥ २ ॥

य उचैनमेवं वेद। एतद्वै तद्देवा एतां देवताम्। पशुं भूतं मेधायालभन्त। यज्ञमेव। यज्ञेन यज्ञमयजन्त देवाः। कामप्रं यज्ञमकुर्व्वत। तेऽमृतत्वमकामयन्त।

तेऽमृतत्वमगच्छन् । योऽश्वमेधेन यजते । देवानामेवा-
यनेनैति ॥ ३ ॥

प्राजापत्येनैव यज्ञेन यजते कामप्रेण । अपुनर्मार-
मेव गच्छति । एतस्य वै रूपेण पुरस्तात् प्राजापत्यमृ-
षभं तूपरं बहुरूपमालभते । सर्व्वेभ्यः कामेभ्यः । सर्व्व-
स्याप्त्यै । सर्व्वस्य जित्यै । सर्व्वमेव तेनाप्नोति । सर्व्वं
जयति । योऽश्वमेधेन यजते । य उ चैनमेवं वेद ॥ ४ ॥

मेधोऽभवद्यजत एति वेद ॥ अनु० २२ ॥

त्रयोविंशोऽनुवाकः ।

यो वा अश्वस्य मेध्यस्य लोमनी वेद । अश्वस्यैव
मेध्यस्य लोमं लोमं जुहोति । अहोरात्रे वा अश्वस्य
मेध्यस्य लोमनी । यत्सायं प्रातर्जुहोति । अश्वस्यैव मे-
ध्यस्य लोमं लोमं जुहोति । एतदनुकृति ह स्म वै पुरा ।
अश्वस्य मेध्यस्य लोमं लोमं जुह्वति । यो वा अश्वस्य
मेध्यस्य पदे वेद । अश्वस्यैव मेध्यस्य पदे पदे जुहोति ।
दर्शपूर्णमासौ वा अश्वस्य मेध्यस्य पदे ॥ १ ॥

यद्दर्शपूर्णमासौ यजते । अश्वस्यैव मेध्यस्य पदे पदे
जुहोति । एतदनुकृति ह स्म वै पुरा । अश्वस्य मेध्यस्य

पदे पदे जुह्वति। यो वा अश्वस्य मेध्यस्य विवर्त्तनं वेद। अश्वस्यैव मेध्यस्य विवर्त्तने विवर्त्तने जुहोति। असौ वा आदित्योऽश्वः। स आहवनीयमागच्छति। तद्विवर्त्तते। यदग्निहोत्रं जुहोति॥ अश्वस्यैव मेध्यस्य विवर्त्तने विवर्त्तने जुहोति। एतदनुकृति ह स्म वै पुरा। अश्वस्य मेध्यस्य विवर्त्तने विवर्त्तने जुह्वति॥ २॥

पदे अग्निहोत्रं जुहोति त्रीणि च॥ अनु० २३॥

प्रजापतिस्तमष्टादशिभिः प्रजापतिरकामयताभावस्मै युञ्जन्ति तेजसाप प्राणा अपश्रीरूर्द्धां प्रजापतिः प्रेणानु प्रथमेन प्रजापतिरकामयत महान् वैऽश्वदेवो वा अश्वस्य प्रजापतिस्तं यज्ञक्रतुभिरपश्रीर्ब्राह्मणो सर्व्वेषु वारुणो यद्यश्वं तदाहुरेष वै विभूस्ताप्येणादित्याः प्रजापतिं पितरं यो वा अश्वस्य मेध्यस्य लोमनी चत्वारिंशतिः॥ २३॥

प्रजापतिरस्मिँल्लोके बहव उत्तरतः श्रियमेवाव प्रजापतिरकामयत महान्यत् प्रातरिष्टिभिः प्रवा एष एभ्यो लोकेभ्यः सर्व्वꣳ ह वै तत्र पयस्वद्य उ चैनमेवं वेद चत्वार्य्यशीतिः॥ ८४॥

इति नवमप्रपाठकः॥

हरिः ॐ ।

# तैत्तिरीय-ब्राह्मणे

## तृतीयकाण्डे दशमप्रपाठके

### प्रथमोऽनुवाकः ।

सञ्ज्ञानं विज्ञानं प्रज्ञानं जानदभिजानत् । सङ्कल्पमानं प्रकल्पमानमुपकल्पमानमुपक्लृप्तं क्लृप्तम् । श्रेयो वसीय आ यत्सम्भूतं भूतम् । चित्रः केतुः प्रभानाभान्त्सम्भान् । ज्योतिष्मा॑स्तेजस्वानातप॑स्तपन्नभितपन् । रोचनो रोचमानः शोभनः शोभमानः कल्याणः । दर्शा दृष्टा दर्शता विश्वरूपा सुदर्शना । आप्यायमानाप्यायमानाप्याया सूनृतेरा । आपूर्यमाणा पूर्यमाणा पूरयन्ती पूर्णा पौर्णमासी । दाता प्रदातानन्दो मोदः प्रमोदः ॥ १ ॥

आवेशयन्निवेशयन्त्संवेशनः स॑शान्तः शान्तः । आभवन्प्रभवन्त्सम्भवन्त्सम्भूतो भूतः । प्रस्तुतं विष्टुत॑ स॑स्तुतं कल्याणं विश्वरूपम् । शुक्रममृतं तेजस्वि तेजः समिद्धम् । अरुणं भानुमन्मरीचि मदभितपत्तपस्वत् । सविता प्रसविता दीप्तो दीपयन् दीप्यमानः । ज्वलं ज्वलितातपन् वितपन्त्सन्तपन् । रोचनो रोचमानः

शम्भूः शुम्भमानो वामः। सुता सुन्वती प्रसुता सूयमा-
नाभिषूयमाणा। पीतिः प्रपा सम्पा तृप्तिस्तर्पयन्ती॥२॥

कान्ता काम्या कामजातायुष्मती कामदुघा। अ-
भिशास्तानुमन्तानन्दो मोदः प्रमोदः। आसादयन्नि-
षादयन्त्संसादनः संसन्नः सन्नः। आभूर्विभूः प्रभूः
शम्भूर्भुवः। पवित्रं पवयिष्यन् पूतो मेध्यः। यशो यश-
स्वानायुरमृतः। जीवो जीविष्यन्त्स्वर्गो लोकः। सह-
स्वान्त्सहीयानोजस्वान्त्सहमानः। जयन्नभिजयन्त्सु-
द्रविणो द्रविणोदाः। आर्द्रपवित्रो हरिकेशो मोदः
प्रमोदः॥३॥

अरुणोऽरुणरजाः पुण्डरीको विश्वजिदभिजित्।
आर्द्रः पिन्वमानोऽन्नवान् रसवानिरावान्। सर्वौ-
षधः सम्भरो महस्वान्। एजत्काजोवत्काः। क्षुल्लकाः
शिपिविष्टकाः। सरिस्वराः सुशेरवः। अजिरासो ग-
मिष्णवः। इदानीं तदानीमेतर्हि क्षिप्रमजिरम्। आ-
शुर्निमेषः फणोद्रवन्नतिद्रवन्। त्वरंस्त्वरमाण आ-
शुराशीयान् जवः॥ अग्निष्टोम उक्थ्योऽतिरात्रो द्विरात्र-
स्त्रिरात्रश्चतूरात्रः। अग्निर्ऋतुः सूर्यऋतुश्चन्द्रमा ऋतुः।
प्रजापतिः संवत्सरो महान् कः॥४॥

प्रमोदस्तर्पयन्ती प्रमोदो जवस्तोणि च॥ अनु०१॥

द्वितीयोऽनुवाकः।

भूरग्निश्च पृथिवीच्च माच्च। चीश्च लोकान्त्संवत्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वध्रुवासीद। भुवो वायुश्चान्तरिक्षञ्च माच्च। चीश्च लोकान्त्संवत्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वध्रुवासीद। स्वरादित्यश्च दिवञ्च माच्च। चीश्च लोकान्त्संवत्सरञ्च॥ प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वध्रुवासीद। भूर्भुवःस्वश्चन्द्रमसश्च दिशश्च माच्च। चीश्च लोकान्त्संवत्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वध्रुवासीद॥ १॥

संवत्सरञ्च षट् च॥ अनु० २॥

तृतीयोऽनुवाकः।

त्वमेव त्वां वेत्थ योऽसि सोऽसि। त्वमेव त्वामचैषीः। चितश्चासि सञ्चितश्चास्यग्ने। एतावांश्चासि भूयांश्चास्यग्ने। यत्ते अग्ने न्यूनं यदु तेति रिक्तम्। आदित्यास्तदङ्गिरसश्चिन्वन्तु। विश्वे ते देवाश्चितिमापूर-

यन्तु। चितश्चासि सञ्चितश्चास्यग्ने। एतावांश्चासि भूयांश्चास्यग्ने। मा ते अग्ने च येन मातिं च येनायुरा-वृक्षि॥ सर्व्वेषां ज्योतिषां ज्योतिर्यद्दावुदेति। तपसो जातमनिभृष्टमोजः। तत्ते ज्योतिरिष्टके। तेन मे तप। तेन मे ज्वल। तेन मे दीदिहि। यावद्देवाः। याव-द्भाति सूर्य्यः। यावद्रुतापि ब्रह्म॥ १॥

वृक्षि नव च॥ अनु० ३॥

चतुर्थोऽनुवाकः।

संवत्सरोऽसि परिवत्सरोऽसि। इदावत्सरोऽसीदु-वत्सरोऽसि। इद्वत्सरोऽसि वत्सरोऽसि। तस्य ते वसन्तः शिरः। ग्रीष्मो दक्षिणः पक्षः। वर्षाः पुच्छम्। शरदु-त्तरः पक्षः। हेमन्तो मध्यम्। पूर्व्वपक्षाश्चितयः। अ-परपक्षाः पुरीषम्॥ १॥

अहोरात्राणीष्टकाः। ऋषभोऽसि स्वर्गो लोकः। यस्यां दिशि महीयसे। ततो नो मह आवह। वायु-र्भूत्वा सर्व्वा दिश आवाहि। सर्व्वा दिशोऽनुविवाहि। सर्व्वा दिशोऽनुसंवाहि। चित्या चितिमापृण। अचि-त्या चितिमा पृण। चिदसि समुद्रयोनिः॥ २॥

इन्दुर्दक्षः श्येन ऋतावा। हिरण्यपक्षः शकुनो भुरण्युः। महान्त्सधस्थे ध्रुव आनिषत्तः। नमस्ते अस्तु मा मा हिꣳसीः। एति प्रेति वीति समित्युदिति। दिवं मे यच्छ। अन्तरिक्षं मे यच्छ। पृथिवीं मे यच्छ। पृथिवीं मे यच्छ। अन्तरिक्षं मे यच्छ॥ दिवं मे यच्छ। अह्ना प्रसारय। रात्र्या समच। रात्र्या प्रसारय। अह्ना समच। कामं प्रसारय। कामꣳ समच॥ ३॥

पुरीषꣳ समुद्रयोनिः पृथिवीं मे यच्छान्तरिक्षं मे यच्छ सप्त च॥ अनु० ४॥

पञ्चमोऽनुवाकः।

भूर्भुवः स्वः। ओजोबलम्। ब्रह्म क्षत्रम्। यशो महत्। सत्यं तपो नाम। रूपममृतम्। चक्षुः श्रोत्रम्। मन आयुः। विश्वं यशो महः। समन्तपो हरो भाः॥ जातवेदा यदि वा पावकोऽसि। वैश्वानरो यदि वा वैद्युतोऽसि। शं प्रजाभ्यो यजमानाय लोकम्। ऊर्जं पुष्टिं ददद्भ्यावदृत्स्व॥ १॥

भास्वत्वारि च॥ अनु० ५॥

षष्ठोऽनुवाकः ।

राज्ञी विराज्ञी । सम्राज्ञी स्वराज्ञी । अर्चिः शोचिः । तपो हरो भाः । अग्निरिन्द्रो बृहस्पतिः । विश्वे देवा भुवनस्य गोपाः । ते मा सर्वे यशसा सꣳसृजन्तु ॥ १ ॥

राज्ञीन्द्रो मा सप्त ॥ अनु० ६ ॥

सप्तमोऽनुवाकः ।

असवे स्वाहा वसवे स्वाहा । विभुवे स्वाहा विवस्वते स्वाहा । अभिभुवे स्वाहाधिपतये स्वाहा । दिवां पतये स्वाहाꣳहस्पत्याय स्वाहा । चाक्षुष्मत्याय स्वाहा ज्योतिष्मत्याय स्वाहा । राज्ञे स्वाहा विराज्ञे स्वाहा । सम्राज्ञे स्वाहा स्वराज्ञे स्वाहा । शूषाय स्वाहा सूर्याय स्वाहा । चन्द्रमसे स्वाहा ज्योतिषे स्वाहा । सꣳसर्पाय स्वाहा कल्याणाय स्वाहा ॥ अर्जुनाय स्वाहा ॥ १ ॥

कल्याणाय स्वाहैकञ्च ॥ अनु० ७ ॥

अष्टमोऽनुवाकः ।

विपश्चिते पवमानाय गायत । मही नधारात्यन्धो अर्षति । अहिर्नजूर्णामतिसर्पति त्वचम् । अत्यो न क्री-

ऽन्नसरद्दृषा हरिः। उपयामगृहीतोऽसि मृत्यवे त्वा जुष्टं गृह्णामि। एष ते योनिर्मृत्यवे त्वा। अपमृत्युमपक्षुधम्। अपेतः शपथं जहि। अधा नो अग्न आवह। रायस्पोषꣳ सहस्रिणम् ॥ १ ॥

ये ते सहस्रमयुतं पाशाः। मृत्यो मर्त्याय हन्तवे। तान् यज्ञस्य मायया। सर्वानवयजामहे। भक्षोऽस्यमृतभक्षः। तस्य ते मृत्युपीतस्यामृतवतः। स्वगाकृतस्य मधुमतः। उपहूतस्योपहूतो भक्षयामि। मन्द्राभिभूतिः केतुर्यज्ञानां वाक्। असावेहि ॥ २ ॥

अन्धो जागृविः प्राण। असावेहि। बधिर आक्रन्दयितरपान। असावेहि। अहस्तोस्त्वा चक्षुः। असावेहि। अपादाशो मनः। असावेहि। कवे विप्रचित्ते श्रोत्र। असावेहि ॥ ३ ॥

सुहस्तः सुवासाः। शूषो नामास्यमृतो मर्त्येषु। तं त्वाहन्तथा वेद। असावेहि। अग्निर्मे वाचि श्रितः। वाग्घृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। वायुर्मे प्राणे श्रितः ॥ ४ ॥

प्राणो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। सूर्यो मे चक्षुषि श्रितः। चक्षुर्हृदये। हृदयं

मयि । अहममृते । अमृतं ब्रह्मणि । चन्द्रमा मे मनसि श्रितः ॥ ५ ॥

मनो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । दिशो मे श्रोत्रे श्रिताः । श्रोत्रꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आपो मे रेतसि श्रिताः ॥ ६ ॥

रेतो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पृथिवी मे शरीरे श्रिता । शरीरꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ओषधिवनस्पतयो मे लोमसु श्रिताः ॥ ७ ॥

लोमानि हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । इन्द्रो मे बले श्रितः । बलꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पर्जन्यो मे मूर्ध्नि श्रितः ॥ ८ ॥

मूर्धा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ईशानो मे मन्यौ श्रितः । मन्युर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आत्मा म आत्मनि श्रितः ॥ आत्मा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पुनर्म आत्मा पुनरायुरागात् । पुनः प्राणः

पुनराकूतमागात्। वैश्वानरो रश्मिभिर्वावृधानः। अन्तस्तिष्ठत्वमृतस्य गोपाः॥ ६॥

सहस्रिणमिहि श्रोत्रासावेहि प्राणे श्रितो मनसि श्रितो रेतसि श्रिता लोमसु श्रिता मूर्ध्नि श्रित आत्मनि श्रितोऽष्टौ च॥ अनु० ८॥

अग्निर्वायुः सूर्य्यश्चन्द्रमा दिश आपः पृथिव्योषधि वनस्पतय इन्द्रः पर्जन्य ईशान आत्मा पुनर्मे॥

नवमोऽनुवाकः।

प्रजापतिर्देवानसृजत। ते पाप्मना सन्दिता अजायन्त। तान्व्यद्यत्। यद्व्यद्यत्। तस्माद्विद्युत्। तमवृश्चत्। यदवृश्चत्। तस्माद्वृष्टिः। तस्माद्यत्रैते देवते अभिप्राप्नुतः। विचहैवास्य तच्च पाप्मानन्द्यतः॥ १॥

वृश्चतश्च। सैषा मीमाꣳसाग्निहोत्र एव संपन्ना। अथो आहुः। सर्व्वेषु यज्ञक्रतुष्विति। होष्यन्नप उपस्पृशेत्। विद्युदसि विद्यमे पाप्मानमिति। अथ हुत्वोपस्पृशेत्। वृष्टिरसि वृश्चमे पाप्मानमिति। यक्ष्यमाणो वेष्ट्वा वा। विचहैवास्यै ते देवते पाप्मानन्द्यतः॥ २॥

वृश्चतश्च। अत्यꣳहो ह्यारुणिः। ब्रह्मचारिणे प्रस्थान् प्रोच्य प्रजिघाय। परेहि। प्लक्षं दय्यां पातिं पृच्छ।

वेत्थ सावित्रा३ऽन्नवेत्था३ इति। तमागत्य पप्रच्छ। आ-
चार्य्यो मा प्राहैषीत्। वेत्थ सावित्रा३ऽन्नवेत्था३ इति।
सहोवाच वेदेति ॥ ३ ॥

स कस्मिन् प्रतिष्ठित इति। परो रजसीति। कस्त-
त्परो रजा इति। एष वाव स परो रजा इति होवा-
च। य एष तपति। एषोवाग्रजा इति। स कस्मिन्न्वेष
इति। सत्य इति। किं तत्सत्यमिति। तप इति ॥ ४ ॥

कस्मिन्नु तप इति। बल इति। किं तद्बलमिति। प्राण
इति। मास्म प्राणमतिपृच्छ इति माचार्य्योऽब्रवीदिति
होवाच ब्रह्मचारी। सहोवाच प्लक्षो दय्यांपातिः।
यद्वै ब्रह्मचारिन् प्राणमत्यप्रक्ष्यः। मूर्द्धा ते व्यपतिष्यत्।
अहमुत आचार्य्याच्छ्रेयान् भविष्यामि। यो मा सा-
वित्रे समवादिष्टेति ॥ ५ ॥

तस्मात् सावित्रे न संवदेत। स यो ह वै सावित्रं वि-
दुषा सावित्रे संवदते। सहास्मिञ्छ्रियं दधाति। अनु-
हवा अस्मा असौ तपञ्छ्रियं मन्यते। अन्वस्मै श्रीस्तपो
मन्यते। अन्वस्मै तपो बलं मन्यते। अन्वस्मै बलं प्राणं
मन्यते। स यदाह। सञ्ज्ञानं विज्ञानं दर्शादृष्टेति।
एष एव तत् ॥ ६ ॥

अथ यदाह। प्रस्तुतं विष्टुतꣳ सुता सुन्वतीति। एष एव तत्। एष ह्येव तान्यहानि। एष रात्रयः। अथ यदाह। चित्रः केतुर्दाता प्रदाता सविता प्रसविताभिशास्तानुमन्तेति। एष एव तत्। एष ह्येव तेऽह्नो मुहूर्त्ताः। एष रात्रे॥ ७॥

अथ यदाह। पवित्रं पवयिष्यन्त्सहस्वान्त्सहीयानरुणोऽरुणरजा इति। एष एव तत्। एष ह्येव तेऽर्द्धमासाः। एष मासाः। अथ यदाह। अग्निष्टोम उक्थ्योऽग्निरृतुः प्रजापतिः संवत्सर इति। एष एव तत्। एष ह्येव ते यज्ञक्रतवः। एष ऋतवः॥ ८॥

एष संवत्सरः। अथ यदाह। इदानीं तदानीमिति। एष एव तत्। एष ह्येव ते मुहूर्त्तानां मुहूर्त्ताः। जनको ह वैदेहः। अहोरात्रैः समाजगाम। तꣳ होचुः। यो वा अस्मान् वेद। विजहत् पाप्मानमेति॥ ९॥

सर्व्वमायुरेति। अभि स्वर्गं लोकं जयति। नास्यामुष्मिँल्लोकेऽन्नं क्षीयत इति। विजहद्ध वै पाप्मानमेति। सर्व्वमायुरेति। अभि स्वर्गं लोकं जयति। नास्यामुष्मिँल्लोकेऽन्नं क्षीयते। य एवं वेद। अहीनाह्याश्वथ्यः। सावित्रं विदाञ्चकार॥ १०॥

स ह हꣳसो हिरण्मयो भूत्वा। स्वर्गं लोकमियाय। आदित्यस्य सायुज्यम्। हꣳसो ह वै हिरण्मयो भूत्वा। स्वर्गं लोकमेति। आदित्यस्य सायुज्यम्। य एवं वेद। देवभागो ह श्रौतर्षः। सावित्रं विदाञ्चकार। तꣳ ह वागदृश्यमानाभ्युवाच ॥ ११ ॥

सर्व्वं बत गौतमो वेद। यः सावित्रं वेदेति। सहोवाच। कैषा वागसीति। अयमहꣳ सावित्रः। देवानामुत्तमो लोकः। गुह्यं महो बिभ्रदिति। एतावति ह गौतमः। यज्ञोपवीतं कृत्वाधो निपपात। नमो नम इति ॥ १२ ॥

स होवाच। मा भैषीर्गौतम। जितो वै ते लोक इति। तस्माद्ये के च सावित्रं विदुः। सर्व्वे ते जितलोकाः। स यो ह वै सावित्रस्याष्टाक्षरं पदꣳ श्रियाभिषिक्तं वेद। श्रिया हैवाभिषिच्यते। घृणिरिति द्वे अक्षरे। सूर्य्य इति त्रीणि। आदित्य इति त्रीणि ॥ ॥ १३ ॥

एतद्वै सावित्रस्याष्टाक्षरं पदꣳ श्रियाभिषिक्तम्। य एवं वेद। श्रिया हैवाभिषिच्यते। तदेतदृचाभ्युक्तम्। ऋचो अक्षरे परमे व्योमन्। यस्मिन्देवा अधि विश्वे

निषेदुः। यस्तन्न वेद किमृचा करिष्यति। य इत्तद्वि-
दुस्त इमे समासत इति। न ह वा एतस्यर्चा न यजुषा
न साम्नार्थोऽस्ति। यः सावित्रं वेद ॥ १४ ॥

तदेतत् परि यद्देवचक्रम्। आर्द्रं पिन्वमानꣳ स्वर्गे
लोक एति। विजहद्विश्वा भूतानि सम्पश्यत्। आर्द्रो
ह वै पिन्वमानः स्वर्गे लोक एति। विजहन्विश्वा भू-
तानि सम्पश्यन्। य एवं वेद। भूषो ह वै वार्ष्णेयः।
आदित्येन समाजगाम। तꣳ होवाच। एहि सावित्रं
विद्धि॥ अयं वै स्वर्ग्योऽग्निः पारयिष्णुरमृतात् सम्भूत
इति। एष वाव स सावित्रः। य एष तपति। एहि मां
विद्धि। इति हैवैनं तदुवाच ॥ १५ ॥

यतो यतो वेदेति तप इति समवादिष्टेति तद्राचे-
र्ऋतव एति चकारोवाच नम इत्यादित्य इति त्रीणि
सावित्रं वेद विद्धि पञ्च च ॥ अनु० ९ ॥

सञ्ज्ञानं प्रस्तुतं तान्यहानि चित्रः केतुस्तेऽह्नो मु-
हूर्त्ताः पवित्रं तेऽर्द्धमासा अग्निष्टोमो यज्ञक्रतव इदा-
नीं मुहूर्त्तानां जनको ह वा अर्हीना देवभागः कैषा
वाक् भूषो ह वै षोडश ॥

दशमोऽनुवाकः ।

इयं वाव सरघा । तस्या अग्निरेव सारघं मधु । या एताः पूर्व्वपक्षापरपक्षयो रात्रयः । ता मधुकृतः । यान्यहानि । ते मधुवृषाः । स यो हवा एता मधुकृतश्च मधुवृषाꣳश्च वेद । कुर्व्वन्ति हास्यैता अग्नौ मधु । नास्येष्टापूर्त्तं धयन्ति । अथ यो न वेद ॥ १ ॥

न हास्यैता अग्नौ मधु कुर्व्वन्ति । धयन्त्यस्येष्टापूर्त्तम् । यो हवा अहोरात्राणां नामधेयानि वेद । नाहोरात्रेष्वार्त्तिमार्च्छति । सञ्ज्ञानं विज्ञानं दर्शादृष्टेति । एतावनुवाकौ पूर्व्वपक्षस्याहोरात्राणां नामधेयानि । प्रस्तुतं विष्टुतꣳ सुतामुन्वतीति* । एतावनुवाकावपरपक्षस्याहोरात्राणां नामधेयानि । नाहोरात्रेष्वार्त्तिमार्च्छति । य एवं वेद ॥ २ ॥

यो ह वै मुहूर्त्तानां नामधेयानि वेद । न मुहूर्त्तेष्वार्त्तिमार्च्छति । चित्रः केतुर्दाता प्रदाता सविता प्रसविताभिशास्तानुमन्तेति । एतेऽनुवाका मुहूर्त्तानां नामधेयानि । न मुहूर्त्तेष्वार्त्तिमार्च्छति । य एवं वेद । यो ह वा अर्द्धमासानाञ्च मासानाञ्च नामधेयानि

* सुतासुन्वतीति C पुस्तकपाठः ।

वेद। नार्द्धमासेषु न मासेष्वार्त्तिमार्च्छति। पवित्रं पव-
यिष्यन्त्सहस्वान्त्सहीयानरुणोऽरुणरजा इति। एते-
ऽनुवाका अर्द्धमासानाञ्च मासानाञ्च नामधेयानि॥
॥ ३ ॥

नार्द्धमासेषु न मासेष्वार्त्तिमार्च्छति। य एवं वेद।
यो ह वै यज्ञक्रतूनाञ्चर्तूनाञ्च संवत्सरस्य च नामधे-
यानि वेद। न यज्ञक्रतुषु नर्त्तुषु न संवत्सर आर्त्तिमा-
र्च्छति। अग्निष्टोम उक्थ्योऽग्निर्ऋतुः प्रजापतिः संवत्सर
इति। एतेऽनुवाका यज्ञक्रतूनाञ्चर्तूनाञ्च संवत्सरस्य
च नामधेयानि। न यज्ञक्रतुषु नर्त्तुषु न संवत्सर
आर्त्तिमार्च्छति। य एवं वेद। यो ह वै मुहूर्त्तानां
मुहूर्त्तान्वेद। न मुहूर्त्तानां मुहूर्त्तेष्वार्त्तिमार्च्छति॥
इदानीं तदानीमिति। एते वै मुहूर्त्तानां मुहूर्त्ताः।
न मुहूर्त्तानां मुहूर्त्तेष्वार्त्तिमार्च्छति। य एवं वेद। अथो
यथा क्षेत्रज्ञो भूत्वानु प्रविश्यान्नमत्ति। एवमेवैतान्
क्षेत्रज्ञो भूत्वानुप्रविश्यान्नमत्ति। स एतेषामेव सलो-
कताꣳ सायुज्यमश्नुते। अप पुनर्मृत्युं जयति। य एवं
वेद॥ ४॥

न वेदैवं वेदानुवाका अर्द्धमासानाञ्च मासानाञ्च

नामधेयानि मुहूर्त्तप्राप्तिमार्च्छति नव च ॥ अनु० १० ॥

इयमहोरात्राणाᳬं सङ्ख्यानं प्रस्तुतं मुहूर्त्तानां चित्रः केतुरर्द्धमासानां पवित्रं यज्ञक्रतूनामग्निष्टोमो मुहूर्त्तानां मुहूर्त्तान् वेदेदानीमथो यथा स्रेत्रयो द्वादश ॥

एकादशोऽनुवाकः ।

कश्चिद्ध वा अस्माँल्लोकात्प्रेत्य । आत्मानं वेद । अयमहमस्मीति । कश्चित् स्वं लोकं न प्रतिप्रजानाति । अग्निमुग्धो हैव धूमतान्तः । स्वं लोकं न प्रतिप्रजानाति । अथ यो हैवैतमग्निᳬं सावित्रं वेद । स एवास्माँल्लोकात् प्रेत्य । आत्मानं वेद । अयमहमस्मीति ॥ ॥ १ ॥

स स्वं लोकं प्रतिप्रजानाति । एष उ एवैनं तत्सावित्रः । स्वर्गं लोकमभिवहति । अहोरात्रैर्वा इदᳬं संयुग्भिः क्रियते । इतिरात्रायादीक्षिषत । इतिरात्राय व्रतमुपागुरिति । तानिहानेवंविदुषः । अमुष्मिँल्लोके शेवधिं धयन्ति । धीतᳬं हैव स शेवधिमनुपरैति । अथ यो हैवैतमग्निᳬं सावित्रं वेद ॥ २ ॥

तस्य हैवाहोरात्राणि । अमुष्मिँल्लोके शेवधिं न धयन्ति । अधीतᳬं हैव स शेवधिमनुपरैति । भरद्वाजो

ह त्रिभिरायुर्भिर्ब्रह्मचर्य्यमुवास। तꣳ ह जीर्णिꣳ स्थविरꣳ शयानम्। इन्द्र उपव्रज्योवाच। भरद्वाज। यत्ते चतुर्थमायुर्दद्याम्। किमेनेन कुर्य्या इति। ब्रह्मचर्य्यमेवैनेन चरेयमिति होवाच॥ ३॥

तꣳ ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार। तेषाꣳ हैकैकस्मान् मुष्टिमाददे। स होवाच। भरद्वाजेत्यामन्त्र्य। वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननूक्तमेव। एह्येमं विद्धि। अयं वै सर्व्वविद्येति॥ ॥ ४॥

तस्मै हैतमग्निꣳ सावित्रमुवाच। तꣳ स विदित्वा। अमृतो भूत्वा। स्वर्गं लोकमियाय। आदित्यस्य सायुज्यम्। अमृतो हैव भूत्वा। स्वर्गं लोकमेति। आदित्यस्य सायुज्यम्। य एवं वेद। एषो एव त्रयी विद्या॥ ॥ ५॥

यावन्तꣳ ह वै त्रय्या विद्यया लोकं जयति। तावन्तं लोकं जयति। य एवं वेद। अग्नेर्वा एतानि नामधेयानि। अग्नेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। वायोर्वा एतानि नामधेयानि। वायोरेव सा-

युज्यꣳ सलोकतामाप्नोति। य एवं वेद। इन्द्रस्य वा एतानि नामधेयानि॥ ६॥

इन्द्रस्यैव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। बृहस्पतेर्वा एतानि नामधेयानि। बृहस्पतेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। प्रजापतेर्वा एतानि नामधेयानि। प्रजापतेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। ब्रह्मणो वा एतानि नामधेयानि। ब्रह्मण एव सायुज्यꣳ सलोकतामाप्नोति॥ य एवं वेद। स वा एषोऽग्निरपक्षपुच्छो वायुरेव। तस्याग्निर्मुखम्। असावादित्यः शिरः। स यदेते देवते अन्तरेण। तत्सर्वꣳ सीव्यति। तस्मात् सावित्रः॥ ॥ ७॥

अयमहमस्मीति वेद होवाच सर्वविद्येति विद्येन्द्रस्य वा एतानि नामधेयानि ब्रह्मण एव सायुज्यꣳ सलोकतामाप्नोति सप्त च॥ अनु० ११॥

*अग्नेर्वायोरिन्द्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणः स वै।

सञ्ज्ञानं भूस्त्वमेव संवत्सरोऽसि भूराज्ञसंवे विपश्चित प्रजापतिर्देवानियं वाव सरघा कश्चिद्वैकादश॥११॥

* अग्नेरित्यादिः सर्वे इत्यन्तः पाठः C, D. पुस्तकद्वये नास्ति।

सञ्ज्ञानꣳ रात्री मूर्द्धा हृदय एष संवत्सरो नार्द्ध-
मासेषु न मासेषु नवचत्वारिꣳशत् ॥ ४९ ॥

इति दशमप्रपाठकः ॥

हरिः ओम् ।

तृतीयकाण्डे एकादशप्रपाठके

प्रथमोऽनुवाकः ।

लोकोऽसि स्वर्गोऽसि । अनन्तोऽस्यपारोऽसि । अ-
क्षितोऽस्यक्षय्योऽसि । तपसः प्रतिष्ठा । त्वयीदमन्तः ।
विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्ता
विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् ।
प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा-
सीद ॥ १ ॥

तपोऽसि लोके श्रितम् । तेजसः प्रतिष्ठा । त्वयीद-
मन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य
भर्तृ विश्वस्य जनयितृ । तत्त्वोपदधे कामदुघमक्षि-

तम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्व-
द्ध्रुवासीद ॥ २ ॥

तेजोऽसि तपसि श्रितम्। समुद्रस्य प्रतिष्ठा। त्वयी-
दमन्तः। विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम्। विश्वस्य
भर्तृ विश्वस्य जनयितृ। तत्त्वोपदधे कामदुघमक्षितम्।
प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवा-
सीद ॥ ३ ॥

समुद्रोऽसि तेजसि श्रितः। अपां प्रतिष्ठा। त्वयीद-
मन्तः। विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम्। विश्वस्य
भर्त्ता विश्वस्य जनयिता। तं त्वोपदधे कामदुघमक्षि-
तम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्व-
द्ध्रुवासीद ॥ ४ ॥

आपः स्थ समुद्रे श्रिताः। पृथिव्याः प्रतिष्ठा युष्मासु।
इदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम्। वि-
श्वस्य भर्त्र्यो विश्वस्य जनयित्र्यः। ता व उपदधे काम-
दुघा अक्षिताः। प्रजापतिस्त्वा सादयतु। तया देव-
तयाङ्गिरस्वद्ध्रुवासीद ॥ ५ ॥

पृथिव्यस्यप्सु श्रिता। अग्नेः प्रतिष्ठा। त्वयीदमन्तः।
विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम्। विश्वस्य भर्त्री

विश्वस्य जनयित्री। तां त्वोपदधे कामदुघामक्षिताम्।
प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवा-
सीद ॥ ६ ॥

अग्निरसि पृथिव्याꣳ श्रितः। अन्तरिक्षस्य प्रतिष्ठा।
त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्।
विश्वस्य भर्त्ता विश्वस्य जनयिता। तं त्वोपदधे काम-
दुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतया-
ङ्गिरस्वद्ध्रुवासीद ॥ ७ ॥

अन्तरिक्षमस्यग्नौ श्रितम्। वायोः प्रतिष्ठा। त्वयी-
दमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। वि-
श्वस्य भर्तृ विश्वस्य जनयितृ। तत्त्वोपदधे कामदुघम-
क्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिर-
स्वद्ध्रुवासीद ॥ ८ ॥

वायुरस्यन्तरिक्षे श्रितः। दिवः प्रतिष्ठा। त्वयीद-
मन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य
भर्त्ता विश्वस्य जनयिता। तं त्वोपदधे कामदुघमक्षि-
तम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्व-
द्ध्रुवासीद ॥ ९ ॥

द्यौरसि वायौ श्रिता। आदित्यस्य प्रतिष्ठा। त्वयी-

दमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्री विश्वस्य जनयित्री। तां त्वोपदधे कामदुघामक्षिताम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ १० ॥

आदित्योऽसि दिवि श्रितः। चन्द्रमसः प्रतिष्ठा। त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता। तं त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ ११ ॥

चन्द्रमा अस्यादित्ये श्रितः। नक्षत्राणां प्रतिष्ठा। त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता। तं त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ १२ ॥

नक्षत्राणि स्थ चन्द्रमसि श्रितानि। संवत्सरस्य प्रतिष्ठा युष्मासु। इदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्तॄणि विश्वस्य जनयितॄणि। तानि व उपदधे कामदुघान्यक्षितानि। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ १३ ॥

संवत्सरोऽसि नक्षत्रेषु श्रितः । ऋतूनां प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ १४ ॥

ऋतवः स्थ संवत्सरे श्रिताः । मासानां प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्तारो विश्वस्य जनयितारः । तान्व उपदधे कामदुघानक्षितान् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ १५ ॥

मासाः स्थर्तुषु श्रिताः । अर्द्धमासानां प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्तारो विश्वस्य जनयितारः । तान्व उपदधे कामदुघानक्षितान् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुसीद ॥ १६ ॥

अर्द्धमासाः स्थ माःसु श्रिताः । अहोरात्रयोः प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्तारो विश्वस्य जनयितारः । तान्व

उपदधे कामदुघानक्षितान्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ १७ ॥

अहोरात्रे स्थोऽर्द्धमासेषु श्रिते। भूतस्य प्रतिष्ठे भव्यस्य प्रतिष्ठे। युवयोरिदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्र्यौ विश्वस्य जनयित्र्यौ। ते वामुपदधे कामदुघे अक्षिते। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ १८ ॥

पौर्णमास्यष्टकामावास्या। अन्नादास्थान्नदुघो युष्मासु। इदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्र्यो विश्वस्य जनयित्र्यः। ता व उपदधे कामदुघा अक्षिताः। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ १९ ॥

राडसि बृहती श्रीरसीन्द्रपत्नी धर्म्मपत्नी। विश्वं भूतमनुप्रभूता। त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्री विश्वस्य जनयित्री। तां त्वोपदधे कामदुघामक्षिताम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ २० ॥

ओजोऽसि सहोऽसि। बलमसि भ्राजोऽसि। देवानां धामामृतम्। अमर्त्त्यस्तपोजाः। त्वयीदमन्तः। विश्वं

यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ ॥ २१ ॥

लोकस्तपस्तेजः समुद्र आपः पृथिव्यग्निरन्तरिक्षं वायुर्द्यौरादित्यश्चन्द्रमा नक्षत्राणि संवत्सर ऋतवो मासा अर्द्धमासा अहोरात्रे पौर्णमासी राडस्योजोऽस्येकविꣳशतिः ॥ २१ ॥ अनु० १ ॥

लोकः समुद्रोऽग्निर्वायुरादित्यश्चन्द्रमाः संवत्सर ओजोऽसि भर्त्ता श्रितः । तं त्वोपदधे कामदुघमक्षितम् । तपस्तेजोऽन्तरिक्षं भर्तृ श्रितम् । तत्त्वोपदधे कामदुघमक्षितम् । आपः पौर्णमासी भर्त्र्यौ जनयित्र्यः श्रिताः । ता व उपदधे कामदुघा अक्षिताः । पृथिवी द्यौ राडसि भर्त्री श्रिता । तां त्वोपदधे कामदुघामक्षिताम् । नक्षत्राणि स्थ भर्तॄणि श्रितानि । तानि व उपदधे कामदुघान्यक्षितानि । ऋतवो मासा अर्द्धमासा भर्त्तारो जनयितारः श्रिताः । तान्व उपदधे कामदुघानक्षितान् । अहोरात्रे भर्त्र्यौ श्रिते । ते वामुपदधे कामदुघे अक्षिते । आपो नक्षत्राण्यृतवो

मासा अर्द्धमासा पौर्णमासी युष्मास्विदमन्तः। अहो-रात्रे युवयोरिदमन्तः। अन्यत्र त्वयीदमन्तः ॥*

द्वितीयोऽनुवाकः।

त्वमग्ने रुद्रो असुरो महो दिवः। त्वꣳ शर्द्धो मारुतं पृक्ष ईशिषे। त्वं वातैररुणैर्यासि शङ्गयः। त्वं पूषा विधतः पासि नुत्मना। देवा देवेषु श्रयध्वम्। प्रथमा द्वितीयेषु श्रयध्वम्। द्वितीयास्तृतीयेषु श्रयध्वम्। तृ-तीयाश्चतुर्थेषु श्रयध्वम्। चतुर्थाः पञ्चमेषु श्रयध्वम्। पञ्चमाः षष्ठेषु श्रयध्वम् ॥ १ ॥

षष्ठाः सप्तमेषु श्रयध्वम्। सप्तमा अष्टमेषु श्रय-ध्वम्। अष्टमा नवमेषु श्रयध्वम्। नवमा दशमेषु श्रयध्वम्। दशमा एकादशेषु श्रयध्वम्। एकादशा द्वा-दशेषु श्रयध्वम्। द्वादशास्त्रयोदशेषु श्रयध्वम्। त्रयो-दशाश्चतुर्दशेषु श्रयध्वम्। चतुर्दशाः पञ्चदशेषु श्रय-ध्वम्। पञ्चदशाः षोडशेषु श्रयध्वम् ॥ २ ॥

षोडशाः सप्तदशेषु श्रयध्वम्। सप्तदशा अष्टादशेषु श्रयध्वम्। अष्टादशा एकान्नविꣳशेषु श्रयध्वम्। एका-न्नविꣳशा विꣳशेषु श्रयध्वम्। विꣳशा एकविꣳशेषु

* लोकः समुद्र इत्यादिरन्यत्रोदमन्तरित्यन्तः पाठः C. पुस्तके नास्ति।

अयध्वम्। एकविꣳशा द्वाविꣳशेषु अयध्वम्। द्वाविꣳशा-स्त्रयोविꣳशेषु अयध्वम्। त्रयोविꣳशाश्चतुर्विꣳशेषु अ-यध्वम्। चतुर्विꣳशाः पञ्चविꣳशेषु अयध्वम्। पञ्च-विꣳशाः षड्विꣳशेषु अयध्वम्॥ ३॥

षड्विꣳशाः सप्तविꣳशेषु अयध्वम्। सप्तविꣳशा अ-ष्टाविꣳशेषु अयध्वम्। अष्टाविꣳशा एकान्नत्रिꣳशेषु अयध्वम्। एकान्नत्रिꣳशास्त्रिꣳशेषु अयध्वम्। त्रिꣳशा एकत्रिꣳशेषु अयध्वम्। एकत्रिꣳशा द्वात्रिꣳशेषु अय-ध्वम्। द्वात्रिꣳशास्त्रयस्त्रिꣳशेषु अयध्वम्। देवास्त्रिरे-कादशास्त्रिस्त्रयस्त्रिꣳशाः। उत्तरे भवत। उत्तरवर्त्मा-न उत्तरसत्वानः॥ यत्काम इदं जुहोमि। तन्मे सम्र्-ध्यताम्। वयꣳ स्याम पतयो रयीणाम्। भूर्भुवः स्वः स्वाहा॥ ४॥

षष्टेषु अयध्वꣳ षोडशेषु अयध्वꣳ षड्विꣳशेषु अय-ध्वमुत्तरे भवतोत्तरवर्त्मान उत्तरसत्वानश्चत्वारि च॥ अनु० २॥

तृतीयोऽनुवाकः।

अग्ना विष्णू सजोषसा। इमावर्द्धन्तु वाङ्गिरः। द्युम्नै-र्वाजेभिरागतम्। राज्ञी विराज्ञी। सम्राज्ञी स्वराज्ञी।

अर्चिः शोचिः। तपो हरो भाः। अग्निः सोमो बृह-
स्पतिः। विश्वे देवा भुवनस्य गोपाः। ते सर्व्वे सङ्ग-
त्य॥ इदं मे प्रावता वचः। वय॑ स्याम पतयो रयी-
णाम्। भूर्भुवः स्वः स्वाहा॥ १॥

सङ्गत्य चीणि च॥ अनु० ३॥

चतुर्थोऽनुवाकः।

अन्नपतेऽन्नस्य नो देहि। अनमीवस्य शुष्मिणः।
प्र प्रदातारं तारिषः। ऊर्ज्जं नो धेहि द्विपदे चतुष्पदे।
अग्ने पृथिवीपते। सोम वीरुधां पते। त्वष्टः समिधां
पते। विष्णवाशानां पते। मित्र सत्यानां पते। वरुण
धर्म्मणां पते॥ १॥

मरुतो गणानां पतयः। रुद्र पशूनां पते। इन्द्रौ-
जसां पते। बृहस्पते ब्रह्मणस्पते। आरुचा रोचेह॑
स्वयम्। रुचा रुरुचे रोचमानः। अतीत्यादः स्वराभ-
रेह। तस्मिन् योनौ प्रजनौ प्रजायेय। वय॑ स्याम
पतयो रयीणाम्। भूर्भुवः स्वः स्वाहा॥ २॥

वरुण धर्म्मणां पते स्वः स्वाहा॥ अनु० ४॥

पञ्चमोऽनुवाकः ।

सप्त ते अग्ने समिधः सप्तजिह्वाः। सप्तर्षयः सप्त धाम प्रियाणि। सप्तहोत्रा अनुविद्वान्। सप्तयोनीरापृण-स्वाघृतेन। प्राची दिक्। अग्निर्देवता। अग्निः सदिशां देवं देवतानामृच्छतु। यो मैतस्यै दिशो भिदासति। दक्षिणा दिक्। इन्द्रो देवता ॥ १ ॥

इन्द्रः सदिशां देवं देवतानामृच्छतु। यो मैतस्यै दिशो भिदासति। प्रतीची दिक्। सोमो देवता। सोमः सदिशां देवं देवतानामृच्छतु। यो मैतस्यै दिशो भिदासति। उदीची दिक्। मित्रावरुणौ देवता। मित्रावरुणौ सदिशां देवौ देवतानामृच्छतु। यो मैतस्यै दिशो भिदासति ॥ २ ॥

ऊर्द्ध्वा दिक्। बृहस्पतिर्देवता। बृहस्पतिः सदिशां देवं देवतानामृच्छतु। यो मैतस्यै दिशो भिदासति। इयं दिक्। अदितिर्देवता। अदितिः सदिशां देवीं देवतानामृच्छतु। यो मैतस्यै दिशो भिदासति। पुरुषो दिक्। पुरुषो मे कामान्त्समर्द्धयतु॥ अन्धो जागृविः प्राण। असावेहि। बधिर आक्रन्द इत-रपान। असावेहि। उपसमुपसमशीय। अहम-

सो ज्योतिरशीय। अहमसो पोशीय। वयꣳ स्याम पतयो रयीणाम्। भूर्भुवः स्वः स्वाहा॥ ३॥

दक्षिणा दिगिन्द्रो देवता मित्रावरुणौ सदिशां देवौ देवतानामृच्छतु यो मैतस्यै दिशो भिदासत्यर्द्धयतु नव च॥ अनु० ५॥

षष्ठोऽनुवाकः।

यत्ते चितं यदुचितं ते अग्ने। यत ऊनं यदुतेतिरिक्तम्। आदित्यास्तदङ्गिरसश्चिन्वन्तु। विश्वे ते देवाश्चितिमापूरयन्तु। चितश्चासि सञ्चितश्चास्यग्ने। एतावाꣳश्चासि भूयाꣳश्चास्यग्ने। लोकं पृण छिद्रं पृण। अथो सीद शिवा त्वम्। इन्द्राग्नी त्वा बृहस्पतिः। अस्मिन् योनावसीषदन्॥ १॥

तया देवतयाङ्गिरस्वद्ध्रुवासीद। ता अस्य सूददोहसः। सोमꣳ श्रीणन्ति पृश्नयः। जन्मन्देवानां विशः। त्रिष्वारोचने दिवः। तया देवतयाङ्गिरस्वद्ध्रुवासीद। अग्ने देवाꣳ इहावह। जज्ञानो वृक्तबर्हिषे। असि होता न ईड्यः। अगन्म महा मनसा यविष्ठम्॥ २॥

यो दीदाय समिद्ध स्वे दुरोणे। चित्रभानू रोदसी

अन्तरुर्वी। स्वाहुतं विश्वतः प्रत्यञ्चम्। मेधाकारं वि-
दथस्य प्रसाधनम्। अग्निꣳ होतारं परिभूतमं मतिम्।
त्वामर्भस्य हविषः समानमित्। त्वां महो वृणते नरो
नान्यं त्वत्। मनुष्वत्वानि धीमहि। मनुष्वत्समिधी-
महि। अग्ने मनुष्वदङ्गिरः॥ ३॥

देवान् देवाय ते यज। अग्निर्हि वाजिनं विशे।
ददाति विश्वचर्षणिः। अग्नीराये स्वाभुवम्। स प्रीतो
याति वार्य्यम्। इषꣳ स्तोतृभ्य आभर। पृष्टो दिवि
पृष्टो अग्निः पृथिव्याम्। पृष्टो विश्वा ओषधीराविवे-
श। वैश्वानरः सहसा पृष्टो अग्निः। स नो दिवा स-
रिषः पातु नक्तम्॥ ४॥

असीषदन् यविष्ठमङ्गिरो नक्तम्॥ अनु० ६॥

सप्तमोऽनुवाकः।

अयं वा वयः पवते। सोऽग्निर्नाचिकेतः। स यत्प्राङ्
पवते। तदस्य शिरः। अथ यद्दक्षिणा। स दक्षिणः
पक्षः। अथ यत्प्रत्यक्। तत्पुच्छम्। यदुदङ्। स उ-
त्तरः पक्षः॥ १॥

अथ यत्संवाति। तदस्य समञ्चनञ्च प्रसारणञ्च।

अथो सम्पदेवास्य सा। सꣳ ह्वा अस्मै सकामः पद्य-
ते। यत्कामो यजते। योऽग्निं नाचिकेतं चिनुते। य
उचैनमेवं वेद। यो ह वा अग्नेर्नाचिकेतस्यायतनं प्र-
तिष्ठां वेद। आयतनवान् भवति। गच्छति प्रतिष्ठाम्॥
॥ २ ॥

हिरण्यं वा अग्नेर्नाचिकेतस्यायतनं प्रतिष्ठा। य
एवं वेद। आयतनवान् भवति। गच्छति प्रतिष्ठाम्।
यो ह वा अग्नेर्नाचिकेतस्य शरीरं वेद। सशरीर एव
स्वर्गं लोकमेति। हिरण्यं वा अग्नेर्नाचिकेतस्य शरी-
रम्। य एवं वेद। सशरीर एव स्वर्गं लोकमेति। अथो
यथा रुक्म उत्तप्तो भाय्यात्॥ ३॥

एवमेव स तेजसा यशसा। अस्मिꣳश्च लोकेऽमु-
ष्मिꣳश्च भाति। उरवो ह्वै नामैते लोकाः। ये वरे-
णादित्यम्। अथ हैते वरीयाꣳसो लोकाः। ये परे-
णादित्यम्। अन्तवन्तꣳ ह वा एष क्षय्यं लोकं जयति।
यो वरेणादित्यम्। अथ हैषोऽनन्तमपारमक्षय्यं लोकं
जयति। यः परेणादित्यम्॥ अनन्तꣳ ह वा अपा-
रमक्षय्यं लोकं जयति। योऽग्निं नाचिकेतं चिनुते।
य उचैनमेवं वेद। अथो यथा रथे तिष्ठन् पक्षसी

पर्य्यावर्त्तमाने प्रत्यपेक्षते। एवमहोरात्रे प्रत्यपेक्षते। नास्याहोरात्रे लोकमाप्नुतः। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद ॥ ४ ॥

उत्तरः पक्षो गच्छति प्रतिष्ठां भाय्यायः परेणादित्यमष्टौ च ॥ अनु० ७ ॥

अष्टमोऽनुवाकः।

उशन् ह वै वाजश्रवसः सर्व्ववेदसन्ददौ। तस्य ह नचिकेता नाम पुत्र आस। तꣳ ह कुमारꣳ सन्तम्। दक्षिणासु नीयमानासु श्रद्धाविवेश। स होवाच। तत कस्मै मां दास्यसीति। द्वितीयं तृतीयम्। तꣳ ह परीत उवाच। मृत्यवे त्वा ददामीति। तꣳ ह स्मोत्थितं वागभिवदति ॥ १ ॥

गौतमकुमारमिति। स होवाच। परे हि मृत्योर्गृहान्। मृत्यवे वै त्वादामिति। तं वै प्रवसन्तं गन्तासीति होवाच। तस्य स्म तिस्रो रात्रीरनाश्वान् गृहे वसतात्। स यदि त्वा पृच्छेत्। कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रतिब्रूतात्। किं प्रथमाꣳ रात्रिमाश्ना इति ॥ २ ॥

प्रजान्त इति। किं द्वितीयामिति। पशूꣳस्त इति। किं तृतीयामिति। साधुकृत्यान्त इति। तं वै प्रवसन्तं जगाम। तस्य ह तिस्रो रात्रीरनाश्वान् गृह उवास। तमागत्य पप्रच्छ। कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रत्युवाच ॥ ३ ॥

किं प्रथमाꣳ रात्रिमाश्ना इति। प्रजान्त इति। किं द्वितीयामिति। पशूꣳस्त इति। किं तृतीयामिति। साधुकृत्यान्त इति। नमस्ते अस्तु भगव इति होवाच। वरं वृणीष्वेति। पितरमेव जीवन्नयानीति। द्वितीयं वृणीष्वेति ॥ ४ ॥

इष्टापूर्तयोर्मे क्षितिं ब्रूहीति होवाच। तस्मै हैतमग्निं नाचिकेतमुवाच। ततो वै तस्येष्टापूर्ते नाक्षीयेते। नास्येष्टापूर्ते क्षीयेते। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद। तृतीयं वृणीष्वेति। पुनर्मृत्योर्मेऽपजितिं ब्रूहीति होवाच। तस्मै हैतमग्निं नाचिकेतमुवाच। ततो वै सोऽप पुनर्मृत्युमजयत् ॥ ५ ॥

अप पुनर्मृत्युं जयति। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद। प्रजापतिर्वै प्रजाकामस्तपोऽतप्यत। स हिरण्यमुदास्यत्। तदग्नौ प्रास्यत्। तदस्मै ना-

च्छंदयत् । तद्द्वितीयं प्रास्यत् । तदस्मै नैवाच्छंदयत् ।
तत्तृतीयं प्रास्यत् ॥ ६ ॥

तदस्मै नैवाच्छंदयत् । तदात्मन्नेव हृदय्येऽग्नौ वैश्वानरे प्रास्यत् । तदस्मा अच्छदयत् । तस्माद्धिरण्यं कनिष्ठं धनानाम् । भुञ्जत् प्रियतमम् । हृदयजꣳ हि । स वै तमेव नाविन्दत् । यस्मै तां दक्षिणामनेष्यत् । ताꣳ स्वायैव हस्ताय दक्षिणायानयत् । तां प्रत्यगृह्णात् ॥ ७ ॥

दक्षाय त्वा दक्षिणां प्रतिगृह्णामीति । सोऽदक्षत दक्षिणां प्रतिगृह्य । दक्षते ह वै दक्षिणां प्रतिगृह्य । य एवं वेद । एतद्धस्म वै तद्विद्वाꣳसो वाजश्रवसा गोतमाः । अप्यनूदेश्यां दक्षिणां प्रतिगृह्णन्ति । उभयेन वयं दक्षिष्यामह एव दक्षिणां प्रतिगृह्येति । तेऽदक्षन्त दक्षिणां प्रतिगृह्य । दक्षते ह वै दक्षिणां प्रतिगृह्य । य एवं वेद ॥ प्रह्णान्यं क्रीनाति ॥ ८ ॥

वदत्यास्मा इत्युवाच द्वितीयं वृणीष्वेत्यजयत् तृतीयं प्रास्यदगृह्णाददक्षन्त दक्षिणां प्रतिगृह्य दक्षते ह वै दक्षिणां प्रतिगृह्य य एवं वेदैकञ्च ॥ अनु० ८ ॥

नवमोऽनुवाकः ।

त॒ꣳ हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्वते। उत्तर-वेदिसम्मित एषोऽग्निरिति वदन्तः। तन्न तथा कुर्यात्। एतमग्निं कामेन व्यर्द्धयेत्। स एनं कामेन व्यृद्धः। कामेन व्यर्द्धयेत्। सौम्ये वावैनमध्वरे चिन्वीत। यत्र वा भूयिष्ठा आहुतयो हूयेरन्। एतमग्निं कामेन समर्द्धयति। स एनं कामेन समृद्धः॥ १॥

कामेन समर्द्धयति। अथ हैनं पुरषयः। उत्तरवेद्यामेव सचियमचिन्वत। ततो वै तेऽविन्दत प्रजाम्। अभि स्वर्गं लोकमजयन्। विन्दते एव प्रजाम्। अभि स्वर्गं लोकं जयति। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद। अथ हैनं वायुर्ऋद्धिकामः॥ २॥

यथा न्युप्तमेवोपदधे। ततो वै स एतामृद्धिमार्ध्नोत्। यामिदं वायुर्ऋद्धः। एतामृद्धिमृध्नोति। यामिदं वायुर्ऋद्धः। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद। अथ हैनं गोबलो वार्ष्णः पशुकामः। पाङ्क्तमेव चिक्ये। पञ्च पुरस्तात्॥ ३॥

पञ्च दक्षिणतः। पञ्च पश्चात्। पञ्चोत्तरतः। एकां मध्ये। ततो वै स सहस्रं पशून्प्राप्नोत्। प्र सहस्रं पशू-

नाप्नोति। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद। अथ हैनं प्रजापतिज्यैष्ठ्यकामो यशस्कामः प्रजननकामः। चित्वतमेव चिक्ये ॥ ४ ॥

सप्त पुरस्तात्। तिस्रो दक्षिणतः। सप्त पश्चात्। तिस्र उत्तरतः। एकां मध्ये। ततो वै स प्रयशो ज्यैष्ठ्यमाप्नोत्। एतां प्रजातिं प्राजायत। यामिदं प्रजाः प्रजायन्ते। चित्वद्वै ज्यैष्ठ्यम्। माता पिता पुत्रः ॥ ५ ॥

चित्वत् प्रजननम्। उपस्थो योनिर्मध्यमा। प्रयशो ज्यैष्ठ्यमाप्नोति। एतां प्रजातिं प्रजायते। यामिदं प्रजाः प्रजायन्ते। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद। अथ हैनमिन्द्रो ज्यैष्ठ्यकामः। ऊर्ध्वा एवोपदधे। ततो वै स ज्यैष्ठ्यमगच्छत् ॥ ६ ॥

ज्यैष्ठ्यं गच्छति। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद। अथ हैनमसावादित्यः स्वर्गकामः। प्राचीरेवोपदधे। ततो वै सोऽभिस्वर्गं लोकमजयत्। अभिस्वर्गं लोकं जयति। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद। स यदीच्छेत् ॥ ७ ॥

तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति। प्राङ्गाहोतुर्धिष्ण्यादुत्सर्पेत्। येयं प्रागाद्यशस्वती। सामा प्रो-

श्रीतु। तेजसा यशसा ब्रह्मवर्चसेनेति। तेजस्व्येव यशस्वी ब्रह्मवर्चसी भवति। अथ यदीच्छेत्। भूयिष्ठं मे श्रद्दधीरन्। भूयिष्ठा दक्षिणा नयेयुरिति। दक्षिणासु नीयमानासु प्राच्ये हि प्राच्ये होति प्राचीं जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याहवनीये जुहुयात्॥ ८॥

भूयिष्ठमेवास्मै श्रद्दधते। भूयिष्ठा दक्षिणा नयन्ति। पुरीषमुपधाय। चितिक्लृप्तिभिरभिमृश्य। अग्निं प्रणीयोपसमाधाय। चतस्र एता आहुतीर्जुहोति। त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपम्। अग्नाविष्णू इति वसोर्धारायाः। अन्नपत इत्यन्नहोमः। सप्त ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीः॥ ९॥

सम्वत्सरं ऋद्धिकामः पुरस्ताच्चित्ये पुचोऽगच्छदीच्छे-ज्जुहुयाद्विश्वप्रीः॥

*पुरर्षयो वायुर्गोबलः प्रजापतिस्त्रिवृदिन्द्रोऽसावादित्यः स यदीच्छेदथ यदीच्छेत्॥

अनु॰ ९॥

---

* पुरर्षय इत्यादि यदीच्छेदित्यन्तः पाठः D. पुस्तके नास्ति।

दशमोऽनुवाकः।

यां प्रथमामिष्टकामुपदधाति। इमं तया लोकमभिजयति। अथो या अस्मिँल्लोके देवताः। तासाँ सायुज्यँ सलोकतामाप्नोति। यां द्वितीयामुपदधाति। अन्तरिक्षलोकं तयाभिजयति। अथो या अन्तरिक्षलोके देवताः। तासाँ सायुज्यँ सलोकतामाप्नोति। यां तृतीयामुपदधाति। अमुं तया लोकमभिजयति ॥ १ ॥

अथो या अमुष्मिँल्लोके देवताः। तासाँ सायुज्यँ सलोकतामाप्नोति। अथो या अमूरितरा अष्टादश। य एवामी उरवश्च वरीयाँसश्च लोकाः। तानेव ताभिरभिजयति। कामचारो ह वा अस्योरुषु च वरीयःसु च लोकेषु भवति। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद। संवत्सरो वा अग्निर्नाचिकेतः। तस्य वसन्तः शिरः॥ २ ॥

ग्रीष्मो दक्षिणः पक्षः। वर्षा उत्तरः। शरत् पुच्छम्। मासाः कर्म्मकाराः। अहोरात्रे शतरुद्रीयम्। पर्जन्यो वसोर्धारा। यथा वै पर्जन्यः सुवृष्टं वृष्ट्वा। प्रजाभ्यः सर्व्वान् कामान्त्सम्पूरयति। एवमेव स तस्य सर्व्वान

कामान्त्सम्पूरयति। योऽग्निं नाचिकेतं चिनुते॥ ३ ॥

य उचैनमेवं वेद। संवत्सरो वा अग्निर्नाचिकेतः। तस्य वसन्तः शिरः। ग्रीष्मो दक्षिणः पक्षः। वर्षाः पुच्छम्। शरदुत्तरः पक्षः। हेमन्तो मध्यम्। पूर्व्वपक्षाश्चितयः। अपरपक्षाः पुरीषम्। अहोरात्राणीष्टकाः॥ एष वाव सोऽग्निरग्निमयः पुनर्णवः। अग्निमयो ह वै पुनर्णवो भूत्वा। स्वर्गं लोकमेति। आदित्यस्य सायुज्यम्। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद॥ ॥ ४ ॥

अमुं तया लोकमभिजयति शिरश्चिनुत इष्टकाः षट् च॥ अनु० १०॥

लोकस्त्वमग्नेऽग्नाविष्णू अन्नपते सप्त ते अग्ने यत्ते चितमयं वावोशन् ह वै तꣳ हैतमेके यां प्रथमामिष्टकां दश॥ १०॥

लोक आदित्य ओजोस्यूर्द्ध्वादिगनन्तꣳ ह वै कामेन ग्रीष्मे, द्विषष्टि॥ ६२॥

इति एकादशप्रपाठकः॥

हरिः ॐ ।

# तैत्तिरीय-ब्राह्मणे

## तृतीयकाण्डे द्वादशप्रपाठके

### प्रथमोऽनुवाकः ।

तुभ्यं ता अङ्गिरस्तमा श्यामतं काममग्ने । आशानां त्वा विश्वा आशाः । अनुनोद्यानुमतिरन्विदनुमते त्वम् । कामो भूतस्य कामस्तदग्रे । ब्रह्म जज्ञानं पिता विराजाम् । यज्ञो रायोऽयं यज्ञः । आपो भद्रा आदित् पश्यामि । तुभ्यं भरन्ति यो देह्यः । पूर्व्वं देवा अपरेण प्राणापानौ । हव्यवाहꣳ स्विष्टम् ॥ १ ॥

तुभ्यं दश ॥ अनु० १ ॥

### द्वितीयोऽनुवाकः ।

देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत् । ते प्रजापतिमब्रुवन् । प्रजापते स्वर्गो वै नो लोकस्तिरोऽभूत् । तमन्विच्छेति । तं यज्ञक्रतुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविन्दत् । तमिष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत् । तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥ १ ॥

तमाशाब्रवीत्। प्रजापत आशया वै श्राम्यसि। अहमुवा आशास्मि। मां नु यजस्व। अथ ते सत्याशा भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। आशायै चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्याशाभवत्। अनुस्वर्गं लोकमविन्दत्। सत्या ह्वा अस्याशा भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहाशायै स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति॥ २॥

तं कामोऽब्रवीत्। प्रजापते कामेन वै श्राम्यसि। अहमुवै कामोऽस्मि। मां नु यजस्व। अथ ते सत्यः कामो भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। कामाय चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यः कामोऽभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यो ह्वा अस्य कामो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जु-

होति। अग्नये कामाय स्वाहाकामाय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नयें स्विष्टकृते स्वाहेति ॥ ३ ॥

तं ब्रह्माब्रवीत्। प्रजापते ब्रह्मणा वै श्राम्यसि। अहमु वै ब्रह्मास्मि। मां नु यजस्व। अथ ते ब्रह्मण्वान् यज्ञो भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। ब्रह्मणे चरुम्। अनुमत्यै चरुम्। ततो वै तस्य ब्रह्मण्वान् यज्ञोऽभवत्। अनु स्वर्गं लोकमविन्दत्। ब्रह्मण्वान् ह्वा अस्य यज्ञो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहा ब्रह्मणे स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नयें स्विष्टकृते स्वाहेति ॥ ४ ॥

तं यज्ञोऽब्रवीत्। प्रजापते यज्ञेन वै श्राम्यसि। अहमु वै यज्ञोऽस्मि। मां नु यजस्व। अथ ते सत्यो यज्ञो भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। यज्ञाय चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यो यज्ञो

ऽभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यो ह वा अस्य यज्ञो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहा यज्ञाय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति ॥ ५ ॥

तमापोऽब्रुवन्। प्रजापतेऽप्सु वै सर्व्वे कामाःश्रिताः। वयमु वा आपः स्मः। अस्मान्नु यजस्व। अथ त्वयि सर्व्वे कामाः श्रयिष्यन्ते। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। अद्भ्यश्चरुम्। अनुमत्यै चरुम्। ततो वै तस्मिन्त्सर्व्वे कामा अश्रयन्त। अनु स्वर्गं लोकमविन्दत्। सर्व्वे ह वा अस्मिन् कामाः श्रयन्ते। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहाद्भ्यः स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति ॥ ६ ॥

तमग्निर्बलिमानब्रवीत्। प्रजापतेऽग्नये वै बलिमते सर्व्वाणि भूतानि बलिं हरन्ति। अहमु वा अग्निर्ब-

लिमानस्मि। मां नु यजस्व। अथ ते सर्व्वाणि भूतानि बलिꣳ हरिष्यन्ति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। अग्नये बलिमते चरुम्। अनुमत्यै चरुम्। ततो वै तस्मै सर्व्वाणि भूतानि बलिमहरन्। अनु स्वर्गं लोकमविन्दत्। सर्व्वाणि ह्वा अस्मै भूतानि बलिꣳ हरन्ति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहाग्नये बलिमते स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति॥ ७॥

तमनुवित्तिरब्रवीत्। प्रजापते स्वर्गं वै लोकमनुविवित्ससि। अहमु वा अनुवित्तिरस्मि। मां नु यजस्व। अथ ते सत्यानुवित्तिर्भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। अनुवित्त्यै चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यानुवित्तिरभवत्। अनु स्वर्गं लोकमविन्दत्। सत्या ह्वा अस्यानुवित्तिर्भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य

उं चैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहानुवित्त्यै स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति॥ ८॥

ता वा एताः सप्त स्वर्गस्य लोकस्य द्वारः। दिवः श्येनयोऽनुवित्तयो नाम। आशा प्रथमाꣳ रक्षति। कामो द्वितीयाम्। ब्रह्म तृतीयाम्। यज्ञश्चतुर्थीम्। आपः पञ्चमीम्। अग्निर्बलिमान् षष्ठीम्। अनुवित्तिः सप्तमीम्। अनु ह वै स्वर्गं लोकं विन्दति। कामचारोऽस्य स्वर्गे लोके भवति। य एताभिरिष्टिभिर्यजते। य उं चैना एवं वेद। तास्वन्विष्टि। षष्ठौही वरां दद्यात्कꣳसञ्च। स्त्रियै चाभारꣳ समृध्यै॥ ९॥

अनु० २॥

तृतीयोऽनुवाकः।

तपसा देवा देवतामग्र आयन्। तपसर्षयः स्वरन्वविन्दन्। तपसा सपत्नान् प्रणुदामारातीः। येनेदं विश्वं परिभूतं यदस्ति। प्रथमजं देवꣳ हविषा विधेम। स्वयम्भु ब्रह्म परमं तपो यत्। स एव पुत्रः स पिता स माता। तपो ह यक्षं प्रथमꣳ सम्बभूव। श्रद्धया देवो देवत्वमश्नुते। श्रद्धा प्रतिष्ठा लोकस्य देवी॥ १॥

सा नो जुषाणोपयज्ञमागात्। कामवत्साम्मृतं दुहाना। श्रद्धा देवी प्रथमजा ऋतस्य। विश्वस्य भर्त्री जगतः प्रतिष्ठा। ताꣳ श्रद्धाꣳ हविषा यजामहे। सा नो लोकममृतं दधातु। ईशाना देवी भुवनस्याधिपत्नी। आगात्सत्यꣳ हविरिदं जुषाणम्। यस्माद्देवा जज्ञिरे भुवनञ्च विश्वे। तस्मै विधेम हविषा घृतेन॥ ॥ २ ॥

यथा देवैः सधमादं मदेम। यस्य प्रतिष्ठोर्वन्तरिक्षम्। यस्माद्देवा जज्ञिरे भुवनञ्च सर्व्वे। सत्सत्यमर्त्तं दुपयज्ञं न आगात्। ब्रह्माहुतीरुपमोदमानम्। मनसो वशे सर्व्वमिदं बभूव। नान्यस्य मनो वशमन्वियाय। भीष्मो हि देवः सहसः सहीयान्। स नो जुषाण उपयज्ञमागात्। आकूतीनामधिपतिं चेतसाञ्च॥ ॥ ३ ॥

सङ्कल्पजूतिं देवं विपश्चिम्। मनो राजानमिह वर्द्धयन्तः। उप हवेस्य सुमतौ स्याम। चरणं पवित्रं विततं पुराणम्। येन पूतस्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पूताः। अतिपाप्मानमरातिं तरेम। लोकस्य द्वारमर्चिमत्पवित्रम्। ज्योतिष्मद्भ्राजमानं

मह्यस्वत्। अमृतस्य धारा बहुधा दोहमानम्॥ चरणं नो लोके सुधितां दधातु। अग्निर्मूर्धा भुवः। अनुनोद्यानुमतिरन्विदनुमते त्वम्। हव्यवाहꣳ स्विष्टम्॥ ॥ ४ ॥

देवी घृतेन चेतसाच्च दोहमानं चत्वारि च॥ अनु० ३ ॥

चतुर्थोऽनुवाकः।

देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत्। ते प्रजापतिमब्रुवन्। प्रजापते स्वर्गो वै नो लोकस्तिरोऽभूत्। तमन्विच्छेति। तं यज्ञक्रतुभिरन्वैच्छत्। तं यज्ञक्रतुभिर्नान्वविन्दत्। तमिष्टिभिरन्वैच्छत्। तमिष्टिभिरन्वविन्दत्। तदिष्टीनामिष्टित्वम्। एष्टयो ह वै नाम। ता इष्टय इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः॥ १ ॥

तं तपोऽब्रवीत्। प्रजापते तपसा वै श्राम्यसि। अहमु वै तपोऽस्मि। मां नु यजस्व। अथ ते सत्यं तपो भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमाग्नेयमष्टाकपालं निरवपत्। तपसे चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यं तपोऽभवत्। अनु स्वर्गं

लोकमविन्दत्। सत्यꣳ ह्वा अस्य तपो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये स्वाहा तपसे स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति॥ २॥

तꣳ श्रद्धाब्रवीत्। प्रजापते श्रद्धया वै श्राम्यसि। अहमुवै श्रद्धास्मि। मां नु यजस्व। अथ ते सत्या श्रद्धा भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमाग्नेयमष्टाकपालं निरवपत्। श्रद्धायै चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्या श्रद्धाभवत्। अनु स्वर्गं लोकमविन्दत्। सत्या ह्वा अस्य श्रद्धा भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये स्वाहा श्रद्धाय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति॥ ३॥

तꣳ सत्यमब्रवीत्। प्रजापते सत्येन वै श्राम्यसि। अहमुवै सत्यमस्मि। मां नु यजस्व। अथ ते सत्यꣳ सत्यं भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमाग्नेयमष्टाकपालं निरवपत्। सत्याय चरुम्।

अनुमत्यै चरुम्। ततो वै तस्य सत्यः सत्यमभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यः ह वा अस्य सत्यं भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये स्वाहा सत्याय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति ॥ ४ ॥

तं मनोऽब्रवीत्। प्रजापते मनसा वै श्राम्यसि। अहमु वै मनोऽस्मि। मां नु यजस्व। अथ ते सत्यं मनो भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमाग्नेयमष्टाकपालं निरवपत्। मनसे चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यं मनोऽभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यः ह वा अस्य मनो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये स्वाहा मनसे स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति ॥ ५ ॥

तं चरणमब्रवीत्। प्रजापते चरणेन वै श्राम्यसि। अहमु वै चरणमस्मि। मां नु यजस्व। अथ ते सत्यं

चरणं भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमाग्नेयमष्टाकपालं निरवपत्। चरणाय चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यं चरणमभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यꣳ ह वा अस्य चरणं भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये स्वाहा चरणाय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति॥ ६॥

ता वा एताः पञ्च स्वर्गस्य लोकस्य द्वारः। अपाद्या अनु वित्तयो नाम। तपः प्रथमाꣳ रक्षति। श्रद्धा द्वितीयाम्। सत्यं तृतीयाम्। मनश्चतुर्थीम्। चरणं पञ्चमीम्। अनु ह वै स्वर्गं लोकं विन्दति। कामचारोऽस्य स्वर्गे लोके भवति। य एताभिरिष्टिभिर्यजते। य उ चैना एवं वेद। तास्वन्विष्टि। पष्ठौ ही वरां दद्यात् कꣳसञ्च। स्त्रियै चाभारꣳ समृध्यै॥ ७॥

अनु० ४॥

पञ्चमोऽनुवाकः ।

आशानुवित्ति श्रद्धा सत्यो ह । कामो यज्ञः सत्यो ह । अन्यच सत्यꣳ ह ॥*

ब्रह्म वै चतुर्होतारः । चतुर्होतृभ्योऽधियज्ञो निर्मितः । नैनꣳ शपथम् । नाभिचरितमागच्छति । य एवं वेद । यो ह वै चतुर्होतृणां चतुर्होतृत्वं वेद । अथो पञ्चहोतृत्वम् । सर्वा हास्मै दिशः कल्पन्ते । वाचस्पतिर्होता दशहोतृणाम् । पृथिवी होता चतुर्होतृणाम् ॥ १ ॥

अग्निर्होता पञ्चहोतृणाम् । वाग्घोता षड्ढोतृणाम् । महाहविर्होता सप्तहोतृणाम् । एतद्वै चतुर्होतृणां चतुर्होतृत्वम् । अथो पञ्चहोतृत्वम् । सर्वा हास्मै दिशः कल्पन्ते । य एवं वेद । एषा वै सर्वविद्या । एतद्भेषजम् । एषा पङ्क्तिः स्वर्गस्य लोकस्याञ्जसायं निसृतिः ॥ २ ॥

एतान्योऽध्यैत्यच्छंदिर्दर्शी यावत्तरसम् । स्वरेति । अनपब्रुवः सर्वमायुरेति । विन्दते प्रजाम् । रायस्पोषं गौपत्यम् । ब्रह्मवर्चसी भवति । एतान्योऽध्यैति । स्पृ-

* आशेत्यादि सत्यꣳहेत्यन्तः पाठः E पुस्तके नास्ति ।

णोत्यात्मानम्। प्रजां पितॄन्। एतान्वा अरुण औप-
वेशिर्विदाञ्चकार ॥ ३ ॥

एतैरधिवादमपाजयत् । अथो विश्वं पाप्मानम् ।
स्वर्य्ययौ । एतान् योऽधीते। अधिवादं जयति। अथो
विश्वं पाप्मानम्। स्वरेति। एतैरग्निं चिन्वीत स्वर्गका-
मः । एतैरायुष्कामः । प्रजापशुकामो वा ॥ ४ ॥

पुरस्तादृशहोतारमुदञ्चमुपदधाति यावत्पदम् ।
हृदयं यजुषी पत्न्यौ च। दक्षिणतः प्राञ्चं चतुर्होतारम्।
पश्चादुदञ्चं पञ्चहोतारम्। उत्तरतः प्राञ्चꣳ षड्ढोता-
रम्। उपरिष्टात् प्राञ्चꣳ सप्तहोतारम्। हृदयं य-
जूꣳषि पत्न्यश्च। यथावकाशं ग्रहान् । यथावकाशं प्र-
तिगृह्यांल्लोकं प्रणाश्च । सर्व्वाह्यास्यैता देवताः प्रीता
अभीष्टा भवन्ति ॥ ५ ॥

स देवमग्निं चिनुते। रथसम्मितश्चेतव्यः। वज्रो वै
रथः। वज्रेणैव पाप्मानं भ्रातृव्यꣳ स्तृणुते। पक्षः सं-
म्मितश्चेतव्यः। एतावान्वै रथः। यावत्पक्षः। रथसं-
म्मितमेव चिनुते। इममेव लोकं पशुबन्धेनाभिजयति।
अथो अग्निष्टोमेन ॥ ६ ॥

अन्तरिक्षमुक्थ्येन। स्वरति रात्रेण। सर्व्वान् लो-

कानंहीनेन। अथो सचेणं। वरो दक्षिणा। वरेणैव वरꣳ स्पृणोति। आत्मा हि वरः। एकविꣳशतिर्दक्षिणा ददाति। एकविꣳशो वा इतः स्वर्गो लोकः। प्र स्वर्गं लोकमाप्नोति ॥ ७ ॥

असावादित्य एकविꣳशः। अमुमेवादित्यमाप्नोति। शतं ददाति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति। सहस्रं ददाति। सहस्रसम्मितः स्वर्गो लोकः। स्वर्गस्य लोकस्याभिजित्यै। अन्विष्टकं दक्षिणा ददाति। सर्व्वाणि वयाꣳसि ॥ ८ ॥

सर्व्वस्याप्त्यै। सर्व्वस्यावरुध्यै। यदि न विन्देत। मन्थानेतावतोदद्यादोदनान्वा। अश्नुते तं कामम्। यस्मै कामायाग्निश्चीयते। पष्ठौ हीत्वन्तवतीं दद्यात्। सा हि सर्व्वाणि वयाꣳसि। सर्व्वस्याप्त्यै। सर्व्वस्यावरुध्यै ॥ ९ ॥

हिरण्यं ददाति। हिरण्यज्योतिरेव स्वर्गं लोकमेति। वासो ददाति। तेनायुः प्रतिरते। वेदितृतीये यजेत। चिपत्या हि देवाः। स सत्यमग्निं चिनुते। तदेतत्पशुबन्धे ब्राह्मणं ब्रूयात्। नेतरेषु यज्ञेषु। यो ह वै चतुर्होतृननुसवनं तर्पयितव्यान् वेद ॥ १० ॥

तृप्यति प्रजया पशुभिः। उपैनꣳ सोमपीथो नमति। एते वै चतुर्होतारोऽनुसवनं तर्पयितव्याः। ये ब्राह्मणा बहुविदः। तेभ्यो यद्दक्षिणा न नयेत्। दुरिष्टꣳ स्यात्। अग्निमस्य वृञ्जीरन्। तेभ्यो यथाश्रद्धं दद्यात्। स्विष्टमेवैतत् क्रियते। नास्याग्निं वृञ्जते॥ ॥ ११ ॥

हिरण्येष्टको भवति। यावदुत्तममङ्गुलिकाण्डं यज्ञपरुषा सम्मितम्। तेजो हिरण्यम्। यदि हिरण्यं न विन्देत्। शर्करा अक्ता उपदध्यात्। तेजो घृतम। स तेजसमेवाग्निं चिनुते। अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्या वा। वीर्य्येण वा एष व्यृध्यते। योऽग्निं चिनुते॥ यावदेव वीर्य्यम्। तदस्मिन् दधाति। ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोति। एतासामेव देवतानाꣳ सायुज्यम्। सार्ष्टिताꣳ समानलोकतामाप्नोति। य एतमग्निं चिनुते। य उचैनमेवं वेद। एतदेव सावित्रे ब्राह्मणम्। अथो नाचिकेते॥ १२॥

होता चतुर्होतृणाꣳ स्तुतिश्चकार वा भवन्त्यग्निष्टोमेनाप्नोति वयाꣳसि वयाꣳसि सर्व्वस्याप्त्यै सर्व्वस्यावरुध्यै वेद वृञ्जते चिनुते नव च॥ अनु० ५॥

षष्ठोऽनुवाकः ।

यच्चामृतं यच्च मर्त्यम् । यच्च प्राणिति यच्च न । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघा दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवतयाङ्गिरस्वद्ध्रुवासीद । सर्वाः स्त्रियः सर्वान् पुꣳसः । सर्वं न स्त्रीपुमञ्च यत् । सर्वास्ताः । यावन्तः पाꣳसवो भूमेः ॥ १ ॥

सङ्ख्याता देवमायया । सर्वास्ताः । यावन्त ऊषाः पशूनाम् । पृथिव्यां पुष्टिर्हिताः । सर्वास्ताः । यावतीः सिकताः सर्वाः । अप्स्वन्तश्च या श्रिताः । सर्वास्ताः । यावतीः शर्करा धृत्यै । अस्यां पृथिव्यामधि ॥ २ ॥

सर्वास्ताः । यावन्तोऽश्मानोऽस्यां पृथिव्याम् । प्रतिष्ठासु प्रतिष्ठिताः । सर्वास्ताः । यावतीर्वीरुधः सर्वाः । विष्ठिताः पृथिवीमनु । सर्वास्ताः । यावतीरोषधीः सर्वाः । विष्ठिताः पृथिवीमनु । सर्वास्ताः ॥ ३ ॥

यावन्तो वनस्पतयः । अस्यां पृथिव्यामधि । सर्वास्ताः । यावन्तो ग्राम्याः पशवः सर्वे । आरण्याश्च ये । सर्वास्ताः । ये द्विपादश्चतुष्पादः । अपाद उदरसर्पिणः । सर्वास्ताः । यावदाञ्जनमुच्यते ॥ ४ ॥

देवत्रा यच्च मानुषम् । सर्वास्ताः । यावत् कृष्णाय

सꣳ सर्वम्। देवत्रा यच्च मानुषम्। सर्वास्ताः। यावल्लोहाय सꣳ सर्वम्। देवत्रा यच्च मानुषम्। सर्वास्ताः। सर्वꣳ सीसꣳ सर्वं त्रपु। देवत्रा यच्च मानुषम्॥ ५॥

सर्वास्ताः। सर्वꣳ हिरण्यꣳ रजतम्। देवत्रा यच्च मानुषम्। सर्वास्ताः। सर्वꣳ सुवर्णꣳ हरितम्। देवत्रा यच्च मानुषम्। सर्वास्ता इष्टकाः कृत्वा। उप कामदुघा दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाङ्गिरस्वद्ध्रुवासीद॥ ६॥

भूमेरधिविष्ठिताः पृथिवीमनु सर्वास्ता उच्यते मानुषꣳ सीद॥ अनु० ६॥

यच्च स्त्रियः पाꣳसव ऊषाः सिकताः शर्करा अश्मानो वीरुध ओषधीर्वनस्पतयो ग्राम्या ये द्विपादो यावदाञ्जनं कृष्णाय संलोहाय सꣳ सीसꣳ हिरण्यꣳ सुवर्णꣳ हरितमष्टादश॥ १८॥

सप्तमोऽनुवाकः।

सर्वा दिशो दिक्षु। यच्चान्तर्भूतं प्रतिष्ठितम्। सर्वास्ता इष्टकाः कृत्वा। उप कामदुघा दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाङ्गिरस्वद्ध्रुवासीद। अन्त-

रिक्षञ्च केवलम्। यच्चास्मिन्नन्तराहितम्। सर्वास्ताः। आन्तरिक्ष्यश्च याः प्रजाः ॥ १ ॥

गन्धर्वाप्सरसश्च ये। सर्वास्ताः। सर्वानुदारान्त्सलिलान्। अन्तरिक्षे प्रतिष्ठितान्। सर्वास्ताः। सर्वानुदारान्त्सलिलान्। स्थावराः प्रोष्यांश्च ये। सर्वास्ताः। सर्वान् धुनिꣳ सर्वान् ध्वꣳसान्। हिमो यच्च शीयते ॥ ॥ २ ॥

सर्वास्ताः। सर्वान्मरीचीन्वितताम्। नीहारो यच्च शीयते। सर्वास्ताः। सर्वा विद्युतः सर्वान्त्स्तनयित्नून्। ह्रादुनीर्यच्च शीयते। सर्वास्ताः। सर्वाः स्रवन्तीः सरितः। सर्वमप्सु चरञ्च यत्। सर्वास्ताः ॥ ३ ॥

याश्च कूप्या याश्च नाद्याः समुद्रियाः। याश्च वैशन्तीरुतप्रा सचीर्याः। सर्वास्ताः। ये चोत्तिष्ठन्ति जीमूताः। याश्च वर्षन्ति वृष्टयः। सर्वास्ताः। तपस्तेज आकाशम्। यच्चाकाशे प्रतिष्ठितम्। सर्वास्ताः। वायुं वयाꣳसि सर्वाणि ॥ ४ ॥

अन्तरिक्षचरञ्च यत्। सर्वास्ताः। अग्निꣳ सूर्य्यं चन्द्रम्। मित्रं वरुणं भगम्। सर्वास्ताः। सत्यꣳ श्रद्धां तपो दमम्। नाम रूपञ्च भूतानाम्। सर्वास्ता इष्टकाः

कृत्वा। उप कामदुघां दधे। तेनर्षिणा तेन ब्रह्मणा॥ तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ ५ ॥

प्रजा हिमो यच्च शीयते सर्वास्ताः सर्वाणि ब्रह्मणे-कञ्च॥ अनु० ७॥

दिशोऽन्तरिक्षमान्तरिक्ष्यं उदारानुदारान् धुनिं मरीचीन्विद्युतः स्रवन्तीर्याश्च ये चोत्तिष्ठन्ति तपो वायुमग्निꣳ सत्यं पञ्चदश ॥ १५ ॥

अष्टमोऽनुवाकः।

सर्वान् दिवꣳ सर्वान् देवान् दिवि। यच्चान्तर्भूतं प्रतिष्ठितम्। सर्वास्ता इष्टकाः कृत्वा। उप कामदुघां दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाङ्गिरस्वद्ध्रुवासीद। यावतीस्तारकाः सर्वाः। वितता रोचने दिवि। सर्वास्ताः। ऋचो यजूꣳषि सामानि॥ १॥

अथर्वाङ्गिरसश्च ये। सर्वास्ताः। इतिहासपुराणञ्च। सर्पदेवजनाश्च ये। सर्वास्ताः। ये च लोका ये चालोकाः। अन्तर्भूतं प्रतिष्ठितम्। सर्वास्ताः। यच्च ब्रह्म यच्चाब्रह्म। अन्तर्ब्रह्मन् प्रतिष्ठितम्॥ २॥

सर्वास्ताः। अहोरात्राणि सर्वाणि। अर्द्धमासाꣳश्च

केवलान्। सर्वास्ताः। सर्वानृतून्त्सर्वान्मासान्। संवत्सरञ्च केवलम्। सर्वास्ताः। सर्वं भूतꣳ सर्वं भव्यम्। यच्चातोऽधिभविष्यति। सर्वास्ता इष्टकाः कृत्वा॥ उप कामदुघा दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ ३ ॥

सामानि ब्रह्मन् प्रतिष्ठितं कृत्वा त्रीणि च ॥ अनु० ८ ॥

दिवं तारका ऋचं इतिहासपुराणञ्च ये च यच्चाहोरात्राण्यृतून् भूतं नव ॥

नवमोऽनुवाकः।

ऋचां प्राची महती दिगुच्यते। दक्षिणामाहुर्यजुषामपाराम्। अथर्वणामङ्गिरसां प्रतीची। साम्नामुदीची महती दिगुच्यते। ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः। ऋग्भ्यो जाताꣳ सर्वशो मूर्त्तिमाहुः। सर्वा गतिर्याजुषी हैव शश्वत् ॥ १ ॥

सर्वं तेजः सामरूप्यꣳ ह शश्वत्। सर्वꣳ हेदं ब्रह्मणा

हैव सृष्टम् । ऋग्भ्यो जातं वैश्यं वर्णमाहुः । यजुर्वेदं क्षत्रियस्याहुर्योनिम् । सामवेदो ब्राह्मणानां प्रसूतिः । पूर्वे पूर्वेभ्यो वच एतदूचुः । आदर्शमग्निं चिन्वानाः । पूर्वे विश्वसृजोऽमृताः । शतं वर्षसहस्राणि । दीक्षिताः सत्रमासत ॥ २ ॥

तप आसीद्गृहपतिः । ब्रह्म ब्रह्माभवत् स्वयम् । सत्यꣳ ह होतैषामासीत् । यद्विश्वसृज आसत । अमृतमेभ्य उदगायत् । सहस्रं परिवत्सरान् । भूतꣳ ह प्रस्तोतैषामासीत् । भविष्यत् प्रति चाहरत् । प्राणो अध्वर्युरभवत् । इदꣳ सर्वꣳ सिषासताम् ॥ ॥ ३ ॥

अपानो विद्वानावृतः । प्रति प्रातिष्ठदध्वरे । आर्त्तवा उपगातारः । सदस्या ऋतवोऽभवन् । अर्द्धमासाश्च मासाश्च । चमसाध्वर्य्यवोऽभवन् । अशꣳसद्ब्रह्मणस्तेजः । अच्छावाकोऽभवद्यशः । ऋतमेषां प्रशास्तासीत् । यद्विश्वसृज आसत ॥ ४ ॥

ऊर्ग्राजानमुद्वहत् । ध्रुवगोपः सहोऽभवत् । ओजोऽभ्यष्टौद्ग्रावणः । यद्विश्वसृज आसत । अपचितिः पोत्रीयामयजत् । नेष्ट्रीयामयजत्त्विषिः । आग्नीध्रा-

द्विदुषी सत्यम्। श्रद्धा हैवायजत्स्वयम्। इरा पत्नी विश्वसृजाम्। आकूतिरपिनद्धविः ॥ ५ ॥

इध्मꣳ ह क्षुच्चैभ्य उग्रे। तृष्णा चावहतामुभे। वागेषाꣳ सुब्रह्मण्यासीत्। छन्दोयोगान् विजानती। कल्पतन्त्राणि तन्वानाहः। सꣳस्थाश्च सर्वशः। अहोरात्रे पशुपाल्यौ। मुहूर्त्ताः प्रेष्या अभवन्। मृत्युस्तदभवद्धाता। शमितोऽग्रो विशां पतिः ॥ ६ ॥

विश्वसृजः प्रथमाः सत्रमासत। सहस्रसमं प्रसुतेनयन्तः। ततो ह जज्ञे भुवनस्य गोपाः। हिरण्मयः शकुनिर्ब्रह्म नाम। येन सूर्य्यस्तपति तेजसेद्धः। पिता पुत्रेण पितृमान् योनियोनौ। नावेदविन्मनुते तं बृहन्तम्। सर्वानु भूमात्मानꣳ सम्पराये। एष नित्यो महिमा ब्राह्मणस्य। न कर्म्मणा वर्द्धते नो कनीयान्॥ ॥ ७ ॥

तस्यैवात्मा पदवित्तं विदित्वा। न कर्म्मणा लिप्यते पापकेन। पञ्च पञ्चाशतस्त्रिवृतः संवत्सराः। पञ्च पञ्चाशतः पञ्चदशाः। पञ्च पञ्चाशतः सप्तदशाः। पञ्च पञ्चाशत एकविꣳशाः। विश्वसृजाꣳ सहस्रसंवत्सरम्। एतेन वै विश्वसृज इदं विश्वमसृजन्त। यद्विश्वमसृ-

जन्त। तस्माद्विश्वसृजः॥ विश्वमेनाननु प्रजायते। ब्रह्मणः सायुज्यꣳ। सलोकतां यन्ति। एतासामेव देवतानाꣳ सायुज्यम्। सार्ष्टिताꣳ समानलोकतां यन्ति। य एतदुपयन्ति। येचैनत् प्राहुः। येभ्यश्चैनत् प्राहुः॥ ॥ ८ ॥

अश्वदासत सिषासतामासत हविः पतिः कनीयान् तस्माद्विश्वसृजोऽष्टौ च॥ अनु० ९॥

तुभ्यं देवेभ्यस्तपसा देवेभ्यो ब्रह्म वै चतुर्होतारो यज्ञामृतꣳ सर्वा दिशो दिक्षु सर्वान् दिवमृचां प्राची नव॥ ९॥

तुभ्यं तपसा तावा एताः पञ्च हिरण्यं ददाति सर्वा दिशस्तप आसीद्गृहपतिः षट् पञ्चाशत्॥ ५६॥

इति तृतीयकाण्डं ब्राह्मणं समाप्तम्॥

हरिः ओम्।

माधवीये वेदार्थप्रकाशे

तैत्तिरीय-ब्राह्मणभाष्ये

तृतीयकाण्डे प्रथमप्रपाठके

प्रथमोऽनुवाकः ।



हरिः ॐ ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
अग्निहोत्रादिकं कर्म द्वितीये काण्ड ईरितम् ।
नक्षत्रेष्ट्यादिकं कर्म तृतीये च प्रवक्ष्यते ॥ २ ॥
आद्ये प्रपाठके पूर्वभागे याज्यानुवाक्यकाः ।
क्रमेणेष्टिषु वर्ण्यन्ते उत्तरस्मिंस्तदिष्टयः ॥ ३ ॥

तत्र प्रथमानुवाके देवनक्षत्राणां याज्यानुवाक्या उच्यन्ते । तद्विभागश्च ब्राह्मणे समाम्नातः* । "कृत्तिकाः प्रथमम् । विशाखे उत्तमम् । तानि देवनक्षत्राणि । अनूराधाः प्रथमम् । अथ भरणीरुत्तमम् । तानि यमनक्षत्राणि" इति । तत्र देवनक्षत्रेषु प्रथमस्य पुरोऽनुवाक्यामाह । "अग्निर्नः पातु कृत्तिकाः । नक्षत्रं देवमिन्द्रियम् । इदमासां विचक्षणम् । हविरासं जुहोतन" इति । योऽयं कृत्तिकानक्षत्रस्य देवतारूपः 'अग्निः', स 'नः'

---

* आद्यकाण्डस्य भाष्ये ५ प्रपाठके २ अनुवाके २१४ पृष्ठायां द्रष्टव्यं ।

अस्मान्, 'पातु'। याश्च सप्त 'कृत्तिकाः', अम्बादुलेत्येवमाद्याः, तद्रूपं यत् 'नक्षत्रं', तदप्यस्मान् पातु। कीदृशं नक्षत्रं, 'देवं' द्योतमानम्। 'इन्द्रियं' इन्द्रियप्रदम्। 'आमं' कृत्तिकानां तदुपलक्षितस्याग्नेश्च 'आमं' आस्ये मुखे, 'विचक्षणं' विविधप्रकाशसाधनम्, 'इद' 'हविः', 'जुहोतन' हे ऋत्विग्यजमाना जुहुत॥

तत्रैव याज्यामाह। "यस्य भान्ति रश्मयो यस्य केतवः। यस्येमा विश्वा भुवनानि सर्व्वा। स कृत्तिकाभिरभिसंवसानः। अग्निर्नो देवः सुविते दधातु" इति। 'यस्य' अग्नेः, 'रश्मयः' ज्वालाः, 'भान्ति' दीप्यन्ते, 'यस्य' चाग्नेः, 'केतवः' ध्वजस्थानीया धूमाः, भान्ति। 'सर्व्वा' देवतिर्यगादिसर्व्वप्रकारोपेतानि 'विश्वानि' अविशेषाणि, 'इमा' इमानि, 'भुवनानि', 'यस्य' अग्नेः, अधीनानि, 'सः' अग्निः, 'कृत्तिकाभिः', सप्तभिः 'अभिसंवसानः' अभित आत्मानमाच्छादयन्, 'नः' अस्मान्, 'सुविते' सुष्ठु प्राप्ते कर्म्मफले, 'दधातु' स्थापयतु॥

द्वितीयस्य नक्षत्रदेवस्य पुरोऽनुवाक्यामाह। "प्रजापते रोहिणी वेतु पत्नी। विश्वरूपा बृहती चित्रभानुः [१]। सा नो यज्ञस्य सुविते दधातु। यथा जीवेम शरदः सवीराः" इति। 'प्रजापतेः', 'पत्नी' पालयित्री, 'रोहिणी', 'वेतु' इदं हविर्भुङ्क्ताम्। कीदृशी रोहिणी, 'विश्वरूपा' स्वेनोत्पाद्यैर्विश्वैर्बहुभी रूपैरुपेता, 'बृहती' परिवृढा, 'चित्रभानुः' विचित्रदीप्तिः। 'सा' रोहिणी, 'नः' अस्मान्, अस्य 'यज्ञस्य', सम्बन्धिनि 'सुविते' सुष्ठुप्राप्ते कर्म्मफले, 'दधातु' स्थापयतु। 'सवीराः'

पुत्रपौत्रादिसहिता वयं, ‘शरदः’ बह्वन् संवत्सरान्, ‘यथा’, ‘जीवेम’, तथा करोतु ॥

अथ तत्रैव याज्यामाह। “रोहिणी देव्युदगात् पुरस्तात्। विश्वा रूपाणि प्रतिमोदमाना। प्रजापतिꣳ हविषा वर्द्धयन्ती। प्रिया देवानामुपयातु यज्ञम्” इति। सा ‘रोहिणी देवी’, ‘पुरस्तात्’ पूर्व्वस्यां दिशि, ‘उदगात्, उदयं प्राप्तवती। किं कुर्व्वती? ‘विश्वा रूपाणि’ रूपवतः सर्व्वान् भावान्, ‘प्रतिमोदमाना’ प्रत्येकं मोदयन्ती। ‘प्रजापतिं’, च ‘हविषा’, ‘वर्द्धयन्ती’ पोषयन्ती। ‘देवानां’, ‘प्रिया’ प्रीणयित्री, ‘यज्ञम्’, अस्माकम् ‘उपयातु’ आगच्छतु ॥

अथ तृतीयस्य नक्षत्रदेवस्य पुरोऽनुवाक्यामाह। “सोमो राजा मृगशीर्षेण आगन्। शिवं नक्षत्रं प्रियमस्य धाम। आप्यायमानो बहुधा जनेषु। रेतः प्रजां यजमाने दधातु” [२] इति। योऽयं ‘सोमो राजा’, सोऽयं ‘मृगशीर्षेण’, नक्षत्रेण सह ‘आगन्’ आगच्छतु। यत् ‘शिवं’ कल्याणतरं, मृगशीर्षं ‘नक्षत्रं’, तत् ‘अस्य’ सोमस्य ‘प्रियं’, ‘धाम’ स्थानं। स च सोमः ‘जनेषु’ यजमानेषु, ‘बहुधा’ बहुभिः प्रकारैः, ‘आप्यायमानः’ अतिवृद्धिं सम्पादयन्, कारणरूपं ‘रेतः’, कार्य्यरूपां ‘प्रजां’, च ‘यजमाने’, ‘दधातु’ स्थापयतु ॥

तत्रैव याज्यामाह। “यत्ते नक्षत्रं मृगशीर्षमस्ति। प्रियꣳ राजन् प्रियतमं प्रियाणाम्। तस्मै ते सोम हविषा विधेम। शन्न एधि द्विपदे शं चतुष्पदे” इति। हे ‘राजन्’ सोम, ‘ते’

तव सम्बन्धि, 'मृगशीर्षाख्यं 'प्रियं' प्रीतिहेतुभूतं, 'यत्' नक्षत्रम्, 'अस्ति', तत् 'प्रियाणां' वस्तूनां मध्ये, अतिशयेन 'प्रियं' प्रियहेतुम्। हे 'सोम', 'तस्मै' नक्षत्राय, 'ते' तुभ्यञ्च, 'हविषा', 'विधेम' परिचरेम। 'नः' अस्मदीयाय, 'द्विपदे' मनुष्याय, 'शं' सुखहेतुः,'एधि' भव। 'चतुष्पदे' पशवे, च शम्भव॥

अथ चतुर्थस्य पुरोऽनुवाक्यामाह। "आर्द्रया रुद्रः प्रथमा न एति। श्रेष्ठो देवानां पतिरघ्नियानाम्। नक्षत्रमस्य हविषा विधेम। मा नः प्रजाꣳ रीरिषन्मोत वीरान्" इति। योऽयं 'रुद्रः', देवः सोऽयम् 'आर्द्रया' नक्षत्रेण सह, 'प्रथमानः' प्रसिद्धः सन्,'एति' अस्मद्यज्ञं प्राप्नोतु। कीदृशो रुद्रः,'देवानां', मध्ये 'श्रेष्ठः', 'अघ्नियानां' गवां, 'पतिः' स्वामी, 'अस्य' रुद्रस्य सम्बन्धि, 'नक्षत्रम्' आर्द्राख्यं, 'हविषा', परिचरेम। स चास्माकं 'प्रजां' पुत्रादिकं, 'मारिषत्', मा हिंसीत्। 'उत' अपि च, 'वीरान्' शूरान् भृत्यानपि, मारिषत्॥

तत्रैव याज्यामाह। "हेती रुद्रस्य परि णो वृणक्तु। आर्द्रा नक्षत्रं जुषताꣳ हविर्नः [२]। प्रमुञ्चमानौ दुरितानि विश्वा। अपाघशꣳसं नुदतामरातिम्" इति। 'रुद्रस्य', 'हेतिः' आयुधं, 'नः' अस्मान् 'परिवृणक्तु' सर्वतो वर्ज्जयतु। तदीयम् 'आर्द्राख्यं 'नक्षत्रं', 'नः' अस्मदीयं,'हविः', जुषताम्। अथ तौ रुद्र आर्द्रा चोभौ नोऽस्मदीयानि 'विश्वा' सर्व्वाणि, 'दुरितानि', 'प्रमुञ्चमानौ' विनाशयन्तौ, 'अघशंसं' अस्मदीयस्य पापस्य शंसकं निन्दकं, 'अरातिं' शत्रुं, 'अपनुदतां' निराकुरुताम्॥

अथ पञ्चमस्य पुरोऽनुवाक्यामाह। "पुनर्नो देव्यदितिः स्पृणोतु। पुनर्व्वसू नः पुनरेतां यज्ञम्। पुनर्नो देवा अभियन्तु सर्व्वे। पुनः पुनर्वो हविषा यजामः" इति। 'अदितिः', 'देवी', 'नः' अस्मान्, 'पुनः' 'स्पृणोतु' भूयोभूयः प्रीणयतु। तदीय-नक्षत्रदेहौ द्वौ 'पुनर्व्वसू'नामानौ 'नः' अस्मदीयं, 'यज्ञं', प्रति 'पुनरेतां' भूयोभूय आगच्छताम्। 'देवाः', च 'सर्व्वे', 'नः' अस्मान्, 'अभि'लक्ष्य, 'पुनः' 'यन्तु' भूयोभूयः प्राप्नुवन्तु। 'वः' युष्मानदितिप्रभृतीन्, वयं 'पुनः पुनः', 'हविषा', 'यजामः'॥

तत्रैव याज्यामाह। "एवा न देव्यदितिरनर्वा। विश्वस्य भर्त्री जगतः प्रतिष्ठा। पुनर्व्वसू हविषा वर्द्धयन्ती। प्रियं देवानामप्येतु पाथः" [४] इति। 'अदितिः', 'देवी', 'देवानां', 'प्रियं', 'पाथः'। इदं हविरपि 'एतु' प्राप्नोतु। कीदृशी, 'एवा' 'आगमनशीला' 'न'कारः पुनर्व्वसुभ्यां सह समुच्चये वर्त्तते। 'अनर्वा' अर्वाचीनेन पापेन रहिता, 'विश्वस्य', 'भर्त्री' पोषयित्री, 'जगतः', 'प्रतिष्ठा' आधारभूता, अनेन 'हविषा', 'पुनर्व्वसू'नक्षत्रदेहौ 'वर्द्धयन्ती'॥

अथ षष्ठस्य पुरोऽनुवाक्यामाह। "बृहस्पतिः प्रथमं जायमानः। तिष्यन्नक्षत्रमभि सम्बभूव। श्रेष्ठो देवानां पृतनासु जिष्णुः। दिशोऽनु सर्व्वा अभयन्नो अस्तु" इति। अयं 'बृहस्पतिः', 'जायमानः', एव 'प्रथमम्' आदौ, 'तिष्यं नक्षत्रम्', 'अभि'लक्ष्य, तत्र प्रीतियुक्तः सन् 'सम्बभूव' उत्पन्नः। कीदृशः, 'देवानां', मध्ये 'श्रेष्ठः', 'पृतनासु' परकीयसेनासु,

'जिष्णुः' जयशीलः, तस्य बृहस्पतेः प्रसादात् 'सर्व्वाः' 'दिशोऽनु' सर्व्वास्वपि दिक्षु, 'नः' अस्माकम्, 'अभयम्', 'अस्तु'॥

तत्रैव याज्यामाह। "तिष्यः पुरस्तादुत मध्यतो नः। बृहस्पतिर्नः परिपातु पश्चात्। बाधेतां द्वेषो अभयं कृणुताम्। सुवीर्य्यस्य पतयः स्याम" इति। योऽयं 'तिष्यः' नक्षत्रविशेषः, सोऽयं 'नः' अस्मान्,'पुरस्तात्' बाल्ये,'परिपातु'। अपि 'मध्यतः' यौवनेऽपि, परिपातु। अयं 'बृहस्पतिः','नः' अस्मान्, 'पश्चात्' 'अन्ते' वार्द्धके, परिपातु। किञ्च तौ तिष्यबृहस्पती 'द्वेषः' द्वेष्यान् शत्रून्, 'बाधेताम्'। अस्माकम् 'अभयं', 'कृणुताम्'। तयोः प्रसादादयं 'सुवीर्य्यस्य' शोभनसामर्थ्यस्य, 'पतयः' पालकाः, 'स्यामः'॥

अथ सप्तमस्य पुरोऽनुवाक्यामाह। "इद꣡ꣳ सर्पेभ्यो हविरस्तु जुष्टम्। आश्रेषा येषामनुयन्ति चेतः [५]। ये अन्तरिक्षं पृथिवीं क्षियन्ति। ते नः सर्पासो हवमागमिष्ठाः" इति। 'सर्पेभ्यः' नक्षत्रदेवेभ्यः, 'इदम्' अस्मदीयं, 'हविः', 'जुष्टं' प्रियम्,'अस्तु'। 'येषां' सर्पदेवानां, 'चेतः', 'आश्रेषाः' नक्षत्रदेहाः, 'अनुयन्ति' अनुवर्त्तन्ते। 'ये' सर्पा देवाः,'अन्तरिक्षं पृथिवीञ्च' 'क्षियन्ति' अधिवसन्ति, 'ते' 'सर्पासः' सर्पाख्या देवाः, 'नः' 'हवम्' अस्मदीयं यज्ञं प्रति, 'आगमिष्ठाः' अतिशयेनागन्तारः सन्तु॥

तत्रैव याज्यामाह। "ये रोचने सूर्य्यस्यापि सर्पाः। ये दिवं देवीमनुसञ्चरन्ति। येषामाश्रेषा* अनुयन्ति कामम्। तेभ्यः सर्पेभ्यो मधुमज्जुहोमि" इति। 'ये' 'अपि', अन्य'सर्पाः',

---

* मूलस्यादर्शे 'आश्रेषा' इति पाठः।

'सूर्यस्य', 'रोचने' मण्डले, वर्त्तन्ते। 'ये', च 'दिवं देवीं' द्यु-लोकरूपां देवताम्, 'अनुसञ्चरन्ति'। 'आश्रेषाः' नक्षत्रदेहाः, 'येषां' सर्पदेवानां, 'कामम्' 'अनुयन्ति' इच्छामनुवर्त्तन्ते। 'तेभ्यः सर्पेभ्यः' आश्रेषेभ्यः, 'मधुमत्' मधुरं हविः, 'जुहोमि'॥

अथाष्टमस्य पुरोऽनुवाक्यामाह। "उपहूताः पितरो ये मघासु। मनोजवसः सुकृतः सुकृत्याः। ते नो नक्षत्रे हव-मागमिष्ठाः। स्वधाभिर्यज्ञं प्रयतं जुषन्ताम्" [६] इति। 'ये' 'पितरः', 'मघासु' नक्षत्रतनुषु, 'उपहूताः' अनुज्ञाताः। कीदृशाः, 'मनोजवसः' मनोवेगाः, 'सुकृतः' सुष्ठु कर्त्तुं शक्ताः, 'सुकृत्याः' शोभनेन कृत्येन युक्ताः, 'ते' पितरः, 'नक्षत्रे' मघारूपे निमित्तभूते सति, 'नः' हवमागमिष्ठाः' अस्मदीयं यज्ञं प्रत्यति-शयेनागन्तारो भवन्तु। ते पितरः, अद्य 'स्वधाभिः' अन्नैः, 'प्रयतं' शुद्धं संस्कृतं, 'यज्ञं', 'जुषन्ताम्'॥

तत्रैव याज्यामाह। "ये अग्निदग्धा ये नाग्निदग्धाः। येऽमुं लोकं पितरः क्षियन्ति। यांॅश्च विद्म यांॅ उच न प्रविद्म। मघासु यज्ञंॅ सुकृतं जुषन्ताम्" इति। 'ये' पितरः, शास्त्रोक्त-संस्कृतेन 'अग्निना दग्धाः'। 'ये', च तद्विपरीताः, 'ये' चान्ये, 'पितरः', 'अमुं लोकं' 'क्षियन्ति' स्वर्गमधिवसन्ति। 'यांॅश्च' पितॄन्, वयं 'विद्म', 'यां उच' यानन्यान् पितॄन्, वयं 'न', 'प्रविद्म'। ते सर्वे पितरः 'मघासु', निमित्तभूतासु, 'सुकृतं' संस्कृतं यज्ञं 'जुषन्ताम्'॥

अथ नवमस्य पुरोऽनुवाक्यामाह। "गवां पतिः फल्गुनी-

नामसि त्वम्। तदर्य्यमन् वरुण मित्र चारु। तं त्वा वयꣳ सनितारꣳ सनीनाम्। जीवा जीवन्तमुपसंविशेम" इति। 'वरुणः' दुरितानां निवारकः, 'मित्रः' सर्व्वेषां हितकारी। अतएव 'चारुः' समीचीनः, तादृश हे 'अर्य्यमन्', त्वं 'गवां', 'पतिः' पालकोऽसि। तथा 'फल्गुनीनां' नक्षत्रदेहानामपि, पालकः 'असि'। 'तत्' तस्मात् कारणात्, 'तं त्वा' तादृशं त्वां, 'वयं', 'जीवाः' जीवनार्थिनः, 'उपसंविशेम' सम्प्राप्नुयाम। कीदृशं त्वां, 'सनीनां' 'सनितारं' दातव्यानां धनानां दातारं, अतएव 'जीवन्तं' 'समीचीनेन जीवनेनोपेतम्॥

तत्रैव याज्यामाह। "येनेमा विश्वा भुवनानि सञ्जिता। यस्य देवा अनुसंयन्ति चेतः [७]। अर्य्यमा राजाऽजरस्तुविष्मान्। फल्गुनीनामृषभो रोरवीति" इति। 'येन' अर्य्यम्णा, 'इमानि' सर्व्वाणि, 'भुवनानि' भूतजातानि, 'सञ्जिता' सम्यग् जितानि वशीकृतानि, 'देवाः', सर्व्वे, 'यस्य' अर्यम्णः, 'चेतः', 'अनुसंयन्ति' अनुवर्त्तन्ते। सोऽयम् 'अर्य्यमा', 'रोरवीति' अस्मदनुग्रहाय देवलोके घोषं करोति। कीदृशोऽर्यमा, 'राजा' दीप्तिमान्, 'अजरः' जरारहितः, 'तुविष्मान्' वृद्धिमान्, 'फल्गुनीनामृषभः' पूर्व्वफल्गुनीनक्षत्रदेहानां गोसदृशानां वृषभसदृशः स्वामी॥

अथ दशमस्य पुरोऽनुवाक्यामाह। "श्रेष्ठो देवानां भगवो भगासि। तत्त्वा विदुः फल्गुनीस्तस्य वित्तात्। अस्मभ्यं क्षत्रमजरꣳ सुवीर्य्यम्। गोमदश्ववदुप सन्नुदेह" इति। हे 'भगवः' ज्ञानवैराग्यादिषड्गुणयुक्त, हे 'भग' भगाख्यदेव, त्वं 'देवानां'

मध्ये 'श्रेष्ठः', 'असि'। 'तत्' तस्मात् कारणात्, 'फल्गुनीः' उत्तरफल्गुन्याख्या नक्षत्रदेवताः,'त्वां','विदुः' स्वामित्वेनाभजन्त। 'तस्य' तव, माहात्म्यं 'वित्तात्' त्वमेव विद्धि, जानीहि। 'इह' अस्मिन् कर्म्मणि, 'अस्मभ्यम्' अस्मदर्थं, 'क्षत्रं' बलं, 'उप' समीपे, 'सनुद' सम्यक्कारय। कीदृशं क्षत्रं, 'अजरं' जरया शैथिल्येन रहितं, 'सुवीर्य्यं' शोभनैर्वीर्य्यैः पुत्रादिभिरुपेतं, 'गोमत्' बहुगोयुक्तं, 'अश्ववत्' प्रशस्ताश्वोपेतम्॥

तत्रैव याज्यामाह। "भगो ह दाता भग इत् प्रदाता। भगो देवीः फल्गुनीराविवेश। भगस्येत्तं प्रसवं गमेम। यत्र देवैः सधमादं मदेम" [८] इति। योऽयं 'भगाख्यः देवः स एव धनधान्यादीनां 'दाता', किञ्च 'भग एव', 'प्रदाता' प्रकृष्टानां मणिमुक्तादीनां दाता, स 'भगः','देवीः' द्योतमानाः नक्षत्ररूपा उत्तराः 'फल्गुनीः', 'आविवेश' स्वामित्वेन प्रविष्टवान्, तस्मात् 'भगस्येत्' तस्यैव भगदेवस्य, 'तं प्रसवम्' अनुज्ञां, 'गमेम' गम्याः स्मः। 'यत्र' यस्मिन् प्रसवे सति, 'देवैः','सधमादं मदेम' सह हर्षं प्राप्नुयामः, तं प्रसवं गमेमेति पूर्वत्रान्वयः॥

एकादशस्य पुरोऽनुवाक्यामाह। "आयातु देवः सवितोपयातु। हिरण्ययेन सुवृता रथेन। वहन् हस्तꣳ सुभगं विद्मनापसम्। प्रयच्छन्तं पपुरिं पुण्यमच्छ" इति। योऽयं 'सविता' 'देवः', सोऽयमिह कर्म्मणि 'आयातु',सविता 'उपयातु' च। उपगमनं नाम स्नेहातिशयेन समीपप्राप्तिः। किं कुर्व्वन्, 'हिरण्ययेन' सुवर्णनिर्म्मितेन,'सुवृता' शोभनवृत्तिकेन,'रथेन',

'हस्तं' हस्ताख्यं नक्षत्रं, 'वहन्', कीदृशं हस्तं, 'सुभगं' सौभाग्ययुक्तं, 'विद्मनापसं' विदितेन कर्मणायुक्तं, 'प्रयच्छन्तं' अभिमतफलानि ददतं, 'पपुरिं' कामानां पूरयितारं, 'पुण्यं' पावनं, 'अच्छ' आभिमुख्येन वर्त्तमानम्॥

तत्रैव याज्यामाह। "हस्तः प्रयच्छत्वमृतं वसीयः। दक्षिणेन प्रतिगृभ्णीम एनत्। दातारमद्य सविता विदेय। यो नो हस्ताय प्रसुवाति यज्ञम्" इति। अयं 'हस्तः' नक्षत्रविशेषः, 'अमृतं' विनाशरहितं, 'वसीयः' अतिश्रेष्ठं धनं, 'प्रयच्छतु'। वयमपि 'एनत्' धनं, 'दक्षिणेन' हस्तेन पूजितेन, 'प्रतिगृभ्णीमः'। 'यः' 'सविता', 'हस्ताय' हस्तनक्षत्रार्थं, 'नः' अस्मदीयं, 'यज्ञं', 'प्रसुवाति' अनुजानाति तं सवितारं धनस्य 'दातारं', 'अद्य' अस्मिन् कर्मणि, 'विदेय' लभेय॥

अथ द्वादशस्य पुरोऽनुवाक्यामाह। "त्वष्टा नक्षत्रमभ्येति चित्राम्। सुभꣳससं युवतिꣳ रोचमानाम् [८]। निवेशयन्नमृतान्मर्त्याꣳश्च। रूपाणि पिꣳशन् भुवनानि विश्वा" इति। अयं 'त्वष्टा', देवः, 'चित्राख्यं, 'नक्षत्रम्', 'आभिमुख्येन गच्छति, तया सहैकीभवति। कीदृशीं चित्रां, 'सुभꣳससं' शोभनेन भंससा जघनप्रदेशेन युक्तां, 'युवतिं' यौवनयुक्तां, 'रोचमानां' दीप्यमानां। किं कुर्व्वन्, 'अमृतान्' देवान्, 'मर्त्यान्' मनुष्यांश्च, 'निवेशयन्' स्वस्वोचिते रूपे स्थापयन, तथा 'रूपाणि' निरूपणीयानि, 'विश्वा' 'भुवनानि' सर्व्वाणि भूतजातानि, 'पिंशन्' निरूपयन्॥

तत्रैव याज्यामाह। "तन्नस्त्वष्टा तदु चित्रा विचष्टाम्। तन्नक्षत्रं भूरिदा अस्तु मह्यम्। तन्नः प्रजां वीरवतीꣳ सनोतु। गोभिर्नो अश्वैः समनक्तु यज्ञम्" इति। अयं 'त्वष्टा', देवः, 'नः' अस्माकं, 'तत्' धनं, 'विचष्टां' विशेषेण पश्यतु, अनुगृह्णातु-त्वित्यर्थः। तथा 'चित्रा' 'नक्षत्रतनुः 'तदु' 'विचष्टां' तदेव धनं विशेषेणानुगृह्णातु। किञ्च 'तत्' चित्राख्यं नक्षत्रं, 'मह्यं' यजमानाय, 'भूरिदाः' अधिकधनप्रदम्, 'अस्तु'। किञ्च 'तत्' नक्षत्रं, 'नः' अस्मभ्यं, 'प्रजां' पुत्रादिरूपां, 'वीरवतीं' शूरैर्भटैर्युक्तां, 'सनोतु' ददातु। किञ्च 'नः' अस्मदीयं, 'यज्ञं', 'गोभिः', 'अश्वैश्च', 'समनक्तु' समृद्धं करोतु॥

अथ त्रयोदशस्य पुरोऽनुवाक्यामाह। "वायुर्नक्षत्रमभ्येति निष्ट्याम्। तिग्मशृङ्गो वृषभो रोरुवाणः। समीरयन् भुवना मातरिश्वा। अप द्वेषाꣳसि नुदतामरातीः" [१०] इति। यः 'वायुः' देवः, सोऽयं 'निष्ट्यां' स्वातीं, 'नक्षत्रं', 'अभ्येति' आभिमुख्येन प्राप्नोति। कीदृशो वायुः, 'तिग्मशृङ्गः' तीक्ष्णतेजाः, 'वृषभः' कामानां वर्षिता, 'रोरुवाणः' शब्दायमानः, सोऽयं 'मातरिश्वा', वायुः 'भुवना' भूतजातानि, 'समीरयन्' सम्यक् प्रेरयन् 'द्वेषांसि' द्वेष्यान्, 'अरातीः' दातव्यं धनमप्रयच्छतः पुरुषान्, अपि 'अपनुदतां' अपसारयतु॥

तत्रैव याज्यामाह। "तन्नो वायुस्तदु निष्ट्या शृणोतु। तन्नक्षत्रं भूरिदा अस्तु मह्यम्। तन्नो देवासो अनुजानन्तु कामम्। यथा तरेम दुरितानि विश्वा" इति। 'नः' अस्मदीयं

'तत्' विज्ञापनं, 'वायुः' देवः, 'शृणोतु'। 'निष्ट्या' स्वातीवत्, उत देवविज्ञापनं, 'शृणोतु', 'तत्' स्वात्याख्यं नक्षत्रं, 'मह्यं', 'भूरिदाः' बहुधनप्रदम्, 'अस्तु'। 'देवासः' सर्व्वे देवाः, 'नः' अस्मदीयं 'तं' 'कामम्' अभिलषितार्थं, 'अनुजानन्तु', 'विश्वा' 'दुरितानि' सर्व्वाणि पापानि, 'यथा तरेम', तथानुगृह्णन्तु॥

अथ चतुर्द्दशस्य पुरोऽनुवाक्यामाह। "दूरमस्मच्छत्रवो यन्तु भीताः। तदिन्द्राग्नी कृणुतां तद्विशाखे। तन्नो देवा अनुमदन्तु यज्ञम्। पश्चात् पुरस्तादभयन्नो अस्तु" इति। 'अस्मात्' अस्मत्तः,'भीताः','शत्रवः','दूरं','यन्तु','तच्च दूरगमनं 'इन्द्राग्नी'देवौ, 'कृणुतां', 'विशाखे' नक्षत्रदेवौ, च 'तत्', कृणुताम्। 'नः' अस्मदीयं, 'यज्ञं', 'देवाः', सर्व्वे 'अनुमदन्तु' अङ्गीकुर्व्वन्तु, 'नः' अस्माकं, 'पश्चात्', 'पुरस्तात्', च 'अभयम्', 'अस्तु'॥

तत्रैव याज्यामाह। "नक्षत्राणामधिपत्नी विशाखे। श्रेष्ठाविन्द्राग्नी भुवनस्य गोपौ [११]। विषूचः शत्रूनपबाधमानौ। अप क्षुधं नुदतामरातिम्" इति। 'नक्षत्राणां', मध्ये इमे द्वे 'विशाखे', 'अधिपत्नी' अधि अधिकं पालयित्र्यौ, 'इन्द्राग्नी', च तद्देवौ 'श्रेष्ठौ' प्रशस्तौ, 'भुवनस्य', 'गोपौ' पालकावुभौ अस्मत् 'शत्रून्', 'विषूचः' विभिन्नगतीन् कृत्वा, 'अपबाधमानौ' पीडयन्तौ, अस्मदीयां 'क्षुधं', 'अरातिं' शत्रुञ्च, 'अपनुदतां' निराकुरुताम्। कृत्तिकादीनां विशाखान्तानां याज्यानुवाक्या उक्ताः॥

अथ पौर्णमासीदेवतायाः पुरोऽनुवाक्यामाह। "पूर्णा पश्चादुत पूर्णा पुरस्तात्। उन्मध्यतः पौर्णमासी जिगाय। तस्यां देवा अधिसंवसन्तः। उत्तमे नाक इह मादयन्ताम्" इति। येयं 'पूर्णा' पौर्णमासीदेवता,साऽस्माकं 'पश्चाद्भागे विरोधिन 'उज्जिगाय'। 'उत' अपिच, इयं 'पूर्णा', 'पुरस्तात्' पूर्व्वभागेऽप्युज्जिगाय। तथेयं पौर्णमासी 'मध्यतः' मध्यभागेऽपि, उज्जिगाय। 'देवाः', सर्व्वे 'तस्याम्' 'अधिष्ठाय 'सम्यग्वसन्तः', 'उत्तमे', 'नाके' स्वर्गे 'इह' कर्म्मणि च, 'मादयन्ताम्' अस्मान् हर्षयन्तु॥

तत्रैव याज्यामाह। "पृथ्वी सुवर्चा युवतिः सजोषाः। पौर्णमास्युदगाच्छोभमाना। आप्याययन्ती दुरितानि विश्वा। उरुं दुहां यजमानाय यज्ञम्" [१२] इति। इयं 'पौर्णमासी' देवता, 'उदगात्' अभ्युदयं प्राप्ता। कीदृशी, 'पृथ्वी' विस्तीर्णा, 'सुवर्च्चाः' शोभनदीप्तिः, 'युवतिः' नित्यतरुणी, 'सजोषाः' अस्माभिः समानप्रीतिः, 'शोभमाना' रमणीया, 'विश्वा दुरितानि' सर्व्वाणि दुर्गत्युपेतानि भूतानि, 'आप्याययन्ती' दुर्गतिपरिहारेण वर्द्धयन्ती, तादृशी पौर्णमासी यजमानाय 'उरुं' विस्तीर्णं, 'यज्ञं', 'दुहां' दुग्धां सम्पादयतु॥

इति प्रथमोऽनुवाकः॥ १॥

---

अथ द्वितीयोऽनुवाकः॥

प्रथमेनुवाके देवनक्षत्राणामिष्टिषु याज्यानुवाक्या उक्ताः। अथ द्वितीये यमनक्षत्राणामिष्टिषु याज्यानुवाक्या उच्यन्ते।

तत्र प्रथमस्य पुरोऽनुवाक्यामाह । "ऋध्यास्म हव्यैर्नमसोपसद्य । मित्रं देवं मित्रधेयं नो अस्तु । अनूराधान् हविषा वर्धयन्तः । शतं जीवेम शरदः सवीराः" इति । 'मित्राख्यं', 'देवं', 'नमसा' नमस्कारेण,'हव्यैश्च', 'उपसद्य' सेवित्वा, 'ऋध्यास्मः' वयं समृद्धा भूयास्मः । 'मित्रधेयं' मित्रेण यत् सम्पाद्यं श्रेयः, तत् 'नः' अस्माकम्,'अस्तु'। वयमपि, 'अनूराधान्' नक्षत्रविग्रहान्, अनेन 'हविषा', 'वर्द्धयन्तः', 'सवीराः' वीरैः पुत्रादिभिः सहिताः, 'शतं', 'शरदः' संवत्सरं, 'जीवेम' ॥

तत्रैव याज्यामाह । "चित्रं नक्षत्रमुदगात् पुरस्तात् । अनूराधास इति यद्वदन्ति । तन्मित्र एति पथिभिर्देवयानैः । हिरण्मयैर्विततैरन्तरिक्षे" इति । 'चित्रम्' आश्चर्य्यकरं, इदं 'नक्षत्रं', 'पुरस्तात्' पूर्व्वस्यां दिशि, 'उदगात्' उदितमभूत् । 'यत्' नक्षत्रं, सर्व्वे जनाः 'अनूराधासः' इति 'वदन्ति', एतन्नाम्ना व्यवहरन्ति । 'तत्' नक्षत्रम्, अयं 'मित्रः', देवः, 'अन्तरिक्षे', अवस्थितैः 'विततैः' विस्तीर्णैः,'हिरण्मयैः' हिरण्यनिर्म्मितैः,'देवयानैः' देवानां गमनयोग्यैः, 'पथिभिः' मार्गैः 'एति' गच्छति ॥

अथ द्वितीयस्य पुरोऽनुवाक्यामाह । "इन्द्रो ज्येष्ठामनु नक्षत्रमेति । यस्मिन् वृत्रं वृत्रतूर्य्ये ततार [१] । तस्मिन् वयममृतं दुहानाः । क्षुधन्तरेम दुरितिं दुरिष्टिम्" इति । अयम्, 'इन्द्रः','ज्येष्ठाख्यं 'नक्षत्रं','अन्वेति' अनुगच्छति। 'वृत्रतूर्य्ये' वृत्रवधे, निमित्तभूते, सति 'यस्मिन्' ज्येष्ठानक्षत्रे, 'वृत्राख्यमसुरं 'ततार' इन्द्रस्तीर्णवान्, हतवानित्यर्थः । 'तस्मिन्' ज्येष्ठानक्षत्रे,

निमित्तभूते सति 'अमृतं' अविनश्वरं, हविः, 'दुहानाः' सम्पादयन्तः, वयं, 'क्षुधन्तरेम'। कीदृशीं क्षुधं, 'दुरितिं' दुर्गतियुक्तां। अतएव महाभारते स्मर्य्यते,

वासुदेव जरा कष्टं कष्टं धनविपर्य्ययः।

पुत्रशोकस्ततः कष्टं कष्टात् कष्टतरं क्षुधा ॥ इति

'दुरिष्टं' दुर्यागफलभूताम् ॥

तत्रैव याज्यामाह। "पुरन्दराय वृषभाय धृष्णवे। अषाढाय सहमानाय मीढुषे। इन्द्राय ज्येष्ठा मधुमद्दुहाना। उरुं कृणोतु यजमानाय लोकम्" इति। इयं 'ज्येष्ठा' नक्षत्ररूपा, 'इन्द्रार्थं 'मधुमद्दुहाना' मधुरं हविः सम्पादयन्ती, 'यजमानाय', 'उरुं' विस्तीर्णं, 'लोकं', करोतु। कीदृशायेन्द्राय, 'पुरन्दराय' असुर-पुराणां दारयित्रे, 'वृषभाय' कामानां वर्षयित्रे, 'धृष्णवे' धार्ष्ट्ययुक्ताय, 'अषाढाय' केनाप्यपरिभूताय, 'सहमानाय' वैरिणामभिभवित्रे, 'मीढुषे' वृष्ट्या सेचकाय ॥

अथ तृतीयस्य पुरोऽनुवाक्यामाह। "मूलं प्रजां वीरवतीं विदेय। पराच्येतु निर्ऋतिः पराची। गोभिर्नक्षत्रं पशुभिः समक्तम्। अहर्भूयाद्यजमानाय मह्यम्" [२] इति। यदिदं 'मूलाख्यं नक्षत्रं तत् सेवित्वा 'वीरवतीं' शूरभटयुक्तां, 'प्रजां' पुत्रादिकां, 'विदेय' लभेय। 'निर्ऋतिः' काचिद्राक्षसदेवता, 'पराची' पराङ्मुखी भूत्वा, 'पराची' पुनरावृत्तिरहितेन मार्गेण 'एतु' इतो गच्छतु। 'मह्यं' 'यजमानाय', मूलाख्य-

मिदं नक्षत्रं 'गोभिः', अन्यैश्च 'पशुभिः', 'समक्तं' सम्बद्धम्। 'अहर्भूयात्' दिवसवत् प्रकाशितं भूयात्॥

तत्रैव याज्यामाह। "अहर्नो अद्य सुविते दधातु। मूलं नक्षत्रमिति यद्वदन्ति। पराचीं वाचा निर्ऋतिं नुदामि। शिवं प्रजायै शिवमस्तु मह्यम्" इति। सर्वे लोकाः 'यत्', 'नक्षत्र-नाम्ना 'मूलम्', इति 'वदन्ति', तन्नक्षत्रं 'अद्य' अस्मिन् कर्म्मणि, 'अहः' दिवसवत् प्रकाशकं भूत्वा 'नः' अस्मान्, 'सुविते' सम्यग्गन्तव्ये फले 'दधातु' स्थापयतु। अहन्तु तत्प्रसादात् 'पराचीं' पराङ्मुखीं, 'निर्ऋतिं', 'वाचा' वाङ्मात्रेण, 'नुदामि' निराकरोमि। मदीयायै 'प्रजायै', 'शिवं' श्रेयः, 'अस्तु'। 'मह्यं', च शिवमस्तु॥

अथ चतुर्थस्य पुरोऽनुवाक्यामाह। "या दिव्या आपः पयसा सम्बभूवुः। या अन्तरिक्ष उत पार्थिवीर्याः। यासामषाढा अनुयन्ति कामम्। ता न आपः शꣳ स्योना भवन्तु" इति। 'दिव्याः' दिवि भवाः, 'याः' एताः 'आपः', 'पयसा' 'सम्बभूवुः' पयस्त्वेन हेतुना समुत्पन्नाः,'याः' च आपः 'अन्तरिक्षे', वर्त्तन्ते। 'उत' अपि च,या आपः,'पार्थिवीर्याः' पृथिव्यां भवाः, 'यासां' च अब्देवतानां,'कामम्' इच्छां, 'अषाढाः' पूर्वाषाढा-नक्षत्रविग्रहाः,'अनुयन्ति' अनुवर्त्तन्ते। 'ताः' 'आपः', देवताः, 'नः' अस्माकं, 'सम्भवन्तु' अनिष्टशान्तिहेतवो भवन्तु॥

तत्रैव याज्यामाह। "याश्च कूप्या याश्च नाद्याः समुद्रियाः। याश्च वैशन्तीरुत प्रासचीर्याः [३]। यासामषाढा मधु

भक्षयन्ति। ता न आपः शꣳ स्योना भवन्तु" इति। 'याश्च' आपः, 'कूप्याः' कूपे भवाः, याश्च 'नाद्याः' नद्यां भवाः, 'समुद्रियाः' समुद्रे भवाः, 'याश्च' आपः, 'वैशन्तीः' वेशन्तेषु पल्वलेषु भवाः। 'उत' अपि च, 'याः' आपः,'प्रासचीः' प्रकर्षेण ततस्ततः समागताः 'यासाम्' अपां सम्बन्धि, 'मधु' स्वादुभूतं रसं, 'अषाढाः' पूर्व्वाषाढनक्षत्रदेवता भक्षयन्ति। ता न इत्यादि पूर्व्ववत्॥

अथ पञ्चमस्य पुरोऽनुवाक्यामाह। "तन्नो विश्वे उपशृण्वन्तु देवाः। तदषाढा अभिसंयन्तु यज्ञम्। तन्नक्षत्रं प्रथतां पशुभ्यः। कृषिर्वृष्टिर्यजमानाय कल्पताम्" इति। 'विश्वे देवाः, 'नः' अस्मदीयं, 'तत्' विज्ञापनम्, 'उपशृण्वन्तु'। 'तत्' तदानीं, 'अषाढाः' उत्तराषाढाख्या नक्षत्रविग्रहाः, 'यज्ञम्', अस्मदीयम् 'अभिसंयन्तु' अभितः सम्यक् प्राप्नुवन्तु। 'तत्' उत्तराषाढाख्यं, 'नक्षत्रं', 'पशुभ्यः' पश्वर्थं, 'प्रथतां' प्रख्यातं भवतु। ततो 'यजमानाय', 'कृषिर्वृष्टिः', च कल्पतां सम्पाद्यन्तां॥

तत्रैव याज्यामाह। "शुभ्राः कन्या युवतयः सुपेशसः। कर्म्मकृतः सुकृतो वीर्य्यावतीः। विश्वान्देवान् हविषा वर्द्धयन्तीः। अषाढाः काममुपयान्तु यज्ञम्" [४] इति। 'अषाढाः' उत्तराषाढाख्या नक्षत्रदेव्यः, 'कामम्' काम्यमानं, अस्मदीयं 'यज्ञं', 'उपयान्तु'। कीदृश्योऽषाढाः 'शुभ्राः' निर्म्मलाः, 'कन्याः' कान्तियुक्ताः, 'युवतयः' नित्यं तरुण्यः, 'सुपेशसः' सुरूपाः, 'कर्म्मकृतः' कर्म्मकरणकुशलाः, 'सुकृतः' शोभनकारिण्यः,

'वीर्य्यावतीः' प्रभूतसामर्थ्यवत्यः 'विश्वान्देवान्' स्वकीयस्वामिनः, 'हविषा', अस्मदीयेन 'वर्द्धयन्तीः' परितोषयन्त्यः॥

अथ षष्ठस्य पुरोऽनुवाक्यामाह। "यस्मिन् ब्रह्माभ्यजयत् सर्व्वमेतत्। अमुञ्च लोकमिदमूच सर्व्वम्। तन्नो नक्षत्रमभिजिद्विजित्य। श्रियं दधात्वहृणीयमानम्" इति। 'यस्मिन्' नक्षत्रे, 'ब्रह्मा' प्रजापतिः, 'सर्व्वमेतदभ्यजयत्'। किन्तत् सर्व्वमिति तदुच्यते। 'अमुञ्च लोकं',स्वर्गमपि 'इदमूच' इदमपि च भूलोकादिकं सर्व्वं, 'तत्' जयसाधनम् 'अभिजित्' नाम, 'नक्षत्रं', 'नः' अस्मदर्थं,'श्रियं' वैरीसम्बन्धिनी सेनाः,'विजित्य','अहृणीयमानं' तैरपहर्त्तुमशक्यं, कृत्वा 'दधातु' अस्मासु स्थापयतु॥

तत्रैव याज्यामाह। "उभौ लोकौ ब्रह्मणा सञ्जितेमौ। तन्नो नक्षत्रमभिजिद्विचष्टाम्। तस्मिन्वयं पृतनाः सञ्जयेम। तन्नो देवासो अनुजानन्तु कामम्" इति। भूमिर्द्यौरिति 'इमावुभौ लोकौ', 'अभिजित्'नाम्नि 'नक्षत्रे', 'ब्रह्मणा' प्रजापतिना, 'सञ्जिता' सम्यग्जितौ,'तत्''नक्षत्रम'अभिजिदाख्यं,'नः'अस्मान्, 'विचष्टां' देवेषु विशेषेण स्थापयतु। 'तस्मिन्' नक्षत्रे, कर्म्मानुष्ठायिनः इयं 'पृतनाः' परकीयाः सेनाः, 'सञ्जयेम'। 'देवासः' देवाः सर्व्वे, 'नः' अस्मान्, 'अनुजानन्तु कामम्' अङ्गीकुर्व्वन्तु॥

अथ सप्तमस्य पुरोऽनुवाक्यामाह। "शृण्वन्ति श्रोणाममृतस्य गोपाम्। पुण्यामस्या उपशृणोमि वाचम् ।५। महीं देवीं विष्णुपत्नीमजूर्य्याम्। प्रतीचीमेनाꣳ हविषा यजाम"इति। 'अमृतस्य' कर्म्मफलस्य, 'गोपां' रक्षिकां,'श्रोणां' श्रवणनक्षत्ररूपां, तन्नु सर्व्वे

जनाः 'शृण्वन्ति'। अहमपि 'अस्याः' श्रोणायाः, 'पुण्यां वाचं' कीर्त्तिरूपां 'शृणोमि'। 'एनां' श्रोणां, वयं 'हविषा यजामः'। कीदृशीं, 'महीं' महतीं, गुणाधिकां, 'देवीं' द्योतमानां, 'विष्णुपत्नीं' विष्णोः पालयित्रीं, 'अजूर्य्यां' ज्वरेण सन्तापेन रहितां, 'प्रतीचीं' अस्माकमाभिमुख्याम् ॥

तत्रैव याज्यामाह। "त्रेधा विष्णुरुरुगायो विचक्रमे। महीं दिवं पृथिवीमन्तरिक्षम्। तच्छ्रोणैति श्रव इच्छमाना। पुण्यꣳ श्लोकं यजमानाय कृण्वती" इति। उरु प्रभूतं यथा भवति तथा गीयते वेदेषु श्रूयते इति 'उरुगायः', तादृशः 'विष्णुः', 'महीं दिवं' महान्तं द्युलोकं, 'पृथिवीमन्तरिक्षं', चोऽदिश 'त्रेधा विचक्रमे' त्रिःप्रकारं त्रिविधं क्रमणं कृतवान्, पादत्रयेण लोकत्रयं व्याप्नोत् 'तत्' त्रिविक्रमरूपं 'श्रोणा' नक्षत्ररूपा, 'एति' प्राप्नोति। कीदृशी श्रोणा, 'श्रव इच्छमाना' कीर्त्तिमपेक्षमाणा, 'यजमानाय' यजमानार्थं, 'पुण्यं श्लोकं' 'कृण्वती' उत्तमां कीर्त्तिं कुर्व्वती ॥

अष्टमस्य पुरोऽनुवाक्यामाह। "अष्टौ देवा वसवः सोम्यासः। चतस्रो देवीरजराः श्रविष्ठाः। ते यज्ञं पान्तु रजसः परस्तात्। संवत्सरीणममृतꣳ स्वस्ति" [६] इति। 'सोम्यासः' रमणीयमूर्त्तयः, 'वसुनामकाः', देवाः 'अष्टसङ्ख्याकाः', 'श्रविष्ठाः' धनिष्ठानक्षत्रमूर्त्तयः, 'चतस्रः', तास्र 'देवीः', द्योतमानाः, 'अजराः' जरारहिताः। 'ते' सर्व्वेऽप्यस्मदीयं यज्ञं', 'पान्तु'। 'रजसः परस्तात्' रजोगुणयुक्तान्मनुष्यलोकात् परो वर्त्तमान, 'संव-

त्सरीणं' संवत्सरदेवतासम्बन्धं, 'अमृतं' अविनाशिनं स्वर्गलोकं, 'स्वस्ति' क्षेमेण प्राप्नुयामीति शेषः॥

तत्रैव याज्यामाह। "यज्ञं नः पान्तु वसवः पुरस्तात्। दक्षिणतोऽभियन्तु श्रविष्ठाः। पुण्यं नक्षत्रमभिसंविशाम। मा नो अरातिरघशंसागन्" इति। ये अष्टसङ्ख्याकाः 'वसवः', ते 'पुरस्तात्' पूर्वस्यां दिशि, 'नः' अस्मदीयं, 'यज्ञं', 'पान्तु'। 'श्रविष्ठाः' नक्षत्रमूर्त्तयः, 'दक्षिणतः' दक्षिणस्यां दिशि, 'अभियन्तु' आभिमुख्येन प्राप्नुवन्तु। वयमपि धनिष्ठाख्यं 'पुण्यनक्षत्रं', 'अभिसंविशाम' आभिमुख्येन सम्यक् प्रविशाम, भजामेत्यर्थः। 'अघशंसा' अस्मदीयस्य पापस्य शंसको योऽयमरातिः शत्रुः सोऽयं 'नः' अस्मान् प्रति 'मागन्' मागच्छतु॥

अथ नवमस्य पुरोऽनुवाक्यामाह। "क्षत्रस्य राजा वरुणोऽधिराजः। नक्षत्राणाꣳ शतभिषग्वसिष्ठः। तौ देवेभ्यः कृणुतो दीर्घमायुः। शतꣳ सहस्रा भेषजानि धत्तः" इति। योऽयं 'वरुणः',अस्ति सोऽयं 'क्षत्रस्य', क्षत्रियजातेः सर्वस्यापि 'राजा'। अत एवायमधिकत्वात् 'अधिराज इत्युच्यते'। 'नक्षत्राणां', मध्ये योऽयं 'शतभिषगाख्यः' नक्षत्राभिमानी सोऽयं 'वसिष्ठः' अतिशयेन निवासहेतुः, 'तौ' वरुणशतभिषजौ। 'देवेभ्यः' देवार्थं, यजमानस्य 'दीर्घमायुः', 'कृणुतः'। तत्सिद्ध्यर्थं 'शतं' शतसङ्ख्याकानि, 'सहस्रसङ्ख्याकानि', च 'भेषजानि' औषधानि, 'धत्तः' सम्पादयतः॥

तत्रैव याज्यामाह। "यज्ञं नो राजा वरुण उपयातु। तं नो

विश्वे अभिसंयन्तु देवाः [७]। तन्नो नक्षत्रꣳ शतभिषग् जुषाणम्। दीर्घमायुः प्रतिरद्भेषजानि" इति। 'वरुणः', 'राजा', 'नः' अस्मदीयं, 'यज्ञं' 'उपायातु' प्राप्नोतु। 'नः' अस्मदीयं, 'तं' यज्ञं 'विश्वे' सर्व्वे, 'देवाः', 'अभिसंयन्तु' आभिमुख्येन सम्यग् प्राप्नुवन्तु। 'जुषाणं' प्रीतियुक्तं, 'शतभिषगाख्यं' 'तं' नक्षत्रं, 'नः' अस्मभ्यं, 'दीर्घमायुः' चिरकालमायुष्यं, 'भेषजानि' तदर्थान्यौषधानि, च 'प्रतिरत्' प्रकर्षेण ददातु॥

अथ दशमस्य पुरोऽनुवाक्यामाह। "अज एकपादुदगात् पुरस्तात्। विश्वा भूतानि प्रतिमोदमानः। तस्य देवाः प्रसवं यन्ति सर्व्वे प्रोष्ठपदासो अमृतस्य गोपाः" इति। 'अजः' जन्मरहितः, 'एकपात्' एकेनैव पादेन देवान्रक्षति। तदेतद्द्वयमग्निविशेषस्य नामधेयम्। सोऽयमादित्यरूपं धृत्वा 'पुरस्तात्' 'उदगात्' पूर्व्वस्यां दिशि उदेति। 'विश्वा भूतानि' सर्व्वान् प्राणिनः, 'प्रतिमोदमानः' प्रत्येकं हर्षयन् वर्त्तते। 'तस्य' सूर्य्यरूपस्याग्नेः, 'प्रसवं', 'सर्व्वे देवाः', 'यन्ति' प्राप्नुवन्ति। 'प्रोष्ठपदासः' पूर्व्वभाद्रपदाख्या नक्षत्रविशेषाः, 'अमृतस्य' अविनाशिनः कर्म्मफलस्य, 'गोपाः' रक्षकाः॥

तत्रैव याज्यामाह। "विभ्राजमानः समिधान उग्रः। आन्तरिक्षमरुहदगं द्याम्। तꣳ सूर्यं देवमजमेकपादम्। प्रोष्ठपदासो अनुयन्ति सर्व्वे" [८] इति। 'विभ्राजमानः' विशेषेण दीप्यमानः, 'समिधानः' सर्व्वान् सम्यक् प्रकाशयन्। 'उग्रः' तीक्ष्णतेजाः, 'अन्तरिक्षं', 'आरुहत्' आरूढवान्। ततः 'द्यां'

द्युलोकं, 'अरुहत्' अगमत्, प्राप्तवान्, 'अजमेकपात्' एतन्नामयुक्तं 'तं' सूर्य्यं, 'देवं', 'प्रोष्ठपदासः' पूर्व्वभाद्रपदाख्या नक्षत्रविशेषाः 'सर्व्वे' अपि 'अनुयन्ति' अनुवर्त्तन्ते॥

अथैकादशस्य पुरोऽनुवाक्यामाह। "अहिर्बुध्नियः प्रथमा न एति। श्रेष्ठो देवानामुत मानुषाणाम्। तं ब्राह्मणाः सोमपाः सोम्यासः। प्रोष्ठपदासो अभिरक्षन्ति सर्व्वे" इति। न कदाचिदपि हीयत इति 'अहिः', बुध्ने मूले जगदादौ भवः 'बुध्नियः', पदद्वयमपि मिलित्वा रुद्रविशेषस्य नामधेयं, सोऽयं रुद्रः 'प्रथमानः' विश्वं व्याप्नुवन्, 'एति' गच्छति। कीदृशः, 'देवानां', मध्ये 'श्रेष्ठः'। अपि च 'मानुषाणाम्', अपि मध्ये 'श्रेष्ठः', 'तं' तादृशं, 'सोमपाः' सोमस्य पातारः, 'सोम्यासः' रमणीयदेहाः, ब्राह्मणाः, 'प्रोष्ठपदासः' उत्तरभाद्रपदा नक्षत्रविशेषाश्च 'सर्व्वे' अपि 'अभिरक्षन्ति' अभितः सेवन्त इत्यर्थः॥

तत्रैव याज्यामाह। "चत्वार एकमभिकर्म्म देवाः। प्रोष्ठपदास इति यान् वदन्ति। ते बुध्नियं परिषद्यꣳ स्तुवन्तः। अहिꣳ रक्षन्ति नमसोपसद्य" इति। 'चत्वारः' चतुःसङ्ख्याका नक्षत्रमूर्त्तिरूपदेवाः, 'एकम्' एतत् 'कर्म्म', अभिगच्छन्तीति शेषः। 'यान्' चतुरो देवान्, 'प्रोष्ठपदास इति' उत्तरभाद्रपदा इत्यनेन नाम्ना, 'वदन्ति', सर्व्वे जना व्यवहरन्ति। 'ते' चत्वारो देवाः, 'परिषद्यं' सभायोग्यं, 'अहिं बुध्नियं' एतन्नामकं देवं, 'नमसोपसद्य' नमस्कारेण सेवित्वा, 'स्तुवन्तः' अभिरक्षन्ति, ततः समीपेऽवतिष्ठन्त इत्यर्थः॥

द्वादशस्य पुरोऽनुवाक्यामाह। "पूषा रेवत्यन्वेति पन्थाम्। पुष्टिपती पशुपा वाजवस्त्यौ[९]। इमानि हव्या प्रयता जुषाणा। सुगैर्नो यानैरुपयातां यज्ञम्" इति। 'पूषाख्यः' देवः, 'पन्थामन्वेति' अस्मद्यज्ञमार्गमनुसृत्य गच्छति। तथा 'रेवती', पन्थामन्वेति। तौ उभौ 'पुष्टिपती' पुष्टेः पालकौ, 'पशुपा' पशूनां पालकौ, 'वाजवस्त्यौ' वाजेनान्नेन जन्यं वस्त्यं बलं तद्योग्यौ, 'प्रयता' प्रयतानि, शुद्धानि, 'इमानि' 'हव्यानि', 'जुषाणा' सेवमानौ सन्तौ, 'सुगैः' सुखगन्तुं शक्यैः, 'यानैः' मार्गैः, 'यज्ञम्', 'उपयातां' प्राप्नुतां॥

तत्रैव याज्यामाह। "क्षुद्रान् पशून् रक्षतु रेवती नः। गावो नो अश्वाꣳ अन्वेतु पूषा। अन्नꣳ रक्षन्तौ बहुधा विरूपम्। वाजꣳ सनुतां यजमानाय यज्ञम्" इति। 'रेवती' नक्षत्ररूपा, 'नः' अस्मदीयान्, 'क्षुद्रान् पशून्' वत्सरूपान्, रक्षतु। 'पूषाख्यः' देवः, 'नः' गावः, अस्मदीया गाः, 'अश्वांश्च' 'अन्वेतु' अनु गच्छतु। 'तौ' उभौ, 'अन्नं रक्षन्तौ', 'बहुधा' व्रीहियवमुद्गगोधूमादिभिर्बहुभिः प्रकारैः, 'विरूपं' परस्परविलक्षणं, 'वाजम्' अन्नं, तत्साधनभूतं 'यज्ञं' च 'यजमानाय', 'सनुतां' दत्तां॥

अथ त्रयोदशस्य पुरोऽनुवाक्यामाह। "तदश्विनावश्वयुजोपयाताम्। शुभं गमिष्ठौ सुयमेभिरश्वैः। स्वं नक्षत्रꣳ हविषा यजन्तौ। मध्वा सम्पृक्तौ यजुषा समक्तौ" [१०] इति। 'अश्वयुजा' अश्वयुङ्नाम्ना नक्षत्रेण, सह 'अश्विनौ', देवौ 'तत्'

अस्मदीयं कर्म,'उपयातां' प्राप्नुताम्। कीदृशैः,'सुयमेभिः' सुष्ठु नियन्तुं शक्यैः, 'अश्वैः', 'शुभं गमिष्ठौ' अतिशयेन शोभनं गन्तारौ,'स्वं नक्षत्रं' स्वकीयमश्वयुगाख्यं नक्षत्रम्, अस्मदीयेन 'हविषा', 'यजन्तौ' पूजयन्तौ, 'मध्वा' मधुररसेन, हविषा 'सम्पृक्तौ' सम्बद्धौ, 'यजुषा', मन्त्रेण 'समक्तौ' सम्यक् प्रकाशिनौ ॥

तत्रैव याज्यामाह। "यौ देवानां भिषजौ हव्यवाहौ। विश्वस्य दूतावमृतस्य गोपौ। तौ नक्षत्रं जुजुषाणोपयाताम्। नमोऽश्विभ्यां कृणुमोऽश्वयुग्भ्यां" इति। 'यौ' अश्विनौ, 'देवानां', 'भिषजौ' चिकित्सकौ, 'हव्यवाहौ' हविषो वोढारौ, 'विश्वस्य' सर्व्वस्य जगतः, 'दूतौ' दूतवद्धितकारिणौ, 'अमृतस्य' कर्म्मफलस्य, 'गोपौ' रक्षकौ, 'तौ' उभौ, 'नक्षत्रं' स्वकीयमश्वयुगाख्यं, 'जुजुषाणा' सेवमानौ, 'उपयातां' प्राप्नुतां। 'अश्विभ्यां' देवाभ्यां, 'अश्वयुग्भ्यां' नक्षत्रशरीराभ्यां च, वयं 'नमः' नमस्कारं, 'कृणुमः' कुर्म्मः ॥

अथ चतुर्द्दशस्य पुरोनुवाक्यामाह। "अप पाप्मानं भरणीर्भरन्तु। तद्यमो राजा भगवान् विचष्टां। लोकस्य राजा महतो महान् हि। सुगं नः पन्थामभयं कृणोतु" इति। 'भरणीः' भरण्याख्यनक्षत्रविग्रहाः, 'पाप्मानं', अस्मदीयं 'अपभरन्तु' विनाशयन्तु। 'भगवान्' ऐश्वर्य्यादिगुणोपेतः, 'यमो राजा', 'तत्' अस्मदभिमतं, 'विचष्टां' विशेषेण पश्यतु, अनुगृह्णात्वित्यर्थः। 'हि' यस्मात् कारणात्, अयं यमः 'महतः' लोकस्य, 'महान्' 'राजा'। तस्मात् कारणात् 'नः' अस्माकं,

'सुगं' सुष्ठुगन्तुं शक्यं, 'पथां' मार्गं, 'अभयं कृणोतु' भयरहितं करोतु ॥

तत्रैव याज्यामाह। "यस्मिन्नक्षत्रे यम एति राजा। यस्मिन्नेनमभ्यषिञ्चन्त देवाः। तदस्य चित्रꣳ हविषा यजामः। अप पाप्मानं भरणीर्भरन्तु" इति। 'यस्मिन्' भरण्याख्ये, 'नक्षत्रे', 'यमः','राजा', 'एति' गच्छति। 'देवाः', सर्व्वे 'यस्मिन्' 'भरण्याख्ये नक्षत्रे', 'एनं' यमं, 'अभ्यषिञ्चन्त' अभिषिक्तवन्तः। 'अस्य' यमस्य, सम्बन्धि 'चित्रम्' आश्चर्य्यकरं, 'तत्' भरण्याख्यं नक्षत्रं, 'हविषा', 'यजामः'। अपेत्यादि पूर्व्ववत् ॥

यमनक्षत्राणां याज्यानुवाक्या अभिधायामावास्यादेवतायाः याज्यानुवाक्ययोः प्रतीके दर्शयति। "निवेशनी यत्ते देवा अदधुः" [११] इति। निवेशनी सङ्गमनी वसूनामिति पुरोनुवाक्या। यत्ते देवा अदधुर्भागधेयमिति याज्या। एते चोभे पूर्णापश्चादित्यनुवाके व्याख्याते ॥

इति द्वितीयोऽनुवाकः।

---

अथ तृतीयोऽनुवाकः।

द्वितीयेऽनुवाके यमनक्षत्रेष्टीनां याज्यानुवाक्या उक्ताः। अथ तृतीये चान्द्रमसादीष्टीनां याज्यानुवाक्या उच्यन्ते। तत्र चान्द्रमसेष्टो याज्यानुवाक्ययोः प्रतीके दर्शयति "नवो नवो भवति जायमानो यमादित्या अꣳशुमाप्याययन्ति" इति। नवो नव

इति पुरोनुवाक्या। यमादित्या इति याज्या। एतच्चोभयं नवो नवो भवतीत्यनुवाके व्याख्यातं।

अथाहोरात्रेष्टौ पुरोऽनुवाक्यामाह। "ये विरूपे समनसा संव्ययन्ती। समानं तन्तुं परिता तनाते। विभू प्रभू अनुभू विश्वतो हुवे। ते नो नक्षत्रे हवमागमेतं" इति। 'विरूपे' शुक्लकृष्णवर्णतया परस्परविलक्षणे, 'समनसा' समानमनस्के, 'संव्ययन्ती' समन्तादाच्छादयन्त्यौ। यथा शुक्लकृष्णे वस्त्रे शरीरमाच्छादयतः तद्वदेते सर्वं जगदाच्छादयतः। 'समानम्' एकरूपं, 'तन्तुं' नीयमानं यज्ञं, सम्वत्सरं वा, 'परिता तनाते' परितो विस्तारयतः। 'विभू' व्याप्तिमत्यौ, 'प्रभू' शक्तियुक्ते, 'अनुभू' अनुभवयोग्ये, तादृश्यौ देवते अहं 'विश्वतः', 'हुवे'। 'ते' युवां 'नक्षत्रे', केनचित् नक्षत्रविशेषेण युक्ते। अनुष्ठानदिने 'नः' अस्मदीयं, 'हवं' यज्ञं प्रति, 'आगमेतं' आगच्छतं॥

तत्रैव याज्यामाह। "वयं देवी ब्रह्मणा सम्विदानाः। सुरत्नासो देववीतिं दधानाः। अहोरात्रे हविषा वर्द्धयन्तः। अति पाप्मानमतिमुक्त्या गमेम" इति। 'वयं' यजमानाः, 'ब्रह्मणा' मन्त्रेण, 'सम्विदानाः' ऐकमत्ययुक्ताः, 'सुरत्ना' शोभनरत्नसदृशेन हविषाख्येन युक्ताः, 'देववीतिं' देवानामशनं, 'दधानाः' सम्पादयन्तः, 'अहोरात्रे', 'देवी' देव्यौ, अनेन 'हविषा', 'वर्द्धयन्तः', 'पाप्मानम्', अस्मदीयं 'अतिगमेम' अतिक्रम्य गच्छाम। केन साधनेन, 'अतिमुक्त्या' अत्यन्तमोचनसमर्थेन कर्म्मणा॥

अथोषादेवताके यागे पुरोनुवाक्यामाह। "प्रत्यु त्र दृश्या

यती [१] व्युच्छन्ती दुहिता दिवः। अपो मही वृणुते चक्षुषा" इति। इयमुषाः 'अदृशी' दृश्यते। वशब्दोऽवधारणार्थः, दृश्यत एव। कीदृशी उषाः, 'प्रत्यायती' प्रतिदिनमागच्छन्ती, 'व्युच्छन्ती' प्रभातं कुर्व्वती, 'दिवो दुहिता' द्युलोकस्य दुहितृस्थानीया, 'मही' सर्व्वप्रजोपकारणे महती, सेयमेतादृशी सती 'चक्षुषा' प्रकाशेन,'अपोवृणुते' अनुष्ठीयमानं कर्म्मावृणोति, प्रकाशयतीत्यर्थः॥

तत्रैव याज्यामाह। "तमो ज्योतिष्कृणोति सूनरी। उदुस्रियाः सचते सूर्य्यः। सचा उद्यं नक्षत्रमर्चिमत्। तवेदुषो व्युषि सूर्यस्य च" इति। 'सूनरी' सुष्ठु सर्वस्य व्यवहाराणां नेत्री, उषःकाले हि सर्व्वे प्रतिबुध्य व्यवहरन्ति। तादृशीयमुषाः 'तमो ज्योतिः कृणोति' तमसा व्याप्तं जगत् प्रकाशेन व्याप्तं करोति। तदानीं 'सूर्य्यः', 'उस्रियाः' रश्मीन्, 'उत्सचते' उद्गतत्वेन सम्बद्धान् करोति, प्रसारयतीत्यर्थः। हे 'उषः' 'तवेत्' तवच, 'सूर्य्यस्य च', 'सचा' सहैव, 'व्युषि' 'व्युष्टौ, प्रादुर्भावे सति, 'उद्यं नक्षत्रं' उदितेन नक्षत्रेण, सदृशं दिनं 'अर्चिमत्' प्रकाशोपेतं भवति॥

अथ नक्षत्रचरोः पुरोनुवाक्यामाह। "सं भक्तेन गमीमहि। तं नो नक्षत्रमर्चिमत्। भानुमत्तेज उच्चरत्। उप यज्ञमिहागमत्" [२] इति। 'भक्तेन' अन्नेन हविर्लक्षणेन, 'सङ्गमीमहि' वयं सङ्गता भूयास्म, कर्म्मानुतिष्ठामेत्यर्थः। यन्नक्षत्रमुद्दिश्य वयं कर्म कुर्मः, 'नः' अस्मदीयं, 'तत्' 'नक्षत्रं',

'अर्चिमत्' अर्चनयुक्तं, 'भानुमत्' रश्मियुक्तं, 'तेजः' स्वशरीर-कान्तियुक्तमित्यर्थः । तथाविधम्,'उच्चरत्',उदयं गच्छत,'इह' देवयजनदेशे, अस्मदीयं 'यज्ञम्', 'उपागमत्'-उपागच्छत ॥

तत्रैव याज्यामाह । "प्र नक्षत्राय देवाय । इन्द्रायेन्दुꣳ हवामहे । स नः सविता सुवत्सनिं । पुष्टिदां वीरवत्तमं" इति । 'इन्द्राय' परमैश्वर्य्ययुक्ताय नक्षत्राख्याय देवाय, 'इन्दुं' अमृतसमानं हविः, 'प्रकर्षेण 'हवामहे' जुहुमः, 'सः' अयं नक्षत्रदेवः,''सविता' कर्म्मणि प्रेरकः सन्, 'पुष्टिदां' पुष्टिप्रदं, 'वीरवत्तमं' अतिशयेन वीरैः पुत्रैर्युक्तं, 'सनिं' दातव्यधनं, 'नः' अस्मभ्यं, 'सुवत्' प्रेरयतु, ददात्वित्यर्थः ॥

अथ सौर्य्ये चरौ याज्यानुवाक्ययोः प्रतीके दर्शयति । "उद्-त्यञ्चित्रं" इति । उदुत्यं जातवेदसमिति पुरोनुवाक्या । चित्रं देवानामिति याज्या । एतच्चोभयं उदुत्यं जातवेदसमित्यनु-वाके व्याख्यातं ॥

अथादित्यचरौ याज्यानुवाक्ययोः प्रतीके दर्शयति । "अ-दितिर्न उरुष्यतु महीमूषु मातरं" इति । अदितिर्न इति पुरोनुवाक्या । महीमूषुमिति याज्या । एतच्चोभयं वैश्वानरो न ऊत्येत्यत्र व्याख्यातं ॥

अथ वैष्णवचरौ याज्यानुवाक्ययोः प्रतीके दर्शयति । "इदं विष्णुः प्रतद्विष्णुः" इति । इदं विष्णुर्विचक्रम इति पुरोनुवा-क्या । प्रतद्विष्णुरिति याज्या । तत्राद्या युञ्जते मन इत्यत्र व्या-ख्याता । द्वितीया जुष्टीनर इत्यत्र व्याख्याता । तदेवं वक्ष्यमा-

णानुवाकेषु विधास्यमानानामिष्टीनां याज्यानुवाक्या उक्ताः।

अथ शाखान्तरोक्तस्याग्नेयस्य याज्यानुवाक्ययोः प्रतीके दर्शयति। "अग्निर्मूर्द्धा भुवः" इति। अग्निर्मूर्द्धादिवः ककुदिति पुरोनुवाक्या। भुवो यज्ञस्य रजसश्चेति याज्या। एतच्चोभयमग्निकाण्डे व्याख्यातं॥

अथ शाखान्तरोक्त आनुमतिचरौ याज्यानुवाक्ययोः प्रतीके दर्शयति। "अनु नोद्यानुमतिरन्विदनुमते त्वं" इति। अनुनोद्येति पुरोनुवाक्या। अन्विदिति याज्या। एतच्चोभयमिदं वामास्ये हविरित्यत्र व्याख्यातं। एतच्च शाखान्तरीयमिष्टिद्वयं सर्व्वासु नक्षत्रेष्टिषु सञ्चरति। तथाच बोधायनोक्तं, आग्नेयमष्टाकपालमनुमत्यै चरुमिति सर्व्वत्रानुषजतीति, अग्निर्मूर्द्धा भुवोनुनोद्यानुमतिरन्विदनुमतेत्वमिति मन्त्रयोर्याज्यानुवाक्ये इति च॥

अथ सर्व्वासूक्तासु इष्टिषु स्विष्टकृतः संयाज्ययोः प्रतीके दर्शयति। "हव्यवाहꣳ स्विष्टं" इति। हव्यवाहमभिमातिषाहमिति पुरोनुवाक्या। स्विष्टमग्ने अभितत् पृणाहीति याज्या। एतच्चोभयं जुष्टोदमूना इत्यत्र व्याख्यातं॥

इति तृतीयोऽनुवाकः।

---

अथ चतुर्थोऽनुवाकः।

तृतीयेऽनुवाके चान्द्रमसेष्ट्यादीनां याज्यानुवाक्या उक्ताः। अथ चतुर्थे देवनक्षत्राणामिष्टयो विधीयन्ते। तत्र प्रथम

नक्षत्रेष्टिं विधातुं प्रस्तौति । "अग्निर्वा अकामयत । अन्नादो देवानाꣳ स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत् । ततो वै सोऽन्नादो देवानामभवत् । अग्निर्वै देवानामन्नादः" इति । अस्मिन् कल्पे सर्वेषां प्राणिनां दाहपाकप्रकाशकारी योऽयमग्निर्दृश्यते, सोऽयम् 'अग्निः', पूर्वस्मिन् कल्पे मनुष्यः सन् देवत्वपदप्रापकं कर्मानुष्ठायास्मिन् कल्प एतत् जन्म लब्धवान्, अतः पूर्वस्मिन् कल्पे स मनुष्यो भाविनीं संज्ञामाश्रित्याग्निरिति व्यपदिश्यते । यथा मृत्तिकां घटं कुरु, तन्तून् पटं कुर्वित्यादौ भाविनीं सञ्ज्ञामाश्रित्य व्यवहारस्तद्वत् । स चाग्निशब्देन व्यवह्रियमाणो मनुष्यः कर्माधिकारी सन्नेवम् 'अकामयत' । अहं जन्मान्तरे 'देवानां',मध्ये वह्निभक्षकः 'स्याम्','इति' एवं, कामयमानः 'सः' मनुष्यः, तस्मिन् कल्पे वर्त्तमानाय नक्षत्रस्वामिने 'अग्नये', 'कृत्तिकानक्षत्राय', च मिलित्वा 'पुरोडाशमष्टाकपालम्,'एतं 'निरवपत्' । 'सः' अपि नक्षत्रस्वामी वह्निः, 'ततः' पूर्वस्मिन् कल्पे मनुष्य एव सन् विशिष्टं कर्मानुष्ठायोत्तरकल्पे नक्षत्रस्वामिरूपं वह्नित्वं प्राप्तः । एवञ्च त्वग्निरग्नये निरवपदित्यत्र न काप्यनुपपत्तिः । अनेनैव न्यायेन वक्ष्यमाणास्वपीष्टिषु यजमानदेवतयोः एकविधं नामकल्पभेदेन व्यवस्थापनीयं । 'ततः' निर्वपात्' 'स' यजमानरूपोऽग्निः' कल्पान्तरे 'देवानां' मध्ये 'वह्निभक्षको 'अभवत्' । अग्निरेव सर्वान्नभक्षक इत्येतं लोके प्रसिद्धं ॥

अथेष्टिं विधत्ते । "यथा ह वा अग्निर्देवानामन्नादः । एवꣳ

ह्वा एष मनुष्याणां भवति । य एतेन हविषा यजते । यउ चै-नदेवं वेद" इति । 'यः' यजमानः, 'एतेन' अग्निकृत्तिका-देवताकेन, 'हविषा', यागं करोति, सोऽयं 'मनुष्याणां', मध्ये रोगरहितः 'अन्नभक्षकः' 'भवति'। 'यथा अग्निर्देवानां' मध्ये 'अन्नभक्षकः, तद्वत्। 'यः', अपि च 'एनत्' कर्म्म, उक्तप्रकारेण वेत्ति, सोऽपि वेदिता यजमानवत् 'अन्नादः', भवति॥

अथ प्रधानहोमादूर्ध्वं उपहोमान् विधत्ते। "सोऽत्र जुहोति। अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा। अम्बायै स्वाहा दुलायै स्वाहा। नितत्न्यै स्वाहा भ्रयन्त्यै स्वाहा। मेघयन्त्यै स्वाहा वर्षयन्त्यै स्वाहा। चुपुणीकायै स्वाहा" [१] इति। यः पूर्व्वोक्तेन हविषा यजते 'सः' यजमानः, अस्मिन् कर्मणि, अग्नये स्वाहा इत्यादिभिर्नवभिर्मन्त्रैरुपहोमान् जुहुयात्। कृत्तिकेति सप्तानां नक्षत्रमूर्त्तीनां साधारणं नाम। अम्बा-दुलादीनि विशेषनामानि॥

अथ द्वितीयनक्षत्रेष्टिं विधातुं प्रस्तौति। "प्रजापतिः प्रजा असृजत। ता अस्मात् सृष्टाः पराचीरायन्। तासाꣳ रोहिणीमभ्यध्यायत्। सोऽकामयत। उप मा वर्त्तेत। समेनया गच्छेयेति। स एतं प्रजापतये रोहिण्यै चरुं निरवपत्। ततो वै सातमुपावर्त्तत। स मेनया गच्छत" इति। अत्र प्रजापतिः इति भाविनी संज्ञा न भवति किन्तु वर्त्तमान एव 'प्रजापतिः'सृष्टेरभिधानात्। तेन 'सृष्टाः', सर्वाः 'प्रजाः',पराङ्मुखा एवागच्छन्। 'तासां' प्रजानां मध्ये, 'रोहिणी' नक्षत्रतनुम-

भिलक्ष्य प्रजापतिः, 'अध्यायत' निरन्तरं ध्यानमकरोत्। 'सः' प्रजापतिः, कदाचिदेवं कामितवान्। इयं 'रोहिणी', 'मां' प्रति 'उपावर्त्तेत', अहञ्च 'एनया' रोहिण्या, संगतो भवेयम्, 'इति' एवं, कामयमानः 'सः' प्रजापतिः, अतीतकल्पगताय 'प्रजापतये', तथा विधायै 'रोहिण्यै', च 'एतं चरुं', 'निरवपत्'। यद्यप्यतीतकल्पगते प्रजापतिरोहिण्यौ च नेदानीं विद्येते, तथापि तदुद्देशेन क्रियमाणं कर्म्म फलसमर्थं भवति। न चात्र विस्मेतव्यं ; सर्व्ववसुप्रदायिनोऽन्तर्यामिणः सर्व्वत्र विद्यमानत्वात्। ततः कर्म्मसामर्थ्यादेव 'सा' रोहिणी, 'तं' प्रजापतिं प्रति, 'उपावर्त्तत'। 'सः' च प्रजापतिः, 'एनया' रोहिण्या, सङ्गतोऽभूत्॥

अथेष्टिं विधत्ते। "उप ह वा एनं प्रियमावर्त्तते। सं प्रियेण गच्छते। य एतेन हविषा यजते। य उ चैनदेवं वेद" इति। प्रियस्य वस्तुनः उपावर्त्तनं प्राप्तिः। सङ्गमस्तद्भोगः। यजनवेदनयोरेतत् फलं द्रष्टव्यम्॥

उपहोमान् विधत्ते। "प्रजापतये स्वाहा रोहिण्यै स्वाहा। रोचमानायै स्वाहा प्रजाभ्यः स्वाहेति" [१] इति॥

अथ तृतीयस्य नक्षत्रस्येष्टिं विधत्ते। "सोमो वा अकामयत। ओषधीनाꣳ राज्यमभिजयेयमिति। स एतꣳ सोमाय मृगशीर्षाय श्यामाकं चरुं पयसि निरवपत्। ततो वै स ओषधीनाꣳ राज्यमभ्यजयत्। समानानाꣳ ह वै राज्यमभिजयति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र

जुहोति। सोमाय स्वाहा मृगशीर्षाय स्वाहा। इन्वकाभ्यः स्वाहौषधीभ्यः स्वाहा। राज्याय स्वाहाभिजित्यै स्वाहेति" [३] इति। अत्र भाविन्या सञ्ज्ञाया वर्त्तमानसञ्ज्ञाया वा सोम-शब्दो योजयितुं शक्यते। एवमुत्तरत्रापि यत्र यद्योग्यं तत्र तद्योजनीयम्। प्रस्तावेष्टिविष्णुपहोमवाक्यानि पूर्व्ववद्विभज्य योजनीयानि। 'मृगशीर्षमिति नक्षत्रमूर्त्तिसमूह नाम। 'इन्व-काः' इति मूर्त्तिविशेषाणां नाम। 'ओषधिराज्याभिजिति' शब्दाः तत्तदभिमानिदेवतावाचिनः॥

अथ चतुर्थस्येष्टिं विधत्ते। "रुद्रो वा अकामयत। पशु-मान्त्स्यामिति। स एतꣳ रुद्राये प्रय्यगवं चरुं पयसि निरव-पत्। ततो वै स पशुमानभवत्। पशुमान् ह वै भवति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। रुद्राय स्वाहार्द्रायै स्वाहा। पिन्वमानायै स्वाहा पशुभ्यः स्वाहेति" [४] इति। आर्द्रा नक्षत्रस्य प्राणाप्यायनकरी मूर्त्तिः 'पिन्व-मानाः', अत्रापि भागत्रयं पूर्व्ववद्व्याख्येयं॥

अथ पञ्चमस्येष्टिं विधत्ते। "ऋचा वा इयमलोमकासीत्। साकामयत। ओषधीभिर्वनस्पतिभिः प्रजायेयेति। सैतमदित्यै पुनर्वसुभ्यां चरुं निरवपत्। ततो वा इयमोषधीभिर्वनस्पतिभिः प्राजायत। प्रजायते ह वै प्रजया पशुभिः। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अदित्यै स्वाहा पुनर्वसुभ्यां स्वाहा। भूत्यै स्वाहा प्रजात्यै स्वाहेति" [५] इति। 'इयं' पृथिवी, पूर्व्वं 'अलोमका' ओषध्यादिलोम-

रहिता, 'रूचा' स्वस्मिन्नाधेयवस्तुशून्या, मार्दवरहिता, क्रूरा सती 'आसीत्'। तादृशी भूमिः 'ओषधीभिः' वनस्पतिभिश्च, 'प्रजायेयेति', कामयित्वा पूर्व्वकल्पसिद्धायै भूम्यै 'पुनर्वसुभ्यां' 'निरवपत्'। अन्यत् पूर्व्ववत् व्याख्येयं। 'आभूतिः' अदितेरेव बहुभवनसमर्था मूर्त्तिः, 'प्रजातिः' उत्पादनसमर्था मूर्त्तिः॥

अथ षष्ठस्येष्टिं विधत्ते। "बृहस्पतिर्वा अकामयत। ब्रह्मवर्चसी स्यामिति। स एतं बृहस्पतये तिष्याय नैवारं चरुं पयसि निरवपत्। ततो वै स ब्रह्मवर्चस्यभवत्। ब्रह्मवर्चसी ह वै भवति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। बृहस्पतये स्वाहा तिष्याय स्वाहा। ब्रह्मवर्चसाय स्वाहेति" [६] इति। भागत्रयं पूर्व्ववत्॥

अथ सप्तमस्येष्टिं विधत्ते। "देवासुराः संयत्ता आसन्। ते देवाः सर्पेभ्यः आश्रेषाभ्य आज्ये करम्भं निरवपन्। तानेताभिरेव देवताभिरुपानयन्। एताभिर्ह वै देवताभिर्द्विषन्तं भ्रातृव्यमुपनयति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। सर्पेभ्यः स्वाहाश्रेषाभ्यः स्वाहा। दन्दशूकेभ्यः स्वाहेति" [७] इति। असुरैः सह युद्धायुक्ता 'देवाः', असुराणां स्ववशीकरणाय दधिमिश्र-यवसक्तुरूपं 'करम्भ'शब्दाभिधेयं निरूप्य 'एताभिः' सर्पदेवताभिः, 'आश्रेषा'नक्षत्रदेवताभिश्च, करम्भतुष्टाभिः 'तान्' असुरान्, 'उपानयन्' समीपं प्रापितवन्तः। सर्पाणां मध्ये दंशनशीला 'दन्दशूकाः',। अन्यत् पूर्व्ववत्॥

अथाष्टमस्येष्टिं विधत्ते। "पितरो वा अकामयन्त। पितृलोक ऋध्नुयामेति। त एतं पितृभ्यो मघाभ्यः पुरोडाशꣳ षट्कपालं निरवपन्। ततो वै ते पितृलोक आर्ध्नुवन्। पितृलोके ह वा ऋध्नोति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। पितृभ्यः स्वाहा मघाभ्यः। स्वाहानघाभ्यः। स्वाहा गदाभ्यः। स्वाहाऽरुन्धतीभ्यः स्वाहेति" [८] इति। 'मघानक्षत्रस्यैव निष्पापमूर्त्तयो 'अनघाः', 'अगदाः' रोगरहिताः, मूर्त्तयः। अरुन्धत्या समाना मूर्त्तयः 'अरुन्धत्यः' रोधं प्रति बधमकुर्व्वत्यः। अन्यत् पूर्व्ववत्॥

अथ नवमस्येष्टिं विधत्ते। "अर्य्यमा वा अकामयत। पशुमान्त्स्यामिति। स एतमर्य्यम्णे फल्गुनीभ्यां चरुं निरवपत्। ततो वै स पशुमानभवत्। पशुमान् ह वै भवति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अर्य्यम्णे स्वाहा फल्गुनीभ्याꣳ स्वाहा। पशुभ्यः स्वाहेति" [९] इति। स्पष्टोऽर्थः॥

अथ दशमस्येष्टिं विधत्ते। "भगो वा अकामयत। भगी श्रेष्ठी देवानाꣳ स्यामिति। स एतं फल्गुनीभ्यां चरुं निरवपत्। ततो वै स भगी श्रेष्ठी देवानामभवत्। भगी ह वै श्रेष्ठी समानानां भवति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। भगाय स्वाहा फल्गुनीभ्याꣳ स्वाहा। श्रैष्ठ्याय स्वाहेति" [१०] इति। भगित्वं ऐश्वर्य्यादि-

षड्गुणयुक्तत्वम्। श्रेष्ठत्वमतिशयेन प्रशस्तत्वम्। पूज्यत्वमित्यर्थः। भागत्रयं पूर्व्ववत्॥

अथैकादशस्येष्टिं विधत्ते। "सविता वा अकामयत। श्रन्मे देवा दधीरन्। सविता स्यामिति। स एतꣳ सवित्रे हस्ताय पुरोडाशं द्वादशकपालं निरवपदाशूनां व्रीहीणाम्। ततो वै तस्मै श्रद्देवा अदधत। सविताभवत्। श्रद्ध वा अस्मै मनुष्याद-धते। सविता समानानां भवति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। सवित्रे स्वाहा हस्ताय स्वाहा। ददते स्वाहा पृणते स्वाहा। प्रयच्छते स्वाहा प्रतिगृभ्णते स्वाहेति" [११] इति। 'देवाः', सर्व्वे, 'मे' मदर्थं, 'श्रत्' विश्वासं, 'दधीरन्' धारयेयुः, सर्व्वेष्वपि कार्य्येषु मां विश्वस्युरित्यर्थः। ततोऽहं सर्व्वकार्य्याणां 'सविता' प्रेरकः, भूयासम्। षष्टिदिनैः शीघ्रं पच्यमाना व्रीहय 'आशवः', 'ददते' फलं दातुं सम्पादयित्रे, 'पृणते' न्यूनस्य फलस्य पर्त्तिहेतवे, 'प्रयच्छते' फलस्य दात्रे, 'प्रतिगृभ्णते' परैर्द-त्तस्य स्वीकर्त्रे, त एते हस्तनक्षत्रस्यैव मूर्त्तिविशेषाः। अन्यत् पूर्व्ववत्॥

अथ द्वादशेष्टिमाह। "त्वष्टा वा अकामयत। चित्रं प्रजां विन्देयेति। स एतं त्वष्ट्रे चित्रायै पुरोडाशमष्टाकपालं निरव-पत्। ततो वै स चित्रं प्रजामविन्दत। चित्रꣳ ह वै प्रजां विन्दते। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। त्वष्ट्रे स्वाहा चित्रायै स्वाहा। चैत्राय स्वाहा प्रजा-

यै स्वाहेति" [१२] इति। चित्रं नानाविधत्वं यथा भवति तथा पुत्रपौत्रदुहितृदौहित्ररूपेण नानाविधत्वं चित्रानक्षत्रस्य वैचित्र्यापादकं सामर्थ्यं चैत्रं। शेषं पूर्ववत्॥

अथ त्रयोदशस्येष्टिमाह। "वायुर्वा अकामयत। कामचारमेषु लोकेष्वभिजयेयमिति। स एतद्वायवे निष्ट्यायै गृष्ट्यै दुग्धं पयो निरवपत्। ततो वै स कामचारमेषु लोकेष्वभ्यजयत्। कामचारꣳ ह वा एषु लोकेष्वभि जयति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। वायवे स्वाहा निष्ट्यायै स्वाहा। कामचाराय स्वाहाभिजित्यै स्वाहेति" [१३] इति। 'कामचारः' सर्व्वत्र निवारकाभावेन स्वेच्छया सञ्चारः। 'निष्ट्या' स्वाती। सकृत्प्रसूता धेनु'र्गृष्टिः'। तस्याः सकाशात् 'दुग्धं', यत् 'पयः' क्षीरं तदेवात्र द्रष्टव्यम्। शेषं पूर्व्ववत्॥

अथ चतुर्द्दशस्येष्टिं विधत्ते। "इन्द्राग्नी वा अकामयेताम्। श्रैष्ठ्यं देवानामभिजयेवेति। तावेतमिन्द्राग्निभ्यां विशाखाभ्यां पुरोडाशमेकादशकपालं निरवपताम्। ततो वै तौ श्रैष्ठ्यं देवानामभ्यजयताम्। श्रैष्ठ्यꣳ ह वै समानानामभिजयति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। इन्द्राग्निभ्याꣳ स्वाहा विशाखाभ्यां स्वाहा। श्रैष्ठ्याय स्वाहाऽभिजित्यै स्वाहेति" [१४] इति। स्पष्टोऽर्थः॥

देवनक्षत्राणामिष्टिं विधाय पौर्णमासीदेवताया इष्टिं विधत्ते। "अथैतत् पौर्णमास्या आज्यं निर्वपति। कामो वै पौर्णमासी। काम आज्यं। कामेनैव कामꣳ समर्द्धयति।

क्षिप्रमेनꣳ सकाम उपनमति। येन कामेन यजते। सोऽत्र जुहोति। पौर्णमास्यै स्वाहा कामाय स्वाहा गत्यै स्वाहेति" [१५] इति। नक्षत्र वैलक्षण्यद्योतनाय 'अथ'शब्दः। तिथ्यभिमानिनी देवता पौर्णमासी न तु नक्षत्राभिमानिनी, तस्याञ्च तिथौ कर्मानुष्ठानेन सर्व्वकामप्राप्त्या 'पौर्णमास्याः', 'कामरूपत्वमुपचर्य्यते। 'आज्यस्य', सर्व्वैः काम्यमानत्वात् 'कामरूपत्वं। अतः 'कामरूपेणाज्येनैव 'कामरूपां पौर्णमासीदेवतां 'समर्द्धयति' परितोषयति। यजमानो 'येन कामेन', निमित्तभूतेन 'यजते' 'स कामः', 'क्षिप्रम्', एव 'एनं' यजमानं, 'उपनमति'। 'गतिः' कामानां विनाशः, अगतिरविनाशः, तदभिमानिन्यै देवतायै स्वाहुतमिदं हविः ॥

इति चतुर्थोऽनुवाकः।

## अथ पञ्चमोऽनुवाकः।

चतुर्थे देवनक्षत्राणामिष्टयो विहिताः। अथ पञ्चमे यमनक्षत्राणामिष्टयो विधीयन्ते। तत्र प्रथमस्येष्टिं विधत्ते। "मित्रो वा अकामयत। मित्रधेयमेषु लोकेष्वभिजयेयमिति। स एतं मित्रायानूराधेभ्यश्चरुं निरवपत्। ततो वै स मित्रधेयमेषु लोकेष्वभ्यजयत्। मित्रधेयꣳ ह वा एषु लोकेष्वभिजयति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। मित्राय स्वाहानूराधेभ्यः स्वाहा। मित्रधेयाय

स्वाहाभिजित्यै स्वाहेति" [१] इति। मित्रेणाप्तेन पुरुषेण धेयं सम्पादनीयं धनं 'मित्रधेयम्',। स्पष्टमन्यत्॥

अथ द्वितीयस्येष्टिं विधत्ते। "इन्द्रो वा अकामयत। ज्यैष्ठ्यं देवानामभिजयेयमिति। स एतमिन्द्राय ज्येष्ठाये पुरोडाशमेकादशकपालं निरवपन्महाव्रीहीणाम्। ततो वै स ज्यैष्ठ्यं देवनामभ्यजयत्। ज्यैष्ठ्यꣳ ह वै समानानामभिजयति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। इन्द्राय स्वाहा ज्येष्ठाये स्वाहा। ज्यैष्ठाय स्वाहाभिजित्यै स्वाहेति" [२] इति। 'ज्यैष्ठं' अतिशयेन प्रशस्तत्वं वृद्धत्वञ्च, 'महाव्रीहयः' स्थूलव्रीहयः,। स्पष्टमन्यत्॥

अथ तृतीयस्येष्टिं विधत्ते। "प्रजापतिर्वा अकामयत। मूलं प्रजां विन्देयेति। स एतं प्रजापतये मूलाय चरुं निरवपत्। ततो वै स मूलं प्रजामविन्दत। मूलꣳ ह वै प्रजां विन्दते। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। प्रजापतये स्वाहा। मूलाय स्वाहा। प्रजायै स्वाहेति" [३] इति। अत्र 'प्रजापति'शब्देन निर्ऋतिर्विवक्ष्यते। यद्यप्यसावुग्रदेवता तथापि हविषा तुष्टा सती न बाधते। किन्त्वनिष्टनिवारणेन पालयति। तस्मात् प्रजापतित्वमुपपन्नं कुलाचारस्य निर्वाहकाः पुत्रादिरूपाः प्रजा मूलमिति विशेष्यते। तथा स्वस्त्यैस्याप्तप्रजामूलबलमिति लोकैर्व्यवह्रियते, तादृशीमुभयविधां प्रजां लभेयेति 'निर्ऋतेः' कामना। स्पष्टमन्यत्॥

अथ चतुर्थस्येष्टिं विधत्ते। "आपो वा अकामयन्त।

समुद्रं काममभिजयेमेति । ता एतमग्नोऽषाढाभ्यश्चरुं निरव- पन् । ततो वै ताः समुद्रं काममभ्यजयन् । समुद्रꣳ ह वै काममभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नः स्वाहाऽषाढाभ्यः स्वाहा । समुद्राय स्वाहा कामाय स्वाहा । अभिजित्यै स्वाहेति" [४] इति । योऽयं 'समुद्रः' जलराशिः, तमेतं जलराशिं 'काममभिजयेय' स्वेच्छया वशीकुर्मः, 'इति' एवं, देवतानां कामना । यज- मानस्तत्र 'समुद्रं', अतिप्रभुत्वेन समुद्रसदृशं, 'कामम्' अभि- लषितार्थं, अभिजयति । स्पष्टमन्यत् ॥

अथ पञ्चमस्येष्टिं विधत्ते । "विश्वे वै देवा अकामयन्त । अनपजय्यं जयेमेति । त एतं विश्वेभ्यो देवेभ्योऽषाढाभ्यश्चरुं नि- रवपन् । ततो वै तेऽनपजय्यमभ्यजयन् । अनपजय्यꣳ ह वै जय- ति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । विश्वेभ्यो देवेभ्यः स्वाहाऽषाढाभ्यः स्वाहा । अनपज- य्याय स्वाहाभिजित्यै स्वाहेति" [५] इति । जेतुमशक्यः शत्रुः 'अनपजय्यः', तं 'जयेमेति', विश्वेषां देवानां कामना, तस्य जेतुमशक्यस्य शत्रोरभिमानी देवोऽप्यनपजय्यः । तस्य जयाभि- मानी देवः 'जितिः' । स्पष्टमन्यत् ॥

अथ षष्ठस्येष्टिं विधत्ते । "ब्रह्म वा अकामयत । ब्रह्मलोक- मभिजयेयमिति । तदेतं ब्रह्मणेऽभिजित चरुं निरवपत् । ततो वै तद्ब्रह्मलोकमभ्यजयत् । ब्रह्मलोकꣳ ह वा अभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति ।

ब्रह्मणे स्वाहाभिजिते स्वाहा। ब्रह्मलोकाय स्वाहाऽभिजित्यै स्वाहेति" [६] इति। 'ब्रह्मलोकः' सत्यलोकः, तत् स्वामित्वं कामयमानो ब्राह्मणजातियुक्तः पुरुषो 'ब्रह्म'शब्देन विवक्षितः। 'अभिजित्'सञ्ज्ञकञ्च उत्तराषाढश्रवणयोर्मध्यवर्त्ति नक्षत्रं, तदभिमानिदेवस्यापि ब्रह्मेति नामधेयं। स्पष्टमन्यत्॥

अथ सप्तमस्येष्टिं विधत्ते। "विष्णुर्वा अकामयत। पुण्यꣳ श्लोकꣳ शृण्वीय। न मा पापी कीर्त्तिरागच्छेदिति। स एतं विष्णवे श्रोणायै पुरोडाशं त्रिकपालं निरवपत्। ततो वै स पुण्यꣳ श्लोकमशृणुत। नैनं पापी कीर्त्तिरागच्छत्। पुण्यꣳ ह वै श्लोकꣳ शृणुते। नैनं पापी कीर्त्तिरागच्छति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। विष्णवे स्वाहा श्रोणायै स्वाहा। श्लोकाय स्वाहा श्रुताय स्वाहेति" [७] इति। 'पुण्यश्लोकः' स्तुतिः, 'पापकीर्त्ति' निन्दा, 'श्रोणा' श्रवणनक्षत्रं, 'श्लोकाः' स्तुत्यभिमानी देवः। 'श्रुतः' श्रवणाभिमानी देवः। स्पष्टमन्यत्॥

अथाष्टमस्येष्टिं विधत्ते। "वसवो वा अकामयन्त। अग्रं देवतानां परीयामेति। त एतं वसुभ्यः श्रविष्ठाभ्यः पुरोडाशमष्टाकपालं निरवपन्। ततो वै तेऽग्रं देवतानां पर्यायन्। अग्रꣳ ह वै समानानां पर्येति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। वसुभ्यः स्वाहा श्रविष्ठाभ्यः स्वाहा। अग्राय स्वाहा परीत्यै स्वाहेति" [८] इति। देवतानां मध्ये 'अग्रं' मुख्यत्वं, 'परीयाम' परितः प्राप्नुयामः,

धनिष्ठाख्यनक्षत्रमूर्त्तयः 'श्रविष्ठाः', 'अग्र'शब्देन श्रैष्ठ्याभिमानी देवः । स्पष्टमन्यत् ॥

अथ नवमस्येष्टिं विधत्ते । "इन्द्रो वा अकामयत । दृढोऽशिथिलः स्यामिति । स एतं वरुणाय शतभिषजे भेषजेभ्यः पुरोडाशं दशकपालं निरवपत् कृष्णानां व्रीहीणाम् । ततो वै स दृढोऽशिथिलोऽभवत् । दृढो ह वा अशिथिलो भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । वरुणाय स्वाहा शतभिषजे स्वाहा । भेषजेभ्यः स्वाहेति" [८] इति । 'इन्द्र'शब्देन परमैश्वर्य्ययोगाद्वरुण उच्यते । स चैश्वर्य्यं 'अशैथिल्यं', च 'कामयामास । स्वस्य कार्य्यक्षमत्वं 'दार्ढ्यं', परैरभिभवाभावः 'अशैथिल्यं', 'शतभिषक्', नक्षत्रं । 'भेषजानि' औषधाभिमानिनीर्देवताशरीराणि, वरुणनक्षत्रभेषजेभ्यो देवेभ्यः कृष्णवर्णानां 'व्रीहीणां', 'पुरोडाशं', निरुप्य दार्ढ्यमशैथिल्यञ्च प्राप्तवान् । स्पष्टमन्यत् ॥

अथ दशमस्येष्टिं विधत्ते । "अजो वा एकपादकामयत । तेजस्वी ब्रह्मवर्चसी स्यामिति । स एतमजायैकपदे प्रोष्ठपदेभ्यश्चरुं निरवपत् । ततो वै स तेजस्वी ब्रह्मवर्चस्यभवत् । तेजस्वी ह वै ब्रह्मवर्चसी भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अजायैकपदे स्वाहा प्रोष्ठपदेभ्यः स्वाहा । तेजसे स्वाहा ब्रह्मवर्चसाय स्वाहेति" [१०] इति । 'अजः' गमनशीलः, इदानीन्तन-जन्मरहितो वा, एको जगदुपकारकः पादो यस्यासौ 'एकपात्' । अथ वा एक एव पद्यते

गच्छतीति 'एकपात्' सूर्य्यः, एकाकी चरतीति श्रुतेः। 'तेजस्वी' शरीरकान्तियुक्तः। 'ब्रह्मवर्चसी' वेदशास्त्राद्यध्ययनादिजन्य-कान्तियुक्तः। स्पष्टमन्यत्॥

अथैकादशस्येष्टिं विधत्ते। "अहिर्वै बुध्नियोऽकामयत। इमां प्रतिष्ठां विन्देयेति। स एतमहये बुध्नियाय प्रोष्ठपदेभ्यः पुरोडाशं भूमिकपालं निरवपत्। ततो वै स इमां प्रतिष्ठा-मविन्दत। इमाꣳ ह वै प्रतिष्ठां विन्दते। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अहये बुध्नियाय स्वाहा प्रोष्ठपदेभ्यः स्वाहा। प्रतिष्ठायै स्वाहेति" [११] इति। नहीयत इति 'अहिः'। बुध्ने मूले सूर्य्यादौ भवः 'बुध्नियः', 'इमां' भूमिं, 'प्रतिष्ठां' स्वनिवासाय प्रतिष्ठितां। भूमिकपालस्य स्वरूपं बोधायन आह, कपालमात्रं भूम्युपरिलिख्याङ्गारमधि-वर्त्तयति तस्यैककपालवत् संस्कार इति। तथाविधभूमिकपा-लोपेतपुरोडाशान् निरूप्य स्वापेक्षितं फलमलभत। स्पष्टमन्यत्॥

अथ द्वादशस्येष्टिं विधत्ते। "पूषा वा अकामयत। पशु-मान्त्स्यामिति। स एतं पूष्णे रेवत्यै चरुं निरवपत्। ततो वै स पशुमानभवत्। पशुमान् ह वै भवति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। पूष्णे स्वाहा रेवत्यै स्वाहा। पशुभ्यः स्वाहेति" [१२] इति। स्पष्टोऽर्थः॥

अथ त्रयोदशस्येष्टिं विधत्ते। "अश्विनौ वा अकामयेताम्। श्रोत्रस्विनावबधिरौ स्यावेति। तावेतमश्विभ्यामश्वयुग्भ्यां पुरो-डाशं द्विकपालं निरवपताम्। ततो वै तौ श्रोत्रस्विनावबधिरा-

वभवताम्। श्रोत्रस्वी ह वा अवधिरो भवति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नि-भ्याꣳ स्वाहाऽश्वयुग्भ्याꣳ स्वाहा। श्रोत्राय स्वाहा श्रुत्यै स्वा-हेति" [१३] इति। योजनादिव्यवहितवार्त्तायाः श्रवणसामर्थ्यं 'श्रोत्रस्विनं', वार्द्धकेऽपि वाधिर्य्यराहित्यम्, 'वधिरत्वं' 'श्रो-त्राय' इत्यनेन दूरवार्त्ताश्रवणसामर्थ्यप्रदो देवो विवक्षितः। 'श्रुत्यै' इत्यनेन वाधिर्य्यनिवारको देवविशेषः। स्पष्टमन्यत्॥

अथ चतुर्द्दशस्येष्टिं विधत्ते। "यमो वा अकामयत। पि-तृणाꣳ राज्यमभिजयेयमिति। स एतं यमायापभरणीभ्यश्चरुं निरवपत्। ततो वै स पितृणाꣳ राज्यमभ्यजयत्। समानानाꣳ ह वै राज्यमभिजयति। य एतेन हविषा यजते। य उ चै-नदेवं वेद। सोऽत्र जुहोति। यमाय स्वाहापभरणीभ्यः स्वा-हा। राज्याय स्वाहाभिजित्यै स्वाहेति" [१४] इति। यथा यमस्य पितृराज्यप्राप्तिः एवमन्यस्य यजमानस्यापि स्वसमा-नानां मध्ये राज्यं भवति। स्पष्टमन्यत्॥

तदेवं यमनक्षत्राणामिष्टीरभिधायामावास्यादेवताया इष्टिं विधत्ते। "अथैतदमावास्याया आज्यं निर्वपति। कामो वा अमावास्या। काम आज्यं। कामेनैव कामꣳ समर्द्धयति। क्षिप्रमेनꣳ सकाम उपनयति। येन कामेन यजते। सोऽत्र जुहोति। अमावास्यायै स्वाहा कामाय स्वाहा गत्यै स्वाहेति" [१५] इति। पौर्णमासीवाक्यवद्व्याख्येयं॥

इति पञ्चमोऽनुवाकः॥

अथ षष्ठोऽनुवाकः।

पञ्चमेऽनुवाके यमनक्षत्राणां इष्टय उक्ताः। अथ षष्ठे चन्द्रमसः सायुज्यꣳ सलोकतामाप्नोति प्रभृतीनामिष्टयो विधीयन्ते। तत्रादौ चन्द्रमस इष्टिं विधत्ते। "चन्द्रमा वा अकामयत। अहोरात्रानर्द्धमासान्मासानृतून्संवत्सरमाप्त्वा। चन्द्रमसः सायुज्यꣳ सलोकतामाप्नुयामिति। चन्द्रमसे प्रतीदृश्यायै पुरोडाशं पञ्चदशकपालं निरवपत्। ततो वै सोऽहोरात्रानर्द्धमासान्मासानृतून्संवत्सरमाप्त्वा। चन्द्रमसः सायुज्यꣳ सलोकतामाप्नोत्। अहोरात्रान् ह वा अर्द्धमासान्मासानृतूꣳत्संवत्सरमाप्त्वा। चन्द्रमसः सायुज्यꣳ सलोकतामाप्नोति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। चन्द्रमसे स्वाहा प्रतीदृश्यायै स्वाहा। अहोरात्रेभ्यः स्वाहार्द्धमासेभ्यः स्वाहा। मासेभ्यः स्वाहर्त्तुभ्यः स्वाहा। संवत्सराय स्वाहेति" [१] इति। योऽयमस्मिन् कल्पे मनुष्यो भाविनीं वृत्तिमाश्रित्य 'चन्द्रमाः', सोऽयं 'अहोरात्रार्द्धमासमासर्तुसंवत्सर' देवतानां लोकप्राप्तिद्वारा क्रमेण 'चन्द्रमसः', सायुज्यसालोक्ययोः प्राप्तिं कामितवान्। यस्मिन् लोके चन्द्रमा निवसति, तस्मिन्नेव लोके स्वस्यापि निवासः 'सालोक्यं'। तेन सहैकस्मिन् गृहे निवासः 'सायुज्यं'। तत् सर्व्वं कामयित्वा वर्त्तमानाय 'चन्द्रमसे' देवाय, 'प्रतीदृश्यायै' जलादौ चन्द्रप्रतिबिम्बत्वेनदृश्यमानायै, तदभिमानिनीदेवतायै, चरुं 'पुरोडाशं,' निरूप्य स्वाभीष्टं प्राप्नोत्। एवमन्योऽपि यजमानस्तद्वेदिता वा तत् सर्व्वं प्राप्नोति। स्पष्टमन्यत्॥

अथाऽहोरात्रयोरिष्टिं विधत्ते। "अहोरात्रे वा अकामयेताम्। अत्यहोरात्रे मुच्येवहि। न नावहोरात्रे आप्नुयातामिति। ते एतमहोरात्राभ्यां चरुं निरवपताम्। द्वयानां व्रीहीणाम्। शुक्लानां कृष्णानाञ्च। सवात्योर्दुग्धे। श्वेतायै च कृष्णायै च। ततो वै ते अत्यहोरात्रे अमुच्येते। नैने अहोरात्रे आप्नुताम्। अति ह वा अहोरात्रे मुच्यते। नैनमहोरात्रे आप्नुतः। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अह्ने स्वाहा रात्रियै स्वाहा। अतिमुक्त्यै स्वाहेति" [२] इति। अत्र हि लोके सर्व्वेपि प्राणिनोऽहोरात्रदेवतयोर्वशे वर्त्तन्ते। ते हि पुनःपुनरावर्त्तमाने प्राणिनामायुः सहसा क्षपयित्वा तान्मारयन्ति। एवं सति भाविनीं वृत्तिमाश्रित्य 'अहोरात्रनामकौ' अस्मिन् कल्पे द्वौ पुरुषावेवम् 'अकामयेतां'। वर्त्तमाने 'अहोरात्रे' द्वे अतिक्रम्य तत्पारतन्त्र्यादावां द्वौ 'मुच्येवहि'। एते वा 'अहोरात्रे', 'नौ' उभौ, 'नाप्नुयातां' आवयोरायुः क्षपयितुं समर्थो मा भूतामिति, 'ते' भाविनी अहोरात्रे, वर्त्तमानाभ्यां शुक्ल-कृष्णव्रीहिद्वयचरुं क्षीरे 'निरवपतां'। तच्च क्षीरं श्वेतकृष्णवर्णयोः 'सवात्योः', धेन्वोः सम्बन्धि। एकमातृजन्ये द्वे धेनू 'सवात्यौ', तयोरेका 'शुक्ला', इतरा 'कृष्णा', तादृश्योर्'दुग्धे' चरुं निरूप्य यथोक्तं फलमलभेतां। एवमन्योऽपि यजमानो यथोक्तं फलमाप्नोति। स्पष्टमन्यत्॥

अथोषसेष्टिं विधत्ते। "उषा वा अकामयत। प्रियादित्यस्य

सुभगा स्यामिति। सैतमुषसे चरुं निरवपत्। ततो वै सा प्रियादित्यस्य सुभगाभवत्। प्रियो ह वै समानानाꣳ सुभगो भवति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। उषसे स्वाहा व्युष्ट्यै स्वाहा। व्यूषुष्यै स्वाहा व्युच्छन्त्यै स्वाहा। व्युष्टायै स्वाहेति''[३] इति। येयम् 'उषाः', देवी सेयमादित्यप्रीतिं सौभाग्यञ्च कामयमाना पूर्व्वकल्पस्य 'उषसे', 'चरुं', निरूप्य स्वेष्टं लब्धवती। एवमन्यो यजमानः तेन 'हविषा', स्वसमानानां सर्व्वेषां प्रियः सौभाग्ययुक्तश्च भवति। 'उषाः' तत्कालदेवता, 'व्युष्टिः' तस्या देवतायाः कार्य्यं, प्रभातत्वं, तच्च भविष्यद्वर्त्तमानातीतत्वभेदैस्त्रिविधं। तदभिमानिनीभ्यो देवताभ्यः उपहोमा द्रष्टव्याः॥

अथ नक्षत्रदेवताया इष्टिं विधत्ते। ''अथैतस्मै नक्षत्राय चरुं निर्वपति। यथा त्वं देवानामसि। एवमहं मनुष्याणां भूयासमिति। यथा ह वा एतद्देवानाम्। एवꣳ ह वा एष मनुष्याणां भवति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। नक्षत्राय स्वाहोदेष्यते स्वाहा। उद्यते स्वाहोदिताय स्वाहा। हरसे स्वाहा भरसे स्वाहा। भ्राजसे स्वाहा तेजसे स्वाहा। तपसे स्वाहा ब्रह्मवर्चसाय स्वाहेति'' [४] इति। 'नक्षत्र'सामान्याभिमानी यो देवः तस्मै 'चरुं', 'निर्वर्त्तयेत्'। तत्र मन्त्रो यथात्वमित्यादिः। स च बोधायनेन स्पष्टीकृतः, 'अथैतस्मै' नक्षत्राय चरुमिति निर्वपणकाले यजमानायतन उपविश्य। यजमानो जपति। यथात्वं देवानामस्येव-

मह्व मनुष्याणां भूयासं" इति। हे नक्षत्रदेव 'त्वं', 'देवानां', मध्ये 'यथा', उत्तमोऽसि एवं 'मनुष्याणां', मध्ये 'अहं', उत्तमः 'भूयासम्', इति मन्त्रार्थः। एतमर्थं कामयमान एवात्राधिकारी। अतो यजमानो नक्षत्रदेववदुत्कृष्टो भवति। योऽयं नक्षत्रदेवः, याश्च तदुदयस्य भविष्यद्वर्त्तमानातीतत्वदशाः, या च तस्य अनिष्टहरणशक्तिः, यापि तस्येष्टसम्पादनशक्तिः, यच्च तदीयं 'भाजः' रश्मिरूपं, यदपि तदीयं 'तेजः' शरीरकान्तिः, यदपि तत्प्रसादलभ्यं 'तपः' ब्रह्मवर्चसं, च एतदभिमानोदेवताभ्यः सर्व्वाभ्य उपहोमाः कर्त्तव्याः॥

अथ सूर्य्यस्येष्टिं विधत्ते। "सूर्यो वा अकामयत। नक्षत्राणां प्रतिष्ठा स्यामिति। स एतꣳ सूर्याय नक्षत्रेभ्यश्चरुं निरवपत्। ततो वै स नक्षत्राणां प्रतिष्ठाऽभवत्। प्रतिष्ठा ह वै समानानां भवति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। सूर्याय स्वाहा नक्षत्रेभ्यः स्वाहा। प्रतिष्ठायै स्वाहेति" [५] इति। 'नक्षत्रादिज्योतिषां सर्व्वेषां 'प्रतिष्ठां' अधिपतिः, स्यामिति कामयमानः 'सूर्यः', पूर्व्वकल्पसिद्धाय 'सूर्य्याय', 'नक्षत्रेभ्यश्च', हविर्निरूप्य ज्योतिषामधिपतिरभवत्। एवं यजमानोऽपि 'समानानां', अधिपतिर्भवति। स्पष्टमन्यत्॥

अथादितेरिष्टिं विधत्ते। "अथैतमदित्यै चरुं निर्वपति। इयं वा अदितिः। अस्यामेव प्रतितिष्ठति। सोऽत्र जुहोति। अदित्यै स्वाहा प्रतिष्ठायै स्वाहेति" [६] इति। येयं भूमिः

मैव 'अदितिः', तस्यै निर्वपन् भूमावेव प्रतिष्ठितो भवति।

अथ विष्णोर्यागं विधत्ते। "अथैतं विष्णवे चरुं निर्वपति। यज्ञो वै विष्णुः। यज्ञ एवान्ततः प्रतितिष्ठति। सोऽत्र जुहोति। विष्णवे स्वाहा यज्ञाय स्वाहा। प्रतिष्ठायै स्वाहेति" [७] इति। 'विष्णु'शब्देन सर्व्वाङ्गव्यापिना यज्ञस्य विवक्षितत्वात् 'विष्णवे', हविर्निर्वपन् 'अन्ततः' समाप्तिपर्य्यन्ते यज्ञे, 'प्रतिष्ठितो भवति। स्पष्टमन्यत्॥

अग्निर्वा अकामयतेत्यारभ्य विष्णुचरुपर्य्यन्तमिदं नक्षत्रसत्ररूपमेकमेव कर्म्म। तथा च बोधायनः, अथातो नक्षत्रेष्टिं व्याख्यास्याम इत्युपक्रम्य सप्रपञ्चं व्याख्याय अन्ते स्पष्टमुदाजहार, नक्षत्रसत्रेण ज्योतिरानन्त्याय ज्योतिषां यजते। तेनेष्ट्वा पापं निर्मुच्य अपपुनर्मृत्युं जयतीति ह स्माह बोधायन इति॥

अत्र मीमांसादशमाध्यायस्य चतुर्थपादे चिन्तितम्।

नक्षत्रेष्ट्युपहोमादिर्नारिष्टादेर्निवर्त्तकः।
समुच्चितो वा कार्य्यैक्यादाद्योऽन्त्यो पूर्व्वभेदतः॥

सन्ति नक्षत्रेष्टौ अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा। अम्बायै स्वाहा दुलायै स्वाहेत्यादय उपहोममन्त्राः। प्रकृतौ प्रधानहोमादूर्ध्वं नारिष्टहोमो विहितः, नारिष्टान् होमान् जुहोतीत्युक्तत्वात्। दश ते तनुवो यज्ञयज्ञिया इत्यादयस्तत्र मन्त्राः। अयमेको विषयः॥ तथा श्येने श्रूयते, लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्तीति प्रकृता उपवीतं विहितं, उपव्ययत इति। अयं द्वितीयो विषयः॥ तथा पृष्ठ्ये षडहे

श्रूयते, मध्वाशयेत् घृतं वेति। प्रकृतौ श्रुतं, पयोव्रतं ब्राह्मणस्य यवागू राजन्यस्यामिक्षा वैश्यस्येत्ययं तृतीयो विषयः॥ तत्रोपहोमनिवीतमध्वशनानि क्रमेण नारिष्ठहोमोपवीत पयोव्रतानां निवर्त्तकानि। कुतः कार्य्यैक्यात्। उपहोमनारिष्ठहोमयोस्तावज्जुहोति, शब्दैक्यतदर्थैक्याभ्यां कार्यैक्यं प्रतीयते। अशनव्रतयोः शब्दभेदेप्यर्थभेदो नास्ति। निवीतोपवीतयोः शब्दार्थभेदेपि वीतशब्दस्मारितं कार्य्यमेकं स्यात्। तस्माद्वाध इति पूर्व्वः पक्षः। भवतु नाम दृष्टार्थेषु कार्य्यैक्यं दृष्ट्वा वाधः, उदाहृतानित्वपूर्व्वार्थानि, अपूर्व्वञ्च विध्येकगम्यतया विधिभेदेन भिद्यते। तस्मात् कार्य्यभेदात् समुच्चयोऽभ्युपगन्तव्यः। नच निवीतोपवीतयोर्विरोधः शङ्कनीयः। वासोभ्यां तदुभयोपपत्तेः। नापि पयोव्रतस्य दृष्टार्थत्वम्। अन्येन पयसा तृप्तिपुष्ट्यसम्भवात्। उदाहरणद्वये कृत्वा चिन्ता चास्तु। पञ्चमाध्यायस्य द्वितीयपादे चिन्तितं.।

नक्षत्रेष्ट्युपहोमाः किं नारिष्टेभ्यः पुरा न वा।
प्रत्यक्षपाठान् मुख्यस्य सामीप्याद्यास्तु पूर्व्वता॥
प्रकृते प्रथमो बोधो वैकृते चरमस्ततः।
नारिष्ठहोमाः पूर्व्वंस्युरुपहोमास्तु पृष्ठतः॥

अग्न्यादिदेवतायुक्तानां कृत्तिकादिनक्षत्राणामिष्टयः काम्या विहिताः। अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालमित्यादयः। तत्र प्रधानहोमाः, "अग्निर्नः पातु कृत्तिकाः" इत्यादि याज्यानुवाक्यापुरस्सरं श्रूयन्ते। तत्रोपहोमाः एवमाम्नाताः, सोऽत्र

जुहोति। अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा। अम्बायै स्वाहा दुलायै स्वाहेत्यादिनारिष्ठहोमाश्च चोदकेन प्राप्ताः। इश्च ते तनुवो यज्ञ इत्यादिभिर्मन्त्रैराज्याहुतयोर्नारिष्ठहोमाः। एतेभ्यो नारिष्ठहोमेभ्यः पूर्व्वमुपहोमाः कर्त्तव्याः। कुतः अष्टाकपालं निर्वपेत्, सोऽत्र जुहोतीति प्रत्यक्षपाठेन मुख्यमामीप्यमुभयहोमानां प्रतीयते। तच्चातिदिष्टैर्नारिष्ठहोमैर्व्यवधाने बाध्येत। तस्मादुपहोमानां पूर्व्वत्वमितिप्राप्ते ब्रूमः। नक्षत्रेष्टिरूपा विकृतिर्विधीयमाना स्वोपकारकमङ्गजातमपेक्षते। तदा चोदकः प्राकृतं नारिष्ठहोमादिकमङ्गं बोधयति। प्रत्यक्षवाक्यन्तु वैकृतमुपहोमादिकं। तयोर्म्मध्ये क्लृप्तोपकारतया नारिष्ठहोमाद्यङ्गत्वं सहसा बुध्यते। उपहोमाद्यङ्गतात्वुपकारे कल्पिते पश्चाद् बुद्ध्यते। ततः प्रधानप्रत्यासत्त्या नारिष्ठहोमाः पूर्व्वमनुष्ठेयाः। उपहोमाः पश्चादनुष्ठेयाः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे तृतीयकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः॥६॥

समाप्तश्च प्रथमप्रपाठकः॥

---

# तैत्तिरीय-ब्राह्मणभाष्ये

## तृतीयकाण्डे चतुर्थप्रपाठके

### प्रथमोऽनुवाकः ।



यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
नक्षत्रेष्ट्य आम्नाताः प्रथमे हि प्रपाठके ।
यौ दर्शपूर्णमासौ च दृष्टीनां प्रकृतिर्हि सा ॥
तौ तु प्रपाठकौ पूर्वं मन्त्रव्याख्याप्रसङ्गतः ।
व्याख्याताववनुवाकार्थमात्रमत्र पुनर्ब्रुवे* ॥
दशानुवाका एकस्मिन् तदर्थास्तु क्रमादिमे ।
वत्सापाकरणं बर्हिर्दोहो निर्वापकण्डने ॥
पेषणञ्च कपालानि पुरोडाशश्च वेदिका ।
दध्याबर्हिःसादनञ्च एवं पाठश्च ईरितः ।
एकादशानुवाकाः स्युरुत्तरस्मिन् प्रपाठके ॥
स्रुक्संमार्गौ मार्ज्जनार्थान् दर्भानग्नौ विनिक्षिपेत् ।
पत्नीसन्नहनं चाज्योत्पवनं स्रुचग्रहः ॥
स्रुक्सादनं तथाग्नीरोडशेडाभक्षणादिकं ।
प्रस्तरप्रहराद्येवं पत्नीयोक्त्रविमोचनं ॥
उपवेशपरित्यागः प्रपाठेस्मिन् समीरितः ।

* तैत्तिरीयसंहिताया प्रथमप्रपाठके एतत् प्रपाठकद्वयस्य मन्त्रार्थो द्रष्टव्यः ।

अक्षरार्थः संहितायाः भाष्य एवावगम्यतां ॥
प्रपाठके चतुर्थे तु अथ पूरुषपूर्व्वकः ।
उच्यते सूत्रकारेण सविस्पष्टमुदाहृतः ॥ इति ॥

तत्रापस्तम्ब आह । पञ्चाहः पुरुषमेधो ब्राह्मणो राजन्यो-वा यजेत, ओजो वीर्यमाप्नोति, सर्व्वा व्युष्टीर्व्यश्नुत एकादशयूपे-ष्वेकादशाग्नीषोमीयाः पञ्चसारदीयवद्द्वान्यग्निष्टोमो वोपो-त्तमो देवसवितस्तत् सवितुर्विश्वानि देवसवितरिति तिस्रः सावित्रीर्हुत्वा मध्यमेऽहन्यश्रूनुपाकरोति। इयानैकादशिना-नुपाकृत्य पुरुषान् ब्रह्मणे ब्राह्मणमालभत इत्येतद्यथासमा-म्नातं तान्यूपान्तरालेषु धारयन्त्युपाकृतं। दक्षिणतोऽवस्थाय ब्रह्मा सहस्रशीर्षा पुरुष इति पुरुषेण नारायणेन पराचानुशꣳ-सति। पर्य्यग्निकृतानुदीचीनान् प्रोत्सृजत्याज्येन तद्देवता आ-हुतीर्हुत्वा इयैरेकादशिनान् सꣳस्थापयन्तीति। तत्र मनुष्य-रूपाणां पशूनां विधायके चतुर्थप्रपाठक एकोनविंशति-सङ्ख्याका अनुवाकाः सन्ति ॥

तत्र प्रथमानुवाकमाह । "ब्रह्मणे ब्राह्मणमालभते । क्षत्रा-य राजन्यम् । मरुद्भ्यो वैश्यम् । तपसे शूद्रम् । तमसे तस्करम् । नारकाय वीरहणम् । पाप्मने क्लीबम् । आक्रयायायोगूम् । कामाय पुꣳश्चलूम् । अतिक्रुष्टाय मागधम्" [१] इति । अत्र चतुर्थ्यन्ता देवताः, द्वितीयान्ताः पशवः, आलभत इति । सर्व्वत्राऽनुवर्त्तते । 'ब्रह्म' ब्राह्मणजात्यभिमानी देवः । तस्मै कश्चिद्ब्रह्मवर्चसयुक्तं 'ब्राह्मण'जातीयं पुरुषम्'आलभते' । क्षत्रिय

जात्यभिमानी देवताय कश्चित् क्षत्रियजातीयं, देववैश्येभ्यो 'मरुद्भ्यः', मनुष्य'वैश्यं', कृच्छ्रचान्द्रायणादिदुःखरूपतपो-देवाय दुःखेभ्यो जीवनं'शूद्रं', अन्धकारदेवाय तमःप्रियं 'चोरं', 'नरक'स्वामिने 'वीरहणम्'अग्न्युद्वासिनं, वीरहा वा एष देवानां योग्निमुद्वासयत इति हि ब्राह्मणं। 'पाप'स्वा-मिने नपुंसकं, 'आक्रयाय' सर्व्वद्रव्यक्रयकारिदेवाय, 'अयोगूं' अयोग्यस्य अशास्त्रीयस्य कर्त्तारं, 'काम'देवाय 'पुंश्चलीं' सा-धारणस्त्रियं, 'अतिक्रुष्टाय' अतिनिन्दितदेवाय, 'मागधं' क्ष-त्रियायां वैश्येनोत्पादितं॥

इति प्रथमोऽनुवाकः॥

अथ द्वितीयोऽनुवाकः।

अथ द्वितीयानुवाकमाह। "गीताय सूतम्। नृत्ताय शैलूषम्। धर्म्माय सभाचरम्। नर्म्माय रेभम्। नरिष्ठायै भीमलम्। हसाय कारिम्। आनन्दाय स्त्रीषखम्। प्रमुदे कुमारीपुत्रम्। मेधायै रथकारम्। धैर्य्याय तक्षाणम्" [२] इति। 'गीताभिमानिने 'सूतं' ब्राह्मण्यां क्षत्रियेणोत्पादितं गानजीविनं, 'नृत्ताभिमानिने''शैलूषं' अन्यस्मै स्वभार्य्याप्रदा-ननिमित्तकेनान्नेन जीविनं, धर्म्माभिमानिने सभायां नित्यं चरन्तं धर्म्मस्य प्रवक्तारं, 'नर्म्माय' विनोदाभिमानिने'रेभं' मेधाविनं चाटूक्तिकुशलं, 'नरिष्ठायै' नरपुरुषैर्न्नास्त्रियस्थि-ता 'नरिष्ठा' परतन्त्राभिमानी तस्यै देवतायै 'भीमलं' भीरुं

चपलाक्षं, हास्याभिमानिने 'कारिं' नृत्यन्निव यो गच्छति तादृशं विकटगमनकारिणं, आनन्दाभिमानिने 'स्त्रीषखं' स्त्रीणां प्रियं, 'प्रमुदे' प्रकृष्टहर्षाभिमानिने 'कुमारीपुत्रं' दुहितुः पुत्रं, 'मेधायै' ग्रन्थार्थधारणाभिमानिन्यै 'रथकारं' रथस्य कर्त्तारं निपुणमतिं, धैर्य्याभिमानिने 'तक्षाणम्' तक्षकं वर्द्धकिं ॥

इति द्वितीयोऽनुवाकः ।

---

अथ तृतीयोऽनुवाकः ।

अथ तृतीयानुवाकमाह । "श्रमाय कौलालम् । मायायै कार्म्मारम् । रूपाय मणिकारम् । शुभे वपम् । शरव्याया इषुकारम् । हेत्यै धन्वकारम् । कर्म्मणे ज्याकारम् । दिष्टाय रज्जुसर्गम् । मृत्यवे मृगयुम् । अन्तकाय श्वनितम् [२]" इति । श्रमाभिमानिने कुलालपुत्रं, 'मायायै' विचित्रकरणशक्त्यै 'कार्मारं' लोहकारं, 'रूपाय' शुक्लकृष्णादि रूपाभिमानिन्यै 'मणिकारं' मणिमुक्तादिसंस्कर्त्तारं, शुभाभिमानिन्यै 'वपं' वीजानां वप्तारं । 'शरव्यायै' वाणसमूहाभिमानिन्यै, वाणानां संस्कर्त्तारं, 'हेत्यै' आयुधाभिमानिन्यै 'धन्वकारं' धनुषां संस्कर्त्तारं, कर्मव्यापाराभिमानिने 'ज्याकारं' ज्यानां संस्कर्त्तारं, 'दिष्टाय' भवितव्याभिमानिने, 'रज्जुसर्गं' रज्जूनां स्रष्टारं, 'मृत्यवे' मरणाभिमानिने 'मृगयुं', मृगाणां हन्तारं, अन्तकाय, प्राणापहारिणे 'श्वनितं' श्वभिः सह क्रीडाजीविनं ॥

इति तृतीयोऽनुवाकः ।

अथ चतुर्थोऽनुवाकः।

अथ चतुर्थानुवाकमाह। "मन्यवे जारम्। गेहायोपपतिम्। निर्ऋत्यै परिवित्तम्। आर्त्यै परिविविदानम्। आराध्यै दिधिषूपतिम्। पवित्राय भिषजम्। प्रज्ञानाय नक्षत्रदर्शम्। निष्कृत्यै पेशस्कारीम्। बलायोपदाम्। वर्णायानूरुधम्" [४] इति। 'मन्यवे' संघटकाभिमानिन्यै, 'जारं' पारदारिकं। 'गेहाय' गृहाभिमानिने, 'उपपतिं' 'प्रज्ञातजारं' पूर्व्वोजारस्त्वविज्ञातः, अयन्तु भर्त्ता विज्ञात इति विशेषः। 'निर्ऋत्यै' निर्ऋतिदेवतायै, 'परिवित्तं' ज्येष्ठात् पूर्व्वमेवोढभार्य्यं कनिष्ठं। 'आर्त्यै' दुःखदेवतायै, 'परिविविदानं' प्रथमतो विवाहशीलं, कनिष्ठः सन् तदाग्रहयुक्तमित्यर्थः। 'आराध्यै' कार्य्यसिद्धिप्रतिबन्धाभिमानिन्यै, 'दिधिषूपतिं' द्विर्विवाहं कृतवती स्त्री, 'दिधिषू' तस्याः पतिं। 'पवित्राय' शुद्ध्यभिमानिने' 'भिषजं' चिकित्सकं। 'प्रज्ञानाय' कालज्ञानाभिमानिने, 'नक्षत्रदर्शं' ज्योतिःशास्त्रविदं। 'निष्कृत्यै' 'कार्य्यनिष्पादनाभिमानिन्यै, 'पेशस्कारीं' सुवर्णकारस्य भार्य्यां। 'बलाय' बलाभिमानिने, 'उपदां' अन्नमात्रप्रदानेन या कन्या गृह्यते सेयमुपदा तादृशीं। 'वर्णाय' शुक्लकृष्णवर्णाभिमानिने, 'अनूरुधं' स्वकीयप्रयोजनमन्तरेणैव परानुरोधेन यः प्रवर्त्तते तादृशं॥

इति चतुर्थोऽनुवाकः।

———————

अथ पञ्चमोऽनुवाकः ।

अथ पञ्चमानुवाकमाह । "नदीभ्यः पौञ्जिष्टम् । ऋक्षीकाभ्यो नैषादम् । पुरुषव्याघ्राय दुर्मदम् । प्रयुद्भ्य उन्मत्तम् । गन्धर्वाप्सराभ्यो व्रात्यम् । सर्पदेवजनेभ्योऽप्रतिपदम् । अवेभ्यः कितवम् । इर्यताया अकितवम् । पिशाचेभ्यो बिदलकारम् । यातुधानेभ्यः कण्टककारम्" [५] इति । 'नदीभ्यः' नदीदेवताभ्यः, 'पौञ्जिष्टं' कैवर्त्तं । 'ऋक्षीकाभ्यः' शून्यस्थलीदेवेभ्यः, 'नैषादं' निषाद एव नैषादस्तं । 'पुरुषव्याघ्राय' पुरुषश्रेष्ठाभिमानिने,'दुर्मदं' अत्यन्तमदान्धं । 'प्रयुद्भ्यः' प्रकर्षेण योद्धृदेवेभ्यः, 'उन्मत्तं' उन्मादयुक्तं । 'गन्धर्वाप्सराभ्यः' गन्धर्वेभ्यस्तदीययोषिद्भ्यश्च, 'व्रात्यं' शास्त्रीयसंस्कारहीनं पुरुषं । 'सर्पदेवजनेभ्यः' सर्प्पाभिमानिभ्यः, देवजन, शब्दवाच्यगारुडिकाभिमानिभ्यश्च, 'अप्रतिपदं' प्रतिपत्तिः संस्कारः तदयोग्यं । 'अवेभ्यः' रक्षाभिमानिभ्यः, 'कितवं' द्यूतासक्तं । 'इर्यतायै' इरा अन्नं तत्र साधुः इर्य्यः अन्नसमृद्ध इत्यर्थः, तदभिमानिन्यै, 'अकितवं' द्यूतादिव्यसनरहितं । 'पिशाचेभ्यः' देवयोनिविशेषेभ्यः, 'विदलकारं' वंशान् विदलीकृत्य कुसूलसूर्पादिकं यः करोति तज्जातीयं पुरुषं । 'यातुधानेभ्यः' रक्षोविशेषेभ्यः, 'कण्टककारं' आरामादिषु कण्टकावृतिकर्त्तारं ॥

इति पञ्चमोऽनुवाकः ।

---

अथ षष्ठोऽनुवाकः।

अथ षष्ठानुवाकमाह। "उत्सादेभ्यः कुब्जम्। प्रमुदे वामनम्। द्वार्भ्यः स्रामम्। स्वप्नायान्धम्। अधर्माय बधिरम्। सञ्ज्ञानाय स्मरकारीम्। प्रकामोद्यायोपसदम्। आशिक्षायै प्रश्निनम्। उपशिक्षाया अभिप्रश्निनम्। मर्य्यादायै प्रश्नविवाकम्" [६] इति। 'उत्सादेभ्यः' कार्य्यविनाशाभिमानिभ्यः, 'कुब्जं' वक्रपृष्ठभागं पुरुषं। 'प्रमुदे' प्रकृष्टहर्षाभिमानिने,'वामनं' खर्व्वशरीरं पुरुषं। 'द्वार्भ्यः' द्वाराभिमानिनीभ्यः, 'स्रामं' रोगिणं। 'स्वप्नाय' स्वप्नाभिमानिने,'अन्धं' दृष्टिहीनं। 'अधर्माय' पापाभिमानिने, 'बधिरं' श्रवणशक्तिरहितं। 'सञ्ज्ञानाय' सम्यग् बोधाभिमानिने, 'स्मरकारीं' मन्त्रौषधादिभिः भर्त्तुः कामोत्पादिकां।'प्रकामोद्याय' 'प्रकामं' स्वेच्छानुसारेणैव वदतीति प्रकामो यो बहुप्रलापी तदभिमानिने, 'उपसदं' प्रयोजनमन्तरेणैव बहुभाषिणं सभायामुपविष्टं।'आशिक्षायै' वेदशास्त्रस्याल्पपरिचय आशिक्षा तदभिमानिन्यै, 'प्रश्निनं' शास्त्रार्थेषु सन्देहेन प्रश्नकर्त्तारं। 'उपशिक्षायै' वेदशास्त्रविषयपरिचय उपशिक्षा तदभिमानिन्यै, 'अभिप्रश्निनं' पृष्टस्योपरि पुनः प्रश्नोऽभिप्रश्नः तद्युक्तं, पूर्वप्रश्ननिराकर्त्तारमित्यर्थः। 'मर्य्यादायै' शास्त्रार्थव्यवस्थाभिमानिन्यै, 'प्रश्नविवाकं' परकीयप्रश्नं सम्यग्विविच्योत्तरस्य वक्तारं॥

इति षष्ठोऽनुवाकः।

---

अथ सप्तमोऽनुवाकः ।

अथ सप्तमानुवाकमाह । "ऋत्यै स्तेनहृदयम् । वैरहत्याय पिशुनम् । विवित्त्यै क्षत्तारम् । औपद्रष्टाय सङ्ग्रहीतारम् । बलायानुचरम् । भूम्ने परिष्कन्दम् । प्रियाय प्रियवादिनम् । अरिष्ट्या अश्वसादम् । मेधाय वासःपल्पूलीम् । प्रकामाय रजयित्रीम्" [७] इति । 'ऋत्यै' चोरस्य चौर्यादूर्ध्वं गमनमृतिः तदभिमानिन्यै, 'स्तेनहृदयं' चौर्ये तात्पर्यवन्तं । 'वैरहत्याय' वीरहत्याभिमानिने, 'पिशुनं' प्रभोः कर्णे परदोषसूचकं । 'विवित्त्यै' विशेषलाभाभिमानिन्यै, 'क्षत्तारं' सारथिं । 'औपद्रष्टाय' य उपद्रष्टा राजधनं प्रत्यवेक्षिता तदभिमानिने, 'सङ्ग्रहीतारं' भाण्डागाराध्यक्षं, करसङ्ग्रहकारिणं वा । 'बलाय' बलाभिमानिने, 'अनुचरं' सेवकं । 'भूम्ने' महत्त्वाभिमानिने, 'परिस्कन्दं' परिचारकं । 'प्रियाय' प्रियाभिमानिने, 'प्रियवादिनं' मृदुभाषिणं । 'अरिष्ट्यै' अहिंसाभिमानिन्यै, 'अश्वसादं' अश्वारोहिणं । 'मेधाय' यज्ञबुद्ध्याभिमानिने, 'वासःपल्पूलीं' वाससः शोधयित्रीं रजकस्त्रियं । 'प्रकामाय' प्रकृष्टकामाभिमानिने, 'रजयित्रीं' वस्त्रेषु रञ्जनकारिणीम् ॥

इति सप्तमोऽनुवाकः ।

---

अथ अष्टमोऽनुवाकः।

अथ अष्टमानुवाकमाह। "भायै दार्वाहारम्। प्रभाया आग्नेन्धम्। नाकस्य पृष्ठायाभिषेक्तारम्। ब्रध्नस्य विष्टपाय पात्रनिर्म्मगम्। देवलोकाय पेशितारम्। मनुष्यलोकाय प्रकरितारम्। सर्व्वेभ्यो लोकेभ्य उपसेक्तारम्। अवर्त्यै बधायोपमन्थितारम्। सुवर्गाय लोकाय भागदुघम्। वर्षिष्ठाय नाकाय परिवेष्टारम्" [८] इति। 'भायै' दीप्त्यभिमानिन्यै, 'दार्वाहारं' इन्धनानामाहर्त्तारं। 'प्रभायै' प्रकृष्टदीप्त्यभिमानिन्यै, 'आग्नेन्धं' अग्नेः प्रज्वलनकर्त्तारं। 'नाकस्य पृष्ठाय' स्वर्गस्योपरिभागस्वामिने, 'अभिषेक्तारं' राजाभिषेकस्य कर्त्तारं। 'ब्रध्नस्य विष्टपाय' आदित्यस्य लोकपालयित्रे, 'पात्रनिर्म्मगं' कांस्य-ताम्रादिपात्राणां शोधकं। 'देवलोकाय' देवलोकाभिमानिने, 'पशितारं' प्रशान्तस्य वैरस्योत्पादयितारं, 'मनुष्यलोकाय' मनुष्यलोकाभिमानिने, 'प्रकरितारं' स्निग्धानां वैरस्योत्पादनेन विश्लेषयितारं। 'सर्वेभ्यो लोकेभ्यः' सर्वलोकाभिमानिभ्यः, 'उपसेक्तारं' वैरस्य शमयितारं। 'अवर्त्यै बधाय' कृच्छ्रापत्तिलक्षण-बधाभिमानिने, 'उपमन्थितारं' स्वयमुपेत्य वैरस्य जनयितारं। 'सुवर्गाय लोकाय' स्वर्गलोकाभिमानिने, 'भागदुघं' प्रजाभ्यो राजभागस्य सम्पादकं। 'वर्षिष्ठाय नाकाय' अतिप्रवृद्धय स्वर्गाभिमानिने, 'परिवेष्टारं' भोजनकाले परिवेषणस्य कर्त्तारं॥

इति अष्टमोऽनुवाकः।

---

अथ नवमोऽनुवाकः ।

अथ नवमोऽनुवाकमाह । "अर्मेभ्यो हस्तिपम् । जवायाश्वपम् । पुष्ट्यै गोपालम् । तेजसेऽजपालम् ।' वीर्य्यायाविपालम् । इरायै कीनाशम् । कीलालाय सुराकारम् । भद्राय गृहपम् । श्रेयसे वित्तपम् । अध्यक्षायानुक्षत्तारम्" [९] इति । 'अर्मेभ्यः' गतिविशेषाभिमानिभ्यः, 'हस्तिपं' गजपालकं । 'जवाय' वेगाभिमानिने, 'अश्वपं' अश्वपालकं । 'पुष्ट्यै' पुष्ट्यभिमानिन्यै, 'गोपालं' गवां पालकं । 'तेजसे' तेजोऽभिमानिने, 'अजपालं' अजानां पालकं । 'वीर्याय' वीर्याभिमानिने, 'अविपालं' अवीनां पालकं । 'इरायै' अन्नाभिमानिन्यै, 'कीनाशं' कर्षकं । 'कीलालाय' जलाभिमानिने, 'सुराकारं' सुराया उत्पादयितारं । 'भद्राय' कल्याणाभिमानिने, 'गृहपं' गृहाणां पालकं । 'श्रेयसे' श्रेयोऽभिमानिने, 'वित्तपं' धनस्य पालकं । 'अध्यक्षाय' प्रत्यक्षकारणाभिमानिने, 'अनुक्षत्तारं' सारथेरनुचरं ॥

इति नवमोनुवाकः ।

---

अथ दशमानुवाकः ।

अथ दशमानुवाकमाह । "मन्यवेऽयस्तापम् । क्रोधाय निसरम् । शोकायाभिसरम् । उत्कूलविकूलाभ्यां त्रिस्थिनम् । यो-

गाय योक्तारम्। क्षेमाय विमोक्तारम्। वपुषे मानस्कृतम्। शीलायाञ्जनीकारम्। निर्ऋत्यै कोशकारीम्। यमायासूम्" [१०] इति। 'मन्यवे' मानसकोपाभिमानिने, 'अयस्तापं' अयसस्तापयितारं लोहकारं। 'क्रोधाय' वाह्यकोपाभिमानिने, 'निसरं' बध्यानां बहिर्निस्सारयितारं। 'शोकाय' शोकाभिमानिने, 'अभिसरं' रथस्य पुरतो गन्तारं। 'उत्कूलविकूलाभ्यां' काङ्क्षितादधिकलाभ उत्कूलः, तस्मादन्यलाभो विकूलः,(ताभ्यां) 'त्रिस्थिनं' त्रिभिः पादाभ्यां दण्डेन च तैरपि गन्तुमशक्त एकत्रैवावस्थितः त्रिस्थिनः तादृशं। 'योगाय' अलब्धलाभाभिमानिने, 'योक्तारं' रथेऽश्वानां योजयितारं। 'क्षेमाय' लब्धपालनाभिमानिने, 'विमोक्तारं' रथे योजितानामश्वानां विमोचयितारं। 'वपुषे' शरीराभिमानिने, 'मानस्कृतं' मनसैव लावण्यं विषये योजयिता मनस्कृता तस्य पुत्रं मानस्कृतं। 'शीलाय' स्वभावविशेषः शीलं तदभिमानिने, 'अञ्जनीकारं' अक्ष्णोरञ्जनेनालङ्कर्त्तारं। 'निर्ऋत्यै' पापदेवतायै, 'कोशकारीं' ताम्रलोहाध्मानकुशलां स्त्रियं, खड्गादीनां चर्म्ममयकोशकारीं वा। 'यमाय' प्राणापहारिणे, 'असूं' सूतिरुत्पत्तिस्तद्रहितां बन्ध्यामित्यर्थः॥

इति दशमोऽनुवाकः।

---

अथैकादशोऽनुवाकः।

अथैकादशानुवाकमाह। "यम्यै यमसूम्। अथर्वभ्योऽवतोकाम्। संवत्सराय पर्यारिणीम्। परिवत्सरायाविजाताम्। इदावत्सरायापस्कद्वरीम्। इद्वत्सरायातीत्वरीम्। वत्सराय विजर्ज्जराम्। संवत्सराय पलिक्नीम्। वनाय वनपम्। अन्यतोऽरण्याय दावपम्" [११] इति। 'यम्यै' यमस्य स्त्रियै, 'यमसूं' पुत्रयुगलप्रसवित्रीं। 'अथर्वभ्यः' अथर्वशाखागतमन्त्राभिमानिभ्यः,'अवतोकां' गर्भस्राविणीं स्त्रियं। 'संवत्सराय' प्रभवादिष्वब्देषु प्रथमोऽब्दः संवत्सरस्तदभिमानिने, 'पर्यारिणीं' प्रसवकालातिक्रमेण या प्रसूते सा पर्यारिणी तां। 'परिवत्सराय' द्वितीयोऽब्दः परिवत्सरः तदभिमानिने, 'अविजातां' विशेषेण जाता विजाता द्वितीयप्रसवयुक्ता तद्रहितां। 'इदावत्सराय' तृतीयोऽब्दः इदावत्सरः तदभिमानिने, 'अपस्कद्वरीं' गर्भपरिणामात्प्रागेव प्रसवप्रतिबन्ध उपस्कद्वरस्तस्मिन् कुशला उपस्कद्वरी तां। 'इद्वत्सराय' चतुर्थोऽब्दः इद्वत्सरस्तदभिमानिने, 'अतीत्वरीं' प्रसवकालात्ययकरणकुशला तां। 'वत्सराय' पञ्चमोऽब्दो वत्सरः तदभिमानिने, 'विजर्ज्जरां' अप्रसूयैव जीर्णां। 'संवत्सराय' सर्वस्य जगतः कृत्स्नकारिणे देवाय, 'पलिक्नीं' प्रथमे वयस्येव पलिताङ्गीं। 'वनाय' वनाभिमानिने, 'वनपं' वनस्य पालकं। 'अन्यतोऽरण्याय' एकपार्श्ववर्त्यरण्याभिमानिने,'दावपं' आरण्याग्नेः पालकं॥

इति एकादशोऽनुवाकः।

अथ द्वादशोऽनुवाकः।

अथ द्वादशानुवाकमाह। "सरोभ्यो धैवरम्। वेशन्ताभ्यो-दाशम्। उपस्थावरीभ्यो बैन्दम्। नड्वलाभ्यः शौष्कलम्। पा-र्य्याय कैवर्त्तम्। अवार्य्याय मार्गारम्। तीर्थेभ्य आन्दम्। विषमेभ्यो मैनालम्। स्वनेभ्यः पर्णकम्। गुहाभ्यः किरातम्। सानुभ्यो जम्भकम्। पर्व्वतेभ्यः किम्पूरुषम्" [१२] इति। 'स-रोभ्यः' यानि सरांसि तदभिमानिभ्यः, 'धैवरं' 'उभयतो जलं बध्नाति तटानां मत्स्यग्राहिणं। 'वेशन्ताभ्यः' पल्वलाभिमानिभ्यः, 'दाशं' वडिशेन मत्स्यग्राहिणं। 'उपस्थावरीभ्यः' तरूणां समीपेषु प्रवाहमन्तरेण स्थिताः या आपः तदभिमानिनीभ्यः, 'बैन्दं' विन्दुर्जालं तेन जीवतीति बैन्दस्तं। 'नड्वलाभ्यः' तृणसंयुक्तदेश-वर्त्तिजालाभिमानिनीभ्यः 'शौष्कलं' शुष्कलं वडिशं तेन जीव-तीति शौष्कलस्तं। 'पार्याय' परतीराभिमानिने, 'कैवर्त्तं' कूले मत्स्यानां पुञ्जीकृत्य हन्तारं। 'अवार्य्याय' अवरतीराभिमानिने, 'मार्गारं' अन्तर्ज्जले हस्ताभ्यां मत्स्यमार्गणशीलं। 'तीर्थेभ्यः' अवतरस्थानाभिमानिभ्यः, 'आन्दं' तीर्थे सङ्कुबन्धनेन मत्स्यग्रा-हिणं। 'विषमेभ्यः' अतीर्थाभिमानिभ्यः, 'मैनालं' जालजी-विनं। 'स्वनेभ्यः' सशब्दजलाभिमानिभ्यः 'पर्णकं' सविषं पर्णं जलस्योपरि स्थापयित्वा मत्स्यग्राहिणं। 'गुहाभ्यः' पर्वतगुहाभि-मानिनीभ्यः, 'किरातं' मृगघातिनं। 'सानुभ्यः' पर्वतशिखरा-भिमानिभ्यः, 'जम्भकं' गात्राणां जृम्भयितारं। 'पर्वतेभ्यः' पर्वताभिमानिभ्यः, 'किम्पूरुषं' वनवासिनं गायकं॥

अथ त्रयोदशोऽनुवाकः।

अथ त्रयोदशानुवाकमाह। "प्रतिश्रुत्काया ऋतुलम्। घोषाय भषम्। अन्ताय बहुवादिनं। अनन्ताय मूकम्। महसे वीणावादम्। क्रोशाय तूणवध्मम्। आक्रन्दाय दुन्दुभ्याघातं। अवरस्वराय शंखध्मं। ऋभुभ्योऽजिनसन्धायम्। साध्येभ्यश्चर्म्मम्याम्" [१२] इति। 'प्रतिश्रुत्कायै' प्रतिध्वन्यभिमानिन्यै,'ऋतुलं' देशराजवार्त्ताकथनशीलं। 'घोषाय' ध्वन्यभिमानिने' 'भषं' असम्बद्धप्रलापिनं। 'अन्ताय' अन्तवच्छब्दाभिमानिने, 'बहुवादिनं' अधिकभाषणकुशलं। 'अनन्ताय' अपर्य्यवसितशब्दाभिमानिने, 'मूकं' वाग्व्यवहाररहितं। 'महसे' महाशब्दाभिमानिने, 'वीणावादं' वीणावादने कुशलं। 'क्रोशाय' कूजितशब्दाभिमानिने, 'तूणवध्मं' वेणुं वादयन्तं। 'आक्रन्दाय' "समन्ताद्घोषणाभिमानिने, 'दुन्दुभ्याघातं' भेर्या वादयितारं। 'अवरस्वराय' हीनोत्तमशब्दाभिमानिने, 'शङ्खध्मं' शङ्खस्य ध्मातारं। 'ऋतुभ्यः' कालसन्धानहेतुभ्यो देवविशेषेभ्यः, 'अजिनसन्धानं' चर्म्मचीरसन्धानजीविनं। 'साध्येभ्यः' कालषाड्गुण्यहेतुभ्यो देवविशेषेभ्यः,'चर्म्मम्यां' वीणादिप्रहारनिवारकचर्म्मनिर्म्मातारं॥

इति त्रयोदशोऽनुवाकः।

---

अथ चतुर्द्दशोऽनुवाकः।

अथ चतुर्द्दशानुवाकमाह। "बीभत्सायै पौल्कसम्। भूत्यै जागरणम्। अभूत्यै स्वपनम्। तुलायै वाणिजम। वर्णाय

हिरण्यकारम्। विश्वेभ्यो देवेभ्यः सिध्मलम्। पश्चाद्दोषाय ग्लीवम्। ऋत्यै जनवादिनम्। व्यृद्ध्या अपगल्भम्। सꣳशराय प्रच्छिदम्" [१४] इति। 'बीभत्सायै' बीभत्सा दुष्टवस्तुषु हेयत्वबुद्धिः तदभिमानिन्यै, 'पौल्कसं' अतिनिकृष्टजातियुक्तं 'भूत्यै' भूतिरैश्वर्याभिमानिनी तस्यै, 'जागरणं' 'प्रबोधशीलं' सर्व्वदा सावधानमित्यर्थः। 'अभूत्यै' दारिद्र्याभिमानिन्यै, 'स्वपनं' निद्रालुं, सर्व्वदा प्रमादभूयिष्ठमित्यर्थः। 'तुलायै' सुवर्णादिपरिमाणनिश्चयहेतुस्तुला तदभिमानिन्यै, 'वाणिजं' क्रयकारिणं। 'वर्णाय' हिरण्यमणिमुक्तादिगतभास्वरत्वाभास्वरत्वाभिमानिने, 'हिरण्यकारं' कटकमुकुटादिनिष्पादकं। 'विश्वेभ्यो देवेभ्यः' विश्वेदेवाः प्रसिद्धाः तेभ्यः, 'सिध्मलं' कुष्ठरोगिणं। 'पश्चाद्दोषाय' कुष्ठव्यतिरिक्तरोगाभिमानिने, 'ग्लावं' नित्यकृशवपुषं। 'ऋत्यै' गत्यभिमानिन्यै, 'जनवादिनं' जनानां परिवादनशीलं। 'वृद्ध्यै' समृद्धभावाभिमानिन्यै, 'अपगल्भं' धार्ष्ट्यरहितं। 'सꣳशराय' सꣳशीर्णत्वाभिमानिने, 'प्रच्छिदं' प्रकर्षेण छेत्तारं॥

इति चतुर्दशोऽनुवाकः।

---

अथ पञ्चदशोऽनुवाकः।

अथ पञ्चदशानुवाकमाह। "क्षमाय पुꣳश्चलूमालभते। वीणावादं गणकं गीताय। यादसे शाबुल्याम्। नर्माय भद्रवतीम्। तूणवध्मं ग्रामण्यं पाणिसङ्घातं नृत्ताय। मोदायानुक्रोश-

कम्। आनन्दाय तलवम्" [१५] इति। 'हसाय' अपहासाभिमानिने, 'पुंश्चलूं' स्वेच्छाचारिणीं। 'आलभते,' इति शब्दस्य सर्वत्रानुवृत्तिविवक्षां दर्शयितुं पुनःपुनरुपन्यासः। 'वीणावादं गणकं' वीणां वादयितुं कुशलो वीणावादः, श्रुतिजातिस्वरमण्डलादिगणनकुशलो गणकः, तावुभौ गीताभिमानिने द्रष्टव्यौ। 'यादसे' जलचारिप्राण्यभिमानिने, 'शाबुल्यां' शबलवर्णशरीरां। 'नर्माय' प्रियवचनाभिमानिने, 'भद्रवतीं' भद्रलक्षणयुक्तशरीरोपेतां। 'तूणवध्मं' मुखवादिनं वेणुवादिनं वा, 'ग्रामण्यं' ग्रामस्य नेतारं, 'पाणिसङ्घातं' पाणिद्वयसंयोगनिर्व्वर्त्तिततालकर्त्तं, एतांस्त्रीन् पुरुषान् 'नृत्ताय' नृत्ताभिमानिने कुर्य्यात्। 'मोदाय' हर्षाभिमानिने, 'अनुक्रोशकं' नृत्तसभायां जनानामाह्वातारं, नृत्यसमाप्तिद्योतकध्वनिकर्त्तारं वा। 'आनन्दाय' मानसतुष्ट्यभिमानिने, हर्षस्तु वाह्यलिङ्गगम्यः परितोष आनन्दस्त्वानुभवैकगम्य इति विशेषः। 'तलवं' काहलवादनं मुखवाद्यकारिणं वा ॥

इति पञ्चदशोऽनुवाकः।

---

अथ षोडशोऽनुवाकः।

अथ षोडशानुवाकमाह। "अक्षराजाय कितवम्। कृताय सभाविनम्। त्रेताया आदिनवदर्शम्। द्वापराय बहिःसदं। कलये सभास्थाणुम्। दुष्कृताय चरकाचार्य्यम्। अध्वने ब्रह्मचारिणम्। पिशाचेभ्यः शैलगम्। पिपासायै गोव्यच्छम्।

निर्ऋत्यै गोघातम्। क्षुधे गोविकर्त्तम्। क्षुत्तृष्णाभ्यां तम्। यो गां विकृन्तं तं मांसं भिक्षमाण उपतिष्ठते" [१६] इति।
'अक्षाः' द्यूतसाधनविशेषाः, तेषां 'राजा' तदभिमानी देवविशेषः, तस्मै, 'कितवं' द्यूतकुशलं। 'कृताय' कृतयुगाभिमानिने, 'सभाविनं' द्यूतसभाया अधिष्ठातारं। 'त्रेतायै' त्रेतायुगाभिमानिन्यै, 'आदिनवदर्शं' मर्य्यादायां देवनस्य द्रष्टारं परीक्षकं। 'द्वापराय' द्वापरयुगाभिमानिने, 'बहिःसदं' बहिःसदनशीलं स्वयमदीव्यन्तं। 'कलये' कलियुगाभिमानिने,'सभास्थाणुं' अदेवनकालेपि सभां यो न मुञ्चति सोयं स्तम्भसमानत्वात् सभास्थाणुः तं। 'दुष्कृताय' दुर्घटकार्य्यकरणाभिमानिने, 'चरकाचार्य्यं, वंशाग्रवर्त्तनस्य शिक्षयितारं। 'अध्वने' मार्गाभिमानिने, 'ब्रह्मचारिणं' उपनीतं। 'पिशाचेभ्यः' भूतावान्तरविशेषेभ्यः, 'शैलगं' पथिकानां वस्त्रादिकमपहृत्य यः शैलं पर्व्वतं गच्छति तादृशं। 'पिपासायै' पानेच्छाभिमानिन्यै, 'गोव्यच्छं' गवां विवासयितारं। 'निर्ऋत्यै,' 'पापदेवतायै' 'गोघातं' विषकण्टकादिभिर्गवां मारयितारं। 'क्षुधे' क्षुदभिमानिन्यै, 'गोविकर्त्तं' गवां विशसितारं। 'क्षुत्तृष्णाभ्यां' मिलिताभ्यां बुभुक्षापिपासाभिमानिनीभ्यां, 'यः' नीचजातिर्दरिद्रः पुमान् क्षुत्पीडितः सन् 'गां', विशसति 'तं' 'पुरुषं' प्रति तदीयं 'मांसं' भिक्षितुमागत्य सेवते तं नीचं पूर्व्वोक्तदेवताय कुर्य्यात्॥

इति षोडशोऽनुवाकः।

———— ————

अथ सप्तदशोऽनुवाकः ।

अथ सप्तदशानुवाकमाह । "भूम्यै पीठसर्पिणमालभते । अग्नये अꣳसलम् । वायवे चाण्डालम् । अन्तरिक्षाय वꣳशनर्त्तिनम् । दिवे खलतिम् । सूर्य्याय हर्य्यक्षम् । चन्द्रमसे मिर्म्मिरम् । नक्षत्रेभ्यः किलासम् । अह्ने शुक्लं पिङ्गलम् । रात्रियै कृष्णं पिङ्गाक्षम्" [१७] इति । 'भूम्यै' भूमिदेवतायै, 'पीठसर्पिणं' यो भग्नचरणो दारुमयपीठावलम्बी भूम्यां सर्पति तादृशं । 'अग्नेय' अग्निदेवतायै, 'अंसलं' चण्डालजातीयं, अन्तरिक्षदेवतायै 'वंशनर्त्तिनं' वंशाग्रनृत्तजीविनं । 'दिवे' द्युलोकदेवतायै, 'खलतिं' केशहीनशिरस्कं । सूर्य्यदेवतायै हरितवर्णाक्षियुक्तं । चन्द्रदेवतायै, 'मिर्मिरं' निमिषदृष्टिं । नक्षत्रदेवताभ्यः श्वेतबिन्दुसमाभ्यः, 'किलासं' कुष्ठबिन्दुयुक्तं । अहर्देवतायै, 'शुक्लं पिङ्गलं' शुक्लवर्णदेहं पिङ्गलाक्षं । रात्रिदेवतायै, 'कृष्णं पिङ्गाक्षं' कृष्णवर्णदेहं पिङ्गवर्णाक्षियुक्तं ॥

इति सप्तदशोऽनुवाकः ।

---

अथाष्टदशोऽनुवाकः ।

अथाष्टदशानुवाकमाह । "वाचे पुरुषमालभते । प्राणमपानं व्यानमुदानꣳ समानं तान् वायवे । सूर्य्याय चक्षुरालभते । मनश्चन्द्रमसे । दिग्भ्यः श्रोत्रम् । प्रजापतये पुरुषम्" [१८] इति । वाग् देवतायै, पुरुषं, पूरकं, स्थूलशरीरमित्यर्थः । तत्तच्छरीरवर्त्तिनः प्राणाद्याः पञ्चवायुवृत्तिविशेषाः ये सन्ति

'तान्' सर्व्वान्, वायुदेवतायै, कुर्यात्। प्राणो मुखनासिकावर्त्ती। अपानोऽधोद्वारवर्त्ती। व्यानः सर्व्वदेहव्यापी। उदान उत्क्रान्तिहेतुः। समानः सर्व्वशरीरसाम्येनान्नरसप्रेरणहेतुः। यद्यपि प्राणादयस्तस्मात् पुरुषशरीरात् पृथक्कर्त्तुमशक्याः, तथापि तत्रैवावस्थितान् वायवे समर्पयेत्। एवं चक्षुर्मनःश्रोत्राण्यपि तत्र स्थितान्येव सूर्य्यचन्द्रमसोदिग्भ्यः समर्पयेत्। प्रजापतये तु तच्छरीरस्थं 'पुरुषं' जीवात्मानं, समर्पयेत्॥

इति अष्टादशोऽनुवाकः।

---

अथैकोनविंशोऽनुवाकः।

अथैकोनविंशानुवाकमाह। "अथैतान् रूपेभ्यः आलभते। अतिह्रस्वमतिदीर्घम्। अतिकृशमत्यꣳसलम्। अतिशुक्लमतिकृष्णम्। अतिश्लक्ष्णमतिलोमशम्। अतिकिरिटमतिदन्तुरम्। अतिमिर्म्मिरमतिमेमिषम्। आशायै जामिम्। प्रतीचायै कुमारीम्" [१८] इति। पूर्व्वोक्तेभ्यः तत्तद्देवताभ्यश्च अत्यन्तवैलक्षण्यद्योतनायाथ शब्दः। 'एतात्' वक्ष्यमाणानतिह्रस्वादीन् पुरुषान्, 'अरूपेभ्यः' समीचीनरूपरहितेभ्यः कुत्सितरूपाभिमानिभ्यः, 'आलभते' अतिह्रस्वादयः प्रसिद्धाः। 'अतिकिरीटः' अत्यल्पदन्तः। 'अतिदन्तुरः' अत्युन्नतदन्तः। 'अतिमिर्मिरः' अत्यर्थं निमिषदृष्टिः। 'अतिमेमिषः' सदाविस्फारिताक्षस्तब्धदृष्टिः। एतान् सर्व्वान् रूपेभ्यः आलभत इति पूर्व्वत्रान्वयः। 'आशायै' अलभ्यवस्तुविषयतृष्णाभिमानिन्यै, 'जा-

मिं' निवृत्तरजस्कां भोगायोग्यां स्त्रीयं । 'प्रतीचायै' लब्धव्यस्य वस्तुनो लाभप्रतीचणाभिमानिन्यै, 'कुमारीं' अनूढाम्, कन्यामालभते । ब्राह्मणादयः कुमार्य्यन्ताः प्रोक्ता मनुष्यविशेषरूपाः पशवोऽस्मिन् पुरुषमेधे पञ्चाहे सोमयागविशेषे मध्यमेऽहनि सवनीयपशुभिः समन्वित्यालब्धव्याः । तथाच सूत्रं पूर्व्वमेवोदाहृतं ॥

वेदार्थस्य प्रकाशेन तमोहार्द्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरवुक्कभूपालसाम्राज्यधुरन्धरेण माधवामात्येन विरचिते माधवीये वेदार्थप्रकाशे यजुर्ब्राह्मणे तृतीयकाण्डे चतुर्थप्रपाठके एकोनविंशोऽनुवाकः ॥

समाप्तश्च चतुर्थप्रपाठकः ।

---

अथ तैत्तिरीय ब्राह्मणभाष्ये

पञ्चमप्रपाठकः ।

हरि ॐ ।

यस्य निश्वसितं वेदा योवेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरं ॥
चतुर्थे नरमेधस्य पशवो विहिता अथ ।
इष्टिहोत्रस्यमन्त्रोक्तिः पञ्चमेऽस्मिन् प्रपाठके ॥
संहितायामेव मन्त्राः प्रसङ्गाद्व्याकृताः पुरा ।
देवा वैनर्चिनेत्याद्या मनुरित्यादिकाश्च ये ॥

अनुवाकास्तत्र तेषां मन्त्राणां ब्राह्मणे श्रुतं।
तद्ब्राह्मणं विना मन्त्रैर्व्याख्यातुं नैव शक्यते॥
अतो मन्त्रा उदाहृत्य व्याकृता ब्राह्मणैः सह।
तत्राचरार्थो विज्ञेयोऽनुवाकार्थस्तु वर्ण्यते॥
त्रयोदशानुवाकाः स्युः पञ्चमेऽस्मिन् प्रपाठके।
होतुर्जपः सामिधेन्यो निविदादापनं च्चचोः॥
प्रयाजा आज्यभागौ च मुख्या याज्यानुवाक्यगाः।
इडाह्वानमनूयाजाः सूक्तवाकः शंयुवाकः।
पत्नीसंयाजकाश्चेडाह्वानं पाठक ईरितः॥

एतस्मिन् प्रपाठके ये मन्त्राः आम्नाताः, तेषां मध्ये कोमन्त्रः कुत्रोदाहृत्य व्याख्यात इति तत्सर्वं विविच्यते। योयं सत्यं प्रपद्य इत्यनुवाकः, सोयं देवा वै नर्चिनेत्यत्रोदाहृत्य व्याख्यातः। प्र वो वाजा इति येयमृक् सापि तत्रैवोदाहृत्य व्याख्याता। सत्यं प्रपद्यत इत्यनुवाके प्र वो वाजा इत्यृगपि तद्वयं देवा वै नर्चिनेत्यत्रोदाहृत्य व्याख्याता। अग्न आयाहीत्यादय एकादशर्चस्त्वज्ञो वा एष इत्यत्र व्याख्याताः। अग्ने महानग्निर्होतेत्यनुवाकद्वयं अग्ने महाꣳ असीत्यत्र व्याख्यातं। समिधो अग्न आज्यस्येत्यनुवाकः समिधो यजतीत्यत्र व्याख्यातः। अग्निर्वृत्राणीत्यनुवाकः चक्षुषी वा एते इत्यस्योपक्रमे व्याख्यातः। अग्निर्मूर्द्धा भुव इति मन्त्रद्वयं मूर्द्धन्वतीपुरोऽनुवाक्या भवति, नियुत्वत्या यजतीत्यत्र व्याख्यातं। प्रजापते न त्वदेतानीत्यारभ्य कृत्स्नोप्यनुवाकशेषश्चक्षुषी वा एते इत्य-

स्यावमाने व्याख्यातः । उपहूतं रथन्तरमित्यनुवाको मनुः पृथिव्या इत्यत्र व्याख्यातः । देवं वर्हिरिदं द्यावापृथिवी-त्यनुवाकद्वयं 'अग्नीध आदधातीत्यनुवाकमध्ये एतद्वैना मासुर आसीदित्येतस्माद्व्याख्यानात्पूर्व्वत्र व्याख्यातं । तच्छं योरित्यनुवाको देवा वै यज्ञस्य स्वगाकर्त्तारमित्यनुवाकस्य मध्ये एतावता हैनसा भवतीत्येतस्माद्वाक्यादूर्ध्वं व्याख्यातः । आप्यायस्वेत्यनुवाकस्तत्समीप एवाथो मिथुनत्वायेत्येतस्मादूर्ध्वं व्याख्यातः । उपहूतमित्यनुवाको तत्रैव व्याख्यातः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरवुक्कभूपालसा-म्राज्यधुरन्धरेण माधवामात्येन विरचिते माधवीये वेदार्थप्रकाशे यजुर्ब्राह्मणे तृतीयकाण्डे पञ्चमप्रपाठकः ॥ ० ॥

समाप्तश्च पञ्चमः प्रपाठकः ।

---

# तैत्तिरीय-ब्राह्मणभाष्ये

## तृतीयकाण्डे षष्ठप्रपाठके

## प्रथमोऽनुवाकः।



## हरिः ॐ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं॥
इष्टिहोत्रं पञ्चमेऽस्मिन् उक्ता षष्ठे प्रपाठके।
वक्ष्यते पाशुकं होत्रं उक्तादौ यूपसंस्कृतिं॥

तत्र बौधायन आह। यदानुजानाति यूपा याज्यमानायानुब्रूहीति। तज्जघनेनोत्तरवेदिदक्षिणं निरस्योपविश्य यूपाञ्जनीया अन्वाहाञ्जन्ति त्वामध्वरे देवयन्तमिति सप्त, तासाङ्ग्चिः। प्रथमामन्वाह। उत्तमेन वचनेनार्द्धर्चने उपनमति यदा जानात्युच्छ्रीयमाणायानुब्रूहीति। यदूर्द्धतिष्ठादिति प्रतिपद्य समर्य आविदथे वर्द्धमान इति अर्द्धर्च उपनमति यदा जानाति परिवीयमाणायानुब्रूहीति पुनन्ति धीरा अपसो मनीषा इति प्रतिपद्योत्तमया चिः परिदधातीति। यद्यप्यत्राञ्जनार्थ एको मन्त्रः, उच्छ्रयणार्थाः पञ्च मन्त्राः, परिव्ययणार्थ एकोमन्त्रः, तथाप्यञ्जनस्य प्राधान्याच्छत्रिन्यायेन सप्तापि मन्त्रा यूपाञ्जनीया इत्युच्यन्ते। तत्राञ्जनार्थां प्रथमामृचमाह।
"अञ्जन्ति त्वामध्वरे देवयन्तः। वनस्पते मधुना दैव्येन।

यदूर्ध्वस्तिष्ठाद्द्रविणेह धत्तात्। यद्वा क्षयो मातुरस्या उपस्थे'' इति। हे 'वनस्पते' वनस्पतिविकारयूप 'देवयन्तः' देवानिच्छन्तः ऋत्विजः, 'दैव्येन' देवयोग्येन, 'मधुना' मधुरेणाज्येन, 'अध्वरे' यागे, 'त्वा' त्वाम्, 'अञ्जन्ति' स्निग्धीकुर्व्वन्ति। 'यत्' यस्मात् कारणात्, 'ऊर्द्ध्वस्तिष्ठात्' उच्छ्रितः स्थास्यसि। 'इह' कर्म्मणि, 'द्रविणा' धनानि, 'धत्तात्' सम्पादयिष्यसि, 'यद्वा' यस्माच्च कारणात्, 'अस्या मातुः' श्रेयसां निर्मात्र्या वेदेः, 'उपस्थे' पार्श्वस्थिते देशे, 'क्षयः' तव निवासो भविष्यति। तस्मात् कारणात् तद्योग्यतायै त्वां यजन्तीति पूर्व्वत्रान्वयः। यूपा याञ्ज्यमानायानुब्रूहीत्येवमध्वर्युणा प्रेषिते होता एतामृचमनुब्रूयात्॥

अथ यूपायोच्छ्रीयमाणायानुब्रूहीत्येवं प्रेषिते होत्रा या ऋचः पञ्चानुवक्तव्याः, तासां मध्ये प्रथमामाह। ''उच्छ्रयस्व वनस्पते। वर्ष्मन् पृथिव्या अधि। सुमीतिमीयमानः। वर्चोधा यज्ञवाहसे'' इति। हे 'वनस्पते' यूप, त्वं 'पृथिव्याः', सम्बन्धि 'वर्ष्मन्' प्रधानभूते अस्मिन् देशे, 'अधि' उपरि, 'उच्छ्रयस्व' उत्तिष्ठ। कीदृशस्त्वं 'सुमीत्या' शोभनेन प्रक्षेपेण स्थापनेन, 'मीयमानः' स्थाप्यमानः, 'यज्ञवाहसे' यज्ञनिर्व्वाहकाय, यजमानाय 'वर्चोधाः' वर्च्चसः दीप्तेर्द्दारा सम्पादयिता॥

अथ द्वितीयामाह। ''समिद्धस्य श्रयमाणः पुरस्तात्। ब्रह्म वन्वानो अजरꣳ सुवीरं। आरे अस्मदमतिं बाधमानः।

उच्छ्रयस्व महते सौभगाय" इति। हे यूप त्वं 'महते सौभगाय' यजमानस्याधिकसौभाग्यसिद्ध्यर्थं, 'उच्छ्रयस्व' उच्छ्रितो भव। कीदृशस्त्वं 'समिद्धस्य' सम्यक् प्रदीप्तस्याहवनीयस्य, 'पुरस्तात्' पूर्वस्यां दिशि, 'श्रयमाणः' आश्रित्य वर्त्तमानः, तथा 'अजरं' अविनाशं, 'सुवीरं' कल्याणपुत्रादिसमृद्धिकारणं, 'ब्रह्म' परिवृढमिदं कर्म, 'वन्वानः' सम्भजमानः, तथा 'अमतिम्' अस्मदीयमज्ञानम्, 'अस्मदारे' अस्मत्तो दूरे, 'बाधमानः' नाशय॥

अथ तृतीयामाह। "ऊर्द्ध उषुण ऊतये तिष्ठा देवो न सविता। ऊर्द्धो वाजस्य सनिता यदञ्जिभिः वाघद्भिर्विह्वयामहे" इति। हे यूप 'न ऊतये' अस्माकं रक्षणाय, 'ऊर्द्धउ' त्वमूर्द्धाकार एव, 'सुतिष्ठा' सुष्ठुस्थितिं कुरु। तत्र दृष्टान्तः। 'ऊर्द्धः' उपरिदेशे वर्त्तमानः, 'सविता देवो न' सूर्यो देव इव। कीदृशस्त्वं 'वाजस्य सनिता' अन्नस्य दानाय, 'यत्' यस्मात् कारणात्, 'अञ्जिभिः' क्रत्वभिव्यक्तकारिभिः, 'वाघद्भिः' क्रत्वनुष्ठानभारं वहद्भिः, ऋत्विग्भिः सहिताः, वयं 'विह्वयामहे' विशेषेण त्वामाह्वयामः॥

अथ चतुर्थीमाह। "ऊर्ध्वो नः पाह्यꣳहसो नि केतुना। विश्वꣳ समत्रिणं दह। कृधी न ऊर्ध्वाञ्च रथाय जीवसे। विदा देवेषु नो दुवः" इति। हे यूप त्वं 'ऊर्ध्वः', सन् 'केतुना' प्रज्ञया, 'नः' अस्मान्, 'अंहसः' पापात्, 'निपाहि' नितरां पालय। 'अत्रिणं' भक्षणशीलं राक्षसादिं, 'विश्वं'

सर्व्वमपि, 'संदह' समूहीकृत्य भस्मीकुरु। किञ्च 'रथाय जीवसे' रथारोहणपूर्व्वकाय जीवनाय, 'नः' अस्मान्, 'ऊर्ध्वान्' उच्छ्रितान्, 'कृधि' कुरु त्वं। यद्वा 'चरथाय' चतुर्थाय कर्म्मफलप्राप्तये, 'नोदुवः' अस्मदीयां परिचर्य्यां, 'देवेषु', 'विदा' वेदय, कथय॥

अथ पञ्चमीमाह। "जातो जायते सुदिनत्वे अह्नां स मर्य्य आ विदथे वर्द्धमानः। पुनन्ति धीरा अपसो मनीषा। देवया विप्र उदियर्त्ति वाचम्" इति। अयं यूपो 'जातः' नित्यप्रादुर्भूतोऽपि, 'अह्नां' दिवसानां मध्ये, 'सुदिनत्वे' यागयुक्तस्याह्नः सुदिनत्वाय, पुनरपि 'आजायते' अस्मदर्थं आभिमुख्येन प्रादुर्भवति, 'सः' यूपः, 'मर्य्ये' मनुष्यैर्यजमानादिभिर्युक्ते, 'विदथे' यज्ञदेशे, 'आ' समन्तात्, 'वर्द्धमानः', आस्ते। 'धीराः' धीमन्तो यजमानादयः, 'अपसः' कर्म्मणोनिमित्तीभूतात्, 'मनीषा' स्वकीयया 'मनीषया' बुद्ध्या, 'पुनन्ति' तमिमं यूपं शोधयन्ति, 'विप्रः' ब्राह्मणः, ऋत्विक्सङ्घः, 'देवया' देवगामिनीं, 'वाचं' यूपस्तुतिं, 'उदियर्त्ति' उद्गमयति, उच्चारयतीत्यर्थः॥

अथ "यूपाय परिवीयमाणायानुब्रूहीति प्रेषितेन होत्रा पठनीयामृचमाह। "युवा सुवासाः परिवीत आगात्। स उ श्रेयान् भवति जायमानः। तं धीरासः कवय उन्नयन्ति। स्वाधियो मनसा देवयन्तः" इति। यथा लोके 'सुवासाः' शोभनवासोपेतः, 'युवा' यौवनयुक्तः पुरुषः, अग्रत आग-

च्छति। एवमयं यूपः 'परिवीतः', रशनया वेष्टितः, 'आगात्' इह कर्म्मण्यागतः, 'स उ' स एव यूपः, 'जायमानः' इह कर्म्मणि निष्पद्यमानः, 'श्रेयान्' दिने दिने प्रशस्यतरो भवति। 'तं' यूपं, 'धीरासः' बुद्धिमन्तः, 'कवयः' विद्वांसो यजमानादयः, 'उन्नयन्ति' स्तूयमानैर्गुणैरुच्छ्रितं कुर्व्वन्ति। कीदृशा यजमानादयः, 'स्वाधियः' स्वयमेव बुद्ध्या यन्ति, स्वतन्त्रबुद्धय इत्यर्थः। 'मनसा' स्वकीयेन 'देवयन्तः' देवान् प्राप्तुमिच्छन्तः॥

कल्पः। समीध्यमानवतीं समिद्धवतीं चोत्तरेण पृथुपाजवत्यौ धाय्ये दधाति। पृथुपाजा अमर्त्यस्तं सबाधो यतः स्रुच इति। तत्र प्रथमामृचमाह। "पृथुपाजा अमर्त्यः। घृतनिर्णिक् स्वाहुतः। अग्निर्यज्ञस्य हव्यवाट्" इति। 'अग्निः' पृथुपाजस्त्वादिगुणकः, 'पृथुपाजा' विस्तीर्णबलः, 'अमर्त्यः' मरणरहितः, 'घृतनिर्णिक्' घृतस्य शोधकः, 'स्वाहुतः' सुष्ठु-होमेन पूजितः, 'यज्ञस्य हव्यवाट्' यज्ञसंबन्धि हविर्वहति।

अथ द्वितीयामाह। "तꣳ सबाधा यतः स्रुचः। इत्थाधिया यज्ञवन्तः। आ चक्रुरग्निमूतये" इति। 'तम्' अग्निं, 'ऊतये' रक्षार्थं, 'आचक्रुः' आह्वानं कुर्व्वन्ति। कीदृशा ऋत्विजः, 'सबाधाः' बाधासहिताः, यज्ञविघ्नं बाधमाना इत्यर्थः। 'यतः स्रुचः' होमव्यापृतस्रुचः, होमाय स्रुचं सर्व्वदा व्यापारयन्तीत्यर्थः। 'इत्था' इत्थमनेन प्रकारेण, 'धिया' प्रज्ञया, 'यज्ञवन्तः' सम्यग् यागं कुर्व्वन्तः॥

कल्पः। त्वं वरुण इति वसिष्ठराजन्यानां परिदधाति। पाठस्तु "त्वं वरुण उत मित्रो अग्ने। त्वां वर्द्धन्ति मतिभिर्वसिष्ठाः। त्वे वसु सुषणनानि सन्तु। यूयं पातः स्वस्तिभिः सदा नः" इति। हे 'अग्ने', 'त्वं', अनिष्टनिवारकत्वात् 'वरुणः', असि। 'उत' अपिच, इष्टप्रापकत्वात्, 'मित्रः', असि, 'वसिष्ठाः' वसिष्ठगोत्रोत्पन्नाः पुरुषाः, 'मतिभिः' मननीयाभिस्तुतिभिः, 'त्वां' पोषयन्ति, 'सुषणनानि', सुष्ठु दानयोग्यानि, 'वसूनि' धनानि,'त्वे' त्वयि, सन्तु 'यूयं' सपरिवाराः, 'स्वस्तिभिः' क्षेमैः 'नः' अस्मान्, सदा 'पात'॥

अत्र विनियोगसङ्ग्रहः।

हौत्रे तु पाशुकेऽञ्जन्ति यूपस्याभ्यञ्जने वदेत्।
उच्छ्रेति पञ्चोच्छ्रयणे परिव्याने युवस्विति।
पृथु धाय्ये उभे त्वञ्च परिधानीयका भवेत्॥

अथ मीमांसाद्वादशाध्यायस्य तृतीयपादे चिन्तितं।

उद्दिवेत्युच्छ्रयस्वेति विकल्पो वा समुच्चयः।
विकल्पस्मारकत्वैक्यादाकारान्यत्वतोऽन्तिमः॥

यूपस्योच्छ्रयणे करणभूत एष मन्त्रोऽध्वर्युणा पठ्यते। उद्दिवꣳस्तभानां तपिक्षं पृण पृथिवीमुपरेण दृꣳहेति उच्छ्रीयमाणाय यूपाय प्रेषितेन होत्राऽयं मन्त्रः पठ्यते। उच्छ्रयस्व वनस्पते। वर्ष्मन् पृथिव्या अधीति। अनयोर्मन्त्रयोर्यूपोच्छ्रयणे स्मारणमेकमेव कार्यं। तस्माद्विकल्प इति चेत् मैवं। करणमन्त्र उच्छ्रयणं करोमीत्येवं स्मारयति। होत्रस्तु क्रि-

यमाण उच्छ्रयणमनुवदन्नध्वर्य्योर्यूपोच्छ्रयणं कर्त्तव्यमित्येवंविधां स्मृतिं जनयति। तत्र स्मार्य्यस्योच्छ्रयणस्यैकत्वेऽपि कर्त्तव्यमित्यस्य करोमीत्यस्य च स्मृतिप्रकारस्यान्यत्वात्। कार्यैक्याभावेन समुच्चयः। तत्रैवान्यच्चिन्तितम्।

उच्छ्रयस्वसमिद्धस्येत्यादीनां किं विकल्पनम्।
समुच्चयो वा कार्य्यैक्यादाद्योऽनुस्मृतयेऽन्तिमः॥

उच्छ्रयस्वेत्यृगेका। समिद्धस्य श्रयमाणमिति द्वितीया। ऊर्ध्व ऊषुण इति तृतीया। ऊर्द्ध्वो नः पाहीति चतुर्थी। ता एताः क्रियमाणमनुवदन्त्यो होत्रा पठ्यन्ते। तासां यूपोच्छ्रयणकर्त्तव्यतास्मारणस्य कार्य्यस्यैकत्वाद्विकल्प इति चेत् मैवं। प्रथमं मन्त्रेणोत्पन्नायाः स्मृतेरुत्तरोत्तरमनुस्मृतेः पृथक्प्रयोजनत्वात्। तस्मात् समुच्चयः॥

इति प्रथमोऽनुवाकः॥ १॥

---

अथ द्वितीयोऽनुवाकः।

प्रथमेऽनुवाके यूपसंस्कारा उक्ताः। अथ द्वितीये प्रयाजविषया मैत्रावरुणप्रैषाः। तृतीये च होतुर्याज्या आम्नायन्त। तथा च बोधायन आह। यदा जानाति समिद्धः प्रेष्यति। तं मैत्रावरुणः प्रेष्यति होता यक्षदग्निं समिधा सुषमिधा समिद्धमित्यथ होता यजति समिद्धो अद्य मनुषे दुरोण इति ताविमावेव व्यतिषङ्ग उत्तरेणोत्तरेण मैत्रावरुणः। प्रेष्यत्युत्तरेणोत्तरेण होता यजतीति। अत्राध्वर्युः। समिद्धः प्रेष्यति

मन्त्रेण यदा मैत्रावरुणं प्रेष्यति। तदानीमयं मैत्रावरुणो-होता यक्षदित्यादिभिरनुवाकोक्तैर्मन्त्रैर्होतारं प्रेष्यति। तत्र प्रथमं मन्त्रमाह। "होता यक्षदग्निꣳ समिधा सुषमिधा समिद्धं नाभा पृथिव्याः सङ्गथे वामस्य। वर्ष्मन्दिव इडस्पदे वेत्वाज्यस्य होतर्यज" [१] इति। योऽयं दैव्यः 'होता', सोऽयं 'समिधा' समिधाख्यया प्रथमप्रयाजदेवतया, सहितम् 'अग्निं', 'यक्षत्' यजतु, पूजयतु। कीदृशमग्निं, 'पृथिव्याः' वेदिरूपायाः, सम्बन्धिन्यां 'नाभौ' उत्तरवेदिमध्यगतायामुत्तरनाभौ, 'सुषमिधा' शोभनसमिन्धनेन, 'समिद्धं' सम्यक् दीपितं। कीदृशे नाभिस्थाने, 'वामस्य' वननीयस्य धनस्य, 'सङ्गथे' सम्यक् प्राप्तिनिमित्ते, 'दिवोवर्ष्मन्' द्युलोकवासिनामुच्छ्रयकारिणे, 'इडस्पदे' अन्नस्य प्रापके, 'आज्यस्य वेतु' समिद्देवतायुक्तोऽग्निरिदमाज्यं पिबतु, तदर्थं हे मानुष 'होतः', 'यज' याज्यां पठ॥

अथ द्वितीयं मन्त्रमाह। "होता यक्षत् तनूनपातमदितेर्गर्भं भुवनस्य गोपां। मध्वाद्य देवो देवेभ्यो देवयानान् पथो अनक्तु वेत्वाज्यस्य होतर्यज" [२] इति। 'तनूनपातं' तनूनपान्नामकं द्वितीयप्रयाजदेवं, दैव्यः 'होता', पूजयतु। कीदृशं, 'अदितेर्गर्भं' भूमेः पुत्रं, 'भुवनस्य गोपां' भूतजातस्य पालकं, सः 'देवः' तनूनपान्नामकोऽग्निविशेषः, 'अद्य' अस्मिन् कर्म्मणि, 'देवयानान् पथः', देवानामागमनमार्गान्, 'देवेभ्यः' देवार्थं, 'मध्वा' मधुरेणाज्येन, 'अनक्तु' अक्तान् करोतु, वेलाज्यस्येत्यादि पूर्व्ववत्॥

अथ तृतीयं मन्त्रमाह। "होता यक्षन्नराशꣳसं नृशस्तं नॄꣳः प्रणेत्रं। गोभिर्वपावान्त्स्यादीरैः शक्तिमान्रथैः प्रथमयावा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज" [३]. इति। दैव्यः 'होता', 'नराशंसाख्यं' अग्निं विकल्पितद्वितीयप्रयाजदेवं, पूजयतु। कीदृशमग्निं, 'नृशस्तं, नृभिर्यजमानादिभिः स्तुतं, 'नॄꣳः प्रणेत्रं' मनुष्याणां प्रकर्षेण नेतारं, स च नराशंसाख्योऽग्निः 'गोभिः', 'वपावान्' समृद्धिमान् 'स्यात्,' गोसमृद्धिहेतुर्भवत्वित्यर्थः। तथा 'वीरैः' पुत्रादिभिः, 'शक्तिमान्' सर्व्वकार्य्यसाधनसमर्थो भवतु। 'रथैः', नानाविधैः 'प्रथमयावा' सर्व्वेभ्यः प्रथमतो गन्ता, भवतु। 'हिरण्यैः', बहुभिः 'चन्द्री' आह्लादवान्, भवतु। यजमानाय गोपुत्ररथहिरण्यानि प्रयच्छत्वित्यर्थः। वेत्वाज्यस्येति पूर्व्ववत् ॥

अथ चतुर्थं मन्त्रमाह। "होता यक्षदग्निमिड ईडितो देवो देवाꣳ आवक्षद्दूतो हव्यवाडमूरः। उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज" इति। 'इड' इडेत्येतन्नामकम्, 'अग्निं' तृतीयप्रयाजदेवं, दैव्यः 'होता', यजतु। स च 'देवः', 'ईडितः' यजमानादिभिः स्तुतः, 'देवान्', सर्व्वान् 'आवक्षत्' इह कर्म्मण्यावहतु। 'दूतः' दूतवद्धितकारी, 'हव्यवाट्' हविषो वोढा, 'अमूरः' अमूढः, स देवः 'इमं यज्ञं', 'उपावतु' उपेत्य रक्षतु। 'इमां', च 'उपावतु', 'देवहूतिं' मदीयं देवाह्वानमपि, 'अवतु'। वेत्वित्यादि पूर्व्ववत् ॥

अथ पञ्चमं मन्त्रमाह। "होता यक्षत् बर्हिः सुष्टरी-मोर्णं म्रदा अस्मिन् यज्ञे वि च प्र च प्रथताᳪ स्वासस्थं देवेभ्यः। एमेनदद्य वसवो रुद्रा आदित्याः सदन्तु प्रियमिन्द्रस्यास्तु वेत्याज्यस्य होतर्यज" [५] इति। 'सुष्टरीमा' शोभनवेद्यास्तरणेन युक्तं, 'बर्हिः' नामकं चतुर्थप्रयाजदेवमग्निं, दैव्यः 'होता', यजतु। 'ऊर्णं म्रदाः' कम्बलवन्मृदुमूर्त्तिः, स देवः 'अस्मिन्' मदीये, 'यज्ञे', 'वि च' प्रथतां 'प्र च प्रथताञ्च' विविधमपि प्रसरतु प्रकर्षेण प्रसरतु। 'देवेभ्यः' देवार्थं, 'स्वासस्थं' सुखासनत्वेन स्थातुं योग्यं, 'एमेन' इत्थंभूतमृदुत्वादिगुणयुक्तेन, 'इद्' बर्हिः, 'अद्य' अस्मिन् यज्ञे, 'वसुरुद्रादित्याः', 'आसदन्तु' आसीदन्तु। तस्य 'बर्हिरिन्द्रस्य', अपि 'प्रियमस्तु'॥

अथ षष्ठं मन्त्रमाह। "होता यक्षद्दुर ऋष्वाः कवष्योऽकोषधावनीरुदाताभिर्जिहतां विपक्षोभिः श्रयन्तां। सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो वियन्त्वाज्यस्य होतर्यज" [६] इति। 'दुरः' द्वारसंज्ञकाः पञ्चमप्रयाजदेवताः, तद्रूपमग्निं दैव्यः 'होता', यजतु। ताश्च, 'ऋष्वाः' महतीः हिंस्राः वा, 'कवष्यः' कवाटवतीः, द्वाराभिमानित्वात् 'अकोषधावनीः' या सुच्छिद्रैर्धावन्ति ताः कोषधावन्यः तद्विपरीताः, द्वारः 'उदाताभिः' दिग्भिर्दीप्तिभिर्वा, 'उज्जिहतां' उद्गच्छन्तु। 'पक्षोभिः' पार्श्वैः, 'विश्रयन्तां' विविधं श्रयन्तां। 'अस्मिन् यज्ञे', 'सुप्रायणाः' सुखेन प्रापणीयाः, 'ऋतावृधः' ऋतस्य सत्यस्य, यज्ञस्य वा वर्द्धयित्र्यः, 'विश्रयन्तां' विविधं सेवन्तां॥

अथ सप्तमं मन्त्रमाह। "होता यक्षदुषासा नक्ता बृहती सुपेशसा नृृ: पतिभ्यो योनिं कृण्वाने। सꣳस्मयमाने इन्द्रेण देवैरिदं बर्हिःसीदतां वीतामाजस्य होतर्यज" [७] इति। 'उषासा नक्ता' अहश्च रात्रिश्चेति षष्ठमप्रयाजदेवते, तद्रूपमग्निं दैव्यः 'होता', यजतु। कीदृशौ देवते, 'बृहती' गुणैर्महत्यौ, 'सुपेशसा' शोभनरूपयुक्ते, 'नृृ:पतिभ्यः' नृणां पतयो ये राजानः तदर्थं, 'योनिं कृण्वाने' स्थानं कुर्वाणे, 'इन्द्रेण देवैः', च 'सꣳस्मयमाने' सम्यग् घर्षेण स्मितं कुर्वाणे, तथाविधदेवते 'इदं बर्हि'र्यज्ञं, 'आसीदतां'। वीतामित्यादि पूर्ववत्॥

अथ अष्टमं मन्त्रमाह। "होता यक्षद्दैव्या होतारा मन्द्रा पोतारा कवी प्रचेतसा स्विष्टमद्यान्यः। करदिषास्वभिगूर्त्तमन्य ऊर्जा स तव सेमं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य होतर्यज" [८] इति। दैव्यहोतृनामकौ सप्तमप्रयाजदेवौ, तदात्मकमग्निं दैव्यः 'होता,' यजतु। कीदृशौ देवौ, 'मन्द्रा' हर्षयुक्तौ, 'पोतारा' शोधयितारौ, 'कवी' विद्वांसौ, शास्त्रज्ञौ, अतएव 'प्रचेतसा' प्रकृष्टज्ञानौ, तयोः 'अन्यः' एको देवः, 'अद्य' 'अस्मिन् कर्म्मणि, 'इषा' अन्नेनैव हविषा, 'स्विष्टं करत्' सुष्टुयागो यथा भवति तथा करोतु। 'अन्यः' इतरो देवः, 'ऊर्ज्जा' रसेन, 'स्वभिगूर्त्तं' शोभनाभिप्रेतफलसम्बन्धं, करोतु। कीदृश्या ऊर्ज्जा, 'सतवसा' बलसहितया, तौ चोभौ देवौ 'दिवि' द्युलोके, स्थितेषु 'देवेषु', 'इमं यज्ञं', 'धत्तां' स्थापयतां। वीतामित्यादि पूर्ववत्॥

अथ नवमं मन्त्रमाह। "होता यक्षत्तिस्रो देवीरपसा-मपस्तमा अछिद्रमद्येदमपस्तन्वतां। देवेभ्यो देवीर्देवमपो-वियंत्वाज्यस्य होतर्यज" [९] इति। इडा सरस्वती भार-तीत्येवंरूपाः 'तिस्रः' अष्टमप्रयाजदेव्यः, तद्रूपमग्निं दैव्यः 'होता', यजतु। कीदृश्यो देव्यः, 'अपसामपस्तमाः' अपसा-शब्दः कर्म्मवाची तेन तद्वतीरुपलक्ष्यन्ते, अपसां कर्म्मवतीनां मध्ये अतिशयेन कर्म्मवत्यः, तादृश्यो देव्यः 'अद्य' अस्मिन् दिने, 'इदमपः' अस्मदीयं कर्म्म, 'अच्छिद्रं' वैकल्यरहितं यथा भवति तथा, 'तन्वतां' सम्पादयन्तु, किञ्च 'देवीः' ता देव्यः, 'देवेभ्यः' देवार्थं, 'अपः' अस्मदीयं कर्म्म, 'देवं' देव-नशीलं, अभिमतफलप्रदानसमर्थं, कुर्व्वतां। वियंत्वित्यादि पूर्व्ववत्॥

अथ दशमं मन्त्रमाह। "होता यक्षत्त्वष्टारमचिष्टुम-पाकꣳ रेतोधां विश्रवसं यशोधां। पुरुरूपमकामकर्शनꣳ सुपोषः पोषैः स्यात् सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज" [१०] इति। 'त्वष्टा' नवमप्रयाजदेवः, तद्रूपमग्निं दैव्यः 'होता', यजतु। कीदृशं त्वष्टारं, 'अचिष्टुं' चेष्टनरहितं, चाञ्चल्यर-हितं, स्थिरमित्यर्थः। 'अपाकं' अबालं, प्राज्ञमित्यर्थः। 'रेतो-धां' रेतसः पुत्रादिवीजस्य यजमाने धारयितारं, 'विश्रवसं' विविधकीर्त्तियुक्तं, 'यशोधां' यजमाने यशसो धारयितारं, 'पुरुरूपं' बहुरूपं, 'अकामकर्शनं' कामानामनाशयितारं, सोऽस्मिन् यजमाने 'पोषैः' धनादिसमृद्धिभिः, 'सुपोषः स्यात्'

सुष्टुपोषको भवतु। 'वीरैः' पुत्रादिभिः, 'सुवीरः' शोभनापत्यप्रदः, भवतु। वेत्विति पूर्ववत्॥

अथ एकादशं मन्त्रमाह। "होता यक्षद्वनस्पतिमुपावसृक्षत् धियो जोष्टारꣳ शशमन्नरः। स्वदात् स्वधितिर्ऋतुथाद्य देवो देवेभ्यो हव्यावाड् वेत्वाज्यस्य होतर्यज" [११] इति। 'वनस्पतिं' यूपाधारभूतं दशमप्रयाजदेवतात्मकमग्निं, दैव्यः 'होता', यजतु। 'धियो जोष्टारं' बुद्धेः प्रीणयितारं, 'शशमत्' पशोः शमिता, 'नरः' पुरुषः, 'उपावसृक्षत्' पश्वर्थं यूपत्वेनोपावसृजतु, संयोजयत्वित्यर्थः। किञ्च स वनस्पतिर्देवः 'स्वधितिः' स्वधितिमान् यूपः, स्वधितिना संस्कृत इत्यर्थः। 'ऋतुथा' ऋतौ विहिते कालविशेषे, 'अद्य' अस्मिन् कर्म्मणि, 'स्वदात्' अस्माभिर्दीयमानं हविः स्वदयतु। किञ्च सः 'देवः' वनस्पतिः, 'देवेभ्यः' देवार्थं, 'हव्या' हवींषि, 'अवाट्' वहतु। वेत्वित्यादि पूर्ववत्॥

अथ द्वादशमन्त्रमाह। "होता यक्षदग्निꣳ स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानाꣳ स्वाहा स्वाहाकृतीनाꣳ स्वाहा हव्यसूक्तीनां। स्वाहा देवाꣳ आज्यपान् स्वाहाग्निं होत्राज्जुषाणा अग्न आज्यस्य वियन्तु होतर्यज" [१२] इति। योऽयं 'स्वाहा'शब्दोदित उत्तमप्रयाजदेवोऽग्निः तं दैव्यः 'होता', यजतु। तदग्निप्रीत्यर्थं 'आज्यस्य', स्वाहुतिरस्तु, मेदोरूपस्य मांसविशेषस्य स्वाहुतिरस्तु। 'स्तोकानां' लेशानां, स्वाहुतिरस्तु। 'स्वाहाकृतीनां' स्वाहाकारेणादीयमानानां सर्व्वाहुतिद्रव्याणां

स्वाहुतिरस्तु। 'हव्यसूक्तीनां' हविस्तावकमन्त्राभिमानिनीदेवतानामर्थे स्वाहुतिरस्तु। येऽत्राज्ये पठिता देवास्तान् सर्व्वानुद्दिश्य स्वाहुतिरस्तु। 'होत्रात्' होमनिमित्तभूतात्, 'अग्निं', 'जुषाणाः' सेवमानाः, ये देवाः तेषां स्वाहुतिरस्तु। अयमग्निरन्ये च सर्वे देवाः आज्यं पिबन्तु हे मानुष 'होतः', तदर्थं याज्यां पठ॥

इति द्वितीयोऽनुवाकः॥ २॥

---

अथ तृतीयोऽनुवाकः।

द्वितीयानुवाके प्रयाजविषया मैत्रावरुणप्रैषा अभिहिताः। अथ तृतीयानुवाके प्रयाजयाज्या आप्रीसंज्ञका होत्रा पठनीया उच्यन्ते। तत्र प्रथमामाह। "समिद्धो अद्य मनुषो दुरोणे। देवो देवान्यजसि जातवेदः। आ च वह मित्रमहश्चिकित्वान्। त्वं दूतः कविरसि प्रचेताः" [१] इति। हे 'जातवेदः', 'देवः' 'दीप्यमानः' त्वं 'मनुषः' मनुष्यस्य यजमानस्य, 'दुरोणे' गृहे, 'अस्मिन्' कर्म्मणि, 'समिद्धः' प्रज्वालितः सन्, 'देवान्', 'यजसि' यज, हविषा पूजय। हे 'मित्रमहः' मित्राणां पूजयितः, 'चिकित्वान्' अभिज्ञः, त्वं 'आवह' देवानामावाहनमपि कुरु। त्वं 'दूतः' देवानां हितकारी, 'कविः' शास्त्राभिज्ञः, अतएव 'प्रचेताः' प्रकृष्टज्ञानस्य, 'असि', ॥

अथ द्वितीयामाह। "तनूनपात् पथ ऋतस्य यानान्

मध्वा समञ्जन् स्वदया सुजिह्व। मन्मानि धीभिरुत यज्ञ-मृन्धन्। देवत्रा च कृणुह्यध्वरन्नः" [२] इति। हे 'तनूनपात्', नामकाग्ने हे 'सुजिह्व' शोभनज्वाल, 'ऋतस्य' यज्ञस्य, 'यानान्' फलप्राप्तिहेतून्, 'पथः' मार्गान् हविर्लक्षणान्, 'मध्वा' मधुना रसेन, 'समञ्जन्' सम्यक् स्वच्छीकुर्व्वन्, 'स्वदया' स्वादूकुरु। किञ्च 'मन्मानि' मननीयानि अस्माकमभिप्रेतानि, 'धीभिः' आत्मीयबुद्धिभिः, 'ऋन्धन्' समृद्धानि कुर्व्वन्, 'उत' 'अपिच' 'यज्ञमृन्धन्' यज्ञमपि समृद्धं कुर्व्वन्, 'नोऽध्वरं च' अस्मदीयं यज्ञमपि, 'देवत्रा कृणुहि' देवेषु कुरु॥

अथ तृतीयामाह। "नराशंसस्य महिमानमेषां उप स्तोषाम यजतस्य यज्ञैः। ते सुक्रतवः शुचयो धियन्धाः। स्वदन्तु देवा उभयानि हव्या" इति। 'नराशंस'नामकस्य अग्नेः, 'महिमानं' माहात्म्यं, 'उपस्तोषाम' उपेत्य स्तुम। कीदृशस्य, 'एषां' ऋत्विग्यजमानानां, सम्बन्धिभिः 'यज्ञैः', 'यजतस्य' पूजनीयस्य, एवं नराशंसे स्तुते सति 'देवाः', 'उभयानि हव्या' आज्यपुरोडाशलक्षणानि द्विविधानि हवींषि, 'स्वदन्तु' आस्वदन्तां। कीदृशा देवाः, 'सुक्रतवः' शोभनयज्ञाः, 'शुचयः' शुद्धाः, 'धियं धाः' ज्ञानानां धारयितारः। द्वितीयतृतीययोरनयोर्मन्त्रयोः अधिकारिभेदेन व्यवस्थितविकल्पो द्रष्टव्यः। तथा चापस्तम्ब आह, नराशंसो द्वितीयः प्रयाजो वशिष्ठशुनकानां तनूनपादितरेषां गोत्राणामिति॥

अथ चतुर्थीमाह। "आजुह्वान ईड्यो वन्द्यश्च। आयाह्यग्ने

वसुभिः सजोषाः । त्वं देवानामसि यह्व होता । स एनान्य-क्षीषितो यजीयान्" [४]इति । हे 'अग्ने', 'त्वं','आयाहि' अस्मिन् कर्मण्यागच्छ । कीदृशस्त्वं, 'आजुह्वानः' देवानामाह्वाता, 'ईड्यः' स्तुत्यः, 'वन्द्यश्च' नमस्कार्य्योऽपि, 'वसुभिः' देवैः, 'सजोषाः' समानप्रीतिः, हे 'यह्व' प्रभूतसत्त्व, 'देवानां', 'होता' आह्वाता, 'असि', 'सः' त्वं, 'एनान्' देवान्, 'यक्षि' यज, 'इषितः' अस्माभिरभ्येषितः, प्रार्थितः, 'यजीयान्' मनुष्याद-प्यतिशयेन यष्टा ॥

अथ पञ्चमीमाह । "प्राचीनं बर्हिः प्रदिशा पृथिव्याः । वस्तो-रस्या वृज्यते अग्रे अह्नां । व्युप्रथते वितरं वरीयः । देवेभ्यो अदितये स्योनम्" [५] इति । यदिदं 'प्राचीनं' प्रागग्रत्वेना-स्तीर्णं, 'बर्हिः', अस्ति तदिदं 'प्रदिशा' प्रकर्षेण दिश्यमानेन मन्त्रेण,'पृथिव्याः' वेदिरूपायाः,'वस्तोः' आच्छादनार्थं,'अह्ना-मग्रे' प्रातःकाले, 'अस्याः' प्राच्या दिशः सकाशात्, 'वृज्यते' आह्रियते । तथा च मन्त्रान्तरं, त आवहन्ति कवयः पुर-स्तादिति । तथाहृतं बर्हिः 'देवेभ्यः' देवार्थं, 'अदितये' भूम्यर्थं, 'वितरं' विविधं, 'वरीयः' अत्यन्तश्रेष्ठं, 'स्योनं' सुखं, यथा भवति तथा 'व्युप्रथते' वेद्यां प्रसृतं भवति ॥

अथ षष्ठीमाह । "व्यचस्वतीरुर्विया विश्रयन्तां । पतिभ्यो न जनयः शुम्भमानाः । देवीर्द्वारो बृहतीर्विश्वमिन्वाः । देवेभ्यो भवथ सुप्रायणाः"[६]इति । या 'द्वार'देवताः सन्ति ताः अस्मिन् कर्म्मणि 'विश्रयन्तां' विशेषणाश्रिता भवन्तु, कीदृश्यः, 'व्यच-

स्वतीः' व्याप्तिमत्यः, अत एव 'उर्विया' अत्यन्तविस्तृताः, 'शुम्भमानाः' शोभनाः। तत्र दृष्टान्तः, 'पतिभ्यो न जनयः' या स्त्रियः पत्यर्थं शोभन्ते तद्वद्देवीरित्यादीनि चत्वारि सम्बुध्यन्तानि। 'बृहतीः' गुणैर्महत्यः, 'विश्वमिन्वाः' विश्वस्य प्रीणयित्र्यः, 'द्वारो देवीः' द्वाराभिमानिन्यः, हे देव्यः; 'देवेभ्यः' देवार्थं, 'सुप्रायणाः' सुष्ठुगमनक्षमाः भवथ॥

अथ सप्तमीमाह। "आ सुष्वयन्ती यजते उपाके। उषासा नक्ता सदतां नि योनौ। दिव्ये योषणे बृहती सुरुक्मे। अधि श्रियꣳ शुक्रपिशन्दधाने" [७] इति। 'उषासा नक्ता' अहोरात्रे देव्यौ, 'योनौ' अस्मिन् यज्ञस्थाने, 'नि' नितराम् आसीदतां। कीदृश्यौ, 'सुष्वयन्ती' सुष्ठु आयन्त्यौ गच्छन्त्यौ, 'यजते' यजनीये, 'उपाके' जनान्त्रचितुमुपक्रान्ते, 'दिव्ये' दिवि भवे, 'योषणे' योषितां वित्तेन प्रीणयित्र्यौ, 'बृहती' गुणैर्महत्यौ, 'सुरुक्मे' सुष्ठु दीप्ते, 'शुक्रपिशं' निर्मलरूपां, 'श्रियं', 'अधिदधाने', अधिकं धारयन्त्यौ॥

अथ अष्टमीमाह। "दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै। प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता" [८] इति। 'दैव्यहोतृ'नामकौ, देवौ अत्रासीदतामितिशेषः। कीदृशौ, 'प्रथमा' मनुष्यहोतुः पूर्व्वभाविनौ, 'सुवाचा' शोभनस्तोत्रौ, 'मनुषः' यजमानस्य, 'यजध्यै' यष्टुं, 'यज्ञं', 'मिमाना' उत्पादयन्तौ, 'प्रचोदयन्ता' 'विदथेषु' यज्ञेषु सर्व्वान् ऋत्विजः प्रेरयन्तौ, 'कारू' स्वयञ्च

कर्त्तारौ, 'प्राचीनं ज्योतिः' प्राच्यां दिशि प्रणीतं आहवनीयाख्यमग्निं, 'प्रदिशा' प्रकृष्टेनोपदिष्टमार्गेण 'दिशन्तौ' निर्व्वाहकौ ॥

अथ नवमीमाह। "आ नो यज्ञं भारती तूयमेतु। इडा मनुष्वदिह चेतयन्ती। तिस्रो देवीर्वर्हिरिदꣳ स्योनं। सरस्वती स्वपसः सदन्तु" [९] इति। 'भारत्याख्या देवी', 'नः' अस्मदीयं, 'यज्ञं', 'तूयं' चिप्रं, 'एतु' आगच्छतु। 'इह' अस्मिन् कर्म्मणि, 'मनुष्वत्' 'चेतयन्ती' यथा मनुष्यो मयास्योपकर्त्तव्यमिति जानाति तद्वज्जानाति, 'इडा'ख्या देवी चागच्छतु। तथा 'सरस्वती', चागच्छतु। एवमेताः 'तिस्रोदेव्यः', 'स्वपसः' शोभनकर्म्माणः, 'स्योनं' सुखकरं, 'इदं वर्हिः' इमं यज्ञं, 'आसदन्तु' प्राप्नुवन्तु ॥

अथ दशमीमाह। "य इमे द्यावापृथिवी जनित्री। रूपैरपिꣳशद्भुवनानि विश्वा। तमद्य होतरिषितो यजीयान्। देवं त्वष्टारमिह यक्षि विद्वान्"[१०]इति। 'यः' त्वष्टा देवः,'जनित्री' विश्वस्य जनयित्र्यौ, 'इमे द्यावापृथिव्यौ', 'रूपैः' देवतिर्यङ्मनुष्याद्याकारैः, 'अपिꣳशत्' रूपयुक्तान्यकरोत्। तथा 'विश्वा भुवनानि' सर्व्वाणि भूतजातानि, 'अपिꣳशत्' रूपयुक्तान्यकरोत्। हे 'होतः', 'यजीयान्' यष्टृतमः, त्वं 'विद्वान्' अभिज्ञः सन्, 'इषितः' अस्माभिः प्रार्थितः, 'अद्य' अस्मिन् दिने, 'इह' कर्म्मणि, 'तं' त्वष्टारं, 'देवं', 'यक्षि' यज ॥

अथ एकादशीमाह। "उपावसृजत्त्मन्या समञ्जन्। देवा-

नां पाथ ऋतुथा हवींषि। वनस्पतिः शमिता देवो अग्निः। स्वदन्तु हव्यं मधुना घृतेन" [११] इति। 'वनस्पतिर्देवः' यूपः, 'त्मन्या' आत्मनैव परनिरपेक्षयैव, 'ऋतुथा' तत्तदृतौ, 'देवानां,' 'पाथः' पशुलक्षणमन्नं, अन्यानि च 'हवींषि', 'समंजन्' सम्यक् प्रकाशयन्, 'उपावसृजत्' देवेभ्यः प्रयच्छतु। किञ्च योऽयं 'वनस्पतिः' यूपदेवः, यश्च 'शमिता' शमितादेवः, योऽपि 'अग्निः' अग्निर्देवः, एते सर्व्वे 'मधुना' मधुरेण घृतेन, 'हव्यं', 'स्वदन्तु' स्वादूकुर्व्वन्तु॥

अथ द्वादशीमाह। "सद्योजातो व्यमिमीत यज्ञं। अग्निर्देवानामभवत् पुरोगाः। अस्य होतुः प्रदिश्यृतस्य वाचि। स्वाहाकृतꣳ हविरदन्तु देवाः" [१२] इति। 'सद्योजातः' जातमात्र एव, अयं 'अग्निः', 'यज्ञं', 'व्यमिमीत' विशेषेणोत्पादयति। अतएवायमग्निः 'देवानां', मध्ये 'पुरोगाः' प्रथमगामी, मुख्यः, 'अभवत्'। 'प्रदिशि' प्रकृष्टायां पूर्व्वस्यां दिशि, स्थितस्य 'ऋतस्य' यज्ञनिष्पादकस्य, 'अस्य' आहवनीयाख्यस्य, 'होतुः' अग्नेः, 'वाचि' वागुपलक्षित आस्ये, 'स्वाहाकृतं' स्वाहाकारेण प्रक्षिप्तं, 'हविः', सर्व्वे 'देवाः', 'अदन्तु' भक्षयन्तु॥

इति तृतीयोऽनुवाकः।

---

अथ चतुर्थोऽनुवाकः ।

तृतीये प्रयाजयाज्या आप्रीसंज्ञका अभिहिताः । चतुर्थे पर्य्यग्नीकरणीया उच्यन्ते । कल्पः । यदा जानाति पर्य्यग्नये क्रियमाणायानुब्रूहि इति । तदा मैत्रावरुणपर्य्यग्निकरणाया-न्वाहाऽग्निर्होता नोऽध्वर इति । तत्र प्रथमामृचमाह । "अ-ग्निर्होता नो अध्वरे वाजी सन् परिणीयते । देवो देवेषु य-ज्ञियः" इति । 'देवेषु' मध्ये 'यज्ञियः' यज्ञार्हः, 'देवः' अग्निः, 'नोऽध्वरे' अस्मदीये यज्ञे, 'होता' होमनिष्पादकः, 'वाजी' हविर्लक्षणान्नयुक्तः सन्, 'परिणीयते' परितो नीयते ॥

अथ द्वितीयामृचमाह । "परि त्रिविष्ट्यध्वरं । यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत्" इति । 'रथीरिव' रथवा-निव, अयं पर्य्यग्निकरणार्थं उल्मुकरूपः 'अग्निः', 'अध्वरं' योगसाधनं पशुं, 'त्रिविष्टि' वेष्टनत्रयं यथा भवति तथा, पर्य्यग्निकरणार्थं 'प्रयः' प्रायणीयं हविः; 'देवेषु', 'आदधत्' आदधातित्येवमर्थं ॥

अथ तृतीयामृचमाह । "परि वाजपतिः कविः अग्निर्हव्या-न्यक्रमीत् । दधद्रत्नानि दाशुषे" इति । 'वाजपतिः' अन्नस्य पालकः, 'कविः' विद्वान्, अयम् 'अग्निः', 'हव्यानि', पुरुरूपाणि 'पर्य्यक्रमीत्' परिक्रान्तवान् । किं कुर्व्वन्, 'दाशुषे' हविर्दत्त-वते, यजमानाय 'रत्नानि', 'दधत्' सम्पादयन् ॥

इति चतुर्थोऽनुवाकः ।

---

अथ पञ्चमोऽनुवाकः।

चतुर्थे पर्य्यग्निकरणीया ऋच उक्ताः पञ्चमे अग्निरुप्रैषवादिनं होतारं प्रति मैत्रावरुणप्रैषोभिधीयते। कल्पः। यदा जानात्युपप्रेष्य होतर्हव्या देवेभ्य इति मैत्रावरुणः प्रेष्यत्यजैदग्निरिति जपति। पाठस्तु। "अजैदग्निः। असनद्वाजं नि। देवो देवेभ्यो हव्याऽवाट्। प्राञ्जोभिर्हिन्वानः। धेनाभिः कल्पमानः। यज्ञस्यायुः प्रतिरन्। उप प्रेष्य होतः। हव्या देवेभ्यः" इति। अथ शामित्रः मैत्रं प्रतिनियमनस्य पशोः पुरतो योयमुल्मुकाख्योऽग्निरित्युच्यते। सोऽयम् 'अग्निः', 'अजैत्' जयतु। हविःसम्पादनसामर्थ्यमत्र जयः। 'वाजं' अन्नं, हविर्लक्षणं, 'न्यसनत्' नीयमानं सम्भजतु। 'देवः' द्योतनात्मकोऽयमग्निः, 'देवेभ्यः' देवार्थं, 'हव्या' हवींषि, 'अवाट्' आवहतु। किं कुर्व्वन्, 'अञ्जोभिः' ऋत्विग्भिर्गतिभिः, 'प्रहिन्वानः' अग्रतो गच्छन्, 'धेनाभिः' प्रीणयित्रीभिर्दीप्तिभिर्धारणादिभिर्वा, 'कल्पमानः' सामर्थ्यं सम्पादयन्, 'यज्ञस्य' यज्ञवतो यजमानस्य 'आयुः', 'प्रतिरन्' प्रकर्षेण वर्द्धयन्, एवमयमग्निर्हव्यानि वहतु। हे 'होतः', 'उपप्रेष्य' प्रेर्य्यमाणमैत्रावरुणेन प्रेषितः सन् पश्चात् प्रेष्य ज्ञापयसि। किं ज्ञापितव्यमिति तदुच्यते, 'देवेभ्यः' 'हव्या' देवार्थं हवींषि ज्ञापय॥

इति पञ्चमोऽनुवाकः।

---

अथ षष्ठोऽनुवाकः।

पञ्चमे अध्रिगुप्रैषार्थो मैत्रावरुणप्रैषोऽभिहितः। षष्ठेऽध्रिगुप्रैषोऽभिधीयते। कल्पः। अथ होताध्रिगुमन्वाह दैव्याः शमितार इति। पाठस्तु। "दैव्याः शमितार उत मनुष्या आरभध्वं। उपनयत मेध्या दुरः। आशासाना मेधपतिभ्यां मेधं। प्रास्मा अग्निं भरत। स्तृणीत बर्हिः। अन्वेनं माता मन्यतां। अनु पिता। अनु भ्राता सगर्भ्यः। अनु सखा सयूथ्यः। उदीचीनाꣳ अस्य पदो निधत्तात्। सूर्यं चक्षुर्गमयतात्। वातं प्राणमन्ववसृजतात्। दिशः श्रोत्रं। अन्तरीक्षमसुं। पृथिवीꣳ शरीरं। एकधास्य त्वचमाच्छ्यतात्। पुरा नाभ्या अपिशसो वपामुत्खिदतात्। अन्तरेवोष्माणं वारयतात्। श्येनमस्य वक्षः कृणुतात्। प्रशसा बाहू। शला दोषणी। कश्यपेवाꣳसा। अच्छिद्रे श्रोणी। कवषोरू स्रेकपर्णाष्ठीवन्ता। षड्विंशतिरस्य वङ्क्रयः। ता अनुष्ठ्योच्च्यावयतात्। गात्रं गात्रमस्यानूनं कृणुतात्। ऊवध्यगोहं पार्थिवं खनतात्। अस्ना रक्षः सꣳसृजतात्। वनिष्ठुमस्य मा राविष्ट। उरूकं मन्यमानाः। नेद्वस्तोके तनये। रविता रवच्छमितारः। अध्रिगो शमीध्वं। सुशमि शमीध्वं। शमीध्वमध्रिगो" इति। 'शमितारः' विशसनकर्त्तारः, ते च द्विविधाः, देवरूपा मनुष्यरूपाश्च। ते च सम्बोध्यन्ते। हे 'दैव्या शमितारः', अपिच हे 'मनुष्याः शमितारः', यूयं उभयेऽपि वक्ष्यमाणं कर्म्म कर्तुं 'आरभध्वं'। किं कर्त्तव्यमिति तदुच्यते, 'मेध्याः' मेधार्हाः, 'दुरः' द्वारो हविर्मार्गान्, विशसनहेतोर्वा, 'उप-

नयत' सन्निधापयत, 'मेधपतिभ्यां' यज्ञस्वामिभ्यां, पत्नीयजमानार्थं अग्नीषोमदेवतार्थं वा 'मेधं' यज्ञं, 'आशासानाः' प्रार्थयमाना यूयं, 'अस्मै' सञ्ज्ञपनस्थानमुपनीयमानाय पशवे, 'अग्निम्' उल्मुकाख्यं, 'प्रभरत' प्रकर्षेण अयणार्थं हरत। अथ सञ्ज्ञपनस्थानं नीतस्य पशोरधस्तात् 'बर्हिस्तृणीत' उपाकरणयोर्बर्हिषोरन्यतरत् उपचिपत। अथैनं सञ्ज्ञप्यमानं पशुं माचादयः 'अनुमन्यन्ताम्' अङ्गीकुर्व्वन्तां, समाने गर्भे भवः 'सगर्भ्यः', 'भ्राता', समाने यूथे भवः 'सयूथ्यः', सखा सञ्ज्ञप्यमानस्य 'अस्य', 'पदः' पादान्, 'उदीचीनान्' उत्तरगतान्, 'निधत्तात्' स्थापयत। 'सूर्य्यं चक्षुर्गमयतात्' चक्षुः सूर्य्यदेवतां प्रापयत। 'प्राणं' असुं वायुदेवतां प्रति 'अन्ववसृजतात्' अनुप्रापयत। 'श्रोत्रं', दिग्देवताः प्रापयत। 'असुं' जीवं, 'अन्तरिक्षं', प्रापयत। 'शरीरं', 'पृथिवीं', प्रापयत। 'एकधा' एकविधया विच्छेदराहित्येन, 'अस्य त्वचम्', 'आच्छ्यतात्' छिन्नां कुरुत। 'नाभ्याः', 'अपिशसः' छेदात्, पूर्व्वमेव 'वपां' 'उत्खिदतात्' उद्धरत। 'ऊष्माणं' उच्छ्वासं, 'अन्तरेव', 'वारयतात्', पिहितास्यं सञ्ज्ञपयेदित्यर्थः। 'श्येनं' श्येनाकृतिकम्, 'अस्य' पशोः, 'वक्षः,' कुरुत। 'बाहू', 'प्रशसा' प्रच्छेदनौ, कुरुत। 'दोषणी' प्रकोष्ठौ, 'शला कृणुतात्' शलाकाकारे कुरुत। 'अंसा कश्यपा' उभावप्यंसौ कच्छपाकारौ कुरुत। 'श्रोणी', उभे अपि 'अच्छिद्रे' अन्यूने कुरुत। 'कवषा' कपाटाकारा, 'स्रेकपर्णा' करवीरपत्राकारौ 'अष्ठीवन्ता' अविभक्तौ,

'ऊरू', मूलयुक्तौ कुरुत। 'अस्य' पशोः, 'वङ्क्रयः' वक्राणि पार्श्व-स्थीनि 'षड्विंशतिः', भवन्ति, ताः सर्व्वाः 'अनुष्ठुया' अनुष्ठानक्रमेण स्वस्थानगतानि, 'उच्यावयतात्' उद्धरत। 'गात्रं गात्रं' सर्व्व-स्यावदानीयमङ्गं, 'अनूनं कृणुतात्' अविकलं कुरुत। 'ऊव-ध्यगोहं' पुरीषगूहनस्थानं, 'पार्थिवं खनतात्' पृथिवीसम्बन्ध-मवटं खनत। 'अस्ना' रुधिरेण, 'रक्षः सꣳ सृजतात्' पिशित-लोलुपं राक्षसादि संयोजयत। 'अस्य' पशोः, 'वनिष्टुं' गुदसदृशमात्रं मांसं, 'माराविष्ट'लूनं छिन्नं माकुरुत। 'उलूकं मन्यमानाः' पक्षिविशेषाकारमवगच्छन्तः, ऊलूकसदृशं वनिष्टुं तथैवोद्धरत न तु मध्यतः छिन्नं कुरुतेत्यर्थः। 'वः' युष्माकमेवं कुर्व्वतां, सम्बन्धिनि 'तोके' पुत्रे, 'तनये' तदीयापत्ये, च 'रविता' शमयिता, 'नेत्' नैव, 'रवत्' 'रुयात्' यथा शास्त्रं छेदने क्रियमाणे भवतां गृहे पुत्रपौत्रादिनिमित्तं रोदनं न भवतीत्यर्थः। हे 'शमितारः', दैव्या मनुष्यास्च हे 'अध्रिगो' तेषु मुख्यदेव, यूयं सर्व्वेऽपि 'शमीध्वं' विशसनादिना पशुं संस्कुरुध्वं। पुनरपि विशेषाकारेणोच्यते। 'सुशमि' सुष्ठु-शमनं शास्त्रीयविशसनं यथा भवति तथा, 'समीध्वं' पशुं शमयत, संज्ञपयत, हे 'अध्रिगो', इतरैः सह यूयं सर्व्वे 'शमीध्वं' सर्व्वथा शमयत। न तूपचरितं शमनं कुरुत। क्रूरं कर्म्मेति मत्वा तदुपेक्षणं माभूदिति पुनः पुनर्व्वचनम्॥

कल्पः। अथाप्येतं जयं जपत्यध्रिगुस्च इति। पाठस्तु। "अध्रिगुश्चापापश्च। उभौ देवानाꣳ शमितारौ। ताविमं पशुꣳ

अपयतां प्रविद्वाꣳसौ यथा यथास्य अपणं तथा तथा" इति। योऽयम् 'अध्रिगु'नामकः देवः यश्च 'अपापनामकः' तौ 'उभौ', 'देवानां', मध्ये 'शमितारौ' विशसनस्य कर्त्तारौ, 'तौ' उभौ, 'इमं पशुं', 'अपयतां' अपणं पाकं कुरुतां। कीदृशौ 'यथा यथास्य अपणं तथा तथा प्रविद्वांसौ' येन येन प्रकारेणास्य पशोः अपणं भवति तं तं प्रकारं प्रकर्षेण जानन्तौ।

अत्र मीमांसा। नवमाध्यायस्य तृतीयपादे चिन्तितम्।

अविकारो विकारो वा स्यान्मेधपतिशब्दयोः।
विकारे स्वामिदेवार्थ एकार्थौ वान्तिमेऽपि किम्॥
स्वाम्यर्थौ देवतार्थौ वा स्यादन्याय्यलतोऽग्निमः।
अर्थसत्त्वाद्विकारोऽत्र द्वावर्थौ शब्दयोर्द्वयोः॥
मन्त्रैक्यादर्थ एकोऽत्र स्वाम्यस्मिन् न्याययाब्दिता।
देवार्थाशौर्द्वैव एकोऽधिष्ठाने द्वे द्विधेरणं॥

अध्रिगुप्रैषाणि गदस्यादाविदमाम्नायते। 'दैव्याः शमितार उत मनुष्या आरभध्वं। उपनयत मेध्या दुरः। आशासाना मेधपतिभ्यां मेधमिति'। शाखान्तरे मेधपतये मेधमिति। अयमर्थः। 'शमितारः' पशुघातिनः, द्विविधाः, 'दैव्या मनुष्याश्च', तानुभयान्, सम्बोध्य होता कर्त्तव्यविशेषान्निर्द्दिशति। आरम्भः कर्त्तव्यः, मेधो यज्ञः तद्योगात् दुरःपदार्थान् हिंसाहेतून् इहानयत। किं कुर्व्वन्तः; यज्ञपतिभ्यां यज्ञपत एवायज्ञमाशासाना इति तत्रैकवचनान्तस्य द्विवचनान्तस्य मेधपतिशब्दस्य बहुपशुयुक्तासु विकृतिष्वनूह ऊहो वेति संशयः।

ऊहपक्षेऽपि किमेकवचनान्तस्य यजमानार्थो द्विवचनान्तस्याग्नीषोमौ देवते इत्येवमर्थभेदः, किंवा शब्दद्वयस्यैक एवार्थ इति संशयः। एकार्थत्वपक्षेपि यजमान एवार्थो देवतैव वेति संशयः। तत्राग्नीषोमीये पशौ यजमानोऽग्नीषोमौ चेति त्रयो मेधस्य पतयः, तेष्वेकवचनस्य द्विवचनस्याचान्यायनिगदत्वेन प्रकृतावविवक्षितस्य वचनस्य विकृतावनूह इत्याद्यः पक्षः। प्रकृतौ समवेतार्थत्वे सम्पादयितुं शक्ये सत्यन्यायनिगदत्वाभावाद्विकृतावूहः कर्त्तव्य इति द्वितीयः पक्षः। अस्मिन् द्वितीयपक्षेऽपि प्रकृतावुपन्यस्तप्रकारेणार्थभेदाद्विकृतिषु बहुयजमानयुक्ताहीनादिषु यजमानानुसारेणैकवचनान्त ऊहनीयः। सोऽयं शाखाविकल्पेन प्रथमः पक्षः। शाखाभेदेन पाठभेदेऽपि मन्त्रभेदाभावादर्थभेदो न युक्तः,किन्त्वेक एवार्थ इति पक्षान्तरं। तदापि देवतायाः सम्प्रदानत्वेन स्वामित्वाभावान्मेधपतिशब्दयोग्यता नास्तीति यजमान एव तच्छब्दार्थः। तस्मिंश्च यजमाने स्वत एकत्वं जायया सह द्वित्वमित्येकवचनद्विवचने उभे अपि समवेतार्थे। ततो यजमानद्वयोपेतायां विकृतावेकवचनान्तो द्वित्वेनोहनीय द्विवचनान्तो बहुत्वेनेति पूर्व्वः पक्षः। मेधस्य यजमानार्थत्वं नैव शासनीयं, तस्य सिद्धत्वाद्देवतार्थत्वं त्वाशासनीयं। ततो मेधमाशासाना इत्येतद्देवतायां समवेतार्थं सम्प्रदानस्याप्युद्देश्यत्वेन प्राधान्यान्मेधपतित्वं अविरुद्धं। देवत्वाकारेणैकत्वादग्नित्वसोमत्वाकारेण द्वित्वाच्चैकवचनद्विवचने उपपद्येते। तस्माद्देवतानुसारेण विकृतावूह इति राद्धान्तः। तत्रैवान्यच्चिन्तितम्।

आदित्येष्वेकवाच्येष ऊह्योनेवोह्यतेन्यवत्।
गणार्थत्वादनूह्योतोविकल्पः प्रकृताविव ॥

प्रजापशुसम्पत्तिकामस्य बहुदेवत्यः पशुराम्नायते। यः कामयेत प्रथेय पशुभिः प्रप्रजया जायेयेति स एतामविं वशामदित्येभ्यः कामायालभेतेति। वशा बन्ध्या कामाय कामुकेभ्य इत्यर्थः। अत्र चोदकप्राप्तो मेधपतय इत्येकवचनान्तः शब्द आदित्यानां बहुत्वाद्बहुवचनान्तत्वेनोहनीयः। यथा मेधपतिभ्यामिति द्विवचनान्त ऊह्यते, यथा वा पाशमित्येकवचनान्त ऊह्यते, तद्वदिति चेत्। मैवं। प्रकृतामग्नीषोमयोर्गणैकत्वमेकवचनान्तो ब्रूते, आदित्यानामपि गणैकत्वं समानमित्यनूहः। तस्मादविकृत एकवचनान्त इतरेण सह प्रकृताविवात्रापि विकल्प्यते। तत्रैवान्यच्चिन्तितं।

कृष्णग्रीवादिके नोह ऊहो वास्य न पूर्व्ववत्।
देवत्वं न गणस्यात ऊहो बहुतिवित्सया ॥

यूपैकादशिन्यामग्न्यादिदेवताः पशव आम्नाताः, प्रैवाग्नेयेन वापयति मिथुनꣳ सारस्वत्या करोति रेतः सौम्येन दधाति प्रजनयति पौष्णेनेत्यादिना। ते च स्वनामभिरन्यत्राम्नाताः, आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्याम इत्यादिना। तत्रास्यैकवचनान्तस्य मेधपतिशब्दस्यादित्येष्विवानूह इति चेत्। मैवं। वैषम्यात् आदित्यगणस्य तत्र देवत्वं, इह त्वेकैकस्यैव पृथग्देवत्वं, अतो बहून् देवानभिधातुं बहुवचनान्तत्वमूहनीयं। तत्रैवान्यच्चिन्तितं।

द्विपश्वोश्चक्षुराद्यूहो न वोहः पशुभेदतः।
तेजोमात्रस्य सूर्य्यादावेकीभावादनूहनं॥

अग्नीषोमीयपशावध्रिगुप्रैषे पशुसम्बन्धिचक्षुरादीनां सूर्य्यादिसंसर्ग आम्नायते, सूर्य्यं चक्षुर्गमयतात्। वातं प्राणमन्ववसृजतात्। दिशः श्रोत्रमित्यादि। मैत्रꣳ श्वेतमालभेत वारुणं कृष्णमिति। विहितयोर्द्वयोः पश्वोर्मन्त्रगताश्चक्षुरादिशब्दा द्विवचनान्तत्वेनोहनीयाः। कुतः पशुभेदेन चक्षुरादीनां भिन्नत्वात्। इति चेन्नैवं। न खल्वत्रेन्द्रियाधिष्ठानं शरीरगतं गोलकं चक्षुःशब्देन विवक्षितं। तद्विवक्षायामेकस्मिन्नपि पशौ गोलकभेदाविकवचनान्तचक्षुःशब्दस्यानन्वयप्रसङ्गात् गोलकस्य सूर्य्यादिप्राप्त्यसम्भवाच्च। यत्तु रूपदर्शनादिसामर्थ्यलक्षणं तेजोमात्रं तदत्र चक्षुरादिशब्दैर्विवक्षितं, तच्च पश्वनेकत्वेऽपि ततो निर्गत्य सूर्य्यादावेकीभूतत्वात् .समुद्रप्रविष्टनदीवन्न भेदेनावतिष्ठते। तस्मान्नास्त्यूहः। तत्रैवान्यच्चिन्तितं।

एकधेत्यविकारः स्यादभ्यासो वा सहत्वतः।
आद्यो मैवं प्राकृतस्य सकृत्वस्योचितत्वतः॥

तस्मिन्नेवाध्रिगुप्रैषे श्रूयते, एकधास्य त्वचमाच्छ्यतादिति। छिन्धीत्यर्थः। तत्र द्वयोः पश्वोरेकधेत्यस्य शब्दस्य नास्तिविकारः। कुतः, तस्य शब्दस्य इह सहत्ववाचित्वात्। एकधा गाः पाययतीत्यत्र यौगपद्ये प्रयोगदर्शनात्। पश्वनेकत्वेऽपि त्वगुत्पाटनस्यैककालीनत्वं बहुपुरुषकर्त्तृकस्य घटत इति प्राप्ते ब्रूमः। प्रकृतावेकस्मिन् पशौ यौगपद्यलक्षणोर्थो न सम्भवति।

ततः सकृत्त्वं तस्य शब्दस्यार्थः। लगप्यस्य पशोर्बङ्कृत्वो न-च्छेतव्या किन्तु सर्व्वापि सकृदेकप्रयत्नेनेत्युक्तं भवति। यत् प्रकृतौ सकृत्त्वं तदेव विकृतावच्छुचिमन्ततः प्रतिपद्य सकृत्त्वमभि-धातुमेकधेत्ययं मन्त्रोऽभ्यसितव्यः। तत्रैवान्यच्चिन्तितं।

सादृश्यमुत साकल्यं श्येनाद्युक्त्या विवक्षितं।

प्रसिद्धसन्निधेराद्यस्तत्त्वादखिलोद्धृतिः॥

अध्रिगुप्रैषवचन एतदाम्नायते, श्येनमस्य वक्षः कृणुता-दिति। तत्र यथाऽमी पिष्टपिण्डाः सिंहाः क्रियन्तामित्युक्ते प्रसिद्धसिंहसन्निधानात् पिष्टपिण्डेषु सिंहसादृश्यं कर्त्तव्यतया प्रतीयते। तथैवास्य पशोर्व्वक्षः श्येनं कृणुतादित्यत्र श्येन-सादृश्यं वक्षसि कर्त्तव्यतया प्रतीयते। ततो वक्ष उद्धृत्य कर्त्त-नाद्युपायेन पक्षचरणचञ्च्वादिकं सम्पाद्य श्येनसंस्थानं कर्त्त-व्यमिति प्राप्ते ब्रूमः। वक्षसि श्येनसादृश्यं स्वत एव पूर्व्वमस्ति ततो यथा तन्न नश्यति तथा साकल्येनोद्धरणमिति विव-क्षया श्येनशब्दः प्रयुज्यते। तथा सति हविरविकलं भवति। अंसादिष्वनेन न्यायेन साकल्यविवक्षया तत्तद्रूपकोक्तिर्द्रष्टव्या। एतदेवाभिप्रेत्य श्रूयते, गात्रं गात्रमस्यानूनं कृणुतादिति। तत्रैवान्यच्चिन्तितं।

प्रशस्तेत्यसिरर्थः स्यात् श्रुतिर्व्वाच्छेदनाद्दसिः।

स्तुतिकार्य्याय वाक्योः स्यात् स्वधितिच्छेदसाधनं॥

अध्रिगुप्रैषे वाक्यान्तरमाम्नातं, प्रशसा बाहू इति। तत्र शं-सुहिंसायामित्यस्माद्धातोः सोपसर्गादुत्पन्नस्य सकारान्तप्रा-

दिपदिकस्य तृतीयैकवचनान्तस्य प्रशसेति रूपं भवति। तच्चा-मेर्व्वाचकं। तदेतत् केनचिद्ब्राह्मणवाक्येनानूद्यते, दशप्रयाजानिष्ठाहदशासमाहरेदित्यमिर्व्वैशाम इत्याचचत इति। सोऽयमसिर्वाङ्कोऽच्छेदनहेतुः, तस्मादृष्टार्थलाभादसिः प्रशस्येत्यस्य पदस्यार्थ इति चेत्। मैवं। शंसुस्तुतावित्यस्माद्धातोरयमुत्पन्नः। प्रशसावित्यस्य द्वितीयाद्विवचनान्तस्य शब्दस्य छान्दसे श्रौ-कारलोपे आकारादेशे च कृतेप्रशसेति भवति। वाङ्कोः प्रश-स्तत्वं नाम कार्त्स्न्यं, प्रशस्तौ बाहू कृणुतादित्युक्ते निःशेषेणोद्धर्त्तव्यौ। बाहू इत्येतादृशो दृष्टार्थो लभ्यते। नात्र छेदनसाधनत्वमसेः सम्भवति। स्वधितेस्तत्साधनत्वेन विहितत्वात्। तस्मात् स्तुतिरेवास्य शब्दस्यार्थः। तथा सति बाहुवृद्धौ बहुवचनान्तत्वेन प्रशसेति पदमूहनीयं। तत्रैवान्यच्चिन्तितं।

षड्विंशतिर्वंक्रयोस्येत्यनूहः स्यादुतोह्यते।
ऊहेऽपि वचनान्यत्वमस्येत्यावर्त्ततेऽथवा॥
षड्विंशतेस्तु नाभ्यासः समस्तोक्तिर्भवदुत।
अनूहो करणत्वेन दृष्टत्वाभात्तदूहनं॥
सङ्ख्यायाश्च पशोर्युक्तेर्वङ्क्रीणां मुख्यतावशात्।
अमी पचा हि युज्यन्ते ह्यस्ता अनुष्ठेतिशेषतः॥

अध्रिगुप्रैषे वाक्यमिदमाम्नायते, षड्विंशतिरस्य वङ्क्रयः। ता अनुष्ठ्योच्यावयतादिति। अयमर्थः। वङ्क्रयो वक्राणि पार्श्वस्थीनि तान्यस्य पशोः षड्विंशतिसङ्ख्यानि, एकैकस्मिन् पार्श्वे त्रयोदशानामवस्थितत्वात्। ताश्च वङ्क्रीरनुष्ठ्यानुष्ठायानुक्रमेण

गणयित्वेति यावत्, उच्छ्यावयतादुद्धरतादिति सोऽयं मन्त्रो वङ्क्रीणामुद्धरणे करणतया न विनियुक्तः, किन्तु सञ्ज्ञपनात् प्राक् पशौ नीयमाने होत्रा प्रयुज्यते। ततः समवेतोऽसमवेतार्थत्वादनूह इत्याद्यः पक्षः। अकरणत्वेऽपि नादृष्टार्थत्वं, शमितृणामुद्धरणीयार्थस्य स्मारकत्वेन दृष्टार्थत्वाभावात्। तस्मात् प्रकृतौ समवेतार्थतया विकृतावूहः। तत्रापि चत्वारः पक्षास्तत्र सङ्ख्यामुख्यत्वेन प्रकाश्यन्ते। तेन द्वयोः पश्वोर्द्विगुणितां षड्विंशतिसङ्ख्यां प्रकाशयितुं द्विवचनान्ततया षड्विंशतिशब्द ऊहनीय इत्याद्यः पक्षः। पशोश्चोदितत्वेन मुख्यत्वात् तद्वाचकं षष्ठ्यन्तमस्येति पदं पश्वनुसारेणावर्त्तनीयमिति द्वितीयः पक्षः। युक्तिर्योगः षड्विंशतिसङ्ख्यायाः पशुना सह सम्बन्धः, तस्य मुख्यत्वात् प्रतिपशुविभक्तां सङ्ख्यां प्रकाशयितुं षड्विंशतिपदस्याभ्यास इति तृतीयः पक्षः। अत्र सर्व्वत्र मुख्यानुसारेण पदान्तराण्यूहनीयानि, सङ्ख्येयानां वंक्रीणां मुख्यत्वात्, तासामियत्ता समस्य वक्तव्या, ततो द्विपञ्चाशदनयोर्वङ्क्रयः, अष्टसप्ततिरेषां वङ्क्रय इत्येवं यथायोगमूहनीयमिति चतुर्थः पक्षः। अयमेव सिद्धान्तो वाक्यशेषानुगुण्यात्, ता अनुष्ठ्येत्ययं वाक्यशेषः। स च व्याख्यातः। तत्रैवान्यच्चिन्तितं

पक्षीवयाथवोरुक्तो रत्नयोरविशेषतः।
पक्षीवपासन्निधानान् भ्रान्तिच्छेदनिषेधतः॥

अध्रिगुप्रैषवचनमिदमाम्नायते। वनिष्ठुमस्य माराविष्ट। उरूकं मन्यमान इति। वनिष्ठुर्वपासमीपवर्त्ती कश्चित्पश्वङ्गविशेषः

तं माराविष्ट तस्य लवणं माकुरुत। व्यत्ययेन लकारस्य रेफः। किं कुर्वन्तः,उरूकं मन्यमानाः वनिष्ठावुलूकबुद्धिं कुर्व्वन्त इत्यर्थः। अत्रोरूकशब्देन काकविरोधी कश्चिदुरूकनामा पक्षिविशेषो-भिधीयते। कुतः, रलयोरविशेषात्, पर्य्यङ्कः पल्यङ्कः रोमाणि लोमानीत्यादिदर्शनात्। उरूकशब्दः सादृश्यलक्षकः। पक्षि-सदृशं वनिष्ठुं विवेकेन मन्यमाना माराविष्टेति वाक्यार्थः। तस्मादुरूकः पक्षीति प्राप्ते ब्रूमः। उरूकशब्देनात्र वपा ल-क्ष्यते। कुतः, वनिष्ठुसन्निधानात्। सति हि सन्निधावुरूकत्व-भ्रान्तिर्वनिष्ठौ सम्भवति। भ्रान्तिप्राप्तञ्च लवनमत्र निषिध्यते। उरूकं मन्यमाना वनिष्ठुं माराविष्टेत्युक्तत्वात्। वपालवन-काले भ्रान्त्या वनिष्ठोर्यल्लवनं तस्य निषेधे सति दृष्टार्थो लभ्यते। भ्रान्तिनिवारणस्य दृष्टत्वात्। त्वत्पक्षे तु वनिष्ठो-र्लवनमेव नास्ति। तच्चायुक्तं, हृदयाद्यङ्गवन्नवितव्यत्वात्। व-निष्ठुमग्नीधे षडवत्तं सम्पादयतीत्याद्यनुष्ठानविधानात्। ततो लवननिषेधस्य समवेतार्थत्वेनादृष्टार्थो मन्त्रपाठः प्राप्नुयात्। तस्माद्वपावचन उरूकशब्दो यद्यपि वपायामप्रसिद्धः शब्दस्त-थाप्युरु विस्तीर्णमूको मेदो यत्रेत्यवयवार्थद्वारा मेदस्विन्यां वपायां युक्त उरूकशब्दः। एवं सत्यनेकवपासु विकृतिष्वेक-वचनान्त उरूकशब्द ऊहनीयः॥

इति षष्ठोऽनुवाकः॥

---

अथ सप्तमोऽनुवाकः ।

षष्ठेऽग्निप्रैषोऽभिहितः । सप्तमे स्तोकविषयं मैत्रावरुणानुवचनमुच्यते ॥ कल्पः । यदा जानाति स्तोकेभ्योऽनुब्रूहीति । तदा मैत्रावरुणस्तोकीया अन्वाह जुषस्व सप्रथस्तममिति । तत्र प्रथमामृचमाह । "जुषस्व सप्रथस्तमम् । वचो देवप्सरस्तमं । हव्या जुह्वान आसनि" इति । हे अग्ने त्वं 'हव्या' हवींष्यस्मदीयानि, 'आसनि' आस्ये मुखे, 'जुह्वानः' प्रक्षिपन्, 'वचः' अस्मदीयं स्तोत्रं, 'जुषस्व' सेवस्व । कीदृशं वचः, 'सप्रथस्तमं' अतिशयेन विस्तृतं, 'देवप्सरस्तमं' देवानां प्रीणयितृतमम् ॥

अथ द्वितीयामृचमाह । "इमन्नो यज्ञममृतेषु धेहि । इमा हव्या जातवेदो जुषस्व । स्तोकानामग्ने मेदसो घृतस्य । होतः प्राशान प्रथमो निषद्य" इति । हे 'जातवेदः', 'नः' अस्मदीयम्, 'इमं यज्ञं', 'अमृतेषु', देवेषु, 'धेहि' स्थापय, 'इमा हव्या' इमान्यस्मदीयानि हवींषि, 'जुषस्व' । हे 'होतः' होमनिष्पादकाग्ने, 'मेदसः' वपायाः, सम्बन्धि 'यद्घृतं', तस्य 'स्तोकानां' विन्दूनां, मध्ये स्वादून् विन्दून् 'प्रथमः' त्वमेव मुख्यः सन्, 'निषद्य' अत्रोपविश्य, 'प्राशान' प्रकर्षेण भक्षय ॥

अथ तृतीयामृचमाह । "घृतवन्तः पावक ते । स्तोकाः श्चोतन्ति मेदसः । स्वधर्मं देववीतये । श्रेष्ठन्नो धेहि वार्य्यम्" इति । हे 'पावक' शोधकाग्ने, त्वदर्थं 'मेदसः' वपायाः सम्बन्धिनः, 'घृतवन्तः' घृतसहिताः, 'स्तोकाः' विन्दवः, 'श्चोतन्ति' क्षरन्ति ।

'देववीतये' देवानां भक्षणाय, 'नः' अस्माकं, 'स्वधर्मं' कुलोचितं यागाद्यनुष्ठानरूपं धर्मं, 'धेहि' सम्पादय। कीदृशं, 'श्रेष्ठं' अतिप्रशस्तं, अतएव 'वार्य्यं' सर्व्वैर्वरणीयं॥

अथ चतुर्थीमृचमाह। "तुभ्यं स्तोका घृतश्चुतः। अग्ने विप्राय सन्त्य। ऋषि श्रेष्ठः समिध्यसे। यज्ञस्य प्राविता भव"इति। सन्तिर्दानं तामर्हतीति सन्त्यः। हे 'सन्त्य' फलदानकुशल, अग्ने 'विप्राय' मेधाविने, 'तुभ्यं' त्वदर्थं, 'स्तोकाः' विन्दवः, 'घृतश्चुतः' घृतस्राविणः, वर्त्तन्ते। त्वमपि 'ऋषिः' मन्त्रद्रष्टा, 'श्रेष्ठः' प्रशस्यतमश्च, अस्माभिः 'समिध्यसे'। अतो 'यज्ञस्य', अस्मदीयस्य, 'प्राविता' प्रकर्षेण रक्षिता, 'भव'॥

अथ पञ्चमीमृचमाह। "तुभ्यं श्चोतन्त्यध्रिगो शचीवः। स्तोकासो अग्ने मेदसो घृतस्य। कविशस्तो वृहता भानुनागाः। हव्या जुषस्व मेधिर" इति। हे 'अध्रिगो' आदृतरसो, हे 'शचीवः' शक्तिमन्, 'अग्ने', 'मेदसः' वपायाः, सम्बन्धिनो 'घृतस्य', 'स्तोकासः' विन्दवः, 'तुभ्यं' त्वदर्थं, 'श्चोतन्ति' चरन्ति। त्वञ्च 'कविशस्तः' विद्वद्भिर्ऋत्विग्भिः स्तुतः, सन् 'वृहता भानुना' महता तेजसा युक्तः, 'आगाः' आगच्छ। हे 'मेधिर' यज्ञयोग्य, 'हव्या जुषस्व' अस्मदीयानि हवींषि जुषस्व॥

अथ षष्ठीमृचमाह। "ओजिष्ठन्ते मध्यतो मेद उद्भृतं। प्र ते वयं ददामहे। श्चोतन्ति ते वसो स्तोका अधित्वचि। प्रतीतान्देवशो विहि" इति। हे अग्ने, 'ते' त्वदर्थं, 'ओजिष्ठं' बलवत्तमं, 'मेदः' वपारूपं, 'मध्यतः' पशोर्मध्यभागात्, 'उद्भृतं' उत्क्षिप्य

सम्पादितं, 'वयं' यजमानाः, 'ते' तुभ्यं, 'प्रददामहे' प्रकर्षेण दद्मः। हे 'वसो' सर्व्वेषां निवासहेतो, 'अधित्वचि' वपाया-मधिश्रिताः, 'स्तोकाः' विन्दवः, ते च त्वदर्थं 'श्चोतन्ति' च-रन्ति। 'देवशः' तत्तद्देवतुष्ट्यर्थं, 'स्तोकान्', विन्दून्, 'प्रतिविहि' प्रत्येकं पिब॥

इति सप्तमोऽनुवाकः।

---

अथ अष्टमोऽनुवाकः।

सप्तमे स्तोकविषयं मैत्रावरुणानुवचनमुक्तं। अष्टमे वपापु-रोडाशस्विष्टकृतां मैत्रावरुणवक्तृकाः पुरोऽनुवाक्याः प्रैषाश्चा-भिधीयन्ते॥ कल्पः। यदा जानातीन्द्राग्नीभ्यां छागस्य वपा-या मेदसोऽवदीयमानस्यानुब्रूहीति तं मैत्रावरुणः पुरोऽनु-वाक्यामन्वाह आवृत्रहणेति। पाठस्तु। "आ वृत्रहणा वृत्र-हभिः शुष्मैः। इन्द्र यातं नमोभिरग्ने अर्व्वाक्। युवꣳ राधोभिरकवेभिरिन्द्र। अग्ने अस्मे भवतमुत्तमेभिः" इति। हे 'इन्द्र', हे अग्ने, 'युवां' उभौ, 'वृत्रहभिः' पापघातिभिः, पाप्मानमेव वृत्रमघ्नीत्येति श्रुतेः। 'शुष्मैः' बलैः, 'वृत्रहणा'पाप-घातिनौ सन्तौ, 'नमोभिः' अस्मदीयैर्नमस्कारैः, 'अर्व्वाक्' अस्मदाभिमुख्येन, 'आयातं' आगच्छतं। हे 'इन्द्र', हे 'अग्ने', 'युवं' युवामुभौ, 'अकवेभिः' अकुत्सितैः, 'उत्तमेभिः' श्रेष्ठैः, 'राधोभिः' धनैः, 'अस्मे भवतं' अस्मासु तिष्ठतं॥

अथ प्रैषमाह। "होता यक्षदिन्द्राग्नी। छागस्य वपा या

मेदसः। जुषेताᳬ हविर्होतर्यज" इति। 'इन्द्राग्नी', उभौ देवौ, देव्यः 'होता', यजतु। तौ चैन्द्राग्नी 'छागस्य', सम्बन्धिनी मेदस्विनी 'या' 'वपा', तस्याः सम्बन्धि 'हविर्जुषतां',। तदर्थं हे मानुष 'होतः' याज्यां पठ॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "विह्यख्यन्मनसा वस्य इच्छन्। इन्द्राग्नी ज्ञास उत वा सजातान्। नान्या युवत् प्रमतिरस्ति मह्यं। स वान्धियं वाजयन्तीमतक्षम्" इति। यो यजमानः 'मनसा', 'वस्यः' वसीयः, श्रेष्ठं धनं 'इच्छन्,' वर्त्तते। 'उत वा' अथवा, 'सजातान्' बन्धून्, इच्छन् वर्त्तते। हे 'इन्द्राग्नी', स हि यजमानो युवामेव 'व्यख्यत्' विशेषेण प्रकाशयति। 'ज्ञासे' तं वृत्तान्तमहं जाने। 'मह्यं युवदन्या' युवाभ्यामन्यं कश्चिदपि, 'प्रमतिः' प्रकर्षेण मन्तव्यः, 'नास्ति'। 'सः', 'वां' युवयोः, 'धियं' बुद्धिं, 'वाजयन्तीं' अस्मदर्थमन्नमिच्छन्तीं, 'अतक्षं', भजामि संस्कृत्योत्पादयामि॥

अथ प्रैषमाह। "होता यक्षदिन्द्राग्नी। पुरोडाशस्य जुषेताᳬ हविः। होतर्यज" इति। पूर्व्ववद्व्याख्येयं॥

अथ स्विष्टकृतः पुरोऽनुवाक्यामाह। "त्वामीडते अजरं दूत्याय। हविष्मन्तः सदमिन्मानुषासः। यस्य देवैरासदो बर्हिरग्ने। अहान्यस्मै सुदिना भवन्तु" इति। 'हविष्मन्तः' हविर्युक्ताः, 'मानुषासः' मनुष्या यजमानाः, 'सदमित्' सर्व्वदैव, 'दूत्याय' देवान् प्रत्याह्वनादिदूतकर्मार्थं, 'अग्ने', 'अजरं' गमनागमनसमर्थं त्वां, 'ईडते' स्तुवन्ति। हे अग्ने त्वं 'देवैः', सह 'यस्य' यजमा-

नस्य, 'बर्हिः' यज्ञं, 'आसदः' आसीदसि, अधितिष्ठसि । 'अस्मै' यजमानाय, 'अहानि', सर्व्वाणि 'सुदिना' सुदिनानि, 'भवन्तु'॥

अथ प्रैषमाह । "होता यक्षदग्निं । पुरोडाशस्य जुषताꣳहविः। होतर्यजेति" पूर्व्ववद्व्याख्येयं । स्विष्टकृत्पुरोडाशस्येति विशेषः ॥

इति अष्टमोऽनुवाकः ।

---

अथ नवमोऽनुवाकः ।

अष्टमे वपापुरोडाशस्विष्टकृतां पुरोऽनुवाक्या प्रैषाश्चोक्ताः । नवमे तेषामेव याज्या उच्यन्ते ॥ कल्पः । अथ होता यजति । गीर्भिरिति । पाठस्तु । "गीर्भिर्विप्रः प्रमतिमिच्छमानः । ईट्टे रयिं यशसम्पूर्व्वभाजं । इन्द्राग्नी वृत्रहणा सुवज्रा । प्र णो नव्येभिस्तिरतं देष्णैः" इति । 'विप्रः' यजमानः, 'गीर्भिः' स्तुतिभिः, 'ईट्टे' 'इन्द्राग्नी', स्तौति । कीदृशो विप्रः, 'रयिमिच्छमानः' धनमिच्छन्, कीदृशं रयिं, 'प्रमतिं' प्रकर्षेण माननीयं, 'यशसं' यशोहेतुं, 'पूर्व्वभाजं' पूर्व्वान् पित्रादीन्, भजतीति पूर्व्वभाक्, यादृशं पित्रादीनां धनमासीत्तादृशमित्यर्थः । 'वृत्रहणा' पापघातिनौ, 'सुवज्रा' शोभनवज्रयुक्तौ, तादृशौ हे 'इन्द्राग्नी', 'नव्येभिः' नूतनैः, 'देष्णैः' धनदानैः, 'नः' अस्मान्, 'प्रतिरतं' प्रकर्षेण वर्द्धतं ॥

अथ पुरोडाशस्य याज्यामाह । "मा च्छेद्म रश्मीꣳरिति नाधमानाः पितॄणां शक्तीरनुयच्छमानाः । इन्द्राग्नीभ्यां कं वृषणो मदन्ति । ताह्यद्री धिषणाया उपस्थे" इति । 'वृषणः'

विद्वद्वृषभाः, यजमानाः, 'इन्द्राग्नीभ्यां', अन्यं 'कं', नाम देवं 'मदन्ति' तोषयन्ति। 'हि' यस्मात् कारणात्, 'तौ' इन्द्राग्नी, 'धिषणायाः' यजमानानां बुद्धेः, 'उपस्थे' उपरि, 'अद्री' आदरणीयौ, केनाप्यनभिभाव्यौ वर्त्तेते तस्मादेतावेव हर्षणीयौ नान्यः कश्चिदित्यर्थः। कीदृशा विद्वद्वृषभाः, 'पितॄणां शक्तीरनुयच्छमानाः' पितृपितामहादीनां याः कामानुष्ठानशक्तयः ताः सर्वा अनुवर्त्तमानाः, तदनुवृत्त्यर्थमेव 'रश्मीन्माच्छेत्सेति नाधमानाः' रश्मिवत् सन्तता ये कर्म्मविशेषाः तेषां विच्छेदं माकार्ष्मेत्यनेनाभिप्रायेण ताविन्द्राग्नी प्रति प्रार्थयमानाः॥

अथ स्विष्टकृतो याज्यामाह। "अग्निꣳ सुदीतिꣳ सुदृशं गृणन्तः। नमस्यामस्त्वेड्यं जातवेदः। त्वां दूतमरतिꣳ हव्यवाहं। देवा अकृण्वन्नमृतस्य नाभिं" इति। हे 'जातवेदः', 'ईड्यं' स्तुत्यं, 'त्वा' त्वां, 'नमस्यामः' नमस्कुर्मः। कीदृशा वयं, 'सुदीतिं' शोभनदानयुक्तं, 'सुदृशं' सुष्ठुद्रष्टुं शक्यं, 'अग्निं' स्विष्टकृद्रूपं, 'गृणन्तः' स्तुवन्तः, 'देवाः', सर्वे 'त्वां' स्विष्टकृतमग्निं, 'दूतमकृण्वन्' देवान् प्रति दूतकर्म्मयोग्यं कृतवन्तः। अतएवान्यत्राम्नातं, अग्निर्देवानां दूत आसीदिति। कीदृशं त्वां, 'अरतिं' रतिरुपरमः तद्रहितं, आलस्यहीनमित्यर्थः। 'हव्यवाहं' हविषो वोढारं, 'अमृतस्य नाभिं' कर्म्मफलस्य नाभिस्थानीयं, सम्पादकमित्यर्थः॥

इति नवमोऽनुवाकः।

अथ दशमोऽनुवाकः।

नवमे वपापुरोडाशस्विष्टकृतां याज्या उक्ताः। अथ दशमे मनोतासूक्तमभिधीयते। कल्पः। यदा जानाति मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति। तदा मैत्रावरुणो मनोतामन्वाह त्वं ह्यग्ने प्रथम इति। पाठस्तु। तत्र प्रथमामृचमाह। "त्वं ह्यग्ने प्रथमो मनोता। अस्या धियो अभवो दस्म होता। त्वं सी वृषन्नकृणोर्दुष्टरीतु। सहो विश्वस्मै सहसे सहध्यै" इति। हे 'अग्ने', 'प्रथमः' मुख्यः, 'त्वं हि' त्वमेव, 'मनोता' मनसा उता रचिता सर्वैर्देवैः प्रार्थिता देवता, हे 'दस्म' दंसयितः, कर्म्मकुशल, 'अस्या धियः' कर्म्मानुष्ठानविषयाया एतस्या अस्मद्बुद्धेः, अनुसारेण 'होता', त्वमेव 'अभवः'। हे 'वृषन्' कामानां वर्षितः, 'त्वं सी' त्वमेव, 'दुष्टरीतु' दुस्तरमिदं जगत्, 'अकृणोः' यागद्वारेण करोषि। 'विश्वस्मै सहसे', सर्व्वस्मादपि बलात् 'सहः' अधिकं बलं, त्वमेवासीति शेषः। किमर्थं 'सहध्यै' शत्रूनभिभवितुं॥

अथ द्वितीयामृचमाह। "अधा होता न्यसीदो यजीयान्। इडस्पद इषयन्नीड्यः सन्। तं त्वा नरः प्रथमं देवयन्तः। महो राये चितयन्तो अनुग्मन्" इति। 'अधा', इत्यानन्तर्य्यार्थः, हे अग्ने त्वमेव 'इषयन्' इषमन्नं सर्व्वस्य कुर्व्वन्, 'ईड्यः' स्तुत्यः, 'सन्', 'यजीयान्' यष्टृतमः, 'होता', भूत्वा 'इडस्पदे' अन्नस्य प्रापके यागस्थाने, 'न्यसीदः' नियमेनोपविष्टवानसि, 'नरः' मनुष्याः, ऋत्विग् यजमानाः, 'देवयन्तः' देवा-

निच्छन्तः, 'महो राये' महते धनाय, 'चितयन्तः' चिन्तयमानाः, 'प्रथमं' मुख्यं, 'तं त्वां', 'अनुग्मन्' अनुगताः, सेवन्त इत्यर्थः ॥

अथ तृतीयामृचमाह। "वृते वयन्तं बहुभिर्वसव्यैः। त्वे रयिं जागृवाꣳस अनुग्मन्। रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवाꣳसम्" इति। 'जागृवाꣳसः' प्रबुद्धा यजमानाः, 'रयिं' धनवन्तं, 'त्वे' त्वामग्निं, 'अनुग्मन्' अनुगच्छन्ति। तत्र दृष्टान्तः, 'बहुभिः' 'वसव्यैः' धनसमूहैर्युक्तं, 'वृते वयन्तं' वृतावर्त्तन्या सन्मार्गेण गच्छन्तं राजानमिव, यथा धनवन्तं दानशीलं राजानं धनार्थिनोऽनुगच्छन्ति तद्वत्। कीदृशं त्वां, 'रुशन्तं' शत्रून् हिंसन्तं। 'अग्निं' अग्रे नेतारं, 'दर्शतं' दर्शनीयं, 'बृहन्तं' महान्तं, 'वपावन्तं' वपाभिर्हविर्भिर्युक्तं, 'विश्वहा' सर्व्वेष्वहस्सु, 'दीदिवाꣳसं' दीप्यमानं ॥

अथ चतुर्थीमृचमाह। "पदं देवस्य नमसा वियन्तः। अवस्यवः श्रव आपन्नमृक्तं। नामानिचिद्दधिरे यज्ञियानि। भद्रायां ते रणयन्त संदृष्टौ" इति। 'देवस्य', तव 'पदं', 'नमसा' नमस्कारेण, 'वियन्तः' विशेषेण प्राप्नुवन्तः। 'अवस्यवः' अवोऽन्नं यशो वा तदिच्छन्तो यजमानाः, 'श्रवः,' 'आपन्' प्राप्नवन्तः। कीदृशं श्रवः, 'अमृक्तं' अमृदितं, अविनश्वरमित्यर्थः। 'यज्ञियानि' यज्ञार्हाणि, 'नामानिचित्', 'दधिरे' धारयन्त्यपि, ये यजमानाः 'ते', 'यज्ञियानि' यज्ञार्हाणि, नामान्यपि धारयन्ति। 'ते' यजमानाः, 'ते' तव, 'भद्रायां'

कल्याण्यां, 'संदृष्टौ' अनुग्रहदृष्टौ, 'रण्यन्त' रमन्ते, किमु वक्तव्यं अनुष्ठातारो रमयन्त इत्यभिप्रायः ॥

अथ पञ्चमीमृचमाह । "त्वां वर्द्धन्ति क्षितयः पृथिव्यां । त्वꣳ राय उभयासो जनानां । त्वं त्राता तरणे चेत्योऽभूः । पिता माता सदमिन्मानुषाणाम्" इति । 'पृथिव्यां' भूमौ, 'क्षितयः' क्षितिमन्तः यजमानाः, 'त्वां वर्द्धन्ति' हे अग्ने स्तुतिभिर्हविर्भिर्वा त्वां परितोषयन्ति । 'जनानां', सर्व्वेषां 'त्वमुभयासो रायः' त्वमेव द्विविधानि धनानि, दिव्यानि पार्थिवानि च तत्सम्पादक इत्यर्थः । हे 'तरणे' दुरितानां तरणकुशल, 'त्वं त्राता' त्वमेवास्माकं रक्षिता, 'चेत्यः' सर्व्वदास्माभिः स्मर्त्तव्यः, 'अभूः' भवसि । तथा 'मानुषाणां', सर्व्वेषां 'सदमित्' सर्व्वदैव, 'पिता माता', तदुभयसदृशः पालकस्त्वमेवासि ॥

अथ षष्ठीमृचमाह । "सपर्य्येण्यः स प्रियो विक्ष्वग्निः । होता मन्द्रो निषसादा यजीयान् । तं त्वा वयं दम आदीदिवाꣳसं । उपज्ञु बाधो नमसा सदेम" इति । 'सः' अग्निः, 'सपर्य्येण्यः' परितो मन्तव्यः, स एव 'अग्निः', 'विक्षु' प्रजासु सर्व्वासु, 'प्रियः', तथा 'होता' देवनामाह्वाता, 'मन्द्रः' हर्षहेतुः, 'यजीयान्' यष्टृतमः सन्, 'निषसाद' नियमेनोपविवेश, 'दमे' यज्ञगृहे, 'दीदिवाꣳसं' दीप्यमानं, 'उपज्ञु' उपज्ञातं सुप्रसिद्धं, 'तं त्वा' तादृशमग्निं त्वां, 'बाधः' संसारेण बाध्यमानाः, 'वयं', 'नमसा' नमस्कारेण, 'आसदेम' भजामहे ॥

अथ सप्तमीमृचमाह। "तं त्वा वयꣳ सुधियो नव्यमग्ने। सुम्नायव ईमहे देवयन्तः। त्वं विशो अनयो दीद्यानः। दिवो अग्ने बृहता रोचनेन" इति। हे 'अग्ने', 'सुधियः' शोभन-बुद्धियुक्ताः, 'सुम्नायवः' सुखमिच्छन्तः, 'देवयन्तः' देवानि-च्छन्तः, 'वयं', 'नव्यं' सर्व्वदा नूतनं, 'तं त्वा' तादृशमग्निं त्वां, 'ईमहे' प्राप्नुमः, भजाम इत्यर्थः। हे 'अग्ने', 'बृहता रोच-नेन' महता प्रकाशनेन, 'दीद्यानः' प्रकाशमानः, 'त्वं', 'विशः' सर्व्वाः प्रजाः, 'दिवः' द्योतमानान् स्वर्गादिलोकांश्च, 'अनयः' नयसि, प्रापयसि॥

अथ अष्टमीमृचमाह। "विशां कविं विश्पतिꣳ शश्वतीनां। नितोशनं वृषभं चर्षणीनां। प्रेतीषणिमिषयन्तं पावकं। राज-न्तमग्निं यजतꣳ रयीणाम्" इति। ईमह इत्यनुवर्त्तते। 'अग्निं', ईमहे प्राप्नुमः। कीदृशं, 'शश्वतीनां' निरन्तरप्रवृत्तीनां, 'विशां' प्रजानां, पालकमित्यध्याहारः। अतएव 'विश्पतिं' प्रजास्वामिनं, 'कविं' विद्वांसं, 'नितोशनं' शत्रूणां नितरां हन्तारं, 'चर्षणीनां' मनुष्याणां, 'वृषभं' कामाभिवर्षकं, 'प्रे-तीषणिं' प्रकृष्टाया इतेर्गतेः सनितारं दातारं, 'इषयन्तं' अन्नं कुर्व्वन्तं, 'पावकं' शोधकं, 'राजन्तं' दीप्यमानं, 'यजतं' यजनीयं, 'रयीणां' धनानां, दातारमितिशेषः॥

अथ नवमीमृचमाह। "सो अग्न ईजे शशमेच मर्त्तः यस्त आनट् समिधा हव्यदातिं य आहुतिं परिवेदा नमोभिः। विश्वेत् स धामा दधते त्वोत" इति। हे 'अग्ने', 'यः', 'मर्त्तः'

मनुष्यो यजमानः,'समिधा', सह 'हव्यदातिं' हविर्दानं,'आनट्' व्याप्नोति, हविर्ददातीत्यर्थः। 'सः' यजमानः, 'ईजे' यजति, 'शशमे च' यागफलभूतां शान्तिमपि प्राप्नोति। शान्तिः सुखं।'यः' यजमानः, 'नमोभिः' नमस्कारैः सह, 'आहुतिं', 'परिवेदा', ददातीत्यर्थः, स यजमानः 'त्वोतः' त्वया रक्षितः, 'विश्वेत्' विश्वान्येव,'वामा' वननीयानि धनानि, 'दधते' धत्ते, प्राप्नोतीत्यर्थः॥

अथ दशमीमृचमाह। "अस्मा उ ते महि महे विधेम। नमोभिरग्ने समिधोत हव्यैः। वेदी सूनो सहसो गीर्भिरुक्थैः। आ ते भद्रायाꣳ सुमतौ यतेम" इति। हे अग्ने 'महे' महते, 'अस्मा उ' अस्मा एव, 'ते' तुभ्यं, 'नमोभिः' नमस्कारैः, 'उत' अपिच, 'समिधा,' 'हव्यैः', च 'महि विधेम' पूजां करवाम। हे 'सहसः सूनो' मथनजन्यत्वेन बलस्य पुत्रः, 'वेदी' वेद्यामस्यां, 'गीर्भिः' स्तोत्ररूपैः, 'उक्थैः' शस्त्ररूपैश्च वाक्समूहैः, 'भद्रायां' कल्याण्यां, 'ते' तव, 'सुमतौ' अनुग्रहात्मिकायां बुद्धौ, 'आयतेम' सर्व्वतः प्रयतामहे। त्वदनुग्रहनिमित्तं प्रयत्नं कुर्मः॥

अथैकादशीमृचमाह। "आ यस्ततन्थ रोदसी वि भासा। श्रवोभिश्च श्रवस्यस्तरुत्रः। बृहद्भिर्वाजैः स्थविरेभिरस्मे। रेवद्भिरग्ने वितरं विभाहि" इति। हे 'अग्ने', 'यः' त्वं, 'भासा' स्वकीयया दीप्त्या, 'रोदसी' द्यावापृथिव्यौ, 'व्याततन्थ' व्याप्नोषि, तथा 'श्रवोभिः' अन्नैश्च, व्याप्नोषि। स त्वं 'श्रवस्युः' प्रजार्थं श्रवोऽन्नमिच्छुः, 'तरुत्रः' दुःखेभ्यः तारयिता, चासि। तादृशस्त्वं 'रेवद्भिः' धनयुक्तैः, 'स्थविरेभिः' चिरन्तनैः, 'बृ-

हद्भिर्वाजैः' महद्भिरन्नैर्युक्तः, 'अस्मे' अस्मासु, 'वितरं' अत्यन्तविशिष्टमनुग्रहं कुर्व्वन्, 'विभाहि' विशेषेण दीप्यस्व ॥

अथ द्वादशीमृचमाह। "नृवद्वसो सदमिद्धेह्यस्मे। भूरि तोकाय तनयाय पश्वः। पूर्वीरिषो बृहतीरारे अघा। अस्मे भद्रा सौश्रवसानि सन्तु" इति। हे 'वसो' जगन्निवासहेतो वह्ने, 'नृवत्' नृभिर्मर्त्यैर्युक्तं, 'भूरि' प्रभूतं धनं, 'सदमित्' सर्व्वदैव, 'अस्मे' अस्मासु, 'धेहि' सम्पादय। 'तोकाय' अस्मत्पुत्राय, 'तनयाय' तदीयपुत्राय च, 'पश्वः' पशून्, सम्पादय। किञ्च 'पूर्वीः' चिरन्तनाः, पूर्व्वपुरुषोचिताः, 'बृहतीः' प्रभूताः, 'आरेअघा' आरे दूरे अघं यासां तास्तथोक्ताः, 'इषः' अन्नानि, 'आरे' अस्मत्समीपे, 'अघाः' धारय सम्पादयेत्यर्थः। 'अस्मे' अस्मासु, 'भद्रा' कल्याणरूपाणि, 'सौश्रवसानि' अतिशोभनकीर्त्त्यादीनि 'सन्तु' ॥

अथ त्रयोदशीमृचमाह। "पुरूण्यग्ने पुरुधा त्वया वसूनि राजन् वसुताते अश्यां। पुरूणि हि त्वे पुरुवार सन्ति। अग्ने वसु विधत्ते राजनि त्वे" इति। हे 'वसुताते' धनस्य विस्तारयितः, हे 'राजन्' दीप्यमानाग्ने, 'त्वया' त्वया निमित्तभूतेन, 'पुरुधा' बहुप्रकाराणि, 'पुरूणि' भूतानि, 'वसूनि' धनानि, 'अश्यां' व्याप्नुयां। हे 'पुरुवार' बहुभिर्वरणीयाग्ने, 'त्वे' त्वयि, 'हि' यस्मात् कारणात्, 'पुरूणि' बहूनि धनानि, 'सन्ति', तस्मात् कारणात् 'विधत्ते' परिचरते, यजमानाय, 'वसु' धनं, 'राजनि', 'त्वे' त्वयि, प्राप्नुयामीति शेषः ॥

अत्र मीमांसा। दशमाध्यायस्य चतुर्थपादे चिन्तितं।

मनोतामन्त्र ऊहोऽस्ति वायव्ये नास्ति वाऽस्ति सौ।
आग्नेय्ये वेति वचनं प्रकृतौ सार्थकं यतः॥
अग्नीषोमावग्निनैव लक्ष्येतां वचनं विना।
अनर्थकात्ततो वाक्याद्विकृतावूहवारणं॥

त्वं ह्यग्ने प्रथमो मनोतेत्ययं मनोतामन्त्रोऽग्नीषोमीयपशौ पठितः। वायव्यपशावप्ययं चोदकप्राप्तस्तत्र त्वं हि वयो प्रथम इत्येवमूहोऽस्ति। यत्तु वचनं यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोताकार्येति, तत्प्रकृतौ पठितं तत्रैव च सार्थकं। द्विदेवत्यपशौ एकदेवत्यमन्त्रस्य प्रकरणपठितस्याप्ययोग्यत्वशङ्कायां पुनर्विधानार्थत्वात्। मैवं। वृत्रिणो गच्छन्तीत्यादिवन्मन्त्रगतस्याग्निशब्दस्याऽग्नीषोमलक्षकत्वेनायोग्यत्वशङ्काया अनुदयात्। अतः प्रकृतावनर्थकं तद्वाक्यं विकृतावूहानिवारणेन चरितार्थं भवति। तस्मादूहो नास्ति॥

इति दशमोऽनुवाकः।

---

अथैकादशोऽनुवाकः।

दशमे मनोतासूक्तमभिहितं। एकादशे हविर्वनस्पतिस्विष्टकृतां मैत्रावरुणेन वक्तव्याः पुरोऽनुवाक्याः प्रैषाश्चोच्यन्ते। कल्पः। यदा जानाति इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति। पाठस्तु। "आभरतꣳशिक्षतं वज्रबाहू। अस्माꣳ

इन्द्राग्नी अवतꣳ शचीभिः। इमेनु ते रश्मयः सूर्य्यस्य। येभिः सपित्वं पितरो न आयन्" इति। हे 'वज्रबाहू' वज्रायुधपाणी इन्द्राग्नी, 'आभरतं' धनमाहरतं, आहृत्य च 'शिचितं' संस्कुरुतं, 'शचीभिः' स्वकीयशक्तिभिः, 'अवतं' अस्मान् रक्षतं। 'नः' अस्माकं, 'पितरः', 'येभिः' यैः, 'सूर्य्यस्य', रश्मिभिः, 'सपित्वमायन्' सम्बन्धित्वं प्राप्ताः। 'ते' 'सूर्य्यस्य रश्मयः', 'इमेनु' इम एव, भवदधीना वर्त्तन्ते। अतः पितृन्निवास्मान् पालयतं॥

अथ प्रैषमाह। "होता यक्षदिन्द्राग्नी। छागस्य हविष आत्तां अद्य। मध्यतो मेद उद्भृतं। पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः। घस्तां नूनं। घासे अज्राणां यवसप्रथमानां। सुमत् क्षराणाꣳ शतरुद्रियाणां। अग्निष्वात्तानां पीवोपवसनानां। पार्श्वतः श्रोणितः शितामत उत्सादतः। अङ्गादङ्गादवत्तानां। करत एवेन्द्राग्नी। जुषेताꣳ हविः। होतर्यज" इति। दैव्यो 'होता', 'यक्षत्' पूजयतु। हे 'इन्द्राग्नी', युवां 'हविषः' हविर्भूतस्य 'छागस्य', 'मध्यतः' मध्यदेशात्, 'उद्भृतं मेदः' उत्क्षिप्य सम्पादितं मेदःप्रभृतिसारं, 'अद्य' अस्मिन् कर्म्मणि, 'आत्तां' भक्षयतां। 'द्वेषोभ्यः पुरा' द्वेषेभ्यो रक्षोभ्यः पूर्व्वं, रक्षांसि यावन्नोपघ्नन्ति ततः पुरा, तथा 'पौरुषेय्या गृभः पुरा' पुरुषसम्बन्धिनो ग्रहणात् पूर्व्वं, विरोधिनः पुरुषा यावद्गृहीता न गच्छन्ति ततः पूर्व्वमेव, 'नूनं घस्तां' अवश्यं भुञ्जातां। घसन्ते भक्ष्यन्ते हवीꣳष्यस्मिन् कर्म्मणीति घासो यागः तस्मिन्

'घासे', 'अज्राणां' अजनीयानां, क्षेप्यमाणानां, सुसंस्कृतानामिति यावत्। 'यवसप्रथमानां' यवसमन्नं प्रथमं मुख्यं येषां हविषां तानि यवसप्रथमानि तेषां, 'सुमत्क्षराणां' सुष्ठु मादयति येषां क्षरणं तादृशानां, 'शतरुद्रियाणां' शतं रुद्रा देवाः येषामधिष्ठानाय भुञ्जते तेषां, 'अग्निष्वात्तानां' अग्निना जाठरेणाहवनीयेन वा स्वादितानां, 'पीवोपवसनानां' पीवा स्थूला त्वक् सैव उपवसनमाच्छादनस्थानीयं येषां हविषां तानि पीवोपवसनानि तेषां, तथा 'पार्श्वतः' पार्श्वादिभ्यः, प्रथममवत्तानां, 'पार्श्वश्रोणी', प्रसिद्धे। 'शितामत'शब्देन दोर्यकृद्दाऽभिधीयते। 'उत्साद'शब्देन उदकाण्डं, तत ऊर्द्धम् 'अङ्गादङ्गात्' सर्व्वस्मात् अन्यस्मादवयवात्, 'अवत्तानां' हविषां, यान्यवदानानि तानि सर्व्वाणि 'इन्द्राग्नी', एव 'करतः' कुरुतां, ततो 'हविः', इदं 'जुषेतां', तदर्थं हे मनुष्य 'होतः', याज्यां पठ॥

अथ वनस्पते पुरोऽनुवाक्यामाह। "देवेभ्यो वनस्पते हवीꣳषि। हिरण्यपर्ण प्रदिवस्ते अर्थम्। प्रदक्षिणिद्रशनया नियूय। ऋतस्य वक्षि पथिभीरजिष्ठैः" इति। हे 'वनस्पते' यूपात्मन् अग्ने, 'हिरण्यपर्ण' सुवर्णवर्णपत्रोपेत, सुवर्णसदृशज्वालोपेत वा, त्वं 'देवेभ्यः', 'हवीꣳषि', 'वक्षि' वहसि। कीदृशानि हवींषि, 'ते अर्थं' तव प्रयोजनभूतानि, 'प्रदिवः' प्रवराणि, यथापूर्व्वं प्रवृत्तानीत्यर्थः। किं कृत्वा, 'रशनया' यूपवेष्टनहेतुभूतया, 'प्रदक्षिणित्' प्रदक्षिणाकारेण, 'नियूय' नितरामात्मानं बद्धा

ततः 'ऋतस्य' यज्ञस्य सम्बन्धिनि, हवींषि 'रजिष्ठैः पथिभिः' ऋजूत्तमैः मार्गैः, वहसीत्यन्वयः ॥

अथ प्रैषमाह । "होता यक्षद्वनस्पतिमभि हि । पिष्टतमया रभिष्टया रशनयाधित । यत्रेन्द्राग्नियोश्छागस्य हविषः प्रिया धामानि । यत्र वनस्पतेः प्रिया पाथाᳪसि । यत्र देवानामाज्यपानां प्रिया धामानि । यत्राग्नेर्होतुः प्रिया धामानि । तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षत् । रभीयाᳪसमिव कृत्वा । करदेवं देवो वनस्पतिः । जुषताᳪ हविः । होतर्यज" इति । देवेभ्यो 'होता', 'वनस्पतिरूपं', देवं यजतु । 'हि' यस्मात् कारणात्, 'पिष्टतमया' श्लक्ष्णतमया, 'रभिष्टया' रभस्वतमया, शीघ्रतमं प्रवृत्तया, 'रशनया अभ्यधित' वनस्पतिनामात्मकमबध्नात् । अतएव रशनया नियूयेत्युक्तं । तस्मात् कारणात् तादृशोऽयं यूपः 'एतं' पशुं, 'तत्रोपावस्रक्षत्' तस्मिं-स्थाने उपसम्प्रापयतु । कुत्रेति तदुच्यते । 'इन्द्राग्नियोः' देवयोः सम्बन्धिनः, 'छाग'रूपस्य, 'हविषः', 'प्रियाणि', 'धामानि' स्थानानि, 'यत्र', विद्यन्ते । 'वनस्पतेः', देवस्य च 'प्रियाणि', 'पाथांसि' उदकानि, 'यत्र', विद्यन्ते । 'आज्यपानां', प्रयाजादि'देवानाञ्च', 'प्रियाणि', स्थानानि 'यत्र', विद्यन्ते । 'होतुः' होमनिष्पादकस्य, 'अग्नेः', 'प्रियाणि', स्थानानि 'यत्र', विद्यन्ते । तत्रैतमुपावस्रक्षदित्यन्वयः । किं कृत्वा, 'प्रस्तुत्येव' प्रथममेव अर्पयित्वा, किञ्च 'उपस्तुत्येव' सन्निधावेव प्रशस्य, 'रभीयांसमिव कृत्वा' देवानां प्रीत्युत्पादनेन रभस्वत्तरमेव

कृत्वा। उपावस्रक्षदित्यन्वयः। 'वनस्पतिः', देवः 'एवं करत्' उक्तप्रकारं करोतु। इदं 'हविः', च 'जुषतां'। हे मनुष्य 'होतः', तदर्थं याज्यां पठ॥

अथस्विष्टकृतः पुरोऽनुवाक्यामाह। "पिप्रीहि देवाꣳ उशतो यविष्ठ। विद्वाꣳ ऋतूꣳ ऋतुपतेर्यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने त्वꣳ होतॄणामस्यायजिष्ठः" इति। हे 'यविष्ठ' युवतमाग्ने, 'उशतः' कामयमानान् देवान्, 'पिप्रीहि' अतिशयेन प्रीणय। हे 'ऋतुपते' सूर्यात्मना कालपरिपालक, त्वं 'ऋतून्' कालविशेषान्, 'विद्वान्' जानन्, वर्त्तसे। तस्मात् 'इह' उचिते काले, 'यज' देवेषु भव। 'ये दैव्या ऋत्विजः', सन्ति, अग्निर्होताश्विनाध्वर्यू त्वष्टाग्नीदित्यादिना आम्नाताः, 'तेभिः' तैर्दैव्यैः सह, 'त्वम्', 'अस्य' यजमानस्य सम्बन्धिनः, 'होतॄणां' ऋत्विजां मध्ये, 'आयजिष्ठ' सर्व्वतो यष्टृतमोऽसि॥

अथ प्रैषमाह। "होता यक्षदग्निꣳ स्विष्टकृतम्। अयाडग्निरिन्द्राग्नियोश्छागस्य हविषः प्रिया धामानि। अयाड्वनस्पतेः प्रिया पाथाꣳसि। अयाट् देवानामाज्यपानां प्रिया धामानि। यक्षदग्नेर्होतुः प्रिया धामानि। यक्षत्स्वं महिमानम्। आयजता मेज्या इषः। कृणोतु सो अध्वरा जातवेदाः। जुषताꣳ हविः। होतर्यज" इति। दैव्यः 'होता', 'स्विष्टकृतमग्निं', यजतु। 'इन्द्राग्नियोः', सम्बन्धिनः 'छागरूपस्य', 'हविषः', यानि प्रियाणि स्थानानि तान्ययमग्निः, 'अयाट्' पूजितवान्। तथा 'वनस्पतेः', प्रियाणि 'पाथांसि' जलानि, हवींषि वा, 'अयाट्'

यष्टवान्, 'आज्यपानां' प्रयाजादिदेवानां प्रियाणि स्थानानि पूजितवान्। 'होतुः' होमनिष्पादकस्याग्नेः, प्रियाणि स्थानानि स्विष्टकृदयमग्निः पूजितवान्। उक्तानां सर्व्वेषां देवानां स्वकीयो 'महिमा', योऽस्ति तमुद्दिश्य दैव्यः 'होता', 'यक्षत्' यजतु। 'आयजतां' आभिमुख्येन यागं कुर्व्वतां यजमानानां, 'एज्याः' आभिमुख्येन यष्टव्याः। 'इषः' अभीष्टाः या देवताः सन्ति ताः सर्व्वाः, 'अध्वरा' अस्मिन् यज्ञे, 'स जातवेदाः' स्विष्टकृद्रूपः सोऽग्निः, 'कृणोतु' स्विष्टाः करोतु। तदर्थमयं स्विष्टकृदग्निः इदं 'हविः' जुषतां। हे मनुष्य'होतः', 'यज' तदर्थं याज्यां पठ॥

इति एकादशोऽनुवाकः।

---

अथ द्वादशोऽनुवाकः।

एकादशे हविषां वनस्पतेः स्विष्टकृतश्च पुरोऽनुवाक्याः प्रैषाश्चाभिहिताः। अथ द्वादशे तेषां याज्या उच्यन्ते। कल्पः। अथ होता यजतु उपोहयदिति। पाठस्तु। "उपोह यद्विदथं वाजिनो गूः। गीर्भिर्विप्राः प्रमतिमिच्छमानाः। अर्वन्तो न काष्ठां नक्षमाणाः। इन्द्राग्नी जोहुवतो नरस्ते" इति। 'यत्' ये, 'विप्राः' ऋत्विजः, 'उपोह' समीप एव, 'विदथं गूः' यज्ञं गच्छन्तो वर्त्तन्ते। कीदृशा विप्राः, 'वाजिनः' वाजेनान्नेन हविर्भक्षणेन युक्ताः, 'गीर्भिः' स्तुतिभिः, 'प्रमतिं' प्रकृष्टां मतिं, देवताज्ञानविषयां मतिम्, 'इच्छमानाः', 'काष्ठां' कर्म्मसमाप्तिं,

'नक्षमाणाः' गच्छन्तः, तत्र दृष्टान्तः। 'अर्व्वन्तो न' अश्वा यथा स्वकीयां गमनसमाप्तिं प्राप्नुवन्ति तद्वत्, 'ते नरः' तादृशा ऋत्विजः, 'इन्द्राग्नी', देवौ 'जोहुवतः' होमेनाराधयन्तो वर्त्तन्ते॥

अथ वनस्पतेर्याज्यामाह। "वनस्पते रशनयाभिधाय। पिष्टतमया वयुनानि विद्वान्। वह देवत्रा दिधिषो हवीꣳषि। प्र च दातारममृतेषु वोच" इति। हे 'वनस्पते' यूप, 'पिष्टतमया' श्लक्ष्णतमया, 'रशनया', 'अभिधाय' आत्मानं बद्धा, अस्माकं देवानां 'वयुनानि' ज्ञानानि, अभिप्रायान् वा, 'विद्वान्' जानन्, 'देवत्रा' देवेषु, 'हवींषि', 'वह' प्रापय। किञ्च हे 'दिधिषो' धारणाकुशल वनस्पते, 'दातारं' हविर्दाने प्रवृत्तं यजमानम्, 'अमृतेषु' देवेषु, 'प्रवोचः' अनेनैतानि हवींषि दत्तानीति प्रब्रूहि॥

अथ स्विष्टकृतो याज्यामाह। "अग्निꣳ स्विष्टकृतम्। अयाडग्निरिन्द्राग्नियोश्छागस्य हविषः प्रिया धामानि। अयाड्वनस्पतेः प्रिया पाथाꣳसि। अयाड् देवानामाज्यपानां प्रिया धामानि। यक्षदग्नेर्होतुः प्रिया धामानि। यक्षत्स्वं महिमानम्। आयजतामेज्या इषः। कृणोतु सो अध्वरा जातवेदाः। जुषताꣳ हविः। अग्ने यदद्य विशो अध्वरस्य होतः। पावक शोचे वेष्ट्वꣳ हि यज्वा। ऋता यजासि महिना वि यद्भूः। हव्या वह यविष्ठ या ते अद्य" इति। 'स्विष्टकृत्'नामकमग्निं वयं यजामह इति शेषः। अयाडग्निरित्यादिकं पूर्व्वानुवाकवद्व्या-

ख्येयं। हे स्विष्टकृत् 'अग्ने', 'विशः' प्रविष्टस्यानुष्ठितस्य, 'अध्वरस्य', सम्बन्धि 'यत्' हविः, अस्ति तत् 'अद्य', 'वः' अस्मान भचय। 'होतः' होमकर्त्तः, 'पावक' शोधक, 'शोचे' दीप्यमान, एतान्यग्निविषयाणि विशेषणानि। 'हि' यस्मात्, त्वं 'यज्वा' यागस्य कर्त्ता, तस्मात् 'ऋता' अस्मदीये यज्ञे, 'महिना' महिम्ना, 'यजासि' देवान् प्रीणयसि। 'यत्' यस्मात् कारणात्, 'विभूः' विशिष्टो भवसि। तस्मात् कारणात् हे 'यविष्ठ' युवतम, 'अद्य' 'ते' तव, 'या हव्या' यानि हव्यान्यस्माभिर्धीयन्ते तानि सर्व्वाणि, 'वह' स्वीकुरु॥

इति द्वादशोऽनुवाकः।

---

अथ त्रयोदशोऽनुवाकः।

द्वादशे हविर्वनस्पतिस्विष्टकृतां याज्या अभिहिताः। त्रयोदशेऽनूयाजानां मैत्रावरुणप्रैषा उच्यन्ते। कल्पः। यदा जानाति देवेभ्यः प्रेष्येति तन्मैत्रावरुणाः प्रेष्यति। देवं वर्हिः सुदेवमित्यथ होता यजति। देवं वर्हिः। वसुवने वसुधेयस्य वेत्विति। तमेव व्यतिषङ्गमुत्तरेणोत्तरेण मैत्रावरुणः प्रैषात्युत्तरेणोत्तरेण होता यजतीति तत्रास्मिन्ननुवाके प्रैषाः, उत्तराऽनुवाके याज्याः। प्रैषाणां मध्ये प्रथमं प्रैषमाह। "देवं बर्हिः सुदेवं देवैः स्यात् सुवीरं वीरैर्वस्तोर्वृज्येताक्तोः प्रभ्रियेतान्यान् राया बर्हिष्मतो मदेम वसुवने वसुधेयस्य वेतु यज"

इति। 'देवं' देवनशीलं, 'बर्हिः' प्रथमानूयाजदेवस्वरूपं बर्हिर्नामकं यदस्ति तत्, 'देवैः', अन्यैः सह, 'सुदेवं स्यात्' शोभनदीप्तिकामं स्यात्, 'वीरैः' अस्मदीयैः पुत्रैः. सह, 'सुवीरं स्यात्' शोभनवीरोपेतमस्तु। 'वस्तोः' देवानां वासाय, वेद्यामाच्छादनाय च, 'वृज्येत' बर्हिर्भवेत्, 'अक्तोः' स्रुचां हविषां वा अभिव्यक्तये, 'प्रभ्रियेत' प्रकर्षेण धार्य्येत। यदेतद्वेद्यामास्तरणीयं बर्हिः तदभिमानी बर्हिर्नामकोऽनूयाजदेवः तस्माद्देवप्रसङ्गाद्दर्भवर्णनयुक्तं। अस्य बर्हिर्देवस्य प्रसादात् 'अन्यान् बर्हिष्मतः' इतरान्यागयुक्तान् पुरुषान्, 'राया' धनेन, अतिक्रम्य 'मदेम' हृष्याम। 'वसुधेयस्य' धनप्रदातुर्देवस्य, 'वसुवने' धनरक्षणाय, 'वेतु' आज्यं पिबतु। 'यज' तदर्थं हे होतर्याज्यां पठ॥

अथ द्वितीयं प्रैषमाह। "देवीर्द्वारः संघाते विड्वीर्यामञ्छिथिरा ध्रुवा देवहूतौ वत्सईमेनास्तरुण आमिमीयात्कुमारो वा नवजातो मैना अर्वा रेणुककाटः पृणग्वसुवने वसुधेयस्य वियन्तु यज" इति। 'द्वार'शब्दाभिधेयाः स्त्रीमूर्त्तयो द्वितीयानूयाजदेवताः, ताः 'देव्यः', 'संघाते विड्वीः' द्वाराभिमानीत्वात् कवाटद्वयमेलने दृढशक्तयः, 'यामन्' यागे निर्गमनकाले, 'शिथिराः' कवाटोद्घाटनेन शैथिल्यं प्राप्ताः, 'देवहूतौ' देवानामाह्वाने प्रवेशने वा, 'ध्रुवाः' नित्यप्रवृत्ताः, तिष्ठन्ति। 'एनाः' द्वारः, वत्सादिः 'आमिमीयात्' आगत्य प्रविशेयुः। महावकाशतया सर्व्वेषां प्रवेशं द्वारदेवता अनुमन्यन्ते, न तु कश्चिदपि तत्र प्रतिबध्यत इत्यर्थः। 'वत्सई'

वत्सोऽपि तिर्य्यग्जातिरपि, प्रविशेत्। तत्र मनुष्यः प्रविशेदिति किमु वक्तव्यं। स च मनुष्योऽनेकविधः, 'तरुणः' युवा, 'कुमारः' बालः, 'नवजातः' तदानीमेवोत्पन्नः स सर्व्वोऽपि ता द्वारः प्रविशेत्। 'रेणुककाटः' दुर्दान्तः, भूमिं रेणुं कृत्य यः सञ्चरति तादृग्, 'अर्वा' धूर्त्तोऽश्वः, कवाटभङ्गक्षमः, 'एनाः' द्वारः, सा 'पृणक्' आभिर्द्वार्भिः सम्पृक्तो माभूदिति, वसुवन इत्यादि पूर्व्ववत्। द्वारमूर्त्तीनां बहुत्वादियन्त्विति बहुवचनं॥

अथ तृतीयं प्रैषमाह। "देवी उषासा नक्ताद्यास्मिन् यज्ञे प्रयत्यह्वेतामपि नूनं दैवीर्विशः प्रायासिष्टाᳪ सुप्रीते सुधिते वसुवने वसुधेयस्य वीतां यज" इति। 'उषासानक्त'शब्दवाच्ये अहोरात्राभिमानिन्यौ तृतीयानूयाजदेव्यौ, ते उभे 'अद्य' अस्मिन्नहनि, 'अस्मिन् यज्ञे' पशुयागे, 'प्रयति' प्रवर्त्तमाने सति, 'अह्वेतां' देवादीनाह्वयेतां, 'अपि दैवीर्विशः' देवसम्बन्धिनीरपि प्रजाः सर्व्वाः, 'नूनम्' अवश्यं, 'प्रायासिष्टां' प्रकर्षेण गतवत्यौ, दैवीः प्रजा आह्वातुं तत्समीपं प्रतिगच्छत इत्यर्थः। कीदृश्यौ, 'सुप्रीते' स्वयं सुष्ठु प्रीते नतु वैमुख्यं भजमाने, 'सुधिते' सुष्ठु प्रारब्धनिर्व्वहणपरे, वसुवन इत्यादि पूर्व्ववत्। देव्योर्द्वित्वादीतामिति द्विवचनं॥

अथ चतुर्थमाह। "देवी ज्येष्ठी वसुधिती ययोरन्याघा द्वेषाᳪसि यूयवदान्यावक्षद्वसुवार्य्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज" इति। 'ज्येष्ठी'शब्दवाच्ये चतुर्थानूयाजदेवमूर्त्ती द्वे देव्यौ, 'वसुधिती' सुखप्राप्तियुक्ते, 'ययोः' देव्यो-

र्य्योर्म्मध्ये 'अन्या' एका देवी, 'अघा' पापानि, 'द्वेषांसि' द्वेष्याणि च रक्षःप्रभृतीनि च, 'यूयवत्' पृथक् कुर्य्यात्, नाशयेदित्यर्थः। 'अन्या' इतरा जोष्ट्रीदेवी, 'यजमानाय', 'वार्य्याणि' 'वसु' वरणीयानि धनानि, 'आवक्षत्' सर्व्वतो वहति॥

अथ पञ्चममाह। "देवी ऊर्ज्जाहुती इषमूर्ज्जमन्यावक्षत् सग्धिꣳ सपीतिमन्या नवेन पूर्व्वं दयमाना स्याम पुराणेन नवं तामूर्ज्जमूर्ज्जाहुती ऊर्ज्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज" इति। 'ऊर्ज्जाहुती'शब्दवाच्ये पञ्चमानूयाजदेवते स्त्रीमूर्त्ती, द्वे देव्यौ विद्येते तयोर्म्मध्ये 'अन्या' एका, 'देवी', 'इषं' अन्नं, 'ऊर्ज्जं' क्षीरादिरसञ्च, 'आवक्षत्' आवहति। 'अन्या' इतरा, 'देवी', 'सग्धिं' सहभोजनं, 'सपीतिं' सहपानं च, उभयोः प्रापितवती। तयोर्द्देव्योः प्रसादात् वयं 'नवेन', व्रीह्यादिना, सहैव, पुराणं व्रीह्यादिकं 'दयमाना' रक्षन्तः, कुसूलादिषु स्थापयन्तः। 'स्याम' तिष्ठेम, तथा 'पुराणेन', धान्येन, सहैव, 'नवं', धान्यं, 'दयमानाः', 'स्यामः'। 'ऊर्जाहुती' एवंनामिके देव्यौ, 'तां' नवपुराणधान्यजातिं, उपर्य्युपचीयमानबहुविधनवपुराणधान्यपूर्णां 'ऊर्ज्जं' अन्नसमृद्धिम्, ऊर्ज्जयन्ती सर्व्वस्य लोकस्य सम्पादयन्त्यौ, अस्मभ्यमपि 'अधातां' सम्पादयेतां॥

अथ षष्ठमाह। "देवा दैव्या होतारा नेष्टारा पोतारा हताघशꣳसाऽऽवाभरद्वसू वसुवने वसुधेयस्य वीतां यज', इति। 'दैव्यहोतृ'शब्दवाच्यौ षष्ठानूयाजदेवस्य द्वौ देहौ, तद्देहधारिणौ देवौ 'नेष्टारा' यज्ञस्य नेतारौ, 'पोतारा' शोधयितारौ,

'हताघशꣳसौ' हता अघशꣳसा पापबुद्धयो याभ्यां तादृशौ, 'आभरद्वसू' आह्रियमाणधनौ, तौ वीतामित्यन्वयः ॥

अथ सप्तममाह। "देवीस्तिस्रस्तिस्रो देवीरिडा सरस्वती भारती द्यां भारत्यादित्यैरस्पृक्षत् सरस्वतीमꣳ रुद्रैर्यज्ञमावीदिहैवेडया वसुमत्या सधमादं मदेम वसुवने वसुधेयस्य वियन्तु यज" इति। 'इडा'-ऽऽदिनामयुक्ताः 'तिस्रः' 'देव्यः' सप्तमानूयाजदेवताः, तासां मध्ये एकैकस्या मूर्त्तित्रययुक्तत्वात् पुनरपि 'तिस्रोदेवीः', इत्युच्यते। तासां मध्ये या 'भारती', सेयं 'आदित्यैः', 'सह' द्यां 'द्युलोकं' 'अस्पृक्षत्' स्पृशतु, हविषा देवांस्तर्पयितुं तत्र गच्छतु। 'सरस्वती', तु देवी 'रुद्रैः', सह 'इमं' 'यज्ञं', 'आवीत्' अवतु, रक्षतु। अत्रैव स्थित्वा यज्ञं निर्वर्त्तयितु। अथ 'वसुमत्या' धनयुक्तया, 'इडया', देव्या 'सधमादं' सहैकस्थाने हर्षो यथा भवति तथा, 'मदेम' हृष्टा भूयास्म। 'इहैव', यज्ञफले नोऽस्मान्योजयत्वित्यर्थः ॥

अथाष्टममाह। "देवो नराशꣳसस्त्रिशीर्षा षडक्षः शतमिदेनꣳ शितिपृष्ठा आदधति सहस्रमीं प्रवहन्ति मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाध्वर्य्यवं वसुवने वसुधेयस्य वेतु यज" इति। 'नराशꣳसा'-ऽऽख्योऽष्टमानूयाजदेवो यः सोयं त्रिभिः शिरोभिः, षड्भिरक्षिभिश्च युक्तः, 'एनं' नराशंसं, 'शतमित्' शतसङ्ख्याका एव, 'शितिपृष्ठाः' श्वेतपृष्ठा गावः, यज्ञे दक्षिणा योग्याः 'आदधति' आभिमुख्येन धारयन्ति, 'सहस्रमीम्', सहस्रमेव सहस्रसङ्ख्याका एव शितिपृष्ठाः 'प्रवहन्ति' यज्ञा-

त्मकमेनं नराशंसं फलसाधनसमर्थं कुर्व्वन्ति, 'मित्रावरुणेत्' मित्रावरुणावेव, 'अस्य' नराशंसस्य, 'होत्रं' होमव्यापारं, कर्त्तुं 'अर्हतः', न त्वन्यः कश्चित् 'बृहस्पतिः', एव 'स्तोत्रं', अर्हति, 'अश्विनौ', एव अध्वर्यवं 'अर्हतः'॥

अथ नवममाह। "देवो वनस्पतिर्वर्षप्रावा घृतनिर्णिग्घामग्रेणास्पृक्षदान्तरिक्षं मध्येना प्राः पृथिवीमुपरेणादृंहीद्वसुवने वसुधेयस्य वेतु यज" इति। 'वनस्पत्या'-ऽऽख्यो नवमानूयाजदेवोयोऽस्ति सोऽयं 'वर्षप्रावाः' यज्ञद्वारेण वर्षस्य पूरयिता, 'घृतनिर्णिक्' घृतस्य शोधयिता, 'द्यां' द्युलोकं, 'अग्रेणास्पृक्षत्' यूपरूपस्य स्वस्याग्रभागेन स्पृशतु, 'मध्येन', भागेन, 'अन्तरिक्षं' 'आप्राः' पूरयितु, 'पृथिवीं', 'उपरेण' तक्षणरहितेन मूलप्रदेशेन, 'अदृंहीत्' दृढीकरोतु॥

अथ दशममाह। "देवं बर्हिर्वारितीनां निधे धासि प्रच्युतनामप्रच्युतं निकामधरणं पुरुस्पार्हं यशस्वदेनाबर्हिषान्या बर्हीꣳष्यभिष्याम वसुवने वसुधेयस्य वेतु यज" इति। 'बर्हि'-राख्यं यद्दशमानूयाजदेवतारूपं तत्, 'देवं' द्योतमानं सत्, 'वारितीनां' वाराञ्जलानामितयोगतयो वारितयः तासां, 'निधे' निधानाय, सम्पादनाय, 'धासि' स्वकीयं मनो धारयति। कीदृशं बर्हिः, 'प्रच्युतानामप्रच्युतं' विनाशवतां वस्तूनामविनाशकारणं, 'निकामधरणं' स्वेच्छया सर्व्ववस्तूनां धारणसमर्थं, 'पुरुस्पार्हं' बहुभिः स्पृहणीयं, 'यशस्वत्' यशस्करं, 'एना बर्हिषा' अनेन बर्हिरभिमानिदेवेन, 'अन्याव-

र्हीᳪषि' इतरयजमानसम्बन्धीनि यज्ञनिष्ठानि वर्हीᳪषि, 'अभिष्याम' अभिभवितुं वयं समर्थाः स्याम ॥

अथैकादशमाह। "देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्माऽऽयजी होता होतुर्होतुरायजीयानग्ने यान्देवानयाड्याᳪ अपि प्रैर्ये ते होत्रे अमत्सत ताᳪ ससनुषीᳪ होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरयेमᳪ स्विष्टकृच्चाग्ने होताऽभूर्वसुवने वसुधेयस्य नमोवाके वीहि यज" इति। यस्तु 'स्विष्टकृत्', नामकः 'अग्निर्देवः', सोयं 'सुद्रविणा' शोभनधनः, 'मन्द्रः' हर्षणशीलः, 'कविः' विद्वान्, 'सत्यमन्मा' सत्यमननः, 'आयजी' शास्त्रीयया मर्य्यादया यष्टा, 'होता' देवानामाह्वातः, 'होतुर्होतुरायजीयान्' लोके यो यो होतास्ति तस्मात् सर्व्वस्मादतिशयेन शास्त्रीयमर्यादामनुलङ्घ्य यष्टा, हे 'अग्ने', ईदृशस्त्वं 'यान् देवान्', 'अयाट्' इष्टवानसि, 'यान्' च 'देवान् अपि', 'प्रैः' प्रीणितवानसि। 'ये' च देवाः, 'ते' तव, 'होत्रे' होतृकृत्ये, 'अमत्सत' अमाद्यन्, हृष्टवन्तः, 'दिवि', स्थितेषु तेषु 'देवेषु', 'ससनुषीं' हवींषि दत्तवतीं, 'देवङ्गमां' देवानेव गच्छन्तीं, 'तां होत्रां' होतृक्रियां, 'इमं' अस्मदीयं, 'यज्ञं', प्रति 'एरय' आभिमुख्येन प्रापय, अस्मदीये यज्ञे सर्व्वदैव तुष्टिकरीं होतृक्रियां त्वमनुतिष्ठेदित्यर्थः। हे 'अग्ने', त्वं 'स्विष्टकृत्', 'होता', वा 'अभूः' यदस्मदिष्टं तच्छोभनं त्वया कृतं तादृशो होमस्य कर्त्ताभूः, अतः 'नमोवाके' यजमाननमस्कारोक्तौ सति, 'वसुवने' धनस्य सम्भजनाय च, 'वसुधेयस्य

वीहि' अग्नावाधीयमानमिदमाज्यरूपं द्रव्यं भक्षय। हे मनुष्य होतस्तदर्थं त्वं 'यज' याज्यां पठ॥

इति त्रयोदशोऽनुवाकः।

---

अथ चतुर्दशोऽनुवाकः।

त्रयोदशे मैत्रावरुणप्रैषा अनूयाजविषया उक्ताः। चतुर्दशे होतुर्याज्या अनूयाजविषया उच्यन्ते। ता एता एकादश याज्या आह। "देवं बर्हिः। वसुवने वसुधेयस्य वेतु। देवीर्द्वारः। वसुवने वसुधेयस्य वियन्तु। देवी उषासा नक्ता। वसुवने वसुधेयस्य वीताम्। देवी जोष्ट्री। वसुवने वसुधेयस्य वीताम्। देवी ऊर्जाहुती। वसुवने वसुधेयस्य वीताम्। देवा दैव्या होतारा। वसुवने वसुधेयस्य वीताम्। देवीस्तिस्रस्तिस्रो देवीः। वसुवने वसुधेयस्य वियन्तु। देवो नराशꣳसः। वसुवने वसुधेयस्य वेतु। देवो वनस्पतिः। वसुवने वसुधेयस्य वेतु। देवं बर्हिर्वारितीनाम्। वसुवने वसुधेयस्य वेतु। देवो अग्निः स्विष्टकृत्। सुद्रविणा मन्द्रः कविः। सत्यमन्मा यजी होता। होतुर्होतुरायजीयान्। अग्ने यान्देवानयाट्। यां अपि प्रैः। ये ते होत्रे अमत्सत। ताꣳ ससनुषीꣳ होत्रां देवङ्गमाम्। दिवि देवेषु यज्ञमेरयेमम्। स्विष्टकृच्चाग्ने होताभूः। वसुवने वसुधेयस्य नमोवाके वीहि" इति। पूर्वानुवाकोक्तप्रैषवाक्यवदेतानि याज्यावाक्यानि सर्वाण्यपि व्याख्येयानि। प्रैषारूपत्वाभावाद्यजेति पदं न प्रयुज्यते॥

इति चतुर्दशोऽनुवाकः।

अथ पञ्चदशोऽनुवाकः ।

चतुर्दशेऽनूयाजानां याज्या अभिहिताः । पञ्चदशे सूक्तवाकविषयो मैत्रावरुणप्रैषोभिधीयते । कल्पः । यदा जानाति सूक्तवाकाय सूक्ता प्रेष्येति तन्मैत्रावरुणः प्रेष्यत्यग्निमद्यतेति । पाठस्तु । "अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोडाशं बध्नन्निन्द्राग्निभ्यां छागꣳ सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राग्निभ्यां छागेनाघस्तान्तं मेदस्तः प्रति पचताग्रभीष्टामवीवृधेतां पुरोडाशेन त्वामद्यर्ष आर्षेयर्षीणां नपाद् वृणीतायं यजमानो बहुभ्य आसङ्गतेभ्य एष मे देवेषु वसुवार्य्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि" इति । 'अद्य' अस्मिन्नहनि, 'अयं यजमानः' 'अग्निं', एव 'होतारं' होमनिष्पादकं, 'अवृणीत' । किं कुर्व्वन्, 'पक्तीः' पक्तव्यानि हवींषि, 'पचन्', तथा 'पुरोडाशं', विशेषेण 'पचन्', तथा 'इन्द्राग्निभ्यां', 'छागं', यूपे 'बध्नन्', 'अद्य' अस्मिन्नहनि, यूपरूपः 'वनस्पतिर्देवः', 'इन्द्राग्निभ्यां', 'छागेन', निमित्तेन तद्बधाय 'सूपस्था' सुस्थिरा हि स्थितिरभवत्, 'तं' पशुं, 'मेदस्तः' वपाया आरभ्य, ताविन्द्राग्नी 'अघस्तां' अभक्षयतां । 'पचता' पक्वानि सर्व्वाणि हवींषि, 'प्रत्यग्रभीष्टां' इन्द्राग्नी प्रतिगृहीतवन्तौ । किञ्च ताविन्द्राग्नी 'पुरोडाशेन' आत्मानं, 'अवीवृधेतां' अवर्धयतां । अथास्मिन् कर्मणि हे 'ऋषे' अतीन्द्रियदर्शिन् होतः, 'त्वां',

'अयं' यजमानः, 'वृणीत' वृतवान्, 'आर्षेय' हे ऋषिकुलो-द्भव, 'ऋषीणां नपात्' हे ऋषिनप्तः, गोत्रप्रवर्त्तकमृषिं प्रति चतुर्थ इत्यर्थः । एतदुभयमृषिविशेषणं । किमर्थं वृतवानिति तदुच्यते, 'आमन्नतेभ्यः', बहुभ्यः, आगत्यास्मिन् कर्म्मणि सम्ब-न्धानां बहूनां देवानामर्च्चनाभिप्रायेण वृतवानिति सोऽभिप्राय उच्यते । 'एषः' 'होता', 'मे', 'वसु वारि' पशुरूपं वसु पृषदा-ज्यरूपं वारि च, 'देवेभ्यायच्छते' समन्ताद्यागं करिष्यतीति 'ता या देवदानानि' यानि तानि देवेभ्यो दत्तानि हवींषि, 'देवा अदुः' ऋत्विजो दत्तवन्तः । 'तानि' सर्व्वाणि हविः-फलानि, 'अस्मै' यजमानाय, 'आ च शास्व च' सिध्यन्त्वि-त्येवमाशिषञ्च कुरु । 'आगुरस्व च' तत्सिध्यर्थमुद्यमञ्च कुरु । हे 'होतः', 'इषितः' मयाभिलक्षितः, 'प्रेषितः', च 'असि', 'भद्रवाच्याय' कल्याणवचनाय, प्रेषितो 'मानुषः', होता त्वं सूक्तस्य वाको वचनं यस्य सोऽयं देवः सूक्तवाकः तस्मै 'सूक्तवा काय', देवाय 'सूक्ता ब्रूहि' इदं द्यावापृथिवीमनुवाकोक्तानि शोभनानि वचनानि कथय ॥

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे तृतीयकाण्डे षष्ठप्रपाठके पञ्चदशोऽनुवाकः ॥ ० ॥

समाप्तश्च षष्ठप्रपाठकः ।

# तैत्तिरीय-ब्राह्मणभाष्ये

## तृतीयकाण्डे सप्तमप्रपाठके

### प्रथमोऽनुवाकः ।



हरिः ॐ ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
कथितं पाशुकं होत्रं षष्ठे पूर्व्वप्रपाठके।
प्रपाठके सप्तमेऽस्मिंनच्छिद्रं काण्डमुच्यते ॥
प्रायश्चित्तेन मन्त्रैश्च यज्ञच्छिद्रं प्रपूर्य्यते।
तत्सर्व्वमुक्तमत्रेति काण्डमच्छिद्रमीरितं ॥

तत्राद्येनानुवाकत्रयेण प्रायश्चित्तमुच्यते । उपरितनैरेकादशभिरनुवाकैस्तत्र तत्रापेक्षिता मन्त्रा उच्यन्ते । तत्र प्रथमानुवाके दर्शपौर्णमासविषयाणि कानिचिदुच्यन्ते। यदुक्तं सूत्रकारेण, तुभ्यं ता अङ्गिरस्तमेत्यन्वाहिताग्निः प्रयास्यन् जुहुयात् पृथगरणीष्वग्नीन् समारोप्य प्रयाति यत्र वसेत्तदेतामिष्टिꣳ सꣳस्थापयेदिति। तमेनं होमं विधत्ते। "सर्व्वान् वा एषोऽग्नौ कामान् प्रवेशयति । योऽग्नीनन्वाधाय व्रतमुपैति। स यदनिष्ट्वा प्रयायात्। अकामप्रीता एनं कामानानुप्रयायुः। अतेजा अवीर्य्यः स्यात्। स जुहुयात्। तुभ्यं ता अङ्गिरस्तम्। विश्वाः सुक्षितयः पृथक्। अग्ने कामाय येमिर इति। कामानेवास्मिन्दधाति। कामप्रीता एनं कामा

अनुप्रयान्ति। तेजस्वी वीर्य्यवान् भवति'' इति। दर्शपूर्णमासाभ्यां यियचुः पर्व्वणि प्रातरग्निहोत्रादूर्द्ध्वमाहवनीयं प्रणीय देवागातुविद इति मन्त्रं जपित्वा ममाग्ने इत्यादिभिर्मन्त्रै रग्नीनामुपसमिन्धनं करोति। तदिदमग्नीनामन्वाधानमध्वर्य्युणा क्रियते। यजमानस्तु दक्षिणेनाहवनीयमवस्थाय व्रतमुपैष्यन्त्समुद्रं मनसा ध्यायत्यथ जपत्यग्ने व्रतपते व्रतं चरिष्यामीति। तदिदं व्रतोपायनं 'यः' पुमान्, एवम् 'अग्नीनन्वाधाय', 'व्रतं' कर्म्मानुष्ठानलक्षणं, स्वीकरोति 'एष' पुमान्, 'सर्व्वान्', अपि स्वकीयान् 'कामान्' अभिलषितार्थान्, 'अग्नौ प्रवेशयति' अग्निरेव मम सर्व्वेषामर्थानां साधक इत्येवं निश्चित्य प्रवर्त्तते। अत एवाग्निविषयो मन्त्र एव आम्नायते, त्वयाध्यक्षेण पृतना जयेमेति। एवं सति 'सः' अन्वाहिताग्निः, यदि इष्टिमकृत्वा प्रयाणं कुर्य्यात्। तदानीम् 'एनं', 'कामाः' अपेक्षिता अर्थाः, न प्राप्नुयुः। कीदृशाः कामाः, 'अकामप्रीताः' कामेन प्रीताः कामप्रीताः न कामप्रीताः अकामप्रीताः, पूर्व्वमग्नौ प्रवेशकाले यजमानसम्बन्धिना कामेन सर्व्वेपि काम्याः पदार्थाः प्राप्ताः, इदानीं तस्यानादरेण साप्रीतिर्व्यपगता। तस्मात् कामाः प्रीताः काम्यपदार्था एनं यजमानं परित्यजन्ति ततश्चायं तेजोवीर्यादिकामरहितः स्यात्, तस्मात् 'सः' अन्वाहिताग्निः, देवानिष्ट्वा प्रयास्यन्नुक्तदोषवान् स्यात्तस्य परिहाराय 'तुभ्यं ताः', इति मन्त्रेण 'जुहुयात्'। प्रयास्यंतोवास्तोष्पतीयहोमोऽप्यन्यत्राम्नातः, यदहुत्वा वास्तोष्पतीयं

प्रयायात् रुद्र एनं भूत्वाग्निरनूत्थाय हन्याद्वास्तोष्पतीयं जुहोतीति। सोऽयमाहिताग्निमात्रसाधारणः। अयं त्वन्वाहिताग्निविषय इति विशेषः। मन्त्रार्थस्तु, अतिशयेनाङ्गसौष्ठवयुक्तः 'अङ्गिरस्तमः', तादृश हे 'अग्ने', 'कामाय' सर्व्वकामप्रदत्वेन कामरूपाय, 'तुभ्यं' अग्नये, 'ताः' लोकवेदप्रसिद्धाः, 'विश्वाः' सर्व्वाः, 'सुचितयः' कामभोगहेतवः सुभूमयः, 'पृथक्' प्रत्येकं, 'येमिरे' प्रजापतिना नियमिताः समर्पिताः, अतः कामानां त्वदधीनत्वान्मह्यं कामान् प्रयच्छेत्यर्थः। अनेन होमेन तुष्टः सोऽग्निः 'अस्मिन्' यजमाने, कामितानर्थान् सम्पादयत्येव। ते च कामिता अर्था अन्वाधानकालवत् 'कामप्रीताः', सन्तः 'कामाः', 'एनं' यजमानम्, 'अनुप्रयान्ति'। ततोऽयं तेजोवीर्यादिकामयुक्तो 'भवति'॥

यदुक्तं सूत्रकारेण, यद्यन्वाहिताग्नेराहवनीयोऽनुगच्छेत्। अन्वग्निरुषसामग्रमख्यदित्यन्यं प्रणीय भूरित्युपस्थायेति। तदिदं विधत्ते। "सन्ततिर्वा एषा यज्ञस्य। योऽग्नीनन्वाधाय व्रतमुपैति। स यदुद्वायति। विच्छित्तिरेवास्य सा। तं प्राञ्चमुद्धृत्य। मनसोपतिष्ठेत। मनो वै प्रजापतिः। प्राजापत्यो यज्ञः। मनसैव यज्ञꣳ सन्तनोति। भूरित्याह। भूतो वै प्रजापतिः। भूतिमेवोपैति" इति। 'यः' यजमानः, प्रथमम् 'अग्नीनन्वाधाय', अनन्तरं 'व्रतमुपैति'। तस्य यजमानस्य 'एषा' अन्वाधानव्रतोपायनानुष्ठितिः, 'यज्ञस्य', 'सन्ततिर्वै' अविच्छेद एव, सम्पद्यते। एवं सति 'सः' अन्वाहिताग्निः, 'यदुद्वायति'

विनश्येत्, तदानीम् 'अस्य' यज्ञस्य, 'सा' वह्निविनाशरूपा, 'विच्छित्तिरेव', सम्पद्यते अनुष्ठानशान्तत्वाभावात्। अतोऽविच्छेदपरिहाराय 'तं' अग्निं, 'प्राञ्चमुद्धृत्य', गार्हपत्यादाहवनीयं प्रणीयेत्यर्थः। प्रणयणादूर्द्धं 'मनसा', 'तं' अग्निम्, 'उपतिष्ठेत', भूरिति मन्त्रं जपेदित्यर्थः। चाक्षुषमूर्त्त्यभावेनाव्यक्तत्वात् 'मनः,' एव प्रजापतेः स्वरूपं, यज्ञस्य प्रजापतिना सृष्टत्वात् 'प्राजापत्यः', अतो मनसोपस्थाने सति प्रजापतिरूपेण 'मनसा', प्राजापत्यं 'यज्ञं', विच्छित्तिपरिहारेण सन्ततं करोति तस्मात् 'भूः', इति मन्त्रं जपेत् 'भूतः' नित्यसिद्धः प्रजापतिरेव भूशब्दवाच्यः, अतस्तन्मन्त्रपाठेनैश्वर्य्यमेव प्राप्नोति॥

यदुक्तं सूत्रकारेण, यद्याहिताग्नेरग्निरपक्षायेदाशम्या परासात् परिवाजपतिः कविरग्निरिति त्रिः प्रदक्षिणं परिक्रम्य तं सम्भरेदिदं त एकमिति। तदिदं विधत्ते। "वि वा एष इन्द्रियेण वीर्य्येणर्द्धते। यस्याहिताग्नेरग्निरपक्षायति। यावच्छम्यया प्रविध्येत्। यदि तावदपक्षायेत्। तꣳ सम्भरेत्। इदं त एकं पर ऊत एकम्। तृतीयेन ज्योतिषा संविशस्व। संवेशनस्तनुवे चारुरेधि। प्रिये देवानां परमे जनित्र इति। ब्रह्मणैवैनꣳ सम्भरति। सैव ततः प्रायश्चित्तिः" इति। 'आहिताग्नेः', 'यस्य' यजमानस्य, अयम् 'अग्निः', 'अपक्षायति' यदा स्वकीयादायतनादपेत्य वहिःपतति, 'एषः' यजमानः, 'इन्द्रियेण', 'वीर्य्येण', च वियुक्तो भवति, तदानीꣳ शम्यां हस्ते स्वीकृत्य स्वकीयेन सर्व्वेणापि वलेन दूरे परास्येत्। शम्यां

स्वीकृत्य तथा 'शम्यया', 'यावत्', भूप्रदेशः 'प्रविध्येत्' व्याप्नोति, 'तावत्', मध्ये 'यदि', अङ्गारः 'अपचयेत्' पतितः स्यात्, 'तं', 'सम्भरेत्' उद्धरेत्। तथा च सा शम्या यावति प्रदेशे पतिता तावतः प्रदेशस्य मध्ये योऽङ्गारः पतितस्तमङ्गारम् 'इदं ते', इति मन्त्रेण पुनरपि स्वकीय आयतने स्थापयेत्। मन्त्रस्यायमर्थः। हे अग्ने 'ते' तव, बहिःपतितम् 'इदमेकं', ज्योतिः 'उत' अपि च, 'परः' परस्तात् स्वकीय एव स्थाने स्थितम्, 'एकं' ज्योतिः, तदुभयमपि 'तृतीयेन ज्योतिषा' परमात्मरूपेण, 'संविशस्व' संयोजयस्व, 'तनुवै' स्वकीयस्य शरीरस्य, 'संवेशनः' परमात्मज्योतींषि संयोजयिता, त्वं 'चारुरेधि' प्रक्षालितदोषो भव। किं निमित्तमिति तदुच्यते, 'देवानां', 'प्रिये' प्रीतिहेतौ, 'परमे जनित्रे' प्रकृष्टे फलजनके, योगेनिमित्तभूते सति यागसिद्ध्यर्थमित्यर्थः। एवं कुर्व्वन् यजमानो 'ब्रह्मणैव' मन्त्रेणैव, परमात्मनैव, वा तम् 'एनं' अग्निं,'सम्भरति' पुनः समीचीनं करोति। 'सैव' तथाविधसम्भरणक्रियैव, 'ततः प्रायश्चित्तिः' तस्माद्बहिःपतनदोषादपगमः॥

यदुक्तं सूत्रकारेण, यदि परस्तरामपचायेदनुप्रयायावस्येत् तदग्नये पथिकृते पुरोडाशमष्टाकपालं निर्व्वपेदिति। तदिदं विधत्ते। "यदि परस्तरामपचायेत्। अनुप्रयायावस्येत्। सो एव ततः प्रायश्चित्तिः" इति। 'यदि', शम्यायतनदेशात् 'परस्तरां' अतिशयेन दूरदेशे, 'अपचायेत्' अङ्गारोपगम्य पतेत तदानीं स्वयमपि तदङ्गारम् 'अनु' तत्रैव देशे, 'प्रयाया'

यात्वा, 'अवस्येत्' देवयजनमध्यस्येत्, तत्र पथिकृतामिष्टिं कृत्वा श्वोभूते गृहेषु प्रत्यवस्यति 'सो एव' यथोक्तानुष्ठितिरेव, 'प्रायश्चित्तिः' तस्माद्दोषादपगमहेतुः ॥

यदुक्तं सूत्रकारेण, यस्य हविषे वत्सा अपाकृता धयेयुस्तत् स्थाने वायव्यां यवागूं निर्व्वपेदथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेदिति । तदिदं विधत्ते । "ओषधीर्वा एतस्य पशून् पयः प्रविशति । यस्य हविषे वत्सा अपाकृता धयन्ति । तान् यद्दुह्यात् । यातयाम्ना हविषा यजेत । यन्न दुह्यात् । यज्ञपरुरन्तरियात् । वायव्यां यवागूर्न्निर्वपेत् । वायुर्वै पयसः प्रदापयिता । स एवास्मै पयः प्रदापयति । पयो वा ओषधयः । पयः पयः । पयसैवास्मै पयोऽवरुन्धे । अथोत्तरस्मै हविषे वत्सानपाकुर्य्यात् । सैव ततः प्रायश्चित्तिः" इति । 'यस्य' यजमानस्य, 'हविषे' हविरर्थं, 'अपाकृताः', वत्सा गोभिः संयुज्य 'धयन्ति' स्तनं पिबन्ति, 'एतस्य' यजमानस्य, हविरूपं 'पयः', 'ओषधीः पशूंश्च', 'प्रविशति', तत्र वत्सैः पीतत्वात् पशुप्रवेशः स्पष्टः । ओषधीदेवताप्रवेशस्तु शास्त्रसिद्धः । अत्रेदं चिन्त्यते, 'तान्' पीतपयसो वत्सान्, पुनरपि सायंकाले गोसमीप उपावसृज्य तां गां दुह्यान्नवेति दुह्यात् तदानीं हविर्य्यातयाम वत्सैः पूर्व्वं पीतत्वेन गतसारं भवति । तादृशेन 'हविषा', 'यजेत', यदि न 'दुह्यात्', तदानीं 'यज्ञपरुरन्तरियात्', सान्नाय्याभावेन यज्ञावयवो विच्छिद्येत । अतस्तद्दोषपरिहाराय वायुदेवताकां यवागूं निर्व्वपेत् । वायव-

स्था वायवस्थेति मन्त्रानुसारेणापाकृतानां वत्सानां वाय्वधीनत्वात् वत्सद्वारेण 'वायुः', एव 'पयसः', 'प्रदापयिता'। ततः 'अस्मै' यजमानाय, 'स एव' वायुः, 'पयः प्रदापयति'। किञ्च यवागूनिष्पादिकाः 'ओषधयः', 'पयः', एव क्षीरस्य गोभक्षितृणजन्यत्वात् 'पयः', तु स्वयमेव 'पयः', न तु तत्रोपचारोऽस्ति तथा सति यवागूरेव ओषधिरूपेण 'पयसैव', 'अस्मै' यजमानाय, क्षीररूपं 'पयः', सम्पादयति। 'अथ' यवागूनिर्वापादूर्ध्वं, 'उत्तरस्मै' 'हविषे' परेद्युरनुष्ठेयस्य सान्नाय्यस्य सिद्धये पुनरपि 'वत्सानपाकुर्य्यात्', 'सैव' यवागूरेव, 'ततः प्रायश्चित्तिः' तस्माद्दोषादपगमहेतुः॥

यदुक्तं सूत्रकारेण, यस्य सायं दुग्धं हविरार्त्तिमार्च्छतीन्द्राय व्रीहीं निरुप्योपवसेद्यत् प्रातस्यात्तच्छृतं कुर्य्यादथैतर ऐन्द्रः पुरोडाशः स्यात् तस्य प्रातर्दोहेन समवदाय प्रचरेदेतदेव प्रातर्दोह आर्त्तिगते प्रायश्चित्तं सायं दोहेनास्य समवदाय प्रचरेदिति। तदेतद्विधत्ते। "अन्यतरान् वा एष देवान् भागधेयेन समर्द्धयति। ये यजमानस्य सायं गृहमागच्छन्ति। यस्य सायं दुग्धꣳ हविरार्त्तिमार्च्छति। इन्द्राय व्रीहीन्निरुप्योपवसेत्। पयो वा ओषधयः। पय एवारभ्य गृहीत्वोपवसति। यत् प्रातः स्यात्। तच्छृतं कुर्य्यात्। अथेतर ऐन्द्रः पुरोडाशः स्यात्। इन्द्रिये एवास्मै समीची दधाति। पयो वा ओषधयः। पयः पयः। पयसैवास्मै पयोऽवरुन्धे। अथोत्तरस्मै हविषे वत्सानपाकुर्य्यात्। सैव ततः प्रायश्चित्तिः"

इति। द्विविधा देवाः, केचन 'यजमानस्य', गृहे 'सायमागच्छन्ति', अपरे पुनः प्रातरागच्छन्ति, तत्र सायं दुग्धस्य विनाशे कांश्चिद्देवान् सायमागच्छतो भागेन विरहितान् करोति। ततस्तत् परिहारायेन्द्रार्थं व्रीहीणां निर्वापमात्रं कृत्वा तस्मिन् दिने पुरोडाशमनिष्पाद्य वह्निसमीपे निवसेत्। तथासत्योषधीनां हेतुत्वेनपयोरूपत्वादोषधीरूपं पय एवोपक्रम्य देवताश्च स्वाधीनत्वेन गृहीत्वा समीपे निवसति। ततः 'यत्', 'प्रातर्दुग्धं स्यात्', 'तच्छृतं' पक्वं, कुर्य्यात्, तथा सति सान्नाय्यरूपयोर्दधिक्षीरयोर्म्मध्ये क्षीरं मुख्यमेव सम्पद्यते। 'अथ' अनन्तरम्, 'इतरः' हविःपदार्थः, पूर्व्वेद्युर्निरुप्तैर्व्रीहिभिः 'ऐन्द्रः पुरोडाशः', एवं भवेत्। तेन क्षीरेण पुरोडाशेन च 'अस्मै' यजमानाय, 'इन्द्रिये' हविर्द्वयसाध्यत्वे फलोत्पादनसामर्थ्ये, 'समीची' अनुकूले, सम्पादयति। पयो वा इत्यादि पूर्व्ववत्॥

यदुक्तं सूत्रकारेण, यस्योभौ दोहावार्त्तिमार्च्छेयातामाग्नेयमष्टाकपालं निर्व्वपेदैन्द्रं पञ्चशरावमोदनमग्निं पुरोडाशेन यजतैन्द्रं पञ्चशरावेनेति। तदेतद्विधत्ते। "उभयान् वा एष देवान् भागधेयेन व्यर्द्धयति। ये यजमानस्य सायञ्च प्रातश्च गृहमागच्छन्ति। यस्योभयꣳ हविरार्त्तिमार्च्छति। ऐन्द्रं पञ्चशरावमोदनन्निर्वपेत्। अग्निं देवतानां प्रथमं यजेत्। अग्निमुखा एव देवताः प्रीणाति। अग्निं वा अन्वन्या देवताः। इन्द्रमन्वन्याः। ता एवोभयीः प्रीणाति। पयो वा ओषधयः। पयः

पयः। पयसैवास्मै पयोऽवरुन्धे। अथोत्तरस्मै हविषे वत्सान-पाकुर्य्यात्। सैव ततः प्रायश्चित्तिः” इति। दधिपयसोरुभयो-रप्यार्त्तौ सायं प्रातश्चागतानुभयविधानपि ‘देवान्’, भागहीनान् करोति। अतस्तत्परिहारायेन्द्रदेवताकं शरावपञ्चकपरिमितव्रीहिं निष्पाद्य ‘ओदनं निर्व्वपेत्’। तस्मादैन्द्रादोदनात् पूर्व्वं ‘देवतानां’, मध्ये मुख्यम् ‘अग्निं’, अष्टाकपालेन पुरोडाशेन ‘यजेत्’। तेनाग्निप्रमुखाः ‘देवताः’, सर्व्वा एव प्रीणयति। काश्चिद्देवता अग्निमेवानुवर्त्तन्ते ‘अन्याः’, तु इन्द्रमेव, हविर्द्वयेन द्विविधा अपि ‘ताः’ तान् प्रीणयति। पयो वा इत्यादि पूर्व्ववत्॥

यदुक्तं सूत्रकारेण, यस्य व्रत्येहन् पत्न्यनालम्भुका स्यात् तामपरुध्य यजेत। जघनेन वेदिमन्तर्वेदिवोदग्गुल्वं संनहनं स्तृणीयाद्यदा त्रिरात्रीणा स्यादथैनामुपह्वयेतामूहमस्मीति। तदिदं विधत्ते। “अर्द्धो वा एतस्य यज्ञस्य मीयते। यस्य व्रत्येहन् पत्न्यनालम्भुका भवति। तामपरुध्य यजेत। सर्व्वेणैव यज्ञेन यजते। तामिष्ट्वोपह्वयेत। अमूहमस्मि। सा त्वम्। द्यौरहम्। पृथिवी त्वम्। सामाहम्। ऋक्त्वम्। तावेहि सम्भवाव। सह रेतो दधावहै। पुꣳसे पुत्राय वेत्तवै। रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्यायेति। अर्द्ध एवैनामुपह्वयते। सैव ततः प्रायश्चित्तिः” इति। व्रत्येहन् यागानुष्ठानदिने यस्य यजमानस्य पत्नी अनालम्भुका स्प्रष्टुमयोग्या रजस्वला भवति, एतदीयस्य ‘यज्ञस्य’, ‘अर्द्धः’ एको भागः,

'मीयते' विनश्यति, दम्पती हि कर्म्मणः कर्त्तारौ तत्र स्त्रियाः कर्म्मायोग्यत्वादर्थहानिः। तदानीं हानिपरिहाराय 'तां' स्त्रियम्, 'अपरुध्य' वर्हिर्निःसार्य्य, जघनेन वेदिमन्तर्वेदिर्वीद्-युत्वं समहनं स्तीर्त्वा 'यजेत'। एवं कुर्व्वन् 'सर्व्वेणैव यज्ञेन यजते'। अथ 'इष्ट्वा', अनन्तरं यदा रजस्वलाया रात्रित्रयमतीतं भवति। तदा 'तां', भोगार्थं 'अमूहमस्मि' इत्यनेन मन्त्रेण 'उपह्वयेत'। मन्त्रस्यायमर्थः, 'सामाहंशब्दे' योऽहमित्युत्तरभागो यस्य सेति पूर्व्वभागः, तयोर्मध्ये हे जाये अहमुत्तरभागोऽस्मि त्वं पूर्व्वभागः। द्यावापृथिव्योर्मध्ये 'द्यौः','अहम्', अस्मि। 'पृथिवी त्वम्',असि। ऋक्सामयोर्मध्ये 'सामाहम्',अस्मि। 'ऋग्रूपा त्वम्', असि। तत्र यथा सामऋक्शब्दावयवावेकीभवतः, यथा च द्यावापृथिव्यौ ऋक्सामवत् तावेवावामुभौ 'सम्भवाव'। अत एहि उभौ 'सह रेतः', धारयाव। किमर्थं 'पुंसे पुत्राय वेत्तवै' पुंस्त्वसामर्थ्योपेतं पुत्रं लब्धुं, तथा धनपुष्ट्यादिसिद्ध्यर्थं च। एवं कुर्व्वन् यजमानो यज्ञस्य यो लुप्तोर्थः, तस्मिन्नेवार्थे 'एनां' पत्नीं, 'उपह्वयते'। 'सैव' तथाविधानुष्ठितिरेव, 'ततः प्रायश्चित्तिः' रजस्वलादोषादपगमहेतुः॥

अत्र मीमांसाषष्ठाध्यायस्य चतुर्थपादे चिन्तितम्।

आर्त्तौ पञ्चशरावोऽयः सदोहदयसंचये।

एकनाशेऽपि वाद्यस्तु हविर्यदुभयोस्त्रितः॥

हविरार्त्युक्तिमात्रेण निमित्तं पर्य्यवस्यति।

उभयोस्त्वविवक्षायामेकनाशेप्यसौ भवेत्॥

दर्शपूर्णमासयोर्दोहौ प्रकृत्य श्रूयते, यस्योभयं हविरार्त्ति-मार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्व्वपेदिति। सोयं यागो दोह-द्वयं निमित्तीकृत्यानुष्ठेयो नत्वेकदोहं चयं, कुतः उभयशब्दस्य श्रुतत्वात्। आर्त्तिशब्दस्य विशेषणत्वेऽवश्रूयमाणो हविःशब्दो यथा विवक्षितार्थः, तथा हविःशब्दविशेषणस्योभयस्य शब्द-स्यापि विवक्षितार्थत्वादुभयहविरार्त्तिरेव निमित्तमिति चेत्। नैवं। आर्त्तिमात्रोपन्यासे साकाङ्क्षितत्वान्निमित्तं न पर्य्यवस्यतीति हविःशब्दार्थो विवक्षितव्यः। तावतैव निमित्तस्य पर्य्यवसितत्वादुभयशब्दार्थो न विवक्षितः। हविरार्त्तिमात्रस्य निमित्तत्वे सति सायं दोहप्रातर्दोहार्त्त्योरुभयोर्निमित्तत्वं सिद्धमेवात्रोभयशब्देनानूद्यते। तस्मादेकनाशे द्वयनाशेप्यसा-वोदनो निर्व्वपनीयः। तत्रैवान्यच्चिन्तितम्।

द्रव्यप्रतिनिधिः पञ्चशरावोभिन्नकर्म्म वा।
दोहद्वयार्त्तितोदर्शैर्द्रव्यस्यादीप्सितत्वतः॥
प्राप्ते कर्म्मणि नैकेन विधिना द्रव्यदेवते।
शक्ये विधातुं ताभ्यां तु विशिष्टं कर्म्म चोद्यते॥

योयं पञ्चशराव ओदनः पूर्व्वमुदाहृतः, नासौ कर्म्मा-न्तररूपः, किन्तु पूर्व्वस्मिन्नेव कर्म्मणि दोहद्वयरूपे द्रव्येऽपचरिति सति तत्प्रतिनिधिद्रव्यत्वेनायं विधीयते। कुतः, दर्शयागे द्रव्यस्यापेक्षितत्वात्, इति चेत्। नैवम्। ऐन्द्रं पञ्चशरावमिति द्रव्यदेवतयोः प्रतीतौ कर्म्मान्तरविधेर्वारयितुमशक्यत्वात्। यदि पूर्व्वस्मिन्नेव कर्म्मण्युभयं विधीयते, तदा कर्म्मणः प्राप्त-

त्वादुभयोर्द्रव्यदेवतयोर्विधौ वाक्यं भिद्येत । तस्माद्द्रव्यदेवताभ्यां विशिष्टं कर्मान्तरं विधीयते ॥ तत्रैवान्यच्चिन्तितम् ।

दर्शे प्रत्याम्नाय एतदङ्गं वा हविरार्त्तितः ।
दर्शयागे निवृत्तेऽस्य प्रत्याम्नाय त्वया विधिः ॥
पूर्व्वं द्रव्यविनाशेपि द्रव्यस्यान्यस्य सम्भवात् ।
अनिवृत्तेस्तदङ्गस्यादार्त्तिवैगुण्यं जातये ॥

पञ्चशरावद्रव्यकमिन्द्रदेवताकं यत् कर्मान्तं सङ्कथितं तदेतद्दर्शयागस्य प्रतिनिधित्वेन विधीयते । कुतः, उभयहविरार्त्या दर्शयागस्य निविवृत्तत्वात् इति चेत् । मैवं । पूर्व्वयोर्दधिपयसोर्नाशेपि पयोन्तरेण दध्यन्तरेण च दर्शेनुष्ठीयमाने हविरार्त्तिकृतं वैगुण्यं परिहरन्नयं पञ्चशरावयागो दर्शयागस्याङ्गं भवति ॥

इति प्रथमोऽनुवाकः ।

---

द्वितीयोऽनुवाकः ।

प्रथमे दर्शपूर्णमासेष्टिविषयाणि प्रायश्चित्तान्यभिहितानि । द्वितीयेऽग्निहोत्रसान्नाय्यसाधारणानि प्रायश्चित्तान्यभि धीयन्ते । यदुक्तं सूत्रकारेण, यस्याग्निहोत्रꣳसान्नाय्यं वाचिय्यं देतोदङ्परेत्य वल्मीकवपामुद्धृत्य प्रजापते नत्वदेतानीति प्राजापत्ययार्चा वल्मीकवपायामवनीय भूरित्युपस्थायान्यां दुग्ध्वा पुनर्जुहुयात् यदि सान्नाय्यमन्यदा गमयेदिति । तदिदं विधत्ते

"यद्वि:ष्यन्नेन जुहुयात्। अप्रजा अपशुर्यजमान: स्यात्। यद्नायतने निनयेत्। अनायतन: स्यात्। प्राजापत्ययर्चा वल्मीकवपायामवनयेत्। प्राजापत्यो वै वल्मीक:। यज्ञ: प्रजापति:। प्रजापतावेव यज्ञं प्रतिष्ठापयति। भूरित्याह। भूतो वै प्रजापति:। भूतिमेवोपैति। तत्कृत्वा। अन्यां दुग्ध्वा पुनर्होतव्यम्। सैव तत: प्रायश्चित्ति:" इति। 'विष्यन्नं' विष्यन्दितं अपणादि काले पात्राद्बहि: पतितं, तेन अवशिष्टेन हविषा किं होतव्यं किम्वा तद्धविरग्न्यायतनादन्यत्र निनयेदिति चिन्तनीयं। अत्र होमपक्षे 'यजमान:', प्रजापशुरहित: स्यात्। अन्यत्र निनयनपक्षे गृहरहित: स्यात्। तदुभयदोषपरिहाराय 'वल्मीकवपायां', प्रजापते नत्वदेतानीत्यृचा तत् 'अवनयेत्'। वल्मीकस्य प्रजापतिवत्, बहुप्रायश्चित्तित्वात् प्राजापत्यत्वं। यज्ञस्य प्रजापतिसृष्टत्वात्तद्रूप:। अतो वल्मीके तदवनयनेन वल्मीकरूपे प्रजापतावेव प्रजा प्रजापतिरूपं यज्ञं प्रतिष्ठापयति। यतो 'भूरिति', मन्त्रेणोपतिष्ठेत भत्तावाचिनो भूधातोरुत्पन्न: शब्दो भूतं नित्यसिद्धं प्रजापतिमाचष्टे। तदुपस्थानेनैश्वर्य्यमेव प्राप्नोति तदतत्कृत्वा पुनरग्निहोत्रार्थम् 'अन्यां' गां, 'दुग्ध्वा' 'होतव्यं', 'सैव' तथाविधाक्रिया, 'तत:' दोषात्, अपगमहेतु: ॥

यदुक्तं सूत्रकारेण यदि कीटावपद्येत मध्यमेनान्तिमेन वा पलाशपर्णेन महो द्यौ: पृथिवी च न द्यावापृथिव्ययर्चान्त: परिधिनिनीयान्यां दुग्ध्वा पुनर्जुहुयाद्यदि सान्नाय्यमन्यदा गमयेदिति। तदिदं विधत्ते। "यत्कीटावपन्नेन जुहुयात्। अप्र-

जाः पशुर्यजमानः स्यात्। यदनायतने निनयेत्। अनायतनः स्यात्। मध्यमेन पर्णेन द्यावापृथिव्योर्मध्यान्तः परिधि निनयेत्। द्यावापृथिव्योरेवैनत्प्रतिष्ठापयति। तत्कृत्वा। अन्यां दुग्ध्वा पुनर्होतव्यम्। सैव ततः प्रायश्चित्तिः" इति। अग्निहोत्रार्थं 'यत्' हविः, पातेनोपहतं तस्य होमपक्षान्यत्रनिनयनपक्षौ पूर्ववदुद्दिष्टौ। ततो 'मध्यमेन' पलाश'पर्णेन', मह्योद्यो-रिति मन्त्रेण 'परिधेः', 'अन्तः', प्रदेशे 'निनयेत्', ततोद्यावा-'पृथिव्योरेव', प्रतिष्ठापितं भवति, 'तत्कृत्वे'त्यादि पूर्ववत्। यदि सान्नाय्यं कीटावपन्नं स्यात्। तदानीम्, अन्तःपरिधि 'निनीयान्यत्सान्नाय्यं', सम्पादयेदिति द्रष्टव्यम्॥

यदुक्तं सूत्रकारेण यस्याग्निहोत्रमेव वर्षन्मित्रो जनानित्यादि। तदिदं विधत्ते। "यदवृष्टेन जुहुयात्। अपरूपमस्यात्मं जायेत। किलासो वास्यादर्शसो वा। यत् प्रत्येयात्। यज्ञं विच्छिन्द्यात्। स जुहुयात्। मित्रो जनान्। कल्पयति। प्रजानन्। मित्रो दाधार पृथिवीमुत द्याम्। मित्रः कृष्टीरनिमिषाभिचष्टे। सत्याय हव्यं घृतवज्जुहोत। मित्रेणैवैनत्कल्पयति। तत्कृत्वा। अन्यां दुग्ध्वा पुनर्होतव्यम्। सैव ततः प्रायश्चित्तिः" इति। अवपतितेन वर्षेण दूषितम्, 'अवृष्टं', तादृशं हविर्यदा भवेत्। तदा किन्तेन होतव्यं किम्वा होममकृत्वा प्रत्यागन्तव्यम्। होमपक्षेऽस्य यजमानस्य 'आत्मनि' 'स्वदेहे' 'अपरूपं' निन्दितं रूपं, प्रादुर्भवेत्, किन्तन्निन्दितमिति तदुच्यते, 'किलासः', कुष्ठी, अर्शसा रोगेण युक्तो

'अर्शसः', उभयोरन्यतरत् 'अपरूपं', शरीरे प्रादुर्भवेत्। दोषद्वयनिवृत्त्यर्थं 'मित्रोजनानिति' मन्त्रेण जुहुयात्। मन्त्रस्यायमर्थः, योयं 'मित्रा'ख्यो देवः सोऽयं 'प्रजानन्' तत्तज्जनसामर्थ्यं प्रकर्षेण विद्वान् सन्, 'जनान्', सर्व्वान् 'कल्पयति' दृष्टसाधनसमर्थान् करोति। स च 'मित्रः', 'पृथिवीं दाधार', 'उतद्याम्', अपि 'दाधार', द्यावापृथिव्योर्दार्ढ्यं कृतवानित्यर्थः। किञ्च स 'मित्रः', 'कृष्टीः' मनुष्यान्, 'अनिमिषाः' निमेषरहिताः, आलस्यरहिता यथा भवन्ति, तथा 'अभिचष्टे' अभितः ख्यापयति, बोधयतीत्यर्थः। बोधप्रकार एव स्पष्टीक्रियते। हे मनुष्याः 'सत्याय' अवितथाय, कर्मफलाय, 'घृतवत्' घृतपूर्णं, 'हव्यं', 'जुहोत' जुहुतेति, एवं सति मन्त्रे, देवतामुखेनैव 'एतत्' हविः, 'कल्पयति' अत्यर्थेण दोषरहितं करोति। तत्कृत्वेत्यादि पूर्व्ववत्॥

यदुक्तं सूत्रकारेण। यदि पूर्वस्यामाहुत्याᳬ हुतायामुत्तराहुति स्कन्देद्यदिवोत्तरया पूर्व्वामभिजुहुयाद्यत्र वेत्थवनस्पत इत्यादि। तदिदं विधत्ते। "यत् पूर्व्वस्यामाहुत्याᳬ हुतायामुत्तराहुतिः स्कन्देत्। द्विपाद्भिः पशुभिर्यजमानो व्यृध्येत। यदुत्तरयाभिजुहुयात्। चतुष्पाद्भिः पशुभिर्यजमानो व्यृध्येत। यत्र वेत्थ वनस्पते देवानां गुह्या नामानि। तत्र हव्यादि गामयेति वनस्पत्यर्चा समिधमाधाय। तूष्णीमेव पुनर्जुहुयात्। वनस्पतिनैव यज्ञस्यार्त्तीं चानार्तीं चाहुती विदाधार। तत्कृत्वा। अन्यां दुग्ध्वा पुनर्होतव्यम्। सैव ततः प्राय-

श्विन्तिः'' इति। अग्निहोत्रे द्वे आहुती होतव्ये तत्रैकाहुतेरूर्ध्वं द्वितीयाहुतिद्रव्यस्य नाशे सति यजमानसम्बन्धिनो 'द्विपात्पशवः' मनुष्याः, विनश्येयुः। द्रव्यविनाशाभावेऽपि होमकाले तिष्ठीये पूर्व्वामाहुतिं जुहोतीति पूर्व्वामाहुतिस्थानमतिलङ्घ्य अन्यत्र होमविधानात्, यदि पूर्व्वाहुतेरुपर्य्युत्तराहुतिं 'जुहुयात्', तदा 'चतुष्पात्पशवः', विनश्येयुः। तस्माद्द्रव्यनाशे पूर्व्वाहुतिदेशहोमे च दोषपरिहाराय 'यत्र वेत्थ' इत्यादि मन्त्रेण समिधमादध्यात्। मन्त्रस्यायमर्थः, हे 'वनस्पते', 'देवानां', गोप्यानि, 'नामानि', यस्मिन् देशे त्वं 'वेत्थ', तस्मिन् देशेऽस्मदीयानि 'हव्यानि', प्रापय। अनेन मन्त्रेण समिधमाधायाग्निहोत्रहवन्यामवशिष्टं द्रव्यं मन्त्ररहितमेव जुहुयात्, तथा सति 'यज्ञस्य' सम्बन्धिनी येयम् 'आर्त्ता' द्वितीयाहुतिः, याप्यनार्त्ता प्रथमाहुतिः तदुभयमपि वनस्पतिदेवतामुख्येनैव विभज्य हुतवान् भवति। तत् कृत्वेत्यादि पूर्व्ववत्॥

यदुक्तं सूत्रकारेण। यदि पुरा प्रयाजेभ्यो वहिः परिध्यङ्गारं स्कन्देत् स्रुवस्य वुध्नेनाभि निदध्यान् मातमोमेत्यादि। तदेतद्विधत्ते। "यत्पुरा प्रयाजेभ्यः प्राङ्ङ्गारः स्कन्देत्। अध्वर्य्यवे च यजमानाय चाकꣳ स्यात्। यद्दक्षिणा। ब्रह्मणे च यजमानाय चाकꣳ स्यात्। यत्प्रत्यक्। होत्रे च पत्नियै च यजमानाय चाकꣳ स्यात्। यदुदङ्। अग्नीधे च पशुभ्यश्च यजमानाय चाकꣳ स्यात्। यदभिजुहुयात्। रुद्रोऽस्य पशून् घातुकः स्यात्। यन्नाभिजुहुयात्। अशान्तः प्रह्रियेत

स्रुवस्य बुध्नेनाभिनिदध्यात्। मा तमो मा यज्ञस्तमन्मा यजमानस्तमत्। नमस्ते अस्त्वायते। नमो रुद्र परायते। नमो यत्र निषीदसि। अमुं मा हिꣳसीरमुं मा हिꣳसीरिति येन स्कन्देत्। तं प्रहरेत्। सहस्रशृङ्गो वृषभो जातवेदाः। स्तोमपृष्ठो घृतवान्त्सुप्रतीकः। मा नो हासीन्मेत्थितो नेत्त्वा जहाम। गोपोषन्नो वीरपोषञ्च यच्छेति। ब्रह्मणैवैनं प्रहरति। सैव ततः प्रायश्चित्तिः" इति। अङ्गारस्कन्दनकाले भेदेन द्विविधं 'प्रयाजेभ्यः', पूर्व्वमुत्तरं चेति तत्रोत्तरकालीनस्य स्कन्दनस्य पूर्व्वानुवाकोक्तप्रायश्चित्तं द्रष्टव्यम्। तत्र हि यस्याहिताग्नेरग्निरपक्षायतीत्यादिना प्रायश्चित्तमुक्तं तद्यद्यपि सर्व्वकालसाधारणं तथाप्यत्र पुरा प्रयाजेभ्य इति विशेषाभिधानादेतद्व्यतिरिक्तविषयं द्रष्टव्यम्। अङ्गारादिस्कन्दनं प्राच्यादिदिग्भेदाच्चतुर्व्विधं। तत्र प्राच्यां। स्कन्दने सति 'अध्वर्य्युयजमानयोः', 'अकं स्यात्' कं सुखं तद्विपरीतमकं दुःखं, एवं दक्षिणादि दिक्ष्वपि योज्यं। तस्यास्कन्दनाङ्गारस्योपरि होमाहोमपक्षयोरुभयोरपि दोषोऽस्ति। होमपक्षे पशुहानिः, अहोमपक्षे रुद्ररूपोऽग्निः 'अशान्तः' उग्रः सन्, प्रहृतः स्यात्। अतस्तद्दोषपरिहाराय स्रुवस्य मूलेन तमङ्गारं मातमोमेत्यादि मन्त्रेणाभिनिदध्यात्। मन्त्रस्य चायमर्थः, हे अग्ने स्कन्नाङ्गार त्वं 'मा तमः' ग्लानिं मा, प्राप्नुहि। यज्ञोऽपि 'मा तमत्' ग्लानिं मा प्राप्नोत्वि, 'यजमानः', अपि 'मा तमत्' 'आयते' न पुनः स्वस्थानं प्रत्यागच्छते, 'ते' तुभ्यं, 'नमः', 'अस्तु', हे 'रुद्र' 'परायते' परतोगते,

तुभ्यं 'नमः', अस्तु। अथ 'यत्र' स्थाने, गत्वा 'निषीदसि', तस्मै च स्थानाय 'नमः' अस्तु। पूर्व्वादिदिक्षु मध्ये येन दिग्भागेन 'अयमङ्गारः स्कन्देत्', तस्मिन् दिग्भागे पूर्व्वप्रोक्तस्याध्वर्य्युयजमानादेर्नाम गृहीत्वा 'माहिꣳसीः', इत्येवं प्रार्थयेत। 'अमु माहिꣳसीः', इति द्विरुक्तिः सर्व्वमङ्गृहार्था। तद्विवरणं त्वापस्तम्बेन प्रपञ्चितं, अध्वर्य्युं माहिꣳसीः', यजमानं 'माहिꣳसीः', इति। यदि पुरस्तात् ब्रह्माणं 'माहिꣳसीः', यजमानं 'माहिꣳसीः', इति। यदि दक्षिणतो होतारं 'माहिꣳसीः', पत्नीं 'माहिꣳसीः', यजमानं 'माहिꣳसीः', इति। यदि पश्चादाग्नीध्रं 'माहिꣳसीः', पशून् 'माहिꣳसीः', यजमानं 'माहिꣳसीः', इति। यद्युत्तरत इति। अनेन प्रकारेणाङ्गारस्योपरि स्रुवमूलमाक्रमय्य तत ऊर्द्ध्वं 'सहस्रशृङ्गः' इति मन्त्रेण' तं' अङ्गारं, पुनरपि अग्नौ 'प्रहरेत्'। मन्त्रस्यायमर्थः, 'सहस्रशृङ्गः' बहुज्वालः, 'वृषभः' कामानां वर्षिता, 'जातवेदाः' जातानां वेदिता, 'स्तोमपृष्ठः' स्तोमैस्त्रिवृतादिभिः साध्यस्तोत्रः, 'घृतवान्' प्रशस्तेन बहुना घृतेन युक्तः, 'सुप्रतीकः' शोभनमुखः, तादृशो भवान् 'मेत्थितः' अस्माभिरेकीभूतः सन् 'नः' अस्मान्, 'माहासीत्' मापरित्यजतु, वयमपि त्वां तथा वर्त्तमानं 'नेत्जहाम' नैव परित्यजाम, किञ्च गवादिपुष्टिं पुत्रादिपुष्टिं च'नः'अस्मभ्यं, 'प्रयच्छ'। एवं सति 'ब्राह्मणैव' अनेन मन्त्राभिमानिना देवेनैव, 'एनं'अग्निं,आयतने प्रक्षिपति इयमेवोक्तदोषस्य 'प्रायश्चित्तिः'॥

इति द्वितीयोऽनुवाकः।

अथ तृतीयोऽनुवाकः।

मुख्याग्निप्रतिनिधयः।

(१) द्वितीयेऽग्निहोत्रादिप्रायश्चित्तान्युक्तानि। तृतीये मुख्याग्न्यसम्भवे सत्यनुकल्पा होमाधारा उच्यन्ते। यदुक्तं सूत्रकारेण, यदि कालसन्निकर्षेऽग्निर्मथ्यमानो न जायेत यत्रान्यं पश्येत् तत आहृत्य जुहुयादथालरमाणः पुनर्मन्थे-द्यद्यन्यं विन्देदजायाः दक्षिणे कर्णे होतव्यमजस्य तु ततो नाश्नीयादित्यादि। तत्र प्रथममनुकल्पं विधत्ते। "त्रिवा एष इन्द्रियेण वीर्य्येणर्ध्यते। यस्याहिताग्नेरग्निर्मथ्यमानो न जायते। यत्रान्यं पश्येत्। तत आहृत्य होतव्यम्। अग्नावेवास्याग्नि-होत्रꣳ हुतं भवति" इति। 'यस्य' यजमानस्य, अरणिसमा-रूढो विनष्टो वाग्निः प्रत्यासन्ने होमकाले 'निर्मथ्यमानः', अपि सहसा 'न जायते', 'एषः', यजमानः, इन्द्रियपाटवेन शरीर-सामर्थ्येन च वियुक्तो भवति। तस्य होमकालातिपातो माभूदिति लौकिकं कञ्चिदग्निमानीयाग्निहोत्रे हुते सति शास्त्रीया-'ग्नावेव', 'हुतं भवति',। ततः पुनरग्निसिद्ध्यर्थं मन्थनं कुर्य्यात्॥

(२) अथाहर्त्तव्यस्याप्यग्नेरसम्भवे पक्षान्तरं विधत्ते। "यद्य-न्यन्न विन्देत्। अजायाꣳ होतव्यम्। आग्नेयी वा एषा। यदजा। अग्नावेवास्याग्निहोत्रꣳ हुतं भवति" इति। यदा लौकिकोऽग्निरपि न लभेत तदानीमजामानीयाहवनीयस्थाने स्थापयित्वा तदीये दक्षिणे कर्णे जुहुयात्। अग्नेरजायाश्च सृष्टिकाले प्रजापति-मुखे समुद्भूतत्वात् परस्परसम्बन्धः। अग्नावित्यादि पूर्व्ववत्॥

(३) अजाकर्णे कृतवतः कञ्चिन्नियमं विधत्ते। "अजस्य तु नाश्नीयात्। यदजस्याश्नीयात्। यामेवाग्नावाहुतिं जुहुयात्। तामद्यात्। तस्मादजस्य नाश्यम्" इति। अजासम्बन्धि 'यत्' क्षीरादिकं, तदीयं 'नाश्नीयात्'। तद्भक्षणे तु 'आहुतिः', एव भक्षिता स्यात्। तस्मान्न भक्षयेत्॥

(४) अजाया अप्यलाभे पक्षान्तरमत्र विधत्ते। "यद्यजान्न विन्देत्। ब्राह्मणस्य दक्षिणे हस्ते होतव्यम्। एष वा अग्निर्वैश्वानरः। यद्ब्राह्मणः। अग्नावेवास्याग्निहोत्रꣳ हुतं भवति। ब्राह्मणन्तु वसत्यै नापरुन्ध्यात्। यद्ब्राह्मणं वसत्या अपरुन्ध्यात्। यस्मिन्नेवाग्नावाहुतिं जुहुयात्। तं भागधेयेन व्यर्द्धयेत्। तस्माद्ब्राह्मणो वसत्यै नापरुध्यः" इति। 'वैश्वानर'नामकस्याग्नेः 'ब्राह्मण'जात्यभिमानिदेवत्वाद्ब्राह्मणस्य तद्रूपत्वं। 'तद्धस्ते', हुतवान् पुरुषः स्वगृहे निवासार्थमागतं 'ब्राह्मणं', न परिहरेत्। तत्परिहारे स्वकीयमग्निं भागरहितं कुर्य्यात्॥

(५) अथ ब्राह्मणस्याप्यलाभे पक्षान्तरं विधत्ते। "यदि ब्राह्मणं न विन्देत्। दर्भस्तम्बे होतव्यम्। अग्निवान् वै दर्भस्तम्बः। अग्नावेवास्याग्निहोत्रꣳ हुतं भवति। दर्भाꣳस्तु नाध्यासीत। यद्दर्भानध्यासीत। यामेवाग्नावाहुतिं जुहुयात्। तामध्यासीत। तस्माद्दर्भा नाध्यासितव्याः" इति। पुनराधानब्राह्मणे दर्भैरादधातीत्येवमग्न्याधानसाधनत्वेन दर्भाणां श्रुतत्वाद्दर्भस्तम्बस्याग्नियुक्तत्वं, तत्र होता दर्भाणामुपरि न वसेत्॥

(६) अथ दर्भाणामप्यलाभे पक्षान्तरं विधत्ते। "यदि दर्भान्न

विन्देत्। अप्सु होतव्यम्। आपो वै सर्व्वा देवताः। देवता-स्वेवास्याग्निहोत्रꣳ हुतं भवति। आपस्तु न परिचक्षीत। यदापः परिचक्षीत। यामेवास्याहुतिं जुहुयात्। तां परि-चक्षीत। तस्मादापो न परिचक्ष्याः” इति। अन्यत्र ते देवा अग्नौ तनूः अन्यं दधतेत्यभिधानादग्निः सर्व्वदेवतात्मकः सचाग्निरप्सु प्रविष्टः। सलिलाय त सोऽपः प्राविशदिति श्रुतेः। तस्मादपां सर्व्वदेवतारूपत्वम् ‘अप्सु’ होता कदाचिदप्यपो न विन्देत्। अजस्य तु नाश्नीयादित्यादिनोक्ता व्रतविशेषाः सांव-त्सरिकाः। तथाचाहापस्तम्बः, सांवत्सरिकाण्येतानि व्रतानी-त्याध्यात्मरथ्यो यावज्जीवमित्यालेखन इति। तदेवं मुख्यान्य-सम्भवेऽनुकल्पपरम्पराभिहिता॥

(७) अथ यदुक्तं सूत्रकारेण। अग्नये विविचयेऽष्टाकपालं तस्या-हिताग्नेरन्यैरग्निभिरग्नयः सꣳसृजेरन्मिथोवेति। तदिदं विधत्ते। “मेध्या चैव एतस्यामेध्या च तनुवौ सꣳसृज्येते। यस्याहि-ताग्नेरन्यैरग्निभिरग्नयः सꣳसृज्यन्ते। अग्नये विविचये पुरोडाश-मष्टाकपालं निर्वपेत्। मेध्याञ्चैवास्यामेध्याञ्च तनुवौ व्यावर्त्त-यति” इति। ‘आहिताग्नेः’, ‘यस्य’ यजमानस्य, स्वकीय‘अग्नये’, अन्यदीयैः श्रौतस्मार्त्तलौकिकाग्निभिः ‘सꣳसृज्येरन्’। ‘एतस्य’ यजमानस्य, ‘मेध्यामेध्यतनुवौ’, सꣳसृष्टे भवतः। स्वकीया-श्रौताग्नये यागयोग्यत्वात् मेध्यतनूः अन्यन्तरममेध्यतनूः तदु-भयं, योऽग्निर्विविनक्ति सोयं ‘विविचिः’, तस्मै हविर्निर्वापेसत्यसौ तनूद्वयं परस्परं व्यावृत्तं करोति॥

(८) अथ पूर्व्वोक्तसंवत्सरव्रतधारणयोर्विशेषः सूत्रकारेणोक्तः, संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेदिति। तदिदं विधत्ते। "अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत्। अग्निमेव व्रतपतिꣳ स्वेन भागधेयेनोपधावति। स एवैनं व्रतमालम्भयति" इति। अजस्य तुनाश्नीयादित्यादीनां व्रतानां पालको 'व्रतपतिः', तथाविधाय 'अग्नये', पुरोडाशनिर्वापे सति तमग्निं स्वोचितेन भागेन परितोषयति। 'सः', च तुष्टः 'एनं' यजमानं, व्रतसम्पूर्त्तियुक्तं करोति॥

(९) अथ गर्भꣳ स्रवन्तमित्यारभ्याग्निहोत्रस्थालीं अपणमभिमन्त्रयेति सूत्रकारेण यदुक्तं तमभिप्रेत्याह। "गर्भं स्रवन्तमगदमकः। अग्निरिन्द्रस्त्वष्टा बृहस्पतिः। पृथिव्यामवचुश्चोतैतत्। नाभिप्राप्नोति निर्ऋतिं पराचैः। रेतो वा एतद्वाजिनमाहिताग्नेः। यदग्निहोत्रम्। तद्यत् स्रवेत्। रेतोऽस्य वाजिनꣳ स्रवेत्। गर्भꣳ स्रवन्तमदगमकरित्याह। रेत एवास्मिन् वाजिनं दधाति" इति। अत्र गर्भमित्यारभ्य पराचैरित्यन्तो मन्त्रः। तस्यायमर्थः। अग्निहोत्रस्थाल्यां हविर्लक्षणो यो 'गर्भः', वर्त्तते स यदि स्थालीभङ्गे सति तच्छिद्रेण स्रवेत्तदानीमग्नीन्द्रादिदेवसङ्घातं 'गर्भꣳ', 'अगदं' स्रवणरूपरोगरहितम्, 'अकः' करोतु। 'एतत्' अग्निहोत्रहविः, 'पृथिव्याम्', 'अवचुश्चोत' गलितमासीत्, तदिदं गलितं हविः 'निर्ऋतिं' पापदेवतां, 'पराचैः' पराङ्मुखीभूत्वा, 'नाभिप्राप्नोति' आभिमुख्येन तद्धविर्नाप्नोतु, इति यद्यप्यनेन मन्त्रेण स्थालीमभिमन्त्रयेदिति

विधिः साचान्न श्रुतः, तथापि मन्त्रलिङ्गं शाखान्तरञ्च पर्य्यालोच्य सूत्रकारेण विधिरुन्नीतः तस्मिन् मन्त्रे प्रथमपादस्य तात्पर्य्यं रेतोवा इत्यादिनोच्यते अग्निहोत्राख्यं हविर्यदस्ति तदेतदाहिताग्निर्वाजिनं भोज्यान्नस्थानीयञ्च अतो हविः स्रवणेन तस्योभयस्य स्रवणं भवति। ततो मन्त्रस्य प्रथमपादे स्रवन्तमगदमकरित्युक्त्वा यजमानो रेतो वाजिनं चेत्युभयमपि स्थापितं भवति॥

(१०) द्वितीयपादगतानामग्निरित्यादीनां चतुर्णां पदानां क्रमेण तात्पर्य्यं दर्शयति। "अग्निरित्याह। अग्निर्वै रेतोधाः। रेत एवास्मिन् दधाति। इन्द्र इत्याह। इन्द्रियमेवास्मिन्दधाति। त्वष्टेत्याह। त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्। रूपमेव पशुषु दधाति। बृहस्पतिरित्याह। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैवास्मै प्रजाः प्रजनयति" इति। जाठराग्निर्वै रेतः पक्वं कृत्वा धारयति अतः 'रेतोधाः',। 'इन्द्रः', हि इन्द्रियस्याधिष्ठाता। 'त्वष्टा', च रूपनिर्माता। 'बृहस्पतिः', च ब्रह्मरूपत्वात्प्रजोत्पादकः॥

(११) तृतीयपादस्य तात्पर्य्यं दर्शयति। "पृथिव्यामवचुश्चोतैतदित्याह। अस्यामेवैनत्प्रतिष्ठापयति" इति। भूम्यां गलितमित्युक्त्वा तद्धविर्भूमौ प्रतिष्ठितं करोति॥

(१२) चतुर्थपादस्य तात्पर्य्यं दर्शयति। "नाभिप्राप्नोति निर्ऋतिं पराचैरित्याह। रक्षसामपहत्यै" इति। निर्ऋतेरप्राप्तिकथनेन सर्व्वाण्यपि रक्षांसि अपहतानि भवन्ति॥

इति तृतीयोऽनुवाकः।

अथ चतुर्थोऽनुवाकः ।

ऐष्टिकयागयजमानमन्त्राः ।

(१) तृतीये श्रौताग्निप्रतिनिधौ लौकिकाग्न्यजादयः केचित् प्रायश्चित्तविशेषाश्चोक्ताः। चतुर्थपञ्चमषष्ठानुवाकैरैष्टिकयजमानमन्त्रा उच्यन्ते। अनुवाकभेदस्त्वध्ययनसम्प्रदायप्राप्तः। तत्र चतुर्थानुवाके, याः पुरस्तादिति यो मन्त्रस्तस्य विनियोगमापस्तम्ब आह, प्रणीताः प्रणीयमाना अनुमन्त्रयत इति। पाठस्तु। "याः पुरस्तात् प्रस्रवन्ति। उपरिष्टत् सर्व्वतश्च याः। ताभीरश्मिपवित्राभिः। श्रद्धां यज्ञमारभे" इति। 'याः' आपः, पूर्व्वस्यां दिशि प्रवहन्ति याश्च 'उपरिष्टात्' सर्व्वास्वपिदिक्षु प्रवहन्ति, 'ताभिः' 'अद्भिः', 'अहं', श्रद्धां प्राप्य 'यज्ञं', प्रारब्धं करोति। कीदृशीभिः, 'रश्मिपवित्राभिः' सूर्य्यरश्मय एव पवित्रं शुद्धिकारणं यामान्तास्तादृशीभिः। अतएवोत्पवनमन्त्रे समाम्नायते, देवोवः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिरिति॥

(२) देवा गातुविद इत्यन्वाधानोपक्रमे जपेत्। पाठस्तु। "देवा गातुविदः। गातुं यज्ञाय विन्दत। मनसस्पतिना देवेन। वाताद्यज्ञः प्रयुज्यताम्" इति। गातुर्मार्गः तं विदन्तीति 'गातुविदः', तादृशा हे 'देवाः', यूयं यज्ञानुष्ठानार्थं 'गातुं विन्दत' मार्गं लभध्वं। सोऽयं 'यज्ञः', 'मनसस्पतिना' अस्मदीयमनःपालकेन, 'देवेन' परमेश्वरेण, 'वातात्' वायोः सकाशात्, 'प्रयुज्यतां' प्रेर्य्यतां, अनुष्ठानस्य च क्रियारूपस्य चलनहेतुर्वायुः कारणं॥

(३) तृतीयस्यै इत्यनेन मन्त्रेण पलाशशाखाच्छेदने यः शकलो भूमौ पतितस्तमाददीत। पाठस्तु। "तृतीयस्यै दिवः। गायत्रिया सोम आभृतः। सोमपीथाय सन्नयितुम्। वकलमन्तरमाददे" इति। पृथिवीमारभ्य गणनायां येयं तृतीयलोकरूपा द्यौः तस्याः 'दिवः', सकाशात् गायत्रीछन्दोदेवतया 'सोमः' वल्ल्यात्मकः, 'आभृतः' समानीतः, 'सोमपीथाय' दिवः सकाशादानीतस्य सोमस्य पानाय, 'सन्नयितुं' सान्नाय्यं कर्त्तुं, 'अन्तरं वकलं' पलाशशाखाया अभ्यन्तरं यच्छकलं तत्, 'आददे' स्वीकरोति। अयमर्थः, पर्णवल्कैरातञ्चनं कृत्वा तेन निष्पन्नेन दध्ना सान्नाय्येन कृत्वा तच्छेषेभिहितः सोमः पीतो भवति, दध्नो मन्त्रेण सोमीकरणात्। तथा चातञ्च न मन्त्रब्राह्मणे समाम्नातं, सोमेन त्वा तनच्मीन्द्राय दधीत्याह सोममेवैनत्करोतीति॥

(४) आपो देवीरिति सान्नाय्यपात्राणि प्रोक्ष्यमाणान्यभिमन्त्रयेत्। पाठस्तु। "आपो देवीः शुद्धाः स्थः। इमा पात्राणि शुन्धत। उपातङ्क्याय देवानाम्। पर्णवल्कमुत शुन्धत" इति। 'देवीः' द्योतनात्मिकाः, हे 'आपः', यूयं स्वत एव 'शुद्धास्थ', तस्मादिमानि 'सान्नाय्य'पात्राणि', शोधयत। ततो 'देवानां', सम्बन्धि यत् 'उपातङ्क्यम्' आतञ्चनं, तदर्थं 'पर्णवल्कं' नूतन पलाशशकलमपि, 'शुन्धत' शोधयत॥

(५) अथातञ्चनमन्त्रमाह। "पयोगृहेषु पयो अघ्नियासु। पयो वत्सेषु पय इन्द्राय हविषेऽध्रियस्व। गायत्री पर्णवल्केन।

पयः सोमं करोत्विमम्" इति। अस्मदीयेषु 'गृहेषु', 'यत्', 'पयः', विद्यते। यच्च 'पयः', गोषु स्थितं, यदपि 'पयः', 'वत्सेषु', पीतं सदवतिष्ठत्, तथाविधं हे 'पयः', 'इन्द्राय हविषे' इन्द्रसम्बन्धिहविरर्थं, 'भ्रियस्व' धृतं भव। 'गायत्री', देवी 'पर्णवल्केन' आतञ्चनार्थं निक्षिप्यमाणेन, पात्रस्थं 'पयः', 'इमं' सोमं, 'करोतु'॥

(६) अथाहवनीये चाधीयमाने जप्यं मन्त्रत्रयम्। प्रथममाह। "अग्निं गृह्णामि सुरथं यो मयोभूः। य उद्यन्तमारोहति सूर्य्यमह्ने। आदित्यं ज्योतिषां ज्योतिरुत्तमम्। श्वो यज्ञाय रमतां देवताभ्यः" इति। 'यः' अग्निः, 'मयो भूः' सुखस्य भावयिता, 'यः' अग्निः, 'अह्ने' अहःसिद्ध्यर्थम्, 'उद्यन्तं सूर्य्यमारोहति'। तथा चाग्निहोत्रब्राह्मणे पठ्यते, उद्यन्तं वावादित्यमग्निरनुसमारोहतीति। कीदृशं सूर्य्यं, 'आदित्यं' अदितेः पुत्रं, 'ज्योतिषां' चन्द्रादीनां मध्ये, 'उत्तमं ज्योतिः' अधिकज्योतिःस्वरूपं, ईदृशं सूर्य्यं योऽग्निः समारोहति, तादृशम् 'अग्निं', 'सुरथं' शोभनरथयुक्तं, 'गृह्णामि' स्वीकरोमि। ततो गृहीतोऽयमग्निः 'श्वः' परेद्युः, 'देवताभ्यः' देवता आराधयितुं, 'यज्ञाय' यज्ञनिष्पत्तये, 'रमताम्' अस्मद्गृहे क्रीडतु॥

(७) अथ द्वितीयमाह। "वसून् रुद्रानादित्यान्। इन्द्रेण सह देवताः। ताः पूर्व्वः परिगृह्णामि। स्व आयतने मनीषया" इति। वस्वादीनन्यांश्च 'देवताः', 'इन्द्रेण', सहिताः 'ताः'

सर्व्वाः, 'पूर्व्वाः', इतरः यजमानेभ्यः प्रथमभूतोऽहं। 'स्व आयतने' स्वकीयस्थाने, 'मनीषया' प्रज्ञया, 'परिगृह्णामि'॥

(८) अथ तृतीयमाह। "इमामूर्ज्जं पञ्चदशीं ये प्रविष्टाः। तान् देवान् परिगृह्णामि पूर्व्वः। अग्निर्हव्यवाडिह तानावहतु। पौर्णमासꣳ हविरिदमेषां मयि। अमावास्यꣳ हविरिदमेषां मयि" इति। 'इमां' वर्त्तमानाम्, 'ऊर्ज्जम्' अन्नहेतुं, 'पञ्चदशीं' शुक्लपक्षस्य कृष्णपक्षस्य वा पञ्चदशसङ्ख्यापूरणीं तिथिं, 'ये' देवाः, 'प्रविष्टाः', 'तान्' देवान्, अहं इतरयजमानेभ्यः 'पूर्व्व'भावी सन् 'परिगृह्णामि'। 'हव्यवाट्' अयमग्निः 'इह' कर्म्मणि, 'तान्' देवान्, 'आवहतु'। 'एषां' देवानां, सम्बन्धि पौर्णमास्यां प्रयोक्तव्यं 'हविः', 'मयि', वर्त्ततां, तथामावास्यायां प्रयोक्तव्यं 'एषां' देवानाम्, 'इदं' 'हविः', 'मयि', वर्त्ततां। इदं च मन्त्रभागद्वयं, ययोस्तिथ्योर्व्यवस्थायापवनीयं॥

(९) अथाहवनीयगार्हपत्ययोर्मध्ये स्थित्वा जप्यं मन्त्रमाह। "अन्तराग्नी पशवः। देवसꣳसदमागमन्। तान् पूर्व्वः परिगृह्णामि। स्व आयतने मनीषया" इति। 'अग्नी अन्तरा' अनयोरग्न्योर्मध्ये येयं 'देवसत्' देवानां स्थानं, तदुद्दिश्य 'पशवः', सर्व्वे 'समागमन्'। तस्मात्तत्रस्थान् देवान् पूर्व्वः परिगृह्णामीत्यादि पूर्व्ववद्व्याख्येयम्॥

(१०) अथ गार्हपत्येऽन्वाधीयमाने जप्यं मन्त्रद्वयं। तत्र प्रथममाह। "इह प्रजा विश्वरूपा रमन्ताम्। अग्निं गृहपतिमभिसंवसानाः। ताः पूर्व्वः परिगृह्णामि॥४॥ स्व आयतने मनी-

षया" इति। 'गृहपतिं' गृहस्य पालकम्, इमं गार्हपत्याग्निं', 'अभिसंवसानाः' अभितः सम्यगाच्छाद्य वर्त्तमानाः, 'विश्वरूपाः' बहुविधाः पुत्रपौत्रप्रभृत्यादिरूपाः, 'प्रजाः', 'इह' अस्मिन् स्थाने, 'रमन्तां' क्रीडन्तु। अतस्तत्र स्थिताः 'ताः' सर्व्वाः देवताः, पूर्व्वः परिगृह्णामीत्यादि पूर्व्ववत्॥

(११) अथ द्वितीयमाह। "इह पशवो विश्वरूपा रमन्ताम्। अग्निं गृहपतिमभिसंवसानाः। तान् पूर्व्वः परिगृह्णामि। स्व आयतने मनीषया" इति। 'पशवः' गवाश्वादयः। अन्यत् पूर्व्ववत्॥

(१२) अथ दक्षिणाग्नावन्वाधीयमानेषु जप्यं मन्त्रमाह। "अयं पितृणामग्निः। अवाड्ढव्या पितृभ्य आ। तं पूर्व्वः परिगृह्णामि। अविषन्नः पितुं करत्" इति। 'अयं' दक्षिणस्यां दिशि वर्त्तमानः पितृणां सम्बन्धी वह्निः, 'पितृभ्यः' पित्रर्थम्, 'आ' समन्तात्, 'हव्या' हवींषि, 'अवाट्' वहतु। 'तं' दक्षिणाग्निं, इतरेभ्यः 'पूर्व्व'भावी सन्नहं 'परिगृह्णामि'। सः अग्निः 'नः' अस्मदीयं, 'पितुम्' अन्नं, 'अविषं करत्' विषरहितं करोतु॥

(१३) अथ सभ्याग्नेरुपस्थानमन्त्रमाह। "अजस्रं त्वाꣳ सभापालाः॥५॥ विजयभागꣳ समिन्धताम्। अग्ने दीदाय मे सभ्य। विजित्यै शरदः शतम्" इति। यत्राक्षैर्दीव्यन्ते विजयन्ते सा सभा, तस्यां सभायां सः अग्निः सभ्यः 'सभ्य', 'त्वाम्', अस्मदीयाः 'सभापालकाः', 'समिन्धतां' सम्यग् दीपयन्तां। कीदृशं त्वां, 'अजस्रम्' अनवरतं, 'विजयभागं' विजयेन लब्धा भागो

यस्य तादृशं, हे 'अग्ने', 'मे' मम, 'शतं शरदः' शतसङ्ख्याकान् संवत्सरान्, 'विजित्यै' विजयाय, त्वं 'दीदाय' दीप्यस्व ॥

(१४) अथावसथ्योपस्थानमन्त्रमाह। "अन्नमावसथीयम्। अभिहराणि शरदः शतम्। आवसथे श्रियं मन्त्रम्। अहिर्बुध्नियो नियच्छतु" इति। अक्षि द्यूते विजयं प्राप्ताः पुरुष आगत्य यत्र भोजनार्थं निवसन्ति स प्रदेशः 'आवसथः', तत्रानीतम् 'आवसथीयं', तादृशम् 'अन्नं', 'अभिहराणि' आभिमुख्येनोपहरामि, कश्चिदपि न हिनस्तीति 'अहिः', 'बुध्ने' मूले जगदादौ भवः 'बुध्नियः' 'अहिर्बुध्नियः', इत्येतन्नामकः पञ्चमोऽग्निः, 'शतं शरदः' शतसङ्ख्याकान् संवत्सरान्, 'आवसथीये' अस्मदीये गृहे। 'श्रियं' धनादिसमृद्धिं, 'मन्त्रम्' ऋगादिसमृद्धिं, च 'नियच्छतु' ददातु ॥

(१५) अथ पञ्चस्वप्यग्निष्वन्वाहितेषु जप्यं मन्त्रमाह। "इदमहमग्निज्येष्ठेभ्यः। वसुभ्यो यज्ञं प्रब्रवीमि। इदमहमिन्द्रज्येष्ठेभ्यः॥ ६॥ रुद्रेभ्यो यज्ञं प्रब्रवीमि। इदमहं वरुणज्येष्ठेभ्यः। आदित्येभ्यो यज्ञं प्रब्रवीमि" इति। अग्निर्ज्येष्ठो मुख्यो येषु ते वसवः 'अग्निज्येष्ठाः', तदर्थम्, अस्मदीयं 'यज्ञम्', 'इदम्', 'प्रब्रवीमि' इदानीमेव भवदीयोऽयं यज्ञ इति कथयामि। एवं रुद्रादित्यवाक्ययोरपि योजनीयः ॥

(१६) कल्पः। पयस्वतीरोषधय इति पुरा बर्हिष आहर्त्तोर्जायापती अश्नीत इति। पाठस्तु। "पयस्वतीरोषधयः। पयस्वद्वीरुधां पयः। अपां पयसो यत्पयः। तेन मामिन्द्रसꣳसृज"

इति। सारवाची 'पयः' शब्दः 'ओषधयः', पयःस्वत्य सारस्वत्यः, 'वीरुधां' लतानां सम्बन्धि, यत् 'पयः' निर्गतं क्षीरं, तदपि 'पयस्वत्' सारस्वत्, 'अपां', मध्ये 'यत्पयः' सारं, यच्च 'पयसः' गवादिक्षीरस्य, 'पयः' सारं, 'तेन' सारेण सर्व्वेण, हे 'इन्द्र', 'मां', 'संसृज' योजय॥

(१७-२०) अथ व्रतोपायनमन्त्रानाह। "अग्ने व्रतपते व्रतं चरिष्यामि। तच्छकेयं तन्मे राध्यतां। वायो व्रतपत आदित्य-व्रतपते॥७॥ व्रतानां व्रतपते व्रतं चरिष्यामि। तच्छकेयं तन्मे राध्यताम्" इति। व्रतस्यानुष्ठेयस्य कर्म्मणः फलको 'व्रतपतिः', तादृश हे 'अग्ने', 'व्रतम्', इदमहं 'चरिष्यामि'। त्वदनुग्रहेण 'तत्' व्रतं, कर्त्तुम्, अहं 'शकेयं' शक्तो भूयासम्। 'तत्' व्रतं, 'मे' मदर्थं, 'राध्यतां' समृद्धं भवतु। वाय्वादित्यमन्त्रयो-रपि व्रतं चरिष्यामीत्यादिकमनुषञ्जनीयम्। अग्निवाय्वादि-त्येभ्यो व्यतिरिक्तोऽपि यः कश्चिद्देवो व्रतानां सर्व्वेषां मध्ये विशेषेण अस्मदीयस्य व्रतस्य पालकः तद्विषयश्चतुर्थो मन्त्रः अग्ने व्रतपत इति एक एव मन्त्रो ब्राह्मणस्येत्येकः पक्षः। तदनुसारेण सम नाम प्रथममित्यनुवाके स मन्त्र आम्नातः, चत्वार्य्येते मन्त्रब्राह्मणस्येत् परः पक्षः। तथा च सूत्रकार आह। सर्वान् ब्राह्मण इति। एतदनुसारेणाद्यमन्त्रस्य पुनः पाठः॥

(२१) अथ वत्सापाकरणहेतोः पालाशशाखाया आहरण-मन्त्रमाह। "इमां प्राचीमुदीचीं। इषमूर्जमभिसंस्कृतां। बहु-

पर्णमशुष्काग्रां। हरामि पशुपामहम्" इति। 'इमां' पलाशशाखां, 'अहं', 'हरामि' गृहे प्रापयामि। कीदृशीं, 'प्राचीं' प्राच्यां दिशि प्रसृतां, 'उदीचीं' उत्तरस्यां प्रसृतां, 'इषम्' अन्नम्, 'ऊर्जं' सारादिरसञ्च 'अभिसंस्कृतां' इषेत्वो-र्जेत्वेतिमन्त्रपूर्व्वकच्छेदनेन सम्पादितां, बहुपर्णत्वमशुष्काग्रत्वञ्च प्रसिद्धं। 'पशुपां' पशूनां वत्सानाञ्च पालयित्रीं, आर्द्र-त्वात् पर्णबहुत्वाच्च ताडने वेदनाभावः पालनम्॥

(२२) अथ प्रसारिते शुल्बे द्वाविध्मसम्भरणमन्त्रौ, तयोः प्रथमं मन्त्रमाह। "यत्कृष्णो रूपं कृत्वा। प्राविशस्त्वं वनस्पतीन्। ततस्त्वमेकविंशतिधा। सम्भरामि सुसम्भृता" ॥८॥ इति। हे अग्ने त्वं 'यत्' यस्मात् कारणात्, 'कृष्ण'मृगो भूत्वा तदीयं पूर्णां 'कृत्वा', 'वनस्पतीन्', 'प्राविशः' प्रविष्टवानसि। तथाच ब्राह्मण आम्नायते, अग्निर्देवेभ्योऽनिलायत। कृष्णो रूपं कृत्वा स वन-स्पतीन् प्राविशदिति। 'ततः' तस्मात् कारणात्, 'वनस्प-तिषु', प्रविष्टं त्वां 'एकविंशतिधा' पञ्चदश सामिधेनीका-ष्ठानि, त्रयः परिधयः, द्वे आघारसमिधौ, अनूयाजसमिदेका, इत्येकविंशतिप्रकारं 'सुसम्भृता' सष्ठु भरणसमर्थम्, सुखेन, 'सम्भरामि' सम्भूय धारयामि॥

(२३) अथ द्वितीयामाह। "त्रीन् परिधींस्तिस्रः समिधः। यज्ञायुरनुसञ्चरान्। उपवेषं मेक्षणं धृष्टिम्। सम्भरामि सुसम्भृता" इति। य एते त्रयः 'परिधयः'। ये चाघारस-मिधानूयाजसमिधेति त्रयः समिद्विशेषाः, एते षडपि यज्ञ-

स्यायुरनुसञ्चरन्ति। 'उपवेषः', अङ्गाराणामुदीच्यां दिशि निरूहणहेतुः, 'मेचणं' चरोरुपधानसाधनं, 'धृष्टिः' अङ्गाराणां प्रत्यङ्ङिरूहणसाधनं, एतत् सर्व्वं 'सुसम्भृता सम्भराभि'॥

(२४) अथ परिस्तरणार्थानां दर्भाणां वेदनाय शस्त्रसंयोजनमन्त्रमाह। "या जाता ओषधयः। देवेभ्यस्त्रियुगं पुरा। तासां पर्व्व राध्यासम्। परिस्तरमाहरन्" इति। 'युग'शब्देन कालविशेषा लक्ष्यन्ते। ते च कालविशेषास्त्रिविधाः, वर्षा शरत् वसन्तात्मकाः। 'त्रियुगं' यथोक्तकालाः, ये 'देवेभ्यः' देवार्थं, 'पुरा' सृष्ट्यादौ, 'या ओषधयः', 'जाताः'। एतदेवाभिप्रेत्याग्रयणप्रकरणे सूत्रकारेणोक्तं, वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिर्वसन्ते यवैरिति। 'तासाम्' ओषधीनां, अहं 'पर्व्व'च्छेदनयोग्यं सन्धिस्थानं 'राध्यासं' साधयिष्यामि, किं कुर्व्वन् 'परिस्तरमाहरन्' तत्परिस्तरसाधनहेतुं दर्भमानयन्॥

(२५) अथ छेदनमन्त्रमाह। "अपां मेध्यं यज्ञियं। सदेवꣳ शिवमस्तु मे॥८॥ आच्छेत्ता वो मारिषं। जीवानि शरदः शतम्" इति। 'अपां', सम्बन्धि 'मेध्यं' शुद्धं, अतएव 'यज्ञियं' यज्ञयोग्यं, 'सदेवं' देवैः सहितं, देवानां परिस्तरणयोग्यं, तादृशं यत्सारमस्ति तत् 'मे' मम, 'शिवमस्तु'। तच्चापां सारं दर्भरूपम्। तथाचान्यत्रापः प्रकृत्याम्नायते, तासां यन्मेध्यं यज्ञियं सदेवमासीत्। तदपोदक्रामत ते दर्भा अभवन्निति। तादृशा हे दर्भा 'वः' युष्माकम्, 'आच्छेत्ता' अप्यहं 'मारिषं' हिंसितो माभूवं, किन्तु 'शतं शरदः' संवत्सरान्, 'जीवानि'॥

(१६) अथ सन्नहनमन्त्रमाह। "अपरिमितानां परिमिताः। सन्नह्ये सुकृताय कं। एनो मानिगां कतमच्च नाहं। पुनरुत्थाय बहुला भवन्तु" इति। 'अपरिमिताः' अनन्ता ये दर्भाः, तेषां मध्ये 'परिमिताः', कतिपये दर्भाः, मया गृहीताः न तु सर्व्वे ततः सन्तानविच्छेदं न करोमि 'सुकृताय' शोभनाय कर्म्मणे, तान् दर्भान् 'कं' सुखं, यथा भवति तथा 'सन्नह्ये' बध्नामि, 'अहं', 'कतमच्च न' किञ्चिदपि स्वल्पमपि, 'एनः' पापं, 'मानिगां' नितरामहमप्राप्नवानि। पापाभावे हेतुः, एते दर्भाः 'पुनरुत्थाय' भूयो व्याच्छेदनस्थानादुत्थाय, 'बहुला' प्रभूताः, 'भवन्तु'। अत आच्छेदनं दर्भाणां हितमेव॥

(१७) अथ पिण्डपितृयज्ञे बर्हिरास्तरणमन्त्रमाह। "सकृदाच्छिन्नं बर्हिरूर्णाम्रदु। स्योनं पितृभ्यस्त्वाभराम्यहं। अस्मिन् सीदन्तु मे पितरः सोम्याः। पितामहाः प्रपितामहाश्चानुगैः सह"॥१०॥ इति। 'सकृदाच्छिन्नं' एकवारमेव लूनं, यत् 'बर्हिः' 'ऊर्णा म्रदु' बलवत् मृदुस्पर्शं, 'स्योनं' सुखकरम्, अस्ति। हे बर्हिस्तादृशं 'त्वां', 'पितृभ्यः' पित्रर्थम्, 'अहं', 'भरामि' संस्तृणामि। 'अस्मिन्' आस्तीर्णे बर्हिषि, 'सोम्याः' सोमार्हाः, 'मे पितरः', 'पितामहाः', 'प्रपितामहाः', च 'अनुगैः' स्वकीयैर्भृत्यैः सह, 'सीदन्तु' निवसन्तु॥

(१८) अथ शाखापवित्रस्य क्रियमाणस्यानुमन्त्रणार्थौ द्वौ मन्त्रौ, तत्र प्रथममाह। "त्रिवृत्पलाशे दर्भः। इयान् प्रादेशसम्मितः। यज्ञे पवित्रं पोतृतमं। पयो हव्यं करोतु मे" इति। 'पलाशे'

पलाशशाखाविशेषे, 'दर्भः' पवित्ररूपः, आश्रित इति शेषः। कीदृशो दर्भः, 'त्रिवृत्' त्रिगुणः। तद्दर्भस्य परिमाणमियानित्यभिनीय प्रदर्श्यते, 'प्रादेशमात्रमितः', इति वचनेनापि स्पष्टीक्रियते। सोयं दर्भः 'मे' मम, अस्मिन् 'यज्ञे', 'पयः' अस्माभिः सम्पाद्यमानं क्षीरं, 'हव्यं' होमयोग्यं, 'करोतु'। कीदृशं पयः, 'पवित्रं' स्वयं शुद्धं, 'पोतृतमं' अस्माकमतिशयेन शोधकम्॥

(२८) अथ द्वितीयामाह। "इमौ* प्राणापानौ। यज्ञस्याङ्गानि सर्व्वशः। आप्याययन्तौ सञ्चरतां। पवित्रे हव्यशोधने" इति। 'हव्यशोधने' हविषां शोधके, द्वे 'पवित्रे' दर्भरूपे, तद्रूपौ 'इमौ' अस्मदीयौ, 'प्राणापानौ', 'यज्ञस्य', 'सर्व्वशोऽङ्गानि' सर्व्वानप्यवयवान्, 'आप्याययन्तौ' वर्धयन्तौ, 'सञ्चरतां'॥

(३०) अथ पवित्रकरणमन्त्रमाह। "पवित्रे स्थो वैष्णवी। वायुर्वां मनसा पुनातु"॥११॥ इति। हे 'पवित्रे' शुद्धिहेतू 'युवां', 'वैष्णवी स्थः' यज्ञात्मकस्य विष्णोः सम्बन्धिनौ स्थः, 'वायुः', देवो 'युवां','मनसा' स्मरणमात्रेण,'पुनातु' शोधयतु॥

(३१) अथ प्रस्तरे पवित्रसंसर्ज्जनमन्त्रमाह। "अयं प्राणश्चापानश्च। यजमानमपि गच्छतां। यज्ञे ह्यभूतां पोतारौ। पवित्रे हव्यशोधने" इति। 'अयं' दर्भरूपः, 'प्राणश्चापानश्च' इत्युभौ 'यजमानं' प्रस्तररूपमपि,'गच्छतां' अनुप्रविश्य वर्त्ततां। 'हि' यस्मात्, एतौ 'यज्ञे', 'पोतारौ' शोधकौ, 'अभ्यभूताम्'. तस्मादिमे 'पवित्रे'। 'हव्यशोधने' सर्व्वस्यापि हविषः शोधके॥

---

* "इमा" इति मूलपाठः।

(१२) अथ दर्भमयस्य वेदस्य निष्पादनमन्त्रमाह। "त्वया वेदिं विविदुः पृथिवीं। त्वया यज्ञो जायते विश्वदानिः। अच्छिद्रं यज्ञमन्वेषि विद्वान्। त्वया होता सन्तनोत्यर्धमासान्" इति। हे वेदनिष्पाद्यमान 'त्वया', सहायभूतेन सर्व्वे देवाः 'पृथिवीं' विस्तीर्णां, भूम्यात्मिकां, वा 'वेदिं' 'विविदुः' लब्धवन्तः। अतएव ब्राह्मणमाम्नायते, 'वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वमिति'। असुरवित्तं चेयं भूमिः। तथाचान्यत्राम्नातम्, 'असुराणां वा इयमग्र आसीदिति'। 'भूमिरेव वेदिः सा वा इयꣳ सर्वैव वेदिरिति' श्रुत्यन्तरात्। तस्माद्वेदेन साधनेन भूम्यात्मिका वेदिर्देवैर्लब्धा। किञ्च हे वेद 'त्वया यज्ञः', 'विश्वदानिः' विश्वस्य फलस्य दाता, 'जायते'। किञ्च त्वञ्च 'विद्वान्' अभिज्ञः, सन् 'अच्छिद्रं' अविगुणं, 'यज्ञम्', 'अन्वेषि' अनुप्राप्नोषि, सम्पादयसीत्यर्थः। किञ्च 'त्वया', सहायभूतेन 'होता' होमस्य कर्त्ता, 'अर्द्धमासान्' शुक्लकृष्णपक्षरूपान्, 'सन्तनोति' यज्ञानुष्ठानेन सन्ततान् करोति। तथा च ब्राह्मणम्, 'वेदꣳ होता हवनीयात्स्तृणं नेति। यज्ञमेव तत् सन्तनोत्युत्तरस्मादर्द्धमासात्। तꣳ सन्ततमुत्तरेऽर्धमास आलभते तं काले काल आगते यजत इति'। एवं पुनः पुनरनुष्ठानाद्यज्ञविशिष्टानामर्द्धमासानां सन्तत्यं सम्पद्यते॥

(१३) अथ दोहने वत्सबन्धनरज्जुस्वीकारानुमन्त्रणमन्त्रमाह। "त्रयस्त्रिꣳशोसि तन्तूनां। पवित्रेण सहागहि॥ १२ ॥ शिवेयꣳ रज्जुरभिधानी। अघ्नियामुपसेवताम्" इति। जाय-

शानरज्ज्वंशा गुणास्तन्तवः तेषां 'तनूनां' 'त्रयस्त्रिंशोऽसि' हे वत्सबन्धनरज्जुविशेष त्वं त्रयस्त्रिंशत्सङ्ख्याविशिष्टः सम्भूतोऽसि, तावद्भिस्तन्तुभिर्निष्पादित इत्यर्थः। हविर्भुजां देवानां तत्सङ्ख्योपेतत्वात् तदात्मना प्रशंसितुमियं सङ्ख्योच्यते न त्वत्र विहिता काचित्तन्तुसङ्ख्यास्ति। हे तथाविध'रज्जु'विशेष, स त्वं 'पवित्रेण' शुद्धिसामर्थ्येन सह, 'आगहि' आगच्छ, इयम् 'अभिधानी' बन्धनरज्जुः, 'शिवा' सुखकरी सती, 'अश्वियां' गाम्, 'उपसेवताम्' ॥

(३४) अथ क्षीरपाकार्थमङ्गारेषु कुम्भ्यामधिश्रयणे मन्त्रमाह। "अप्रस्रंसाय यज्ञस्य। उखे उपदधाम्यहं। पशुभिः सन्नीतं बिभृतां। इन्द्राय शृतं दधि" इति। हे 'उखे' कुम्भि 'यज्ञस्य' यज्ञार्थस्य सान्नाय्यस्य, 'अप्रस्रंसाय' स्रंसनपरिहारार्थं, त्वाम्, 'अहम्', 'उपदधामि' अङ्गारेषु स्थापयामि। सेयमुखा 'पशुभिः सन्नीतं' गोभिः सम्पादितं क्षीरम्, इन्द्रार्थं 'शृतं' पक्वं, 'दधि',च कृत्वा 'बिभृतां' धारयतु। यद्यपि मातरिश्वनो घर्मोऽसीत्यधिश्रयणमन्त्रः संहितायामाम्नातः तथाप्ययं मन्त्रस्तेन सह विकल्प्यते ॥

(३५) अथ वत्सापाकरणार्थायाः पलाशशाखाया मूलं छित्वा प्रादेशपरिमितं यमुपवेषं करोति तस्य करणे मन्त्रमाह। "उपवेषोऽसि यज्ञाय। त्वं परिवेषमधारयन्। इन्द्राय हविः कृण्वन्तः। शिवः शग्मो भवासि नः" ॥ १२ ॥ इति। हे पलाशशाखांश यज्ञार्थं त्वम् 'उपवेषोऽसि' उपेत्या-

ङ्गारनिरूहणादिव्यापकोऽसि, तस्मादिन्द्रार्थं 'हविः', कुर्व्वन्तः ॥

(३६) ऋत्विग्यजमानेन जप्यमन्त्रमाह। "अमृण्मयं देवपात्रं। यज्ञस्यायुषि प्रयुज्यतां। तिरःपवित्रमतिनीताः। आपो धारय मातिगुः" इति। यदेतत् 'देवपात्रं' देवानां योग्यं पिधानपात्रं, तदेतत् 'मृण्मयं', न भवति। 'न मृण्मयेनापि दध्यादिति' निषेधात्। किन्त्वयोमयं दारुमयं वा। 'अयस्पात्रेण वा दारुपात्रेण वा पिदधातीति' विधानात्। तच्च पात्रं 'यज्ञस्य' यज्ञाङ्गस्य सान्नाय्यस्य, 'आयुषि' आयुर्निमित्तं सुरक्षितत्वनिमित्तं, 'प्रयुज्यतां' पिधाने साधनीक्रियतां। पिधानस्य प्रयोजनमुच्यते, 'तिरःपवित्रं' कुम्भ्यां तिर्य्यक्त्वेन स्थापितं, यत्पवित्रं तदतिक्रम्य 'आपो नीताः' दोहनपात्रमक्षालनीया आपस्तिरःपवित्रव्यवधानेन कुम्भ्यामासिक्ताः, हे अध्वर्यो ताः पवित्रगता आपः 'मातिगुः' यथा कुम्भीमतिक्रम्य वहिर्न गच्छन्ति तथा कर्त्तुं, पिधानमात्रेण धारय॥

(३७) अथ प्रोक्ष्यमाणानां सान्नाय्यपात्राणामभिमन्त्रणे मन्त्रमाह। "देवेन सवित्रोत्पूताः। वसोः सूर्य्यस्य रश्मिभिः। गां दोहपवित्रे रज्जुं। सर्व्वा पात्राणि शुन्धत" इति। एताः प्रोक्षणसाधनभूता आपः 'सवित्रा' सूर्य्येण देवेन, 'वसोः' जगन्निवासहेतोः, तस्य 'सूर्य्यस्य', 'रश्मिभिः', च 'उत्पूताः' उत्कर्षेण शुद्धाः सम्पन्नाः, तादृश्यो हे आपः, इमां 'गां', 'दोहपवित्रे' यद्दोहनपात्रं यच्च कुम्भ्यां स्थापितं तदुभयं, 'रज्जुं' बन्धनहेतुं, अन्यान्यपि सर्व्वाणि सान्नाय्यपात्राणि 'शुन्धत' शोधयत॥

(३८) अथ सायंकाले आरण्यादागच्छन्तीनां गवां प्रतीक्षणे मन्त्रमाह। "एता आचरन्तीर्मधुमद्दुहानाः। प्रजावतीर्यशसो विश्वरूपाः ॥१४॥ बह्वीर्भवन्तीरुपजायमानाः इह व इन्द्रो रमयतु गावः" इति। 'एताः' दृश्यमानाः, 'गावः', 'आचरन्तीः' अस्मानभिमुख्येनागच्छन्तीः। कीदृश्यः, हे गावः 'वः' युष्मान्, 'इह' मद्गृहे, 'इन्द्रः', 'रमयतु' चोरादिभयरहित्या रतिहितम् करोतु ॥

(३९) अथ वत्सबन्धने मन्त्रमाह। "पूषा स्थ" इति। हे वत्स त्वं 'पूषा स्थ' पूषासि, चोरस्य पुष्टिहेतुरसि ॥

(४०) अथ दोग्धुरुपसादने मन्त्रमाह। "अयक्ष्मा वः प्रजया सꣳसृजामि। रायस्पोषेण बहुला भवन्तीः। ऊर्जं पयः पिन्वमाना घृतञ्च। जीवो जीवन्तीरुप वः सदेयम्" इति। हे गाव. 'वः' युष्मान्, 'प्रजया सꣳसृजामि' वत्सेन संयोजयामि। कीदृशीर्युष्मान्, 'अयक्ष्माः' रोगरहिताः, 'रायस्पोषेण' धनपुष्ट्या, 'बहुला भवन्तीः' बहुलाः प्रथिता भवन्तीः, पुष्टिहेतुभूता भवन्त्वित्यर्थः। 'ऊर्जं' रसोपेतम्, 'पयः', 'घृतञ्च', 'पिन्वमानाः' सिञ्चतीः, युष्मत्प्रसादादहं 'जीवः', चिरंजीवी 'जीवन्तीः', चिरं जीविनः, 'वः' युष्मान्, 'उपसदेयं' उपेत्य भजामि ॥

(४१) अदुह्यमानाया गोरभिमन्त्रणे मन्त्रमाह। "द्यौश्चेमं यज्ञं पृथिवी च सन्दुहाताम्। धाता सोमेन सह वातेन वायुः। यजमानाय द्रविणं दधातु ॥१५॥" इति। 'द्यौः', 'पृथिवी च', इत्येते उभे देवते ते 'इमं यज्ञं' एतद्यज्ञसाधनं पयः, 'सन्दु-

ह्वातां', तथा 'सोमेन' ओषधीशेन सहावस्थितः, 'धाता', 'वातेन' प्राणात्मना, अवस्थितो यश्च 'वायुः', तावुभावपि 'मन्दुह्वातां',। अथ सर्व्वोऽयं देवतागणो 'यजमानाय', 'द्रविणं दधातु' धनं सम्पादयतु ॥

(४२) अथ धारघोषस्यानुमन्त्रणे मन्त्रमाह। "उत्सं दुहन्ति कलशं चतुर्व्विलं। इडां देवीं मधुमतीꣳ सुवर्विदं। तदिन्द्राग्नी जिन्वतꣳ सूनृतावत्। तद्यजमानममृतत्वे दधातु" इति। दोग्धारः पुरुषाः 'इडां' गां, 'कलशं' कलशसमानमूधः, 'दुहन्ति', कीदृशं कलशं, 'उत्सं' चीरप्रस्रवणोपेतं, 'चतुर्व्विलं' स्तनचतुष्टयगतैश्चतुर्भिर्विलैर्युक्तं। कीदृशीमिडां 'देवीं' द्योतमानां, 'मधुमतीं' मधुररसोपेतां, 'सुवर्विदं' स्वर्गस्य लम्भयित्रीं, 'तत्' दुग्धम्, 'इन्द्राग्नी', 'जिन्वतं' प्रीणयतं, प्रीतिहेतुं कुरुतां। कीदृशं तद्दुग्धं, 'सूनृतावत्' प्रियसत्यात्मकवचनयुक्तं, 'इदं' चीरं, स्वादुतरमित्यादिशब्दैरुच्यमानमित्यर्थः। 'तत्' च इन्द्राग्न्यनुगृहीतं चीरं, 'यजमानम्', 'अमृतत्वे' कर्म्मफले, 'दधातु' स्थापयतु ॥

(४३) अथ दुग्धमानयन्तं पुरुषं प्रति अध्वर्य्योः प्रश्नमन्त्रमाह। "कामधुचः प्रणो ब्रूहि। इन्द्राय हविरिन्द्रियम्" इति। हे दोग्धः विद्यमानासु गोषु मध्ये गां 'काम्', 'अधुक्षः' दुग्धवानसि, 'नः' अस्मभ्यं, 'ब्रूहि','इन्द्रियं' इन्द्रियावृद्धिकारणम्, इदं 'हविः', 'इन्द्राय', सम्पाद्यते तस्माद्वक्तव्यमाचक्ष्व ॥

(४४) अथ दोग्धुः प्रत्युत्तरमन्त्रमाह। "अमूं यस्यां देवा-

नां। मनुष्याणां पयो हितम्" इति। गङ्गायमुनादिनामानि मनुष्यैर्गोषु व्यवह्रियन्ते। स च नामविशेषः। असूमितिसर्व्वनाम्ना निर्दिश्यते। गङ्गां दुग्धवानस्मीत्यर्थः। 'यस्यां' गङ्गायां, 'देवानां मनुष्याणां', च 'हितं पयः', वर्त्तते तामसूमिति पूर्व्वत्रान्वयः॥

(४५) अथ वाग्यमनयुक्तस्याध्वर्य्योर्वाग्विसर्जनमन्त्रमाह। "बहु दुग्धीन्द्राय देवेभ्यः। हव्यमाप्यायतां पुनः॥१६॥ वत्सेभ्यो मनुष्येभ्यः। पुनर्दोहाय कल्पताम्" इति। हे गौः 'बहु', क्षीरं 'दुग्धि', तत्र क्षीररूपं 'हव्यं', इन्द्रार्थं च 'पुनराप्यायतां' भूयो वर्द्धतां, ततो वत्सार्थं मनुष्यार्थं च 'पुनर्दोहाय', गौरियं 'कल्पतां' शक्ता भवतु॥

(४६) अथ दध्याद्यातञ्चनस्योपर्य्यग्निहोत्रोच्छेषणस्याभ्यातञ्चने मन्त्रमाह। "यज्ञस्य सन्ततिरसि। यज्ञस्य त्वा सन्ततिमनु सन्तनोमि" इति। हे अग्निहोत्र, उच्छेषण'यज्ञस्य', 'सन्ततिः' अविच्छेदकारणं, त्वम् 'असि'। तादृशं 'त्वां', 'यज्ञस्य', 'सन्ततिमनु'यज्ञसम्बन्धिनमविच्छेदमभिलक्ष्य 'सन्तनोमि' दुग्धेन सन्ततं करोमि॥

(४७) अथ दारुपात्रादिना कुम्भ्या अपिधाने मन्त्रमाह। "अदस्तमसि विष्णवे त्वा। यज्ञायापि दधाम्यहं। अद्भिररिक्तेन पात्रेण। याः पूताः परिशेरते" इति। हे क्षीर 'अदस्तं' अनुपक्षीणं, त्वं 'असि', 'याः' आपः, 'पूताः' शुद्धाः सत्यः,'परिशेरते' अपिधानपात्रस्योपरि वर्त्तन्ते,ताभिः 'अद्भिः',

'अरिक्तेन' जलसहितेन, 'पात्रेण','विष्णवे' व्याप्तिमते,'यज्ञाय', हे चीर 'त्वां', अहमपि 'दधामि' ॥

(४८) अथ, परिवासनशकलस्य प्रक्षेपणे मन्त्रमाह। "अयं पयः सोमं कृत्वा। स्वां योनिमपि गच्छतु ॥१७॥ पर्णवल्कः पवित्रं। सौम्यः सोमाद्धि निर्मितः" इति। 'अयं' चीरे प्रक्षिप्यमाणः, 'पर्णवल्कः' पलाशशाखासम्बन्धिशकलः, 'पवित्रं' शुद्धं, 'पयः', 'सोमं' सोमसमानं,'कृत्वा','स्वां योनिं' स्वकीयस्थापनम्,'अपि', 'गच्छतु' प्राप्नोतु। कीदृशः पर्णवल्कः, 'सौम्यः' सोमसम्बन्धी। तदेव स्पष्टीक्रियते, 'सोमाद्धि निर्मितः' तृतीयस्या दिवो गायत्र्या समानीयमानात् सोमाद्यः पर्णो भूमौ पतितः तस्मात् सोमपर्णादुत्पन्नः पलाशवृक्षः। अतः पर्णवल्कस्य सोमसम्बन्धित्वं ॥

(४९) अथ शाखापवित्रस्य प्रज्ञातत्वेन क्वचिदवस्थापने मन्त्रमाह। "इमौ पर्णञ्च दर्भञ्च। देवानाꣳ हव्यशोधनौ। प्रातर्वेषाय गोपाय। विष्णो हव्यꣳ हि रक्षसि" इति। योऽयं 'पर्णः' पलाशशाखारूपः, यश्च 'दर्भः' पवित्ररूपः, ताविमावुभौ 'देवानां', हविषः शोधकौ 'प्रातर्वेषाय' प्रातर्दोहात्मने व्यापिने यज्ञाय तौ पर्णदर्भौ 'गोपाय' रक्ष। 'हि' यस्मात्कारणात्, हे 'विष्णो', त्वं 'हव्यं', 'रक्षसि'। तस्मात्तदुपयुक्तस्य शाखापवित्रस्य रक्षणं तवोचितं ॥

(५०) सायंकाले वह्निषु परिस्तीर्य्यमाणेषु जप्यं मन्त्रमाह। "उभावग्नी उपस्तृणते। देवता उपवसन्तु मे। अहं ग्राम्यानुपवसामि। मह्यं गोपतये पशून्" ॥१८॥ इति। आहवनीय-

गार्हपत्यौ 'उभौ', अपि 'अग्नी', 'उपस्तृणते'। अथाध्वर्य्युरुपस्तृ-णाति, दक्षिणाग्निरपि ताभ्यामुपलक्ष्यते। एतद्यागसम्बन्धिन्यः 'देवताः', 'मे' मदर्थं, 'उपवसन्तु' अत्रोपेत्य निवसन्तु, 'अहं', हि 'ग्राम्यान्', 'पशून्', 'उपवसामि' नाश्नामि। किमर्थं 'मह्यं गोपतये' अहं गोपतिर्गवां स्वामी यथा स्यामीति। अतएवा-न्यत्राम्नातम्, यद्ग्राम्यानुपवसति तेन ग्राम्यामवरुन्ध इति॥

अत्र विनियोगसङ्ग्रहः॥

अथ दार्शिकमन्त्राः स्युः 'याः पुरस्तात्' प्रयोजयेत्।
प्रणीयमाना *'देवागेत्यन्वाधानात् पुरा जपेत्॥
'तृतीय'शकलमादद्याद् 'आपः' पात्राभिमन्त्रणं।
सपर्णवल्कैर्गातद्याद् 'अग्निं' पूर्व्वाग्निसञ्जपः॥
'अन्त'वन्त्यार्जपेन्मध्य 'इहे' प्रत्यपरानलं।
'अयं' त्रिभिर्जपेद्दक्षिणाग्निसभ्यावसथ्यकान्॥
'इदं' जपति सर्व्वाग्नीन् 'पयो'ऽश्नीतोत्र दम्पती।
'अग्ने'वैकाग्निको मन्त्रो व्रतोपायनकर्म्मणि॥
†'इमामाहरते शाखां 'यद्' इच्छं समभरेद्यवान्।
'याः' परिस्तरणे दात्रस्पर्शच्छेदनबन्धनं॥
'सकृद्'दर्भेण वेदिं तु पितृयज्ञ स्तृणाति हि।
'त्रिवृत्' शाखापवित्रं तु क्रियमाणे तु मन्त्रयत्॥
पवित्रं कृत्वा 'पवित्रे स्थो' 'अयं' प्रस्तरयोजनं।
'त्वयेति' वेदं कुरुते 'त्रयो'रज्ज्वभिमन्त्रणम्॥

* 'देवागा' इति प्रतीकं। † 'इमाम्' इति प्रतीकं।

'अग्न'कुम्भीं क्षिपेदङ्गावुपवेषं करोत्युप'* ।
'अमृत्' जप्यं पिधानस्याद् 'देवे' पात्रेक्षणेजपः ॥
'एताः' प्रतीक्षते धेनुं 'पूषा' वत्साभिबन्धनं ।
†'अयेति दोग्धोपसीदे 'द्यौश्च' दोहेतिगां जपेत् ॥
'उत्सं' धाराघोषमन्त्रः 'काम'धुक्षेति पृच्छति ।
'अमूं' दोग्धापतिं ब्रूयात् 'बह्व' ब्रूयात्त्रिदोहने ॥
यवाग्वग्निहोत्रशेषन्तु क्षिपेदातञ्चनोपरि ।
'अदस्तं' दारुपात्रेण पिधत्ते'ऽयं' पयस्त्विति ॥
शकलं निदधातीमौ'‡ गूहेच्छाखापवित्रकं ।
'उभौ' सायं परिस्तीर्यमाणेष्वग्निषु सञ्जपेत् ॥
इति चतुर्थोऽनुवाकः ॥

---

अथ पञ्चमोऽनुवाकः ।

चतुर्थे दर्शपूर्णमासाङ्गभूताः केचिन्मन्त्रा उक्ताः । पञ्चमे त्वपरे मन्त्राः कियन्तोऽप्यभिधीयन्ते । तत्राहवनीयागारे गार्हपत्यागारे वा शयानेन जप्यं मन्त्रमाह । "देवा देवेषु पराक्रमध्वं । प्रथमा द्वितीयेषु । द्वितीयास्तृतीयेषु । त्रिरेकादशा इह मावत । इदꣳ शकेयं यदिदं करोमि । आत्मा करोत्वात्मने । इदं करिष्ये भेषजं । इदं मे विश्वभेषजा । अश्विना प्रावतं युवम्" इति । द्यावापृथिव्योरन्तरिक्षे च प्रत्येकमेका-

* 'उप' इति प्रतीकं । † 'अय' इति प्रतीकं । ‡ 'इमौ' इति प्रतीकं ।

दशसङ्ख्याका देवा वर्त्तन्ते एतच्च ये देवादिव्येकादशस्थेतिमन्त्रे समाम्नातं। तत्र द्युलोकवर्त्तिन एकादशसङ्ख्या 'देवाः', 'प्रथमाः', तादृशा हे 'देवाः', 'द्वितीयेषु' पृथिवीवर्त्तिषु, 'देवेषु', 'पराक्रमध्वं' अप्रतिबन्धेन वर्त्तध्वं। तथा 'द्वितीयाः' हे देवाः, 'तृतीयेषु' अन्तरिक्षवर्त्तिषु देवेषु, 'पराक्रमध्वं'। हे 'त्रिरेकादशाः' त्रिरावृत्ताः एकादशसङ्ख्याका देवाः, सर्व्वेपि यूयं सम्भूय 'इह' कर्म्मणि वर्त्तमानं, 'अवत' रक्षत। यत् 'इदं' कर्म्म, इदानीं 'करोमि', तदिदं कर्म्म 'शकेयं' सम्पूर्णं कर्त्तुं शक्तो भूयासं, तच्चैतद्देहस्थम् 'आत्मा', एव स्वापार्थं 'करोतु', कोऽन्यः सहायो भवितुमर्हति तद्यथा सम्पद्यते तथा युष्माभिः प्रसादनीयं। किञ्च 'भेषजं' सर्व्वानिष्टोपशमनम्, 'इदं' कर्म्म, 'करिष्ये'। हे 'विश्वभेषजा' सर्व्वानिष्टोपशमनकुशलाविश्विनौ, 'युवाम्', अपि 'मे' मदीयम्, 'इदं' कर्म्म, 'प्रावतं' प्रकर्षेण रक्षतं ॥

(२) अथाङ्गाराणां पुरोडाशादपोहने मन्त्रमाह। "इदमहꣳ सेनाया अभीत्वर्य्यै ॥१॥ मुखमपोहामि" इति। 'अभीत्वर्य्यै' अभिभवितुं पुरोडाशमतिदाहेन हिंसितुं प्रवृत्तायै, 'सेनायै', अङ्गाररूपायां सेनायां 'मुखं' प्रधानभूतमङ्गारं, 'अहं', 'इदं' इदानीमेव, 'अपोहामि' अपनयामि ॥

(३) अथ पुरोडाशस्याभिमन्त्रणे मन्त्रमाह। "सूर्य्यज्योतिर्विभाहि। महत इन्द्रियाय" इति। हे पुरोडाश अन्नाधिकस्येन्द्रियस्य सिद्ध्यर्थं सूर्य्यसमानदीप्तिः सन् विशेषेण दीप्यस्व ॥

(४) अथाभिघारणे मन्त्रमाह। "आप्यायतां घृतयोनिः। अग्निर्हव्यानुमन्यतां। खमङ्क्ष्व त्वचमङ्क्ष्व। सुरूपं त्वा वसुविदं। पशूनां तेजसा। अग्नये जुष्टमभिघारयामि" इति। घृतमेव योनिः कारणं यस्यासौ 'घृतयोनिः'। घृतेन हि ज्वालोद्भवति। तादृशः 'अग्निः', 'आप्यायतां'। 'हव्यानि', चास्मदीयानि 'अनुमन्यताम्' अङ्गीकरोतु। हे पुरोडाश त्वमपि 'खं' रन्ध्रं, पाकजन्यं 'अङ्क्ष्व' अञ्जय, तथा 'त्वचं', 'अङ्क्ष्व' अञ्जय, घृतेन पिहितरन्ध्रं स्निग्धच्छायं चात्मानं कुरु। ततोहं 'सुरूपं' शोभनरूपञ्च, 'वसुविदं' धनानां लम्भयितारं, 'अग्नये', 'जुष्टं' प्रियं, 'त्वां', 'पशूनां तेजसा' अनेन घृतेन, 'अभिघारयामि' उपरि घृतधारया संस्करोमि॥

(५) अथ पात्र्यामुपस्तरणमन्त्रमाह। "स्योनं ते सदनं करोमि॥ २॥ घृतस्य धारया सुशेवं कल्पयामि" इति। हे पुरोडाश 'ते' तव, 'स्योनं' सुखहेतुं, 'सदनं' स्थानं, 'करोमि'। 'घृतस्य धारया', 'सुशेवं' सुशेवितुं योग्यं यथा भवति तथा, 'कल्पयामि' सम्पादयामि॥

(६) अथ पुरोडाशस्य सादने मन्त्रमाह। "तस्मिन्त्सीदामृते प्रतितिष्ठ। व्रीहीणां मेध सुमनस्यमानः" इति। हे 'व्रीहीणां', 'मेध' सारभूत पुरोडाश, 'तस्मिन्' स्थाने, 'सीद' अवस्थितिं कुरु, तथा 'सुमनस्यमानः' सुप्रीयमाणः, 'अमृते' निरुपद्रवे तस्मिन् स्थाने, 'प्रतितिष्ठ' प्रविष्टो भव।

(७) अथ पुरोडाशस्योद्वासने मन्त्रमाह। "आर्द्रः प्रथस्नु-

भुवनस्य गोपाः। शृत उत्स्नाति जनिता मतीनाम्" इति। 'आर्द्रः' अमृतेन शीतीकृतः, 'प्रथस्नुः' प्रथनशीलः, 'भुवनस्य गोपाः' भूतजातस्य गोपायिता, 'शृतः' पक्वः, 'मतीनां' प्राज्ञानां, 'जनिता' उत्पादयिता, 'उत्स्नाति' स्वात्मानमग्नेः सकाशादुन्मुञ्चति ॥

(८) प्रातर्दोहस्याभिघारणे मन्त्रमाह। "यस्त आत्मा पशुषु प्रविष्टः। देवानां विष्ठामनु यो वितस्थे। आत्मन्वान्त्सोम घृतवान् हि भूत्वा। देवान् गच्छ सुवर्विद यजमानाय मह्यम्" इति। हे प्रातर्दोह 'ते' तव, 'य आत्मा' घृतोपलक्षणः, 'पशुषु', 'प्रविष्टः' प्रविश्य वर्त्तते, 'यः', च 'देवानां', 'विष्ठां' विविधमवस्थानम्, 'अनु'लक्षीकृत्य, स्वयमपि तदनुरूपं 'वितस्थे' विविधं तिष्ठति। हे 'सोम',सदृशपुरोडाश त्वं 'आत्मन्वान्' समीचीनस्वरूपवान्, 'घृतवान् हि' घृतयुक्तः प्रसिद्धः, 'भूत्वा', 'देवान्', 'गच्छ' प्राप्नुहि, 'यजमानाय मह्यं', 'सुवर्विद' स्वर्गं लभस्व ॥

(९) अथ कपालानां प्रत्यञ्जने मन्त्रमाह। "इरा भूतिः पृथिव्यै रसो मोत्क्रमीत्" ॥३॥ इति। 'इरा' अन्नरूपः, 'भूतिः' प्रजानां भवनहेतुः, 'पृथिव्यै रसः' कपालरूपा द्यावापृथिव्याः सारांशः, 'मोत्क्रमीत्' कपालेभ्य उत्क्रान्तो माभूत् ॥

(१०) अथ होतृप्रवरेऽध्वर्युप्रवरे च यजमानेन जप्यं मन्त्रमाह। "देवाः पितरः पितरो देवाः। योऽहमस्मि स सन् यजे। यस्यास्मि न तमन्तरेमि। स्वं म इष्टꣳ स्वं दत्तं। स्वं पूर्त्तꣳ स्वꣳ

आन्तं* । स्वष्ट् हुतं । तस्य मेऽग्निरुपद्रष्टा । वायुरुपश्रोता । आदित्यानुख्याता । द्यौः पिता ॥४॥ पृथिवी माता । प्रजापतिर्बन्धुः । य एवास्मि स सन् यजे" इति । हे 'देवाः', 'पितरः' पालयितारः, हे 'पितरः', 'देवाः' द्योतनात्मकाः, उभयविधा यूयं मद्विज्ञापनं शृणुतेति शेषः । 'योऽहमस्मि' पुरा वर्णाश्रमाभ्यां यादृशाचारोऽहमस्मि, 'स सन् यजे' तादृशाचार एव सन् सोचिताचारस्य लोपमकृत्वा युष्मान् यजे, किञ्च 'यस्यास्मि' यस्य पितुरहं पुत्रोऽस्मि, 'तं' पितरं, 'नान्तरेमि' तदीयस्याचारस्यान्तरायं न करोमि । अवश्यं पितुराचारं मनसापि न लङ्घयेदिति हि सर्व्वे वदन्ति तादृशस्य 'मे', यत् 'इष्टं', तत् 'स्वं', भवतु । इह लोके वषट्कारेण देवेभ्यो यत् 'दत्तं', तद्युष्मत्प्रसादात् परलोके भोगाय ममैव 'स्वं', भवतु । तथा दत्तं दक्षिणाद्रव्यादिकं मम 'स्वं', भवतु । 'पूर्त्तं' पक्वान्नादि, पितृभ्यो दत्तं मम 'स्वं', भवतु । 'आन्तं' ततो रूपेणानुष्ठितं मम 'स्वं', भवतु । तथा हुतं स्वाहाकारेण दत्तं मम 'स्वं', भवतु । सर्व्वमेतद्यथा भवति तथा हे देवाः पितरः यूयमनुमन्यध्वं तस्य यथा कुर्व्वतो 'मे' अयम् 'अग्निः', 'उपद्रष्टा' समीपे स्थित्वा द्रष्टा, साक्षीत्यर्थः । अयं 'वायुः', 'उपश्रोता' समीपे स्थित्वा मद्वृत्तान्तं साक्षित्वेन शृणोति । 'आदित्यः', च 'अनुख्याता' मदीयस्य वृत्तान्तस्यानुक्रमेण ख्यापयिता । 'द्यौः', 'पिता' मम पितृस्थानीया, 'पृथिवी', च मातृस्थानीया 'प्रजा-

* आर्तं इति वा पाठः ।

पतिः', च 'बन्धु',स्थानीयः। यस्मादेवं तस्मादहं 'य एवास्मि' यादृशाचारो देवतासाचिकश्चास्मि, 'स' तादृश एव, 'सन्', 'यजे' यष्टुं योग्यतां मम कुरुतेत्यभिप्रायः॥

(११) अथ हविरवदाने मन्त्रमाह। "माभेर्मा संविक्था मा त्वा हिꣳसिषं। मा ते तेजोपक्रमीत्। भरतमुद्धरेमनुषिञ्च। अवदानानि ते प्रत्यवदास्यामि। नमस्ते अस्तु मा मा हिꣳसीः" इति। हे पुरोडाश 'माभेः' भयं माकार्षीः। 'मा', च 'संविक्था' कम्पिष्ठाः, 'त्वाम्', अहं 'माहिंसिषं' हिंसां न करोमि, अतो भीतस्य 'ते' तव, 'तेजः', 'मापक्रमीत्', भयस्यास्माभिर्निराकृतत्वात्। अतस्त्वं 'भरतं', 'इमम्' यजमानम्, 'उद्धर'। देवेभ्यो हविर्भरणाद्यजमानो भरतः। ततः 'अनुषिञ्च' वृष्टिद्वारेण 'इं' इमाम्, छान्दसोऽयं मवर्णलोपः। पृथिवीमनुक्रमेण सिक्तां कुरुत, त्वदीयानि 'अवदानानि प्रत्यवदास्यामि' प्रत्येकमवदानं करिष्यामि। 'ते' तुभ्यं, 'नमोऽस्तु', 'मा माहिꣳसीः', प्रतिकूलस्यानाचरणात्॥

(१२) अथ हविषः प्रत्यभिघारणे मन्त्रमाह। "यदवदानानि तेऽवन्। विलोमाकार्षमात्मनः॥ ५॥ आज्येन प्रत्यनज्म्येनत्। तत्त आप्यायतां पुनः" इति। 'अवदानानि' 'अवद्यं',न् छन्ते तव 'यत् विलोम' प्रतिकूलम्, 'आकार्षं' तद्द्वारेण 'आत्मनः' ममापि, प्रतिकूलम् 'अकार्षं', एतदुभयमपि 'आज्येन', 'प्रत्यनज्मि' प्रतिसमाहितं यथा भवति तथाञ्जनं करोमि। किञ्च 'ते' तव, विकृतमङ्गं 'पुनराप्यायतां' भूयो वर्द्धतां॥

(१३) अथ प्राशित्रावदने मन्त्रमाह। "अज्यायो यवमात्रात्। आव्याधात्कृत्यतामिदं। माऽरूपयाम यज्ञस्य। शुद्धꣳ स्विष्टमिदꣳ हविः" इति। पुरा कदाचिद्रुद्रो यज्ञस्य साधनस्य पुरोडाशस्य कञ्चिदंशमविध्यत्। तथा च ब्राह्मणमाम्नायते, "देवा वै यज्ञाद्रुद्रमन्तरायन् स यज्ञमविध्यदिति"। तस्मात् 'आव्याधात्' विद्धप्रदेशात्, 'इदं' हविः, 'कृत्यतां' छिद्यतां, कियद्धविः 'यवमात्रादज्यायः' यवपरिमितमेव न तु ततोऽधिकं, वयं 'यज्ञस्य' पुरोडाशरूपस्य, शरीरं, 'माऽरूपयाम' रोपणं विमोहनमुपद्रवः तद्युक्तं न करवाम, यवमात्रादधिकावदाने ह्युपद्रवः स्यात्। तथा चान्यत्राम्नातं, "यज्ज्यायोऽवद्येद्रोपयेत्तद्यज्ञस्येति"। 'इदं' तु यवमात्रं 'हविः,' देवैः छिन्नत्वात् 'शुद्धं'। तथा चाम्नायते, तस्याविद्धं निरकृन्तन्यवेन सम्मितं तस्माद्यवमात्रमवद्येदिति। किञ्चेदं हविः 'स्विष्टं' शोभनयागहेतुः। तदप्याम्नातं, स्विष्टं वै न इदं भविष्यतीति॥

(१४) अथ इडावदाने मन्त्रमाह। "मनुना दृष्टां घृतपदीं। मित्रावरुणसमीरितां। दक्षिणार्द्धादसम्भिन्दन्। अवद्याम्येकतो मुखाम्"॥६॥ इति। 'दक्षिणार्द्धात्' पुरोडाशस्य दक्षिणभागात्, 'असम्भिन्दन्' इतरावदानैरसंमिश्रयन्, अहमिडामुद्दिश्य 'अवद्यामि' पुरोडाशांशमवखण्डयामि। कीदृशीमिडां, 'मनुना', प्रथमं 'दृष्टां', तथा घृतं पादात् निष्पीडितं यस्याः सा 'घृतपदी' तादृशीं मित्रावरुणाभ्यां सम्यक् प्रेरिता 'मित्रावरुणसमीरिता' तां तत्र च मन्त्रान्तरगतानां मानवी घृतपदी मै-

ऽत्रावरुणीति पदानां ब्राह्मणमेवमाम्नायते, मानवीत्याह। "मनुर्ह्येतामग्रेऽपश्यद्घृतपदीत्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाꣳ समैरयतां" इति। तथा 'एकतोमुखां' एकदिङ्मुखप्रभवां, दक्षिणदिश्येवावस्थितां नतु दिगन्तर इत्यर्थः॥

(१५) अथ यजमानपञ्चमानामृत्विजामिडाभक्षणे मन्त्रमाह। "इडे भागं जुषस्व नः। जिन्व गा जिन्वार्वतः। तस्यास्ते भक्षिवाण स्याम सर्व्वात्मानः सर्व्वगणाः" इति। हे 'इडे' इडाख्ये देवि, 'नः' अस्माकं, 'भागं,' 'जुषस्व' प्रीतिपूर्व्वकमनुमन्यस्व, ततो 'गा जिन्व' गोमहिष्यादीन् प्रीणय, समर्द्धयेत्यर्थः। 'अर्व्वतः' अश्वांश्च 'जिन्व,' 'तस्याः' तादृश्याः, 'ते' तव, 'भक्षिवाणः' भक्षयितारः, 'सर्व्वात्मानः' अविकलस्वरूपाः, 'सर्व्वगणाः' सर्व्वैः पुत्रपौत्रादिगणैश्च सहिताः॥

(१६) अथ बर्हिषदः पुरोडाशस्याभिमर्शने मन्त्रमाह। "ब्रध्न पिन्वस्व। ददतो मे माक्षायि। कुर्व्वतो मे मोपदसत्। दिशां क्लृप्तिरसि दिशो मे कल्पन्तां। कल्पन्तां मे दिशः॥ ७॥ दैवीश्च मानुषीश्च। अहोरात्रे मे कल्पेतां। अर्द्धमासा मे कल्पन्तां। मासा मे कल्पन्तां। ऋतवो मे कल्पन्तां। संवत्सरो मे कल्पतां क्लृप्तिरसि कल्पतां मे" इति। यज्ञो वै ब्रध्न इति श्रुतेः, हे 'ब्रध्न' यज्ञसाधकपुरोडाश, 'पिन्वस्व' त्वं प्रीतो भव, देवेभ्यस्त्वां 'ददतः', 'मे' मम, 'माक्षायि' विद्यमानस्वरूपादुपक्षीणा माभूः, यागं 'कुर्व्वतः', मम फल 'मोपदसत्' क्षीणं

माभूत्। पूर्व्ववाक्येन साधनस्य यज्ञस्योपक्षयाभावः, उत्तरवाक्येन साध्यस्य फलस्याप्युपक्षयाभावः। हे पुरोडाश त्वं 'दिशां' दिग्वासिजनानां, 'क्लृप्तिः' सामर्थ्यं, स्वस्वव्यापारक्षमता, सैव त्वम् 'असि'। अतस्त्वत्प्रसादात् 'मे' मदर्थं, 'दिशः' दिग्वासिजनाः। आदरार्थं पुनर्व्वचनम्। ताश्च दिशो द्विविधाः, दैव्यो मानुष्यश्च। आदित्यगत्या सम्पादिताः प्राच्यादयो दैव्यः, मनुष्याणां परस्परावस्थानापेक्षया परिकल्पिताः प्राच्यादयो मानुष्याः। यद्वा 'दिशः' देशकालव्यवस्थाः, ताश्च प्रजापत्यादिकृता दैव्यः, मन्वादिकृता मानुष्यः। अहोरात्रादयः स्पष्टाः। किं बहुना सर्व्वत्र त्वमेव 'क्लृप्तिः' सामर्थ्यम्, 'असि'। त्वज्जनितयज्ञाधीनत्वात् सर्व्वव्यवहारसामर्थ्यस्य। अतो 'मे' मदर्थं, सर्व्वं दिगादिकं कल्पतां॥

(१०) अथ चतुर्धाकृतस्य पुरोडाशस्य दिक्षु व्यूहने मन्त्रमाह। "आशानां त्वाशापालेभ्यः। चतुर्भ्यो अमृतेभ्यः। इदं भूतस्याध्यक्षेभ्यः॥ ८॥ विधेम हविषा वयम्। भजतां भागी भागम्। मा भागो भक्तम्। निरभागं भजामः। अपस्पिन्व। ओषधीर्जिन्व। द्विपात् पाहि। चतुष्पादव। दिवो वृष्टिमेरय। ब्राह्मणानामिदꣳ हविः॥ ९॥ सोम्यानागꣳ सोमपीथिनाम्। निर्भक्तो ब्राह्मणः। नेहा ब्राह्मणस्यास्ति" इति। हे पुरोडाश 'त्वां', 'आशानां' सर्व्वासां दिशां सम्बन्धिभ्यः, 'आशापालेभ्यः' दिक्पालकेभ्यः, 'चतुर्भ्यः' इन्द्रयमवरुणकुवेरेभ्यः, 'अमृतेभ्यः' देवेभ्यः, समर्पयामीति शेषः। 'भूतस्य' सिद्धस्यास्य

पुरोडाशस्य, 'अध्यक्षेभ्यः' स्वामिभ्यः, 'इदं' इदानीं, 'वयं', 'हविषा', 'विधेम' परिचरेम, अत्र 'भागो' भागयोग्यः पुमान्, स्वकीयं 'भागं', 'भजताम्'। 'अभागः' तदयोग्यः पुमान्, 'भक्तं' भागं, 'मा', प्राप्नोत् 'अभागं', पुरुषं 'निर्भजामः' वयं भागरहितं कुर्मः, 'अपः' क्रियमाणमिदं कर्म, 'पिन्व'। हे पुरोडाश त्वं वर्द्धय। यत् 'ओषधीः', च 'जिन्व' प्रीणय, 'द्विपात्' पुत्रभृत्यादिकं, 'पाहि', 'चतुष्पाद्' गोमहिष्यादिकम्, 'अव'-रक्ष,। 'दिवः', सकाशात् 'वृष्टिं', 'एरय' प्रवर्त्तय, 'सोम्यानां' सोमयोग्यानां, अत एव 'सोमपीथिनां' सोमपानयुक्तानां, 'ब्राह्मणानाम्' ऋत्विजाम्, 'इदं' चतुर्धाकृतं, 'हविः', सम्पादितं। अब्राह्मणस्तु 'निर्भक्तः' भागात् निःसारितः, 'इह' अस्मिन्नार्त्विज्ये कर्म्मणि, 'अब्राह्मणस्य' भागो नास्ति याजनस्य ब्राह्मणैकविषयत्वात्॥

(१८) अथ स्रुक्प्रस्तरस्याज्यमानीयानुमन्त्रणे मन्त्रमाह। "समक्तं बर्हिर्हविषा घृतेन। समादित्यैर्वसुभिः सम्मरुद्भिः। समिन्द्रेण विश्वेभिर्देवेभिरक्ताम्। दिव्यं नभो गच्छतु यत् स्वाहा" इति। इदं प्रस्तराख्यं 'बर्हिः', घृतरूपेण 'हविषा', 'समक्तं' सम्यगक्तं भवतु। तथादित्यवसुमरुदादिभिर्देवैः 'घृतेन', सम्यगज्यमानमस्तु। ततः 'दिव्यं' द्योतमानं, 'नभः' आदित्याख्यं 'यत्', तेजोस्ति, तत्तेजः अयं प्रस्तरः प्राप्नोतु, 'स्वाहा' समर्पितायं प्रस्तरः॥

(१९) अथ गार्हपत्यस्य दक्षिणत उपविष्टायाः पत्न्या जपार्थं

मन्त्रमाह। "इन्द्राणीवाविधवा भूयासम्। अदितिरिव सुपुत्रा। अस्थूरिणं त्वा गार्हपत्य ॥१०॥ उपनिषदे सुप्रजास्त्वाय" इति। इन्द्रस्य पत्नी 'इन्द्राणी', सा कदाचिदपि विधवा न भवति तद्वदहमपि यावज्जीवम् 'अविधवा', 'भूयासं',। 'अदितिः' देवमाता, तद्वदहं 'सुपुत्रा', 'भूयासं'। हे 'गार्हपत्य', 'अस्थूरिणं' सर्व्वार्थसाधनसम्पूर्णं, 'त्वां', 'सुप्रजास्त्वाय' शोभनापत्यत्वसिद्धये, 'उपनिषदे' उपेत्य निषीदामि॥

(२०) अथ सम्पत्नीयहोममन्त्रमाह। "सम्पत्नी पत्या सुकृतेन गच्छताम्। यज्ञस्य युक्तौ धुर्य्यावभूताम्। सञ्जानानौ विजहतामरातीः। दिवि ज्योतिरजरमारभेताम्" इति। पत्या सहिता येयं पत्नी सा 'सुकृतेन' सुष्ठु सम्पादितेन कर्म्मफलेन, 'सङ्गच्छतां'। तावुभौ 'युक्तौ' परस्परसम्बन्धौ, 'यज्ञस्य', 'धुर्य्यौ' भारवाहकौ, 'अभूतां', यज्ञमनुतिष्ठतामित्यर्थः। 'सञ्जानानौ' परस्परमैकमत्यं गतौ, 'अरातीः' शत्रुं, 'विजहतां' विनाशयताम्, 'दिवि' द्युलोकस्थितं, 'अजरं' जरारहितं, 'ज्योतिः' आदित्यात्मकम्, 'आरभेताम्' आभिमुख्येन प्राप्नुताम्॥

(२१) अथ नारिष्ठहोमार्थाश्चत्वारो मन्त्राः, तत्र प्रथममन्त्रमाह। "दश ते तनुवो यज्ञ यज्ञियाः। ताः प्रीणातु यजमानो घृतेन। नारिष्ठयोः प्रशिषमीडमानः। देवानां दैव्योऽपि यजमानोऽमृतोऽभूत्" इति। हे 'यज्ञ' तदभिमानिदेवते, तव 'यज्ञियाः' यज्ञयोग्याः, 'तनवः' शरीराणि, 'दश'सङ्ख्याकाः

सन्ति । 'ताः' सर्व्वास्तनूः, 'यजमानः', 'घृतेन', 'प्रीणातु' वर्षयतु । 'नाराशंसयोः' यज्ञस्य नेतारः, यजमानाः नरा-स्तेषां सम्बन्धिनो नाराः तेष्वतिशययुक्तौ नाराशंसावाग्निवायू, जाठराग्निः प्राणवायुश्च अतिशयेन नरेण सम्बन्धौ तयोर्नाराशंसयोर्देवयोः 'प्रशिषं' प्रकृष्टं शासनं, 'ईडमानः' स्तुवन्, 'यजमानः' इह 'देवानां', सम्बन्धी सन् 'दैव्ये' देवयोग्ये स्वर्गेऽपि, 'अमृतः' देवः, 'अभूत्' ॥

(२२) अथ द्वितीयमाह । "यं वां देवा अकल्पयन् ॥ ११ ॥ ऊर्ज्जो भागꣳ शतक्रतू । एतद्वान्तेन प्रीणानि । तेन तृप्यतमꣳहहौ" इति । हे 'शतक्रतू' शतसंख्याककर्मनिष्पादकौ नाराशंसौ, 'वां' युवयोः, 'ऊर्ज्जः' रसस्य 'यं भागं', 'देवा' 'अकल्पयन्', तत् 'एतत्', इदानीं मया दीयत इति शेषः । 'तेन' दत्तेन, 'वां' युवां उभौ, 'प्रीणानि' प्रीतौ करोमि, 'तेन' भागेन, हे 'अꣳहहौ' अꣳहसः, पापस्य हन्तारौ, युवां तृप्यतम् ॥

(२३) अथ तृतीयमाह । "अहं देवानाꣳ सुकृतामस्मि लोके । ममेदमिष्टं न मिथुर्भवाति । अहन्नाराशंसावनुयजामि विद्वान् । यदाभ्यामिन्द्रो अदधाद्भागधेयम्" इति । 'सुकृतां' शोभनकर्म्मणां, 'देवानां', सम्बन्धिनि 'लोके', 'अहम्', 'अस्मि' भूयासं, 'मम', सम्बन्धि यत् 'इष्टं' कर्म्म, तत् 'इदं' 'मिथुर्भवाति' मिथ्या न भवति, अवश्यं फलप्रदमित्यर्थः । 'अहं' 'नाराशंसौ', देवौ 'विद्वान्' तदीयमहिमानं जानन्, 'अनु

यजामि' अनुकूलां पूजां करोमि। 'यत्' यस्मात् कारणात्, 'आभ्यां' नारिष्ठाभ्यां, 'इन्द्रः', 'भागधेयं' हविर्भागम्, 'अदधात्' सम्पादितवान्। तस्माद्यजामीति पूर्व्वेणान्वयः॥

(२४) अथ चतुर्थमाह। "अदारसृङ्भवत देव सोम। अस्मिन् यज्ञे मरुतो मृडता नः। मा नो विददभि भामो अशस्तिः॥१२॥ मा नो विदद्वृजनात् द्वेष्याया" इति। हे 'सोमदेव', त्वम् 'अदारसृङ्भवत' दाराणामस्मदीयानां पत्नीनामसंसयिता भव, पालको भवेत्यर्थः। हे 'मरुतः', देवाः, यूयम् 'अस्मिन्' 'यज्ञे', 'नः' अस्मान्, 'मृडत' सुखयत, 'भामः' भवदीयः क्रोधः, 'नोभि' अस्मदाभिमुख्येन, 'मा विदत्' मा प्राप्नोतु। तथा 'अशस्तिः' अपकीर्तिः, शत्रुकृता 'नः' अस्मान्, 'मा विदत्' मा प्राप्नोतु। द्वेष्यात् 'वृजनात्', द्वेष्यं अन्यादपि पापं यदस्ति तन्मा प्राप्नोतु॥

(२५) अथ पौर्णमास्यां पार्वणहोमे मन्त्रमाह। "ऋषभं वाजिनं वयम्। पूर्णमासं यजामहे। स नो दोहताᳩ सुवीर्य्यम्। रायस्पोषᳩ सहस्रिणम्। प्राणाय सुराधसे। पूर्णमासाय स्वाहा" इति। 'ऋषभं' श्रेष्ठं, 'वाजिनं' अन्नवन्तं, 'पूर्णमासं' एतन्नामकं देवं, 'वयं', 'यजामहे',। स च देवः, 'सुराधसे' शोभनधनहेतवे, 'प्राणाय' प्राणवृत्तिस्थित्यर्थं, 'नः' अस्माकं, 'सुवीर्य्यं' शोभनापत्ययुक्तं, 'सहस्रिणं' सहस्रसङ्ख्यायुक्तं, 'रायस्पोषं' धनपुष्टिं, 'दोहतां' दोग्धां, सम्पादयत्वित्यर्थः। 'पूर्णमासाय', देवाय 'स्वाहा' इदं हविः स्वाहुतमस्तु॥

(२६) अमावास्यापार्वणहोममन्त्रमाह। "अमावास्या सुभगा सुशेवा। धेनुरिव भूय आप्यायमाना। सा नो दोहताꣳ सुवीर्य्यम्। रायस्पोषꣳ सहस्रिणम्। अपानाय सुराधसे। अमावास्यायै स्वाहा" इति। इयम् 'अमावास्या', देवता 'सुभगा' सौभाग्ययुक्ता, 'सुशेवा' सुष्ठु सेवितुं योग्या, यथा 'धेनुः', प्रतिदिनं क्षीरं प्रयच्छति पुनः पुनराप्याययति एवमियममावास्या प्रतिमासं 'भूयः', देवानाप्याययति। सा न इत्यादि पूर्व्ववत्। 'अपानाय' अपानवृत्तिस्थित्यर्थं॥

(२७) अथ होतुरुपवेशनाधारैर्दर्भैर्वेद्या अभिस्तरणे मन्त्रमाह। "अभिस्तृणीहि परिधेहि वेदिम्। जामिं मा हिꣳसीरमुया शयाना। होतृषदना हरिताः सुवर्णाः। निष्का इमे यजमानस्य ब्रध्ने" इति॥ १३॥ हे दर्भ 'अभिस्तृणीहि' अभित आस्तीर्णा भव, 'वेदिं', 'परिधेहि' आच्छादय, 'अमुया' वेद्या सह, 'शयाना' शयनं प्राप्तस्त्वं, 'जामिं' जायमानां प्रजां, 'माहिंसीः'। 'होतृषदनाः' होता येषु दर्भेषु निषीदति तादृशा दर्भाः, 'हरिताः' हरितवर्णाः, 'सुवर्णाः' शोभनच्छायाः, 'इमे' पुरतो वर्त्तमानाः सन्तः, 'यजमानस्य', 'ब्रध्ने' कर्म्मफलभूते आदित्यलोके, 'निष्काः' अलङ्काराः सन्तु।

अत्र विनियोगसङ्ग्रहः।

'देवाः' स्वामिजपायेद 'मङ्गारणामपोहनं।
हविर्मन्त्रयते 'सूर्य्य'स्याप्यायेत्यभिघारयेत्॥

---

* 'इदम्' इति प्रतीकम्। † 'आप्याय' इति प्रतीकम्।

'स्योनं' पात्र्यामुपस्तीर्य्य 'तस्मिन्' इति हविःक्षिपेत्।
आर्द्रे*ति हविरुद्वास्य 'यस्ते' दोहाभिघारणं ॥
'इरा' कपालान्यभ्यज्य 'देवाम्' तु प्रवरो जपेत् ।
'मा ते' हविरवद्येत यद्†प्रत्यभिघारयेत् ॥
'आज्या' प्राशित्रावदानं मनुने‡डामवद्यति ।
'इडे' प्राश्नन्ति तां 'ब्रध्न' पुरोडाशमभिस्पृशेत् ॥
'आशा' प्रतिदिशं व्यूहेत् 'ममग्ना' प्रस्तराञ्जनं ।
इन्द्राणीति‖ जपेत् पत्नी सम्पत्नीति§ जुहोति हि ॥
दशेति¶ नारिष्टहोम 'ऋषभं' पूर्णमाहुतिः ।
अमेति** दर्शहोमस्यादभि††वेदिं स्तृणात्विति ॥

अथ मीमांसा, नवमाध्यायस्य द्वितीयपादे चिन्तितं ।

मङ्कीर्णौ मन्त्रयोर्होमौ न वा प्रकरणा उभौ ।
सङ्कीर्णावुपकार्य्यस्य भेदावेतौ व्यवस्थितौ ॥

दर्शपूर्णमासप्रकरणे पठितत्वात् प्रयाजादिवद्दर्शेऽपि होमद्वयं कर्त्तव्यम्। पूर्णमासेति तथेति चेत् मैवम्। उपकार्य्ययोः मन्त्रयोर्व्यवस्थितत्वेनोपकारकयोर्होमयोरपि व्यवस्थाया युक्तत्वात् ॥

इति पञ्चमोऽनुवाकः ।

---

* 'आर्द्रः' इति प्रतीकम् ।
† 'यत्' इति प्रतीकम् ।
‡ 'मनुना' इति प्रतीकम् ।
‖ 'इन्द्राणी' इति प्रतीकम् ।
§ 'सम्पत्नी' इति प्रतीकम् ।
¶ 'दश' इति प्रतीकम् ।
** 'अमा' इति प्रतीकम् ।
†† 'अभि' इति प्रतीकम् ।

अथ षष्ठोऽनुवाकः ।

(१) चतुर्थपञ्चमयोरनुवाकयोरनुक्ताः परिशिष्टा ये मन्त्रास्ते सर्व्वे षष्ठेस्मिन्ननुवाकेऽभिधीयन्ते । तत्र दोहादूर्ध्वं प्रैषमन्त्रमाह । "परिस्तृणीत परिधत्ताग्निम् । परिहितोऽग्निर्यजमानं भुनक्तु । अपाꣳ रस ओषधीनाꣳ सुवर्णः । निष्का इमे यजमानस्य सन्तु कामदुघाः । अमुत्रामुष्मिँल्लोके" इति । हे दर्भाः 'अग्निं', 'परिस्तृणीत' परित आच्छादयत, 'परिधत्त' परितो धारयत, 'परिहितः' युष्माभिः परितो धारितः, 'अग्निः', 'यजमानं', 'भुनक्तु' पालयतु । अयं दर्भसमूहः 'अपां', 'रसः' सारभूतः, 'ओषधीनां', मध्ये 'सुवर्णः' शोभनवर्णोपेतः, 'इमे' दर्भाः, 'यजमानस्य', 'अमुत्र' परलोके, तत्रापि 'अमुष्मिन्' इन्द्रादिलोके, 'निष्काः' अलङ्कारभूताः, 'कामदुघाः', सन्तु ॥

(२) अथ ब्रह्मणो वरणे मन्त्रमाह । "भूपते भुवनपते । महतो भूतस्य पते । ब्रह्माणं त्वा वृणीमहे" इति । हे 'भूपते' भूमेः पालक, 'भुवनपते' अन्तरिक्षपालक, 'महतो भूतस्य पते' द्युलोकस्यापि पालक, 'त्वां वृणीमहे' ॥

(३) अथ वृतस्य ब्रह्मणो जप्यं मन्त्रमाह । "अहं भूपतिरहं भुवनपतिः । अहं महतो भूतस्य पतिः ॥ १ ॥ देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि । देव सवितरेतं त्वा वृणते । बृहस्पतिं दैव्यं ब्राह्मणम् । तदहं मनसे प्रब्रवीमि । मनो

गायत्रियै। गायत्री त्रिष्टुभे। त्रिष्टुब्जगत्यै। जगत्यनुष्टुभे। अनुष्टुप् पङ्क्त्यै। पङ्क्तिः प्रजापतये ॥ २ ॥ प्रजापतिर्विश्वेभ्यो देवेभ्यः। विश्वे देवा बृहस्पतये। बृहस्पतिर्ब्रह्मणे। ब्रह्म भूर्भुवः सुवः। बृहस्पतिर्देवानां ब्रह्मा। अहं मनुष्याणाम्। बृहस्पते यज्ञं गोपाय" इति। यजमानोक्तप्रकारेणाहं भूम्यादिलोकत्रयस्य पालकोऽस्मि तत्पालकदेवरूपेण भावितत्वात् तादृशोहं 'सवित्रा' प्रेरकेण देवेन, 'प्रसूतः' अनुज्ञातः सन्, 'आर्त्विज्यं करिष्यामि'। हे 'सवितर्देव', 'त्वां', एव 'एतं' ब्रह्माणं सर्व्वे यजमानाः 'वृणते'। कीदृशं त्वां, बृहस्पतिरूपेणावस्थितं 'दैव्यं' देवसम्बन्धिनं, 'ब्राह्मणं' ब्राह्मणजातिं, 'तत्' सर्व्वं वृत्तान्तजातम्, 'अहं', 'मनसे' मनोभिमानिने देवाय, 'प्रब्रवीमि', 'मनः', देवश्च 'गायत्रियै', देवतायै प्रब्रवीति, एवं गायत्र्यादयस्त्रिष्टुभादिभ्यो ब्रह्मपर्य्यन्तेभ्यो ब्रुवन्ति। तत्र 'ब्रह्मा', भूरादिलोकत्रयात्मकं 'देवानां', मध्ये 'बृहस्पतिः', एव 'ब्रह्मा', 'मनुष्याणां', मध्ये 'अहं', 'ब्रह्मा', हे 'बृहस्पते', 'यज्ञं', इमं 'गोपाय' रक्ष, अहमपि त्वत्प्रसादाद्रक्षामीत्यभिप्रायः ॥

(४) अथाग्निध्रेणाभिगृह्यमाणस्योत्करस्यानुमन्त्रणे मन्त्रमाह। "इदं तस्मै हर्म्यं करोमि। यो वो देवाश्चरति ब्रह्मचर्य्यम्। मेधावी दिक्षु मनसा तपस्वी ॥ ३ ॥ अन्तर्दूतश्चरति मानुषीषु" इति। हे 'देवाः', 'वः' युष्मानुद्दिश्य, 'ब्रह्मचर्य्यं', 'चरति' नियमं करोति, 'तस्मै' नियमवते, 'इदं' इदानीं,

'हर्म्यं' निवासस्थानं, 'करोमि'। स ब्रह्मचारी 'मेधावी' प्रज्ञा-वान्, 'तपस्वी' नित्यं तपोयुक्तः, 'मानुषीषु' मनुष्ययोग्यासु, 'दिक्षु', 'अन्तः' मध्ये, 'मनसा' विवेकेन युक्तः सन्, 'दूतश्चरति' हिताहितप्राप्तिपरिहारोपायज्ञो वर्त्तते॥

(५) अथ वेदेन सम्मृज्यमानाया वेदेरनुमन्त्रणे मन्त्रमाह। "चतुःशिखण्डा युवतिः सुपेशाः। घृतप्रतीका भुवनस्य मध्ये। मर्मृज्यमाना महते सौभगाय। मह्यं धुक्ष्व यजमानाय कामान्" इति। 'चतुःशिखण्डा' चतुर्भिर्भूषणस्थानीयैर्युक्ता, चतुष्कोणा वा, 'युवतिः' आकारेण युवतिसदृशी, यथा युवति-र्मध्ये सन्नततरा तथा वेदिरपि, अतएव 'सुपेशाः' शोभन-रूपयुक्ता, 'घृतप्रतीका' घृतोपक्रमा, तस्यां हि वेद्यां प्रथमं घृतं स्थाप्यते। सा च 'भुवनस्य' समस्तलोकस्य, 'मध्ये', यजमानस्य मम 'महते सौभगाय', 'मर्मृज्यमाना' वेदेन भृशं शोध्यमाना, वर्त्तते। तथाविधे हे वेदे 'यजमानाय मह्यं कामान्', 'धुक्ष्व' सम्पादय॥

(६) अथ क्रियमाणाया वेदेरनुमन्त्रणमाह। "भूमि-र्भूत्वा महिमानं पुपोष। ततो देवी वर्द्धयते पयांसि। यज्ञिया यज्ञं वि च यन्ति शस्त्र। ओषधीराप इह शक्करीश्च" इति। इयं वेदिः 'भूमिर्भूत्वा' सर्व्वत्र पृथिवीभावेन वर्त्तमाना, 'महिमानं' माहात्म्यं, 'पुपोष' पुष्णाति, तत इयं 'वेदिः' देविरूपा यागद्वारेण 'पयांसि' वृष्टिजलानि, 'वर्द्धयते', 'ततः' जलवृद्धेरूर्द्धं, 'यज्ञियाः' यज्ञसम्पादनार्हाः, 'ओषध्यः',

'आपः', 'शर्कर्याः' पशवश्च, 'इह' वेद्यां, 'यज्ञं', 'वियन्ति च' विविधं प्राप्नुवन्त्यपि, ततः 'शञ्च' सुखमपि, प्रयच्छन्तीति शेषः॥

(७) अथाह्रियमाणस्य सम्वयजुषोनुमन्त्रणे मन्त्रमाह। "यो मा हृदा मनसा यश्च वाचा ॥ ४ ॥ यो ब्रह्मणा कर्म्मणा द्वेष्टि देवाः। यः श्रुतेन हृदयेनेष्णता च। तस्येन्द्र वज्रेण शिरश्छिनद्मि" इति। हे देवाः 'यः' शत्रुः, मां 'हृदा' तात्पर्य्ययुक्तेन मनसा, 'द्वेष्टि'। 'यः', च 'वाचा' अधिक्षेपतया, 'द्वेष्टि', 'यः' च 'ब्रह्मणा' ब्रह्मवर्चसेन वेदाध्ययनादिना वा, 'कर्म्मणा' तपोदानेन वा, 'द्वेष्टि', मात्सर्य्यं करोति इत्यर्थः। 'यः', च 'श्रुतेन' बहुशास्त्रश्रवणेन, 'इष्णता' एषणशीलेन, इदं धनादिकं ममैव भूयादित्येवं रूपेण हृदयेन च द्वेष्टि, हे 'इन्द्र', 'तस्य' सर्व्वस्य शत्रोः, 'शिरः', त्वदीयेन वज्रेण स्फ्यरूपेण 'छिनद्मि' ॥

(८) अथ समास्तीर्णस्य वर्हिषोनुमन्त्रणे मन्त्रमाह। "ऊर्णाम्रदु प्रथमानꣳ स्योनम्। देवेभ्यो जुष्टꣳ सदनाय वर्हिः। सुवर्गे लोके यजमानꣳ हि धेहि। मां नाकस्य पृष्ठे परमे व्योमन्" इति। 'ऊर्णा' म्रदुकम्बलवन्मृदुस्वरूपं, 'प्रथमानं' विस्तारयुक्तं, 'स्योनं' सुखकरम्, इदं 'वर्हिः', 'सदनाय' उपवेशनाय, 'देवेभ्यो जुष्टं, देवानां प्रियं, हे तादृगवर्हे 'नाकस्य पृष्ठे' दुःखरहितस्य स्थानस्योपरिभागे, 'परमे' उत्कृष्टे, अतएव 'व्योमन्' विशेषेण रक्षके स्वर्गलोके, 'यजमानं मां', 'धेहि' स्थापय। 'हि' शब्दोऽवधारणे। सर्व्वथा स्थापयतु इत्यर्थः ॥

(८) अथ बर्हिषास्तीर्य्यमाणाया वेदेरनुमन्त्रणे मन्त्रमाह। "चतुःशिखण्डा युवतिः सुपेशाः। घृतप्रतीका वयुनानि वस्ते। सा स्तीर्य्यमाणा महते सौभगाय॥ ५॥ सा मे धुक्ष्व यजमानाय कामान्। शिवा च मे शग्मा चैधि। स्योना च मे सुषदा चैधि। ऊर्जस्वती च मे पयस्वती चैधि। इषमूर्ज्जं मे पिन्वस्व। ब्रह्म-तेजो मे पिन्वस्व। क्षत्रमोजो मे पिन्वस्व। विशं पुष्टिं मे पिन्वस्व। आयुरन्नाद्यं मे पिन्वस्व। प्रजां पशून् मे पिन्वस्व" इति॥ ६॥ घृतप्रतीकेत्यन्तं पूर्व्ववत् व्याख्येयं तादृशी वेदिः 'वयुनानि' कमनीयानि वर्हींषि 'वस्ते' वस्त्रवदाच्छादयति, 'सा' तादृशी वेदिः, यजमानस्य 'महते सौभगाय', वर्हिषा 'स्तीर्य्यमाणा', वर्त्तते। हे वेदे सा त्वं 'यजमानाय मे', 'का-मान्', 'धुक्ष्व' सम्पादय। किञ्च 'मे' मदर्थं, 'शिवा च' शान्तो-पद्रवा च, 'शग्मा' सर्व्वकार्य्यशक्ता च, 'एधि' भव। तथा 'स्योना च' सुखहेतुश्च, 'सुषदा च' सुष्ठु प्रवेशनयोग्या च, 'एधि'। तथा 'ऊर्ज्जस्वती' बलवती, 'पयस्वती' क्षीरादिमती, 'एधि'। तथा 'इषम्' अन्नम्, 'ऊर्जं' दुग्धादिरसञ्च, 'मे' मदर्थं, 'पिन्वस्व' बर्द्धय। 'ब्रह्म' अध्ययनादिसम्पत्तिं, 'तेजः' तन्नि-मित्तं कीर्त्तिञ्च, 'मे पिन्वस्व'। तथा 'क्षत्रं' बलं, 'ओजः' कान्तिं, 'मे' मदर्थं, 'पिन्वस्व'। 'विशं' प्रजां, 'शरीरपुष्टिं', च 'मे पिन्वस्व'। अथवा ब्रह्मक्षत्रविशो वर्णत्रययुक्ताः प्रजाः। 'आयुः' शतसंवत्सरोपेतं अन्नाद्यमन्नादनसामर्थ्यं, 'प्रजां' पुत्रा-दीन्, 'पशून्' गवादीन्॥

(१०) अथ परिधिषु परिधीयमानेष्वनुमन्त्रणे मन्त्रमाह। "अस्मिन् यज्ञ उप भूय इन्नु मे। अविक्षोभाय परिधीन्द-धामि। धर्त्ता धरुणो धरीयान्। अग्निर्द्वेषाꣳसि निरितो नुदाते" इति। 'अस्मिन् यज्ञे', 'भूय इन्नु' पुनः पुनरेवमेव, यजमानस्य 'अविक्षोभाय' चलनाभावाय, 'परिधीन्', 'उप-दधामि' समीपे स्थापयामि, ते च परिधयस्त्रयोपि धारणे शक्तियुक्ताः क्रमेण 'धर्त्तादि'शब्दैस्त्रिभिरुच्यन्ते, तैः परिधि-भिर्युक्तः 'अग्निः', 'द्वेषाꣳसि' द्वेष्याणि रक्षःप्रभृतीनि, 'इतः' यज्ञस्थानात्, 'निर्णुदाते' निष्कृत्य नाशयतु॥

(११) अथ वेदेर्मध्ये तिर्य्यक्त्वेन साद्यमानयोर्विधृत्याख्ययो-र्दर्भयोरनुमन्त्रणे मन्त्रमाह। "विच्छिनद्मि विधृतीभ्याꣳ स-पत्नान्। जातान् भ्रातृव्यान् ये च जनिष्यमाणाः। विशो यन्त्राभ्यां विधमाम्येनान्। अहꣳ स्वानामुत्तमोऽसानि देवाः विशो यन्त्रे नुदमाने अरातिम्। विश्वं पाप्मानममतिं दुर्म-रायुम्॥ ७॥ सीदन्ती देवी सुकृतस्य लोके। धृतीस्थो विधृती स्वधृती। प्राणान्मयि धारयतम्। प्रजां मयि धार-यतम्। पशून्मयि धारयतम्" इति। विविधं अतोऽवस्थितो बर्हिषः पृथक्त्वेन प्रस्तरो धार्य्यते आभ्यामिति 'विधृतीभ्यां', 'सपत्नान्' शत्रून्, 'विच्छिनद्मि' विनाशयामि। एवं सामान्ये-नोक्त्वा पुनर्विशेषेणोच्यते, 'जातान्' पूर्व्वमुत्पन्नान्, 'भ्रातृव्यान्', 'विच्छिनद्मि', 'यच्च' अन्ये 'जनिष्यमाणाः', भ्रातृव्याः, 'एनान्' भ्रातृव्यान्, 'विशः' प्रजयाः, 'यन्त्राभ्यां' नियमनसाधकाभ्यां,

दर्भाभ्यां,'विधमामि' विनाशयामि। प्रजानियमनहेतुत्वं विशो-यन्त्वेत्यस्य इत्यस्मिन्नपि मन्त्रे समाम्नातम्। हे 'देवाः','अहं','स्वानां' आत्मीयानां जनानां मध्ये, 'उत्तमोऽसानि' उत्कृष्टो भूयासं। 'विशोयन्त्रे' प्रजाया नियामिके, 'अरातिं' शत्रुं, 'नुदमाने' विनाशयन्त्यः, तथा 'विश्वं पाप्मानं' समस्तमपि पापं, 'अमतिं' रोगं, 'दुर्मरायुं' दुर्मरणहेतुञ्च, 'नुदमाने', 'सुकृतस्य लोके सीदन्ती', अस्मिं स्थाने तिष्ठन्त्यौ, 'देवी' द्योतनवत्यौ, तादृश्यौ 'हे 'विधृती', 'धृतीस्थः' सर्व्वस्य जगतो धारयित्र्यौ स्थः, 'स्व-धृती' स्वायत्तधारणशक्तियुक्ते स्थः, तादृश्यौ युवां 'मयि', 'प्राणान्', 'धारयतं' स्थापयतम्॥

(१२) अथ साद्यमानस्य प्रस्तरस्यानुमन्त्रणे मन्त्रमाह। "अयं प्रस्तर उभयस्य धर्त्ता। धर्त्ता प्रयाजानामुतानूयाजानाम्। स दाधार समिधो विश्वरूपाः। तस्मिन् स्रुचो अध्यासादयामि" इति। 'अयं' साद्यमानः प्रस्तराख्यो दर्भमुष्टिः, 'उभयस्य' जुहूपभृल्लक्षणस्य, 'धर्त्ता' धारयिता, 'उत' अपि च, प्रया-जार्थानामनूयाजार्थानां आज्यानां धारयिता अतएव प्रस्तरः। आज्यधारणद्वारा विश्वरूपयुक्ताः 'समिधः' समिदाद्याः प्रयाज-देवताः,'दाधार' धारयति, 'तस्मिन्' एवंविधे प्रस्तरे, 'स्रुचः' जुह्वादिकाः, 'अध्यासादयामि' उपरिस्थापयामि॥

(१३) अथ प्रस्तरे साद्यमानाया जुह्वाः अनुमन्त्रणे मन्त्र-माह। "आरोह पथो जुहु देवयानान्॥८॥ यत्रर्षयः प्रथमजाः ये पुराणाः। हिरण्यपक्षाजिरा सम्भृताङ्गा। वहासि

मा सुकृतां यत्र लोकाः” इति । हे ‘जुहु’, ‘देवयानान्’ देवानां गमनयोग्यान्,‘पथः’ मार्गान्,‘आरोह’,ये‘महर्षयः’।‘पुराणाः’ अनादिसिद्धा वसिष्ठादयः, ते ‘प्रथमजाः’ अस्मत्तः पूर्व्वजाः, ‘यत्र’ येषु कर्म्मानुष्ठानमार्गेषु, वर्त्तन्ते तानारोहेति पूर्व्वत्रान्वयः । ‘हिरण्यपक्षा’ हितरमणीयपार्श्वा, ‘अजिरा’ होमस्थाने गमनशीला, ‘सम्भृताङ्गा’ सम्पूर्णावयवा, ईदृशी त्वं ‘सुकृतां’ पुण्यवतां, ‘लोकः’ भोगभूमयः, ‘यत्र’, सन्ति, तत्र ‘मां’, ‘वहासि’ प्रापय ॥

(१४) अथ साद्यमानाया उपभृतोनुमन्त्रणे मन्त्रमाह । “अवाहं बाध उपभृता सपत्नान् । जातान् भ्रातृव्यान् ये च जनिष्यमाणाः । दोहै यज्ञꣳ सुदुघामिव धेनुम् । अहमुत्तरो भूयासम् । अधरे मत्सपत्नाः” इति । ‘अहम्’, अनया ‘उपभृता’, ‘सपत्नान्’, ‘अवबाधे’ विनाशयामि, जातानित्यादि पूर्व्ववत् । ‘सुदुघां’ सुष्ठुदोहनयोग्यां, ‘धेनुमिव’, ‘यज्ञं’, अहं ‘दोहै’ यज्ञसाधनभूताया उपभृतो दोहनं करवाणि, तज्जन्यं फलं सम्पादयामि इत्यर्थः । ततोऽहमितरेषु यजमानेषु ‘उत्तरः’ उत्कृष्टः, ‘भूयासं’ । ‘मत्सपत्नाः’, ‘अधरे’ निष्कृष्टाः, सन्तु ॥

(१५) अथ साद्यमानाया ध्रुवाया अनुमन्त्रणे मन्त्रमाह । “यो मे वाचा मनसा दुर्म्मरायुः । हृदारातीयादभिदासदग्ने ॥ ८ ॥ इदमस्य चित्तमधरं ध्रुवायाः । अहमुत्तरो भूयासम् । अधरे मत्सपत्नाः” इति । ‘यः’ शत्रुः, ‘वाचा’, ‘मनसा’,

च 'मे' मम, 'दुर्मरायुः' दुर्मरणमिच्छुः, 'हृदा' स्वकीयेन मनसा, 'अरातीयात्' शत्रुत्वमिच्छन्, हे 'अग्ने', 'अभिदासत्' अभितो हिंसां कुर्व्वत्, 'अस्य' शत्रोः, 'चित्तमिदं', 'भुवायाः', 'अधरं' अधस्तान् न्यग्भूतत्वेनावस्थितं, विनष्टप्रायमेव भवत्विति शेषः। अहमुत्तर इत्यादि पूर्व्ववत्॥

(१६) अथ जुह्वा दक्षिणभागे स्रुवस्य सादने मन्त्रमाह। "ऋषभोऽसि शाक्वरः। घृताचीनाᳪ सूनुः। प्रियेण नाम्ना प्रिये सदसि सीद" इति। हे स्रुव 'ऋषभः' श्रेष्ठः, 'शाक्वरः' शक्तियुक्तः, 'घृताचीनां' घृतप्राप्तियुक्तानां जुह्वादीनां, 'सूनुः' पुत्रस्थानीयश्च, 'असि', 'प्रियेण', 'नाम्ना', स्रुवाख्येन युक्तः, 'प्रिये सदसि' जुहूपार्श्वस्थाने, 'सीद'॥

(१७) अथ तस्य साद्यमानस्य स्रुवस्यानुमन्त्रणे मन्त्रमाह। "स्योनो मे सीद सुषदः पृथिव्यां। प्रथयि प्रजया पशुभिः सुवर्गे लोके। दिवि सीद पृथिव्यामन्तरिक्षे। अहमुत्तरो भूयासम्॥ १०॥ अधरे मत्सपत्नाः" इति। हे स्रुव 'सुषदः' सुखेन सादनीयस्त्वं, 'मे', 'स्योनः' सुखहेतुः, अत्रस्थाने 'सीद', अहमपि 'पृथिव्यां', 'प्रजया', 'पशुभिः', च 'प्रथयि' प्रथितः स्याम्, तथा 'सुवर्गे लोके', च प्रथितः स्यां, त्वं द्युलोकादिस्वरूप अस्मिंस्थाने सीद, अहमित्यादि पूर्व्ववत्॥

(१८) अथ साद्यमानाया आज्यस्थाल्या अनुमन्त्रणे मन्त्रमाह। "इयᳪ स्थाली घृतस्य पूर्णा। अच्छिन्नपयाः शतधार उत्सः। मारुतेन शर्म्मणा दैव्येन" इति। 'इयम्' आज्य'स्थाली',

'घृतस्य पूर्णा' घृतेन पूरिता, वर्त्तते। तत्र दृष्टान्तः, यथा 'उत्सः' प्रवाहः, तद्वत्। कीदृश उत्सः, 'दैव्येन शर्म्मणा' देवसम्बन्धिना सुखहेतुना, 'मारुतेन' वायुना, 'अच्छिन्नपयाः' अक्षीणोदकः, वर्षतो वायौ वाति सति प्रवाहजलमविच्छिन्नमुत्स्यन्दन्ते, अत एव 'शतधारः' अनेकधारायुक्तः ॥

(१६) अथासन्नस्य पुरोडाशस्याग्नेयस्याभिमर्शने मन्त्रमाह। "यज्ञोऽसि सर्व्वतः श्रितः। सर्व्वतो मां भूतं भविष्यच्छ्रयतां। शतं मे सन्त्वाशिषः। सहस्रं मे सन्तु सूनृताः। इरावतीः पशुमतीः। प्रजापतिरसि सर्व्वतः श्रितः॥११॥ सर्व्वतो मां भूतं भविष्यच्छ्रयतां। तशं मे सन्त्वाशिषः। सहस्रं मे सन्तु सूनृताः। इरावतीः पशुमतीः" इति। हे आग्नेय पुरोडाश त्वं, एव 'सर्व्वतः श्रितः' सर्व्वेणापि प्रकारेण सेवितः, 'यज्ञः' यज्ञहेतुरसि, अतस्तादृशेन त्वया सह येन 'मां', अपि 'भूतं भविष्यत्', च पुत्रपौत्रादिरूपं फलं 'श्रयतां' सेवतां। किञ्च 'मे' मम, 'आशिषः' प्रार्थनीयाः कामाः, 'शतं सन्तु' बहुतरा भवन्तु। तथा 'सूनृताः' प्रिया वाचः, मम 'सहस्र'-सङ्ख्याकाः सन्तु। कीदृश्यः, 'सूनृताः', 'इरावतीः' अन्नवत्यः, 'पशुमतीः' पशुमत्यः, पश्वन्नादेर्दातारं पुरुषं बहुधा स्तुवन्ति ताः प्रियवाचो भवन्ति। हे पुरोडाश त्वं वृष्ट्यादिना सर्व्वस्थितिहेतुत्वात् 'प्रजापतिः', एव 'असि'। सर्व्वतः श्रित इत्यादि पूर्व्ववत्॥

(२०) अथ पक्वे पयसि सादिते सत्यभिमर्शने मन्त्रमाह।

"इदमिन्द्रियममृतं वीर्य्यं। अनेनेन्द्राय पशवो चिकित्सन्। तेन देवा अवतोप माम्। इहेषमूर्जं यशः सह ओजः सनेयम्। शृतं मयि श्रयताम्" इति। 'इदं' चीरं, 'इन्द्रियं' इन्द्रियेण जुष्टं, 'अमृतं' यागसाधनत्वेन विनाशरहितं, 'वीर्यं' वीर्य्यप्रदं, 'अनेन' चीरेण, इन्द्रार्थं पशवो 'चिकित्सन्' आरोग्यमकुर्व्वन्। पशुभिः चीराख्ये हविषि सम्पादिते सति योऽयमिन्द्रस्य परितोषः सैवानिष्टस्य चिकित्सा। हे देवाः 'तेन' अनेन पयसा, 'इह' अस्मिन् कर्म्मणि, वर्त्तमानं मां 'उपावत' उपेत्य रचत, ततो युष्मत्प्रसादादहं 'ऊर्जं' चीरादिरसं,'यशः' कीर्त्तिः, 'सहः' बलं, 'ओजः' बलकारणधातुपोषं, च 'सनेयं' लभेयं, 'शृतं' च इदं चीरं, 'मयि श्रयतां' पुनः पुनर्मामेव भजतां॥

(२१) अथामन्त्रस्य दध्नोऽभिमर्शने मन्त्रमाह। "यत् पृथिवीमचरत् तत् प्रविष्टं॥१२॥ येनासिञ्चद्बलमिन्द्रे प्रजापतिः। इदं तच्छुक्रं मधु वाजिनीवत्। येनोपरिष्टादधिनोन्महेन्द्रं। दधि मां धिनोतु" इति। 'यत्' प्रसिद्धं दधि, 'पृथिवीं' सान्नाय्यकुम्भिरूपां, 'प्रविष्टं', सत् 'अचरत्' तत्रैवातस्थितमासीत्, 'येन' दध्ना, 'प्रजापतिः', 'इन्द्रे', 'बलं', 'असिञ्चत्' स्थापितवान्,'तत्' च प्रजापतिः, पशून् अब्रवीदेतदस्मै सन्नयतेत्यादि ब्राह्मणे स्पष्टमुक्तं। 'येन' दध्ना, 'उपरिष्टात्' शृतावस्थाया ऊर्द्ध्वं वर्त्तमानं, 'महेन्द्रदेवं', 'अधिनोत्' प्रजापतिरप्रीणयत्, तत् इदं दधि, 'शुक्रं' निर्म्मलं, 'मधुर'रसोपेतं, 'वाजिनीवत्'

विशिष्टगतिमत्, कर्म्मप्रवृत्तिकारणमित्यर्थः। तत् 'दधि', 'मां', अपि महेन्द्रमिव 'धिनोतु' प्रीणयतु॥

(२२) अथाग्रेणोत्तरेण वा ध्रुवां वेदस्य विधाने मन्त्रमाह। "अयं वेदः पृथिवीमन्वविन्दत्। गुहा सतीं गहने गह्वरेषु। स विन्दतु यजमानाय लोकम्। अच्छिद्रं यज्ञं भूरिकर्म्मा करोतु" इति। 'अयं वेदः', 'पृथिवीं', वेदरूपां असुरेभ्यः 'अन्वविन्दत्' अनुक्रमेण लभत। अतएव ब्राह्मणमाम्नायते, 'वेदेन वै देवा असुराणां वित्तम्' इत्यादि। कीदृशीं पृथिवीं, 'गुहा' गोप्यस्थाने, तत्रापि 'गहने' द्रष्टुमशक्ये स्थाने, तत्रापि 'गह्वरेषु' दुष्प्राप्येषु प्रदेशेषु, 'सतीं' वर्त्तमानां। तथाच ब्राह्मणमाम्नातं, 'वराहोऽयं वाममोषः सप्तानां गिरीणां परस्तात्' इत्यादि। 'सः' तादृशो वेदः, यजमानार्थं 'लोकं' स्थानविशेषं, 'विन्दतु' लभतां, तत् सिद्ध्यर्थं 'भूरिकर्म्मा' बहुव्यापारः, अयं वेदः 'यज्ञं', 'अच्छिद्रं' अविकलं, 'करोतु'॥

(२३) अथासन्नानां सर्व्वेषां हविषामभिमर्शने मन्त्रमाह। "अयं यज्ञः समसदद्धविष्मान्। ऋचा साम्ना यजुषा देवताभिः॥ १३॥ तेन लोकान्त्सूर्य्यवतो जयेम। इन्द्रस्य सख्यममृतत्वमश्यां" इति। 'अयं' प्रवर्त्तमानो 'यज्ञः', 'हविष्मान्' बहुभिर्हविर्भिर्युक्तः, ऋगादिमन्त्रैर्देवताभिश्च युक्तः, 'समसदत्' सम्यगिह सीदति। यद्यपि दर्शपूर्णमासयोर्नास्ति साम तथापि सामप्रतिनिधिरूपं अग्न आयाहीत्यादिमन्त्रजातं विद्यते। तथाच ब्राह्मणमाम्नातं, 'अग्न आयाहि वीतय इत्याह रथ-

न्तरस्येव वर्णः' इत्यादि । 'तेन' यज्ञेन, 'वयं' 'सूर्य्यवतः' सूर्य्य-किरणादपहततमस्कान्, 'लोकान्', 'जयेम' । तत 'इन्द्रस्य', 'सख्यं' सखिवत् स्नेहविषयत्वम्, 'अमृतत्वं' कर्म्मभोगानुरूपञ्च, 'अश्यां' व्याप्नुयाम् ॥

(२४) अथामन्नस्यैन्द्राग्नपुरोडाशस्याभिमन्त्रणे मन्त्रमाह । "यो नः कनीय इह कामयातै । अस्मिन् यज्ञे यजमानाय मह्यं । अप तमिन्द्राग्नी भुवनां नुदेताम् । अहं प्रजां वीरवतीं विदेय" इति । 'यः' शत्रुः, 'नः' अस्मदीये, 'इह' कर्म्मणि, 'कनीयं' अतिशये नीचे, अनुष्ठानवैकल्यं, 'कामयातै' कामयेत, तथा 'अस्मिन्' 'यज्ञे', वर्त्तमानाय 'मह्यं', च फलाघातं कामयत 'तं' शत्रुं, 'इन्द्राग्नी', देवौ 'भुवनात्' सर्व्वलोकात्, 'अपनुदेतां' । तयोः प्रसादात् 'अहं', 'वीरवतीं' वीरैर्भृत्यैर्युक्तां 'प्रजां' पुत्रादिरूपां, 'विदेय' लभेयं ॥

(२५) अथाग्नीध्रस्येधामन्नदहनैरग्निसम्मार्गे मन्त्रमाह । "अग्निं वाजजित् । वाजं त्वा सरिष्यन्तं । वाजं जेष्यन्तं । वाजिनं वाजजितम् ॥ १४॥ वाजजित्यायै सम्मार्ज्मि । अग्निमन्नादमन्नाद्याय" इति । हे 'अग्ने', 'वाजजित्' वाजस्यान्नस्य जेतः, त्वां, 'वाजजित्यायै' अन्नजयार्थं, 'सम्मार्ज्मि' दर्भैः सम्यक् शोधयामि । कीदृशं त्वां, 'वाजं' अन्नम्, उद्दिश्य 'सरिष्यन्तं' प्रवर्त्तिष्यमाणं, तथा वाजमन्नमुद्दिश्य शत्रून् 'जेष्यन्तं', जित्वा च 'वाजिनं' वक्तव्युक्तं, 'वाजजितं' अनेन प्रकारेण सर्व्वस्यान्नस्य जेतारं, किञ्च 'अन्नाद्याय' अन्नभक्षणसामर्थ्याय, 'अन्नादम्' अन्नभक्षण-समर्थम्, 'अग्निं', 'सम्मार्ज्मि' ॥

(२६) अथाग्नीध्रभागस्य विशेषे व्यूहने मन्त्रमाह। "उप-ह्वतो द्यौः पिता। उप मां द्यौः पिताह्वयतां। अग्निराग्नी-ध्रात्। आयुषे.वर्चसे। जीवात्वै पुण्याय। उपह्वता पृथिवी माता। उप मां माता पृथिवी ह्वयतां। अग्निराग्नीध्रात्॥१५॥ आयुषे वर्चसे। जीवात्वै पुण्याय" इति। 'द्यौः पिता' द्युलोक-देवोऽस्मत्पितृस्थानीयः, 'उपह्वतः' अनुज्ञातः, सोपि द्युलो-काख्यः 'पिता', 'मां', 'उपह्वयतां' अनुजानातु, तथैव 'अग्निः', स्वमुपह्वतो अप्युपह्वयतां। कुतो हेतोः; 'आग्नीध्रात्' आग्नीध्र-भागनिमित्तं, तदपि किमर्थं, अस्माकं 'आयुषे' चिरजीव-नाय, 'वर्चसे' बलाय, 'जीवात्वै' जीवनौषधाय, 'पुण्याय' सुकृतसिद्धये, च एवमियं पृथिवी देवता मातृस्थानीयोपह्वता उपमामित्यादि पूर्व्ववत्॥

(२७) अथेडाभक्षणाङ्गमार्ज्जने मन्त्रमाह। "मनो ज्योति-र्जुषतामाज्यं विच्छिन्नं यज्ञ१ समिमं दधातु। बृहस्पतिस्तनु-तामिमन्नः। विश्वे देवा इह मादयन्ताम्" इति। 'मनोऽभि-मानी देवो 'ज्योतिः'प्रकाशात्मकमिदम् 'आज्यं', 'जुषतां'। 'विच्छिन्नं' केनापि वैकल्येन युक्तम्, 'इमं यज्ञं', 'सन्दधातु' वैकल्यरहितं करोतु। 'बृहस्पतिः', देवः 'नः' अस्माकम्, 'इमं' वैकल्यपरिहारं, 'तनुतां' कुरुतां। 'विश्वे देवाः', च 'इह' कर्मणि, 'मादयन्तां' अस्मिन् हर्षयन्तु॥

(२८) अथ समिध्यानूयाजिक्यां आहितायां अग्न्यभिमन्त्र-णे मन्त्रमाह। "यं ते अग्न आवृश्चामि। अहं वाचिपितस्चरन्।

प्रजाञ्च तस्य मूलञ्च । नीचैर्देवा निवृश्चत ॥१६॥ अग्ने यो नोऽभिदासति । समानो यश्च निष्ट्यः । इध्मस्येव प्रक्षायतः । मा तस्योच्छेषि किञ्चन । यो मां द्वेष्टि जातवेदः । यञ्चाहं द्वेष्मि यश्च मां । सर्व्वाꣳस्तानग्ने सन्दह । याꣳश्चाहं द्वेष्मि ये च माम्" इति । हे 'अग्ने', 'ते' त्वदीयः, 'अहं', 'यं' रिपुं, 'आवृश्चामि' सर्व्वतो नाशयितुं प्रवृत्तोऽस्मि, हे 'पितः' पालकाग्ने, 'चरन्' त्वां परिचरन्, 'अहं', वातेन रिपुगणा 'चिपितः' चयं नेतुं विक्रियाकृतोऽस्मि, 'तस्य' दुरात्मनः, 'प्रजां' पुत्रादिकां, 'मूलं' जीवनहेतुं, धनं च, हे 'देवाः', सन्निहिताः 'नीचैर्निवृश्चत' न्यग्भूतं यथा भवति तथा नाशयत, हे 'अग्ने', 'यः' प्रबलः शत्रुः, 'नः' अस्मान्, 'अभिदासति' हिनस्ति, 'यश्च' अन्यः समानबलः, 'निष्ट्यः' नित्यं शत्रुत्वेनावस्थितः, हिनस्ति 'तस्य' द्विविधस्य शत्रोः, सम्बन्धि द्रव्यं 'किञ्चन' किमपि, 'मोच्छेषि' अवशिष्टं मा कुरु । तत्र दृष्टान्तः, 'इध्मस्येव प्रक्षायतः' यथा अग्नौ प्रक्षिप्तप्रदाहेन क्षीयमाणस्य न कोऽप्यंशोऽवशिष्यते तद्वत्, हे 'जातवेदः', 'यः' शत्रुः, मां 'द्वेष्टि', 'अहञ्च', 'यं', 'द्वेष्मि'। द्विविधो द्वेषः, प्रत्यक्षः परोक्षश्च, न तु प्रत्यक्ष उभयकर्तृको द्वेष उदाहृतः परोक्षमुभयकर्तृकं द्वेषं सूचयितुं यश्च मामिति पुनरुक्तं । एवञ्च सति द्वेष्यो द्वेष्टा च द्वौ च परोक्षौ 'तान्' चतुर्विधान्, 'सर्व्वान्', हे 'अग्ने', 'सन्दह' सम्यग् भस्मीकुरु । यौ मुख्यौ द्वेष्यद्वेष्टारौ तद्द्वारा तदीया अन्येपि द्वेष्या द्वेष्टारश्च ये सन्ति तान् सङ्ग्रहीतुं यामिति पुनरुक्तिः, तान् सर्व्वान् सन्दहेति पूर्व्वत्रान्वयः ॥

(२९) अस्मिन् कर्म्मणि द्वावग्निसम्मार्गौ, स्रुच्याघारात् पूर्व्वमेकः सम्मार्गः तत्र मन्त्रः पूर्व्वमभिहितः, अनूयाजसमिदाधानादूर्द्धं द्वितीयः सम्मार्गः। तत्राह। "अग्ने वाजजित्। वाजं त्वा सरिष्यन्तं। वाजं जेष्यन्तं॥ १७॥ वाजं जिगिवाꣳसं। वाजिनं वाजजितं। वाजजित्यायै सम्मार्ज्मि। अग्निमन्नादमन्नाद्याय" इति। पूर्व्ववद्व्याख्येयं। तत्र कार्य्यस्य निष्पत्स्यमानत्वात् सरिष्यन्तमित्युक्तत्वादत्र निष्पन्नत्वात् ससृवांसमिति विशेषः॥

(३०) अथ कृतानामग्निसम्मार्गाणां दर्भाणामभिमन्त्रणे मन्त्रमाह। "वेदिर्बर्हिः श्रितꣳ हविः। इध्मः परिधयः स्रुचः। आज्यं यज्ञ ऋचो यजुः। याज्याश्च वषट्काराः। सं मे सन्नतयो नमन्तां। इध्मसन्नहने हुते" ॥१८॥ इति। 'श्रितं' आसादितं, हविर्वेद्यादयो वषट्कारान्ताः सर्व्वे 'सन्नतयः' सन्नमनशीलाः सन्तः, 'मे' मदर्थं, 'सन्नमन्तां' पुनः पुनर्विधेयाः भूयो वर्त्तन्तां। कस्मिन् काल इति तदुच्यते, 'इध्मसन्नहने' इध्मबन्धनहेतौ दर्भे 'हुते', सति सन्नमन्तामित्यन्वयः॥

(३१) अथ यत् प्रस्तरात्तृणमपात्तं तस्मिन्नग्नौ प्रह्रियमाणे सति जप्यं मन्त्रमाह। "दिवः खीलोऽवततः। पृथिव्या अध्युत्थितः। तेनासहस्रकाण्डेन। द्विषन्तꣳ शोचयामसि। द्विषन्मे बहुशोचतु। ओषधे मो अहꣳ शुचं" इति। हे प्रस्तरतृण त्वं 'दिवः' द्युलोकात्, 'अवततः' अधस्तात् प्रसारितः, 'पृथिव्याः', 'अधि' उपरि, 'उत्थितः' ऊर्द्धत्वेन स्थापितः, 'खीलः' स्तम्भः, लोकद्वयधारणहेतुस्तम्भोऽसीत्यर्थः। 'तेन' त्वया, 'सहस्र-

काण्डेन' बहुप्रकारेण, 'द्विषन्तं शोचयामसि' शत्रुं शोकयुक्तं कुरु। तथा 'मे', 'द्विषन्' शत्रुः, 'बहुशोचतु' अधिकं शोकयुक्तो भवतु। हे 'ओषधे' दर्भ, 'अहं', त्वत्प्रसादात् 'मा शुचं' शोकं मा प्राप्नवानि॥

(३२) अथानूच्यमानस्य शंयुवाकस्यानुमन्त्रणे मन्त्रमाह। "यज्ञ नमस्ते यज्ञ। नमो नमश्च ते यज्ञ। शिवेन मे सन्तिष्ठस्व। स्योनेन मे सन्तिष्ठस्व॥१८॥ सुभूतेन मे सन्तिष्ठस्व। ब्रह्मवर्चसेन मे सन्तिष्ठस्व। यज्ञस्यर्द्धिमनु सन्तिष्ठस्व। उप ते यज्ञ नमः। उप ते नमः। उप ते नमः" इति। हे 'यज्ञ' शंयुवाकरूपयज्ञाङ्ग, 'ते', 'नमः', अस्तु। किञ्च हे 'यज्ञ', 'ते', 'नमो नमः' पुनः पुनर्नमस्कारोऽस्तु। आदरातिशयद्योतनार्थमेवमभिधानम्। हे 'यज्ञ', 'मे', 'शिवेन' सर्व्वोपद्रवोपशमनरूपेण, 'सन्तिष्ठस्व' समाप्तिं गच्छ, तथा 'स्योनेन' सुखप्राप्तिरूपेण, 'सुभूतेन' सुष्ठु निष्पन्नत्वाकारेण, 'ब्रह्मवर्चसेन' मन्त्रबलेन च, 'सन्तिष्ठस्व'। तथा 'यज्ञस्य' यजमानस्य, 'ऋद्धिं' फलम्, 'अनु'लक्षीकृत्य, 'सन्तिष्ठस्व'। हे 'यज्ञ', 'ते' तव, 'उप' समीपे, 'नमः' अस्तु। अभिधानमत्यादरार्थम्॥

(३३) अथ तण्डुलप्रक्षालनजलस्योत्करदेशे निनयनाय मन्त्रमाह। "निष्फलीक्रियमाणानाम्। योन्यङ्गो अवशिष्यते। रक्षसां भागधेयं। आपस्तत्प्रवहतादितः"॥१०॥ इति। तण्डुलानां कणादिनिरसनेन शोधनं फलीकरणं, तन्निवारं कर्त्तव्यम्। तथा क्रियमाणानां तण्डुलानां सम्बन्धी 'न्यङ्गः' नि-

क्लष्टांशः कणादिरूपः, 'यः', स्वल्पः, 'अवशिष्यते', 'रचसां भागधेयं', 'तत्' कणादिरूपमङ्गं, हे 'आपः', 'इतः' अस्मात् स्थानात्, 'प्रवहतात्' प्रकर्षेणान्यत्र नयत ॥

(३४) अथान्वाहार्य्यपचने पिष्टलेपस्य होमे मन्त्रमाह। "उलूखले मुसले यच्च शूर्पे। आशिश्लेष दृषदि यत् कपाले। अवप्रुषो विप्रुषः संयजामि। विश्वे देवा हविरिदं जुषन्तां। यज्ञे या विप्रुषः सन्ति बह्वीः। अग्नौ ताः सर्व्वाः स्विष्टाः सुहुता जुहोमि" इति। उलूखलादौ कपालान्ते द्रव्ये 'यद्यत्' पिष्टं, 'आशिश्लेष' आश्लिष्टमभूत्, ते सर्व्वे पिष्टांशाः 'अवप्रुषः' प्रधानाहुतावनुपयुक्ताः, 'विप्रुषः' लेपाः, तान् सर्व्वान् 'संयजामि' सम्भूय वह्नौ प्रक्षिपामि। 'इदं हविः', 'विश्वे देवाः', सेवन्तां। किञ्च अस्मिन् 'यज्ञे', उलूखलादावनाश्लिष्टाः 'विप्रुषः', 'याः', 'बह्व्यः', 'सन्ति', 'ताः सर्व्वाः', अपि 'अग्नौ', एव 'स्विष्टाः' सुष्ठु देवतोद्देशेन त्यक्ताः, 'सुहुताः' सुष्ठुप्रक्षिप्ताश्च यथा भवन्ति तथा 'जुहोमि'॥

(३५) अथादित्योपस्थानार्थाः षण्मन्त्राः, तत्र प्रथममाह। "उद्यन्नद्यमित्रमहः। सपत्नान् मे अनीनशः। दिवैनान् विद्युता जहि। निम्रोचन्नधरान् कृधि" ॥ २१ ॥ इति। हे 'मित्रमहः' अनुकूलतेजोयुक्तादित्य, त्वं 'उद्यन्' उदयं गच्छन्, 'अद्य' एवाह्नि, 'मे', 'सपत्नान्' शत्रून्, 'अनीनशः' नाशयत। तत्प्रकारमुच्यते, 'दिवा', 'विद्युता' विद्योतमानया तीक्ष्णया भासा, 'एनान्' शत्रून्, 'जहि' नाशय। अथ 'निम्रोचन्' अस्तं

गच्छन्, 'अधरान्' निकृष्टान्, 'कृधि' कुरु, रात्रौ तमसैव पीडितान् कुरु ॥

(३६) अथ द्वितीयमाह । "उद्यन्नद्य वि नो भज । पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेशिषे । तस्य नो देहि सूर्य्य" इति । हे 'सूर्य्य', 'अद्य' अस्मिन्नेवाह्नि, 'उद्यन्', त्वं 'नः' अस्मभ्यं, 'विभज' धनादिकं पृथक् पृथग्देहि । तत्र दृष्टान्तः, 'यथा', लोके 'पिता', 'पुत्रेभ्यः', विभज्य ददाति, तद्वत् । किञ्च 'दीर्घायुत्वस्य', 'हेशिषे' समर्थोऽसि, 'नः' अस्मभ्यं, 'तस्य' तद्दीर्घायुष्टं, 'देहि' ॥

(३७) अथ तृतीयमाह । "उद्यन्नद्य मित्रमहः । आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य्य । हरिमाणञ्च नाशय" इति । 'मित्रमहः' अनुकूलतेजायुक्त हे सूर्य्य, 'अद्य' अस्मिन्दिने, 'उद्यन्' उदयं इच्छन्, 'उत्तरां' अतिशयेनोत्कृष्टां, 'दिवं', 'आरोहन्', 'मम', 'हृद्रोगं' मानसीं पीडां, 'हरिमाणञ्च' हरितता शोकप्रभवं वैवर्ण्यं, व्याधिप्रभवं विरूपत्वञ्च, 'नाशय' ॥

(३८) अथ चतुर्थमाह । "शुकेषु मे हरिमाणम् । रोपणाकासु दध्मसि ॥ २१ ॥ अथो हारिद्रवेषु मे । हरिमाणं निदध्मसि" इति । 'मे' मदीयं, 'हरिमाणं' हरितवर्णं, 'शुकेषु' पक्षिविशेषेषु, तत्रापि 'रोपणाकासु' स्त्रीजातिषु, 'दध्मसि' स्थापयामः । ते हि हरिमाणं प्रार्थयन्ते । 'अथो' अपि च, 'हारिद्रवेषु' हरितालद्रुमेषु, 'मे' मम, 'हरिमाणं', 'निदध्मसि' नितरां स्थापयामः ॥

(३९) अथ पञ्चममाह। "उद्गादयमादित्यः। विश्वेन सहसा सह। द्विषन्तं मम रन्धयन्। मो अहं द्विषते रधम्" इति। 'अयमादित्यः', 'विश्वेन सहसा' सर्व्वेणापि बलेन, 'सह', 'उद्गात्' उदयं प्राप्तवान्। किं कुर्व्वन्, 'मम', 'द्विषन्तं' शत्रुं, 'रन्धयन्' हिंसयन्, यस्मादयमेव कुर्व्वन्नुदेति तस्मादस्य प्रसादात् 'अहं', 'द्विषतः', सकाशात् 'मोरधं' मैव हिंसां प्राप्नवानि ॥

(४०) अथ षष्ठमाह। "यो नः शपादशपतः। यश्च नः शपतः शपात् उषाश्च तस्मै निम्रुक्त। सर्व्वं पापꣳ समूहताम्" इति। 'अशपतः' अनाक्रोशतः, 'नः' अस्मान्, 'यः' शत्रुः, 'शपात्' शपति, अधिक्षिपति, 'यश्च' अन्यः शत्रुः, 'शपतः' अधिक्षिपतः, 'नः' अस्मान्, 'शपात्' प्रत्यधिक्षिपति, 'तस्मै' तदर्थं, तस्मिन्नवस्थापयितुं, 'उषाश्च' 'निम्रुक्त' उदयास्तमयदेवौ, अहोरात्रदेवौ 'सर्व्वं पापम्' अस्मदीयं पापसमूहं, 'समूहतां' सङ्घतं कृत्वा स्वस्मिन्नेव स्थापयतां ॥

(४१) अथ समिद्धो अग्न इत्युपसमिन्धनादूर्द्धं आहवनीयस्योपस्थाने मन्त्रमाह। "यो नः सपत्नो यो रणः। मर्त्तोऽभिदासति देवाः। इध्मस्येव प्रक्षायतः। मा तस्योच्छेषि किञ्चन" इति। हे 'देवाः', 'यो मर्तः' मनुष्यः, 'नः' अस्माकं, 'सपत्नः' शत्रुः सन्, अनर्थं चिन्तयति, 'यः', च अस्माभिः सह 'रणः' युद्धकारी सन्, 'अभिदासति' उपक्षपयति, 'तस्य' उभयविधस्य सम्बन्धि, 'किञ्चन' धनादिकं, 'मोच्छेषि' अव-

शिष्टं माकुरुत, किन्तु सर्वं विनाशय। यथा 'प्रचायतः' प्रकर्षेण चीयमाणस्य, दह्यमानस्य, 'इध्मस्य' काष्ठस्य, न कोऽप्यंशोऽवशिष्यते, तद्वत्॥

(४२) अथाभिचरदुपवेषोद्दासने विकल्पितं मन्त्रमाह। "अपसृष्टः परापत। शरो ब्रह्मसꣳशितः। गच्छामित्रान् प्रविश। मैषां कञ्चनोच्छिष" ॥ २३ ॥ इति। हे उपवेष, 'अवसृष्टः' मयाक्षिप्तः, 'परापत' अपुनरावृत्तो भव, 'शरः' वाणः, हिंसकः, त्वं 'ब्रह्मसꣳशितः' मन्त्रेण तीक्ष्णीकृतः सन्, एतत्स्थानात् 'गच्छ'। गत्वा च 'अमित्रान्' शत्रून्, 'प्रविश'। प्रविश्य च 'एषां' अमित्राणां, सम्बन्धि किञ्चिदपि गृहादिकं 'मोच्छिषः' अवशिष्टं माकार्षीः॥

अत्र विनियोगसङ्ग्रहः।

'परि'(१) दोहौ परिप्रैषो 'भूपते'(२) ब्रह्मणो वृतिः।
'अहं'(३) वृतोजपेद्धोदं(*४) उत्करं त्वनुमन्त्रयेत्॥
'चतुस्'(५) तु वेदिसंस्पृष्टं 'भूमिः'(६) वेदिकृतिं तथा।
'योमाः'(७) तम्ब यजुस्त्वर्णा(†८) वर्हिर्वेद्यास्तृतिं 'चतुः'(९) ॥
'अस्मिन्'(१०) तु परिधीन् 'विच्छि'(११) विधृतो प्रस्तरं 'त्वयं'(‡१२)।
जुह्वपभृद्ध्रुवास्त्वाचो तिसृभिः(१३-१५) 'ऋषभः'(१६-१७) स्रुवम्॥
'इयं'(१८) स्थाली पुरोडाशं यज्ञोऽसौ(||१९) त्यभिसंस्पृशेत्।

---

* 'इदम्' इति प्रतीकम्।
† 'ऊर्णा' इति प्रतीकम्।
‡ 'अयं' इति प्रतीकम्।
|| 'यज्ञोसि' इति प्रतीकम्।

'इदं'(२०)त्वीरं 'यत्'(२१)दध्ययं (*२२) वेदं निदधाति हि ॥
'अयं'(२३) सर्व्वहविस्सर्गो 'योन'(२४) ऐन्द्राग्नमर्शनम्।
'अग्ने'(२५)ऽग्निं मार्ष्टि 'रोपा'(?+२६)ग्नीध्रभागमपसारयत् ॥
'मनो' (२७)ऽद्भिर्मार्ज्जयेद् 'यन्ते'(२८) समिद्धाग्न्यभिमन्त्रणम्।
'अग्ने'(२९)ऽग्निं मार्ष्टि'वेदिम्'(३०) तु जपेत् संमार्गकाहुतिं ॥
'दिवः'(३१) प्रस्तरसंहारं 'यज्ञ'(३२) तं शंयुवाककं।
'त्रिम्'(३३) तण्डुलचालनन्तु निनयेदुत्करे त्विलू(‡३४) ॥
पिष्टलेपाहुतिश्चोद्यन्(॥३९-४०) आदित्यमुपतिष्ठते।
'यो नः'(४१) पूर्व्वाग्न्युपस्थानमुपवेषं त्यजेद् 'अप'(४२) ॥

इति षष्ठोऽनुवाकः।

---

अथ सप्तमोऽनुवाकः।

(१) चतुर्थपञ्चमषष्ठेष्वनुवाकेषु दर्शपूर्णमासेष्टिशेषा मन्त्रा उक्ताः। तेषु मन्त्रेषु याजमानत्वादिविभागः कल्पसूत्रादव-गन्तव्यः। उत्तरेष्वनुवाकेषु सोमाङ्गभूता मन्त्रा उच्यन्ते। तत्राऽस्मिन्ननुवाके दीक्षाङ्गमन्त्राः। आदौ तावद्देव यजनार्थं दैवतोपस्थानमुच्यते। यदुक्तं सूत्रकारेण, 'अपि वा न देव यजनया चेद्देवता एवोपतिष्ठेतेति'। तत्रोपस्थाने मन्त्रमाह।

---

* 'अयं' इति प्रतीकम्।
† 'उप' इति प्रतीकम्।
‡ 'उलू' इति प्रतीकम्।
॥ 'उद्यन्' इति प्रतीकम्।

"*मन्वेदं पश्य। विधर्त्तरिदं पश्य। नाकेदं पश्य। रमतिः पनिष्ठा। ऋतं वर्षिष्ठं। अमृता यान्याहुः। सूर्य्यो वरिष्ठो अक्षभिर्विभाति। अनु द्यावापृथिवी देवपुत्रे" इति। हे 'मन्व' महनशील, शत्रूणामभिभावकाग्ने, 'इदं' देवयजनं, 'पश्य' अनुजानीहि। हे 'विधर्त्तः' सर्व्वस्य विविधं धारक वायो, त्वमपि 'इदं पश्य'। हे 'नाक' सुखैकस्थानस्थितादित्य, त्वमपि 'इदं पश्य'। इयं च देवयजनभूमिः 'रमतिः' 'पनिष्ठा' चास्तु रमन्तेऽस्यां देवपितृमनुष्या इति 'रमतिः', अतिशयेन व्यवहारयोग्या, 'पनिष्ठा', 'ऋतं' यज्ञं, 'वर्षिष्ठं' प्रवृद्धतमं, भवतु। 'यानि' चान्यानि प्राग्वंशसदोहविर्धानादीनि, अपेक्षितानीति 'आहुः', तान्यपि 'अमृताः' अमृतत्वस्य फलस्य साधनानि,सन्तु, 'वरिष्ठः'अत्युत्तमः,'सूर्य्यः',च'अक्षभिः' अक्षिस्थानीयैरश्मिभिः, 'विभाति' विविधं प्रकाशते, देवाः पुत्रा ययोस्ते 'देवपुत्रे', तादृशौ 'द्यावापृथिव्यौ', अपि अनुकूले भवतां॥

(२) यदुक्तं सूत्रकारेण, 'अथास्मै चौमसहतं सहदामः प्रयच्छति तत्परिगृह्णाति' इति। तत्र प्रतिग्रहे मन्त्रमाह। "दीक्षासि तपसो योनिः। तपोऽसि ब्रह्मणो योनिः॥१॥ ब्रह्मासि क्षत्रस्य योनिः। क्षत्रमस्यृतस्य योनिः। ऋतमसि भूरारभे। श्रद्धां मनसा। दीक्षां तपसा। विश्वस्य भुवनस्या-

* अनुवाकप्रारम्भे 'परिकृणोत भुवनस्य मध्य मह्यं धुक्ष्व भुवनानि वस्ते सामे धुक्ष्व' इति पाठः मूले वर्त्तते। एतद्भाष्ये एतदनुवाकविनियोगसङ्ग्रहे च नैष दृश्यते। E चिह्नितपुस्तके 'मन्वेदं पश्यति' पाठोपि न वर्त्तते।

धिपत्नीं। सर्व्वे कामा यजमानस्य सन्तु" इति। हे सोम 'दीक्षासि' त्वं दीक्षासाधनमसि, 'तपसः' एकस्नानादिनियम-रूपस्य, 'योनिः' कारणम्, असि। तच्च 'तपः', त्वमेव 'असि', तस्यापि कारणत्वात्। 'ब्रह्मणः' ब्रह्मवर्चसस्य 'योनिः' कारणम्, असि। कारणत्वादेव तच्च 'ब्रह्म', त्वमेव 'असि'। 'क्षत्रस्य' बलस्य, 'योनिः', असि। अतएव तदपि 'क्षत्रं', त्वमेव 'असि'। 'ऋतस्य' यज्ञस्य, 'योनिः', असि। अत-एव तदपि 'ऋतं', त्वमेव 'असि'। 'भूः' यज्ञद्वारा सर्व्वस्य भावयिता, अहं 'मनसा', सह 'श्रद्धां' कर्म्मानुष्ठाने विश्वासम्, 'आरभे'। तथा 'तपसा', सह 'दीक्षां' नियमविशेषम्, 'आरभे'। कीदृशीं दीक्षां, 'विश्वस्य भुवनस्य' सर्व्वस्य भूतजा-तस्य, 'अधिपत्नीं' यज्ञद्वारेणाधिकं पालयित्रीं, ततश्च 'यज-मानस्य', 'सर्व्वे कामाः', 'सन्तु' सम्पद्यन्तां॥

(१) यदुक्तं सूत्रकारेण, 'पूर्णाहुतिꣳ हूयमानामनुमन्त्रयत' इति। तत्र मन्त्रमाह। "वातं प्राणं मनसान्वारभामहे। प्रजापतिं यो भुवनस्य गोपाः। स नो मृत्योस्त्रायतां पा-त्वꣳहसः॥ २॥ ज्योगजीवाजरामशीमहि" इति। 'यः' प्रजा-पतिः, 'भुवनस्य', 'गोपाः' रक्षकः, 'प्रजापतिं', 'वातं' देहा-द्बहिर्वायुरूपं, देहस्यान्तः 'प्राण'रूपं, 'मनसा', भक्तियुक्तेन 'अन्वारभामहे' अनुक्रमेण परिगृह्णीमः। 'सः' प्रजापतिः, 'नः' अस्मान्, 'अपमृत्योस्त्रायतां', 'अंहसः' पापाच्च, 'पातु'। 'ज्योग्-जीवाः' चिरकालं जीवन्तः, 'जरामशीमहि' स्थविरत्वं प्राप्नुमः॥

(४) अथ कृष्णाजिनस्य चतुर्दिक्षु मध्ये च स्पर्शे मन्त्रमाह। "इन्द्रशाक्वर गायत्रीं प्रपद्ये। तां ते युनज्मि। इन्द्रशाक्वर त्रिष्टुभं प्रपद्ये। तां ते युनज्मि। इन्द्रशाक्वर जगतीं प्रपद्ये। तां ते युनज्मि। इन्द्रशाक्वरानुष्टुभं प्रपद्ये। तां ते युनज्मि। इन्द्रशाक्वर पङ्क्तिं प्रपद्ये॥ ३॥ तां ते युनज्मि" इति। हे 'इन्द्रशाक्वर' शक्वरीच्छन्दः स्वामिन्, शक्तिमत्वात् त्वदनुज्ञया 'गायत्रीं', देवीं 'प्रपद्ये' प्राप्नोमि। 'ते' त्वदीयां, 'तां' गायत्रीं, 'युनज्मि' अस्मिन् कर्म्मणि युक्तां करोमि। एवमुत्तरत्रापि योज्यम्॥

(५) अथ कृष्णाजिनमारूढस्य जप्यं मन्त्रमाह। "आहं दीक्षामरुहमृतस्य पत्नीम्। गायत्रेण छन्दसा ब्रह्मणा च। ऋतꣳ सत्ये धायि। सत्यमृते धायि। ऋतञ्च मे सत्यञ्चाभूताम्। ज्योतिरभूवꣳ सुवरगमम्। सुवर्गं लोकं नाकस्य पृष्ठम्। ब्रध्नस्य विष्टपमगमम्" इति। 'ऋतस्य' यज्ञस्य, 'पत्नीं' पालयित्रीं, 'दीक्षाम्', 'अहम्', 'आरुहं' आरूढोऽस्मि। कीदृशोऽहं, 'गायत्रेण', 'छन्दसा' छन्दोभिमानिदेवेन, 'ब्रह्मणा' मन्त्रेण वा, अनुगृहीतः तादृशस्य मम 'ऋतं', 'सत्ये', स्थापितं 'सत्यम्', 'ऋते', स्थापितं। मानसम् 'ऋतं'। वाचिकं 'सत्यं'। 'ऋतञ्च सत्यञ्च', इत्येतदुभयं 'मे' मम, 'अभूतां' सर्व्वदा मयि वर्त्ततां। तथा सत्यहं 'ज्योतिरभूव' परं ज्योतिरेव सम्पत्स्ये। ततश्च 'सुवः' स्वर्गं, 'अगमं' गमिष्यामि। ततश्च सर्व्वमपि स्वर्गाख्यं 'लोकं', गमिष्यामि। ततः 'नाकस्य' अविद्यमानस्य दुःखस्यादित्यमण्डलस्य, 'पृष्ठम्', उपरिभागं, गमिष्यामि। ततः 'ब्रध्नस्य'

परिवृढस्य परमात्मनः, 'विष्टपं' स्थानम्, 'अगमं' गमिष्यामि॥

(६) सूत्रकारेण दीक्षितं प्रति उक्तं, 'अथैनमध्वर्युरभिमन्त्रयत' इति। तत्र मन्त्रमाह। "पृथिवी दीक्षा॥ ४॥ तयाग्निर्दीक्षया दीक्षितः। ययाग्निर्दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। अन्तरिक्षं दीक्षा। तया वायुर्दीक्षया दीक्षितः। यया वायुर्दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। द्यौर्दीक्षा। तयादित्यो दीक्षया दीक्षितः। ययादित्यो दीक्षया दीक्षितः॥ ५॥ तया त्वा दीक्षया दीक्षयामि। दिशो दीक्षा। तया चन्द्रमा दीक्षया दीक्षितः। यया चन्द्रमा दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। आपो दीक्षा। तया वरुणो राजा दीक्षया दीक्षितः। यया वरुणो राजा दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। ओषधयो दीक्षा॥ ६॥ तया सोमो राजा दीक्षया दीक्षितः। यया सोमो राजा दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। वाग्दीक्षा। तया प्राणो दीक्षया दीक्षितः। यया प्राणो दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। पृथिवी त्वा दीक्षमाणमनुदीक्षताम्। अन्तरीक्षं त्वा दीक्षमाणमनुदीक्षताम्। द्यौस्त्वा दीक्षमाणमनुदीक्षताम्॥ ७॥ दिशस्त्वा दीक्षमाणमनुदीक्षन्ताम्। आपस्त्वा दीक्षमाणमनुदीक्षन्ताम्। ओषधयस्त्वा दीक्षमाणमनुदीक्षन्ताम्। वाक् त्वा दीक्षमाणमनुदीक्षताम्। ऋचस्त्वा दीक्षमाणमनुदीक्षन्ताम्। सामानि त्वा दीक्षमाणमनुदीक्षन्ताम्। यजूꣳषि त्वा दीक्षमाणमनुदी-

क्षन्ताम्। अहश्च रात्रिश्च। कृषिश्च वृष्टिश्च। त्विषिश्चापचितिश्च॥ ८॥ आपश्चौषधयश्च। ऊर्क् च सूनृता च। तास्त्वा दीक्षमाणमनुदीक्षन्ताम्" इति। येयं 'पृथिवी', सा 'दीक्षा' या निष्पादकत्वात् दीक्षा, 'तया' पृथिव्यात्मकया, 'दीक्षया', 'अग्निः', 'दीक्षितः' संस्कृतः, अग्नेः संस्कारिकया 'तया दीक्षया', हे यजमान त्वां 'दीक्षयामि'। एवमन्तरिक्षादिगोष्वधिवाक्येषु योज्यं। हे यजमान 'दीक्षमाणं' संस्कारभाजं, 'त्वां', 'अनु', 'पृथिवी', देवता 'दीक्षतां' संस्कारयुक्ता भवतु। एवमन्तरिक्षादिष्वपि योज्यं। अहराद्यभिमानिनीर्देवतास्त 'दीक्षमाणं त्वाम् अनुदीक्षन्तां'॥

(७) यदुक्तं सूत्रकारेण, 'पुरस्तात् दीक्षणीया आहवनीयं यजमान उपतिष्ठत' इति। तत्र मन्त्रमाह। "स्वे दक्षे दक्षपितेह सीद। देवानाꣳ सुम्नो महते रणाय। स्वासस्थ स्तनुवा संविशस्व। पितेवैधि सूनव आसुशेव। शिवा मा शिवमाविश। सत्यं म आत्मा। श्रद्धा मेऽचितिः॥ ८॥ तपो मे प्रतिष्ठा। सवितृप्रसूता मा दिशो दीक्षयन्तु। सत्यमस्मि" इति। हे अग्ने त्वं 'स्वे' स्वकीये, 'दक्षे' प्रवृद्धे स्थाने, 'इह' कर्मदेशे, 'महते रणाय' अत्यन्तरमणार्थं, 'सीद' उपविश। कीदृशस्त्वं, 'दक्षपिता' दक्षस्य कुशलस्य यजमानस्य पालयिता, 'देवानां', 'सुम्नः' सुखहेतुः, 'स्वासस्थः' शोभनासनस्थितः, 'तनुवा' शरीरेण, 'संविशस्व' सम्यगिह प्रविश, 'सूनवे' 'पितेव' यथा पुत्राय पिता सुखहेतुस्तद्वत्, 'आसुशेव एधि' सर्वतः सुखेन

सेवितुं योग्यो भव। 'शिवः' शान्तोपद्रवः, त्वं 'शिवं' शान्तोपद्रवं, 'मां', 'आविश'। त्वत्प्रसादात् 'मे' मम, 'आत्मा' स्वभावः, 'सत्यम्', अस्तु सत्यैकस्वभावो भूयासं। तथा 'मे', 'श्रद्धा', 'अक्षितिः' अक्षयास्तु। 'तपो मे', 'प्रतिष्ठा' स्थैर्य-हेतुरस्तु। 'सवितृप्रसूताः' सवित्रैवानुज्ञाताः, 'दिशः', 'मा' 'दीक्षयन्तु' सर्व्वत्रैव दीक्षितत्वेन मां स्थापयन्तु। इदानीमहं 'सत्यमेव' परं ब्रह्मास्मि न तु मर्त्यः॥

(८) अथ प्रायणीयायाः पुरस्तात् यदुक्तं सूत्रकारेण, 'अहं त्वदस्मि जुह्वान इत्येताभ्यामाहवनीयं यजमान उपतिष्ठत' इति। तत्र प्रथमं मन्त्रमाह। "अहं त्वदस्मि मदसि त्वमेतत्। ममासि योनिस्तव योनिरस्मि। ममैव सन् वह हव्यान्यग्ने। पुत्रः पित्रे लोककृज्जातवेदः" इति। हे अग्ने 'अहं', 'त्वदस्मि' त्वत्तः सकाशात् यजमानोऽस्मि, 'त्वं', अपि 'एतत्' रूपं, 'मदसि' मत्तः सकाशादेतदाहवनीयरूपं प्राप्नोषि। मया ह्याधीयमानस्य तवाहवनीयत्वं, अतः कारणात् त्वं 'मम योनिः', अहञ्च 'तव', 'योनिः' कारणम्, 'अस्मि'। हे 'अग्ने', 'ममैव सन्' त्वं मदीय एव भूत्वा, 'हव्यानि', वह। हे 'जातवेदः', सर्व्वत्र 'पुत्रः पित्रे', 'लोककृत्' स्थानसम्पादकः भवति। अतो यथा मया तव स्थानं सम्पादितं तथा त्वयापि मम पुण्यलोकः सम्पादनीयः॥

(९) अथ द्वितीयमाह। "आजुह्वानः सुप्रतीकः पुरस्तात्। अग्ने स्वां योनिमासीद साध्या। अस्मिन् सधस्थे अध्युत्तरस्मिन्।

॥१०॥ विश्वे देवा यजमानश्च सीदत" इति। हे 'अग्ने', 'आजुक्कानः' देवानाह्वयन्, 'सुप्रतीकः' शोभनाङ्गः सन्, 'साध्या' साधनीया, मन्त्रैः संस्करणीयां 'स्वां योनिमासीद' स्वकीये स्थाने तिष्ठ। हे 'विश्वे देवाः', यूयं 'यजमानश्च', 'उत्तरस्मिन्' उत्कृष्ट, 'सधस्थे' सहावस्थानयोग्ये, अस्मिन् स्थाने, 'अधिसीदत' अधिष्ठाय तिष्ठत॥

(१०) अथ सोमक्रयणीपदविषये यदुक्तं सूत्रकारेण, 'निष्क्रम्यमाणेषु यजमानोनुवर्त्तयित्वा' इति। तत्र मन्त्रमाह। "एकमिषे विष्णुस्त्वान्वेतु। द्वे ऊर्ज्जे विष्णुस्त्वान्वेतु। त्रीणि व्रताय विष्णुस्त्वान्वेतु। चत्वारि मायोभवाय विष्णुस्त्वान्वेतु। पञ्च पशुभ्यो विष्णुस्त्वान्वेतु। षड्रायस्पोषाय विष्णुस्त्वान्वेतु। सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेतु" इति। हे सोमक्रयणि 'त्वां', 'अनु', 'इषे' अन्नार्थं, 'विष्णुः', देवः 'एकं' प्रथमं पदम्, 'एतु' प्राप्नोतु। तथा 'त्वां', 'अनु', 'ऊर्जे' रसार्थं, 'द्वे' प्रथमद्वितीये पदे, 'विष्णुः', 'एतु' प्राप्नोतु। एवमुत्तरत्रापि योज्यं। 'व्रताय' कर्म्मानुष्ठानसिद्ध्यर्थं, 'मायोभूः' सुखस्य भावयिता वायुः। मयोभूर्वाता अभिवातूस्रा इति मन्त्रान्तरात्। तस्य सम्बन्धिनः 'मायो भुवः', प्राणाः, एतदर्थं, 'सप्तभ्यो होत्राभ्यः' होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टाच्छावाकः, अग्नीध्र इत्येताभ्यः सप्तभ्यो होत्राभ्यः, तृतीयसामर्थ्यसिद्ध्यर्थं॥

(११) यदुक्तं सूत्रकारेण, 'सप्तमे पदे जपति' इति। तत्र मन्त्रमाह। "सखायः सप्तपदा अभूम। सख्यन्ते गमेयम्॥११॥

सख्यान्ते मा योषम्। सख्यान्मे मा योष्ठा" इति। 'सप्तपदाः' त्वया सह सञ्चारवन्ति सप्तसङ्ख्यानि पदानि येषामस्माकं ते वयं, भवत्'सखायः', 'अभूम' सम्पन्नाः, 'ते' त्वदीयं, 'सख्यं', 'गमेयं' प्राप्नुयां। 'ते' त्वदीयात्, 'सख्यात्', 'मा योषं' अहं पृथग्भूतो माभूवं। 'मे' मदीयात्, 'सख्यात्', 'मा योष्ठाः' त्वमपि पृथग्भूतो माभूवः॥

(१२) यदुक्तं सूत्रकारेण, 'सर्व्वासु सुब्रह्मण्यासु सुब्रह्मण्य-मन्वारभ्य यजमानो जपति' इति। तत्र मन्त्रमाह। "सासि सुब्रह्मण्ये। तस्यास्ते पृथिवी पादः। सासि सुब्रह्मण्ये तस्यास्ते-ऽन्तरिक्षं पादः। सासि सुब्रह्मण्ये तस्यास्ते द्यौः पादः। सासि सुब्रह्मण्ये तस्यास्ते दिशः पादः॥१२॥ परोरजास्ते पञ्चमः पादः। सा न इषमूर्जं धुक्ष्व। तेज इन्द्रियम्। ब्रह्मवर्चस-मन्नाद्यम्" इति। हे 'सुब्रह्मण्याख्ये', देवते त्वं 'सा' प्रसिद्धा, 'असि'। 'तस्याः' प्रसिद्धायास्तव, 'पृथिवी', एकः 'पादः'। एवमुत्तरत्रापि योज्यं। रजसः पुरस्तात् वर्त्तमानः सात्त्विक आदित्यः 'परोरजाः', तथाविधपञ्चपादयुक्तः त्वं 'नः' अस्मा-कम्, 'इषं' अन्नम्, 'ऊर्जं' रसं, 'धुक्ष्व' सम्पादय। तथा 'तेज' आदिकं च सम्पादय॥

(१३) अथ सौमिक्या वेदेर्विमाने मन्त्रमाह। "विमिमे त्वा पयस्वतीम्। देवानां धेनुꣳ सुदुघामनपस्फुरन्तीं। इन्द्रः सोमं पिबतु। क्षेमो अस्तु नः" इति। हे वेदे 'त्वां', 'विमिमे' विशे-षेण मितीकरोमि, इयती वेदिरिति निश्चिनोमि। कीदृशीं,

'पयस्वतीं' यागद्वारेण वृष्टिहेतुं, 'देवानां', 'धेनुं' धेनुवत्-प्रीणयित्रीं, 'सुदुघां' सुष्ठु कामानां दोग्ध्रीं, 'अनपस्फुरन्तीं' प्रातिकूल्यमप्रतिपद्यमानां, । ईदृश्यां वेद्याम् 'इन्द्रः', अस्मदीयं 'सोमं', पिबतु, तेन चास्माकं 'क्षेमः', अस्तु ॥

(१४) अथ वेदिकर्तॄन् प्रति प्रैषमन्त्रमाह । "इमां नराः कृणुत वेदिमेत्य । वसुमतीꣳ रुद्रवतीमादित्यवतीम् ॥ १३ ॥ वर्ष्मन् दिवः । नाभा पृथिव्याः । यथायं यजमानो न रिष्येत् । देवस्य सवितुः सवे" इति । हे 'नराः' वेदिकर्त्तारः पुरुषाः, 'सवितुः' प्रेरकस्य, 'देवस्य', 'सवे' अनुज्ञायां सत्यां, 'अयं' यजमानः, 'यथा', 'न रिष्येत्' न विनश्येत्, तथा 'पृथिव्या नाभौ' उपरि दिवः, स्वर्गस्य हेतौ 'वर्ष्मन्' उच्छ्रिते प्रदेशे, यूयमागत्य 'इमां' 'वेदिं', 'कृणुत' । कीदृशीं, 'वस्वादिमतीं', तेषां प्रियामित्यर्थः ॥

(१५) अथ तस्या वेदेरभिमन्त्रणे मन्त्रमाह । "चतुः शिखण्डा युवतिः सुपेशाः । घृतप्रतीका भुवनस्य मध्ये । तस्याꣳ सुपर्णा वधि यौ निविष्टौ । तयोर्देवानामधि भागधेयम्" इति । चत्वारि शिखण्डस्थानीयानि कोणानि यस्यामसौ 'चतुःशिखण्डा', 'युवतिः' यौवनोपेता योषेव, देवानां प्रीतिहेतुः अतएव 'सुपेशाः' शोभनरूपोपेता, 'घृतप्रतीका' घृतं प्रतीकमवयवमासाद्यत यस्यां सा घृतप्रतीका, तादृशी वेदिरियं 'भुवनस्य मध्ये', वर्तते 'तस्यां' वेद्याम्, 'अधि' उपरि, 'सुपर्णौ' पक्षिसदृशौ याव-ग्निवायू वर्त्तेते, तत्राग्निर्देवेभ्यो हवींषि वहति, वायुस्तु फल-

भूतां वृष्टिमुत्पादयति। ततः 'तयोः' अग्निवाय्वोः, अन्येषां च 'देवानां', हे वेदे त्वं 'भागधेयम्' अधिकभजनीयस्वरूपं भवसि॥

(१६) अथ वेद्याः सकाशाल्लोष्टस्य बहिःक्षेपणे मन्त्रमाह। "अप जन्यं भयन्नुद। अप चक्राणि वर्त्तय। गृहꣳ सोमस्य गच्छतम" इति। हे दक्षिणहविर्धानरूप शकट, 'जन्यं' जनेषु वर्त्तमानं, 'भयं', 'अपनुद'। हे उत्तरहविर्धान 'चक्राणि' परबलानि, 'अपवर्त्तय' एतल्लोष्टवदपगमय। हे हविर्धाने युवामुभे 'सोमस्य', 'गृहं', 'गच्छतं' प्राप्नुतं॥

(१७) अथ पशोः सञ्ज्ञप्यमानस्य परावृत्तौ मन्त्रमाह। "न वाउवेतन् म्रियसे नरिष्यसि। देवाꣳ इदेषि पथिभिः सुगेभिः। यत्र यन्ति सुकृतो नापि दुष्कृतः। तत्र त्वा देवः सविता दधातु" इति। हे पशो त्वं 'एतत्' एतेन सञ्ज्ञपनव्यापारेण, 'न वाउ' सर्व्वथा नैव, 'म्रियसे'। अतएव 'नरिष्यसि' न विनश्यसि, किन्तु 'सुगेभिः' सुष्ठु गन्तुं शक्यैः, 'पथिभिः' मार्गैः, 'देवान् इदेषि' देवानेव प्राप्नोषि, 'यत्र' यस्मिन्नुत्तमलोके, 'सुकृतः' पुण्यकृतः, एव 'यन्ति' गच्छन्ति, 'दुष्कृतः' पापिनः, 'नापि' नैव, गच्छन्ति, 'तत्र' तस्मिन्नुत्तमलोके, 'सविता' देवः, त्वां 'दधातु' स्थापयतु॥

---

अत्र विनियोगसङ्ग्रहः।

अथ ज्योतिष्टोममन्त्रा देवान् 'महो'*पतिष्ठते।
'दीक्षा' क्षौमं प्रगृह्णाति 'वातं' पूर्णाहुतिं जपेत्॥
'इन्द्रा'†जिनं स्पृशेदाहं‡ तदारूढो जपेत् 'पृथि'।
यजमानं मन्त्रयेत् 'स्व' स्वाम्यग्निमुपतिष्ठत॥
'अहं' 'आजुह्वानः' इतिदाभ्यां वह्नेरुपस्थितिः।
'एकं' इत्येकहायन्याः पदानित्यनुवर्त्तयेत्॥
'सखा' जपेदन्यपद सुब्रह्मण्यमुपस्पृशेत्।
जपेत् 'सामो'§ऽस्यमुं मन्त्रं 'विनि' वेदिं मिमीति हि॥
'इमां नराः' तु सम्प्रेष्य चतुर्व्वेदिं तु मन्त्रयेत्।
'अप'लोष्टं क्षिपेतति 'निवर्त्त' तपसार्वध॥

इति सप्तमोऽनुवाकः॥

---

अथ अष्टमोऽनुवाकः।

(१) सप्तमे दीक्षामारभ्याग्नीषोमीयपशुपर्य्यन्तप्रयोगच्छिद्रपूरणार्था ये मन्त्रास्तेऽभिहिताः। अष्टमे पशुविषया मन्त्रा उच्यन्ते। यदुक्तं सूत्रकारेण, 'यदि पशुरुपाकृतो वाश्येत यदस्य पारे रजस इत्याहुतिं जुहुयादिति'। तन्मन्त्रपाठस्तु।

* 'सत्र' इति प्रतीकम्।
† 'इन्द्र' इति प्रतीकम्।
‡ 'आहं' इति प्रतीकम।
§ 'सासि' इति प्रतीकम।

"यदस्य पारे रजसः। शुक्रं ज्योतिरजायत। तन्नः पर्षदति द्विषः। अग्ने वैश्वानर स्वाहा" इति। हे 'वैश्वानर' सर्व्वमनुष्य-हितकारिन्, 'अग्ने', 'अस्य रजसः' रजोगुणयुक्तस्य संसारस्य, 'पारे' परतीरे, रजोगुणास्पृष्टे स्थाने, 'शुक्रं' निर्म्मलं, त्वदीयं 'यत्', 'ज्योतिरजायत', 'तत्' ज्योतिः, 'नः' अस्माकं, 'द्विषः' शत्रून्, 'अतिपर्षत्' अतिशयेन विनाशयतु, 'स्वाहा' इदञ्च स्वाहुतम् अस्तु॥

(२) यत्पशोर्वाशनं शब्दनन्तन्निमित्तहोमार्थ एको मन्त्र उक्तः। अथ तत्रैव मन्त्रान्तरमाह। "यस्माद्भीषाऽवाशिष्ठाः। ततो नो अभयं कृधि। प्रजाभ्यः सर्व्वाभ्यो मृड। नमो रुद्राय मीढुषे" इति। हे पशो 'यस्मात्' कारणात्, 'भीषा' भीत्या, 'त्वम्', 'अवाशिष्ठाः' शब्दं कृतवानसि, 'ततः' मारणात्, पापं 'नः' अस्माकम्, 'अभयं' 'कृधि' यथा पापभीतिर्नास्ति तथा कुर्व्वन्तु, किञ्च 'प्रजाभ्यः' 'सर्व्वाभ्यः' सर्व्वप्रजार्थं, 'मृड' सुख-हेतुर्भव 'मीढुषे' मह्ये त्वामुत्पादितवते, 'रुद्राय', 'नमः' 'अस्तु'। पूर्व्वोक्तो यदस्य पार इति मन्त्रो वाशनवेपनादिषु सर्व्वेषु निमित्तेषु साधारणः। अयन्तु वाशने एवेति विशेषः॥

(३) पशोरुपवेशने होममन्त्रमाह। "यस्माद्भीषा न्यषदः। ततो नो अभयं कृधि॥ १॥ प्रजाभ्यः सर्व्वाभ्यो मृड। नमो रुद्राय मीढुषे" इति। 'न्यषदः' निषण्णवानसि। अन्यत् पूर्व्ववत्॥

(४) यदुक्तं सूत्रकारेण, तन्मैत्रावरुणदण्डेनोत्पादयदिति। तत्र मन्त्रमाह। "उदुस्र तिष्ठ प्रतितिष्ठ मारिषः। मेमं यज्ञं

यजमानञ्च रीरिषः । सुवर्गे लोके यजमानꣳ हि धेहि । शन्न एधि द्विपदे शं चतुष्पदे" इति । हे 'उस्र' पशो, 'उत्तिष्ठ', उत्थायच 'प्रतितिष्ठ' स्थिरोभव, 'मारिषः' हिंसां माप्नुहि । 'इमं', 'यज्ञं', 'यजमानं', 'मारीरिषः' मा विनाशय । इमं 'यजमानं', स्वर्गे 'लोके', 'धेहि' स्थापय, 'नः' अस्मदीये, 'द्विपदे' मनुष्याय, 'शमेधि' सुखहेतुर्भव, 'चतुष्पदे' गवादिरूपाय च, 'शमेधि' सुखहेतुर्भव ॥

(५) अथ कम्पनवेपनपलायनमरणेषु त्रीन् मन्त्रानाह । "यस्माद्भीषाऽवेपिष्ठाः पलायिष्ठाः समज्ञास्थाः । ततो नो अभयं कृधि । प्रजाभ्यः सर्व्वाभ्यो मृड । नमो रुद्राय मीढुषे" इति ॥ १ ॥ 'अवेपिष्ठाः' अकम्पथाः, 'पलायिष्ठाः' पलायनं कृतवानसि, 'समज्ञास्थाः' सञ्ज्ञानं मरणं तत् प्राप्तोसि । अन्यत् पूर्व्ववत् । वेपनपलायनमन्त्रयोरपि ततोन इत्यादिकमनुषञ्जनीयं ॥

(६) अथ सर्व्वनिमित्तसाधारणं मन्त्रमाह । "य इदमकः । तस्मै नमः । तस्मै स्वाहा" इति । 'यः' पशुः, 'इदं' वाशनं, निषदनं, पलायनं, सञ्ज्ञानं चैतेषु अन्यतमत् 'अकः' कृतवान् 'तस्मै' पशवे, 'नमः', अस्तु । 'तस्मै' पशवे, 'स्वाहा' इदं हविः स्वाहुतमस्तु । अत्र वाशनादावेकैकस्मिन् निमित्ते तत्तत् असाधारणः पुरस्ताद्यदस्य पार इति होमः । पश्चात्तु य इदमकरिति होमो द्रष्टव्यः ॥

(७) अथ पशौ स्वयमेव मृते सति यदुक्तं सूत्रकारेण । 'न वा उ वेतन्म्रियसे । आशानां त्वा विश्वा आशा आपा-

ह्विष्ठा मयोभुवः' इत्येताभिस्तिसृभिरपोऽभ्यवहृत्यान्यन्तद्रूपवर्ण-वयमं तद्दैवतमुपाकृत्य यजेति। तत्र मन्त्रत्रयस्य प्रतीकानि दर्शयति। "न वा उ वेतन्म्रियसे। आशानां त्वा विश्वा आशाः" इति। 'न वा' इति मन्त्रः पूर्व्वोऽनुवाके व्याख्यातः। 'आशानां त्वा-शापालेभ्यः' इति मन्त्रो देवा देवेष्वित्यनुवाके व्याख्यातः। 'विश्वा आशामधुना' इति मन्त्रः पुनर्न इन्द्र इत्यनुवाके व्याख्यातः॥

(८) अथ यद्द्वयमयोर्हुते शेषो यः सोमः योऽप्यहुतः, तयोः संसर्गे होममन्त्रमाह। "यज्ञस्य हि स्थ ऋत्विजौ। इन्द्राग्नी चेतनस्य च। हुताहुतस्य तृप्यतम्। अहुतस्य हुतस्य च। हु-तस्य चाहुतस्य च। अहुतस्य हुतस्य च। इन्द्राग्नी अस्य सोमस्य। वीतं पिबतं जुषेथाम्" इति। हे 'इन्द्राग्नी', युवां 'हि' यस्मात् कारणात्, 'यज्ञस्य,' 'ऋत्विजौ स्थः' ऋत्विक्सदृशौ निर्व्वाहकौ भवथः, 'चेतनस्य' यजमानस्य च, स्वामिनौ भवथ इति शेषः। तादृशौ युवां 'हुताहुतस्य', उभयविधस्य 'सोमस्य', सारेण 'तृप्यतं'। हुतस्येत्यादिस्त्रिरभ्यासोऽत्यन्तादरार्थः। ता-दृशस्य 'सोमस्य', सारं हे 'इन्द्राग्नी', 'वीतं' युवां प्राप्नुतां, प्राप्य च 'पिबतं', पीत्वा च 'जुषेथां' प्रीतियुक्तौ भवतं॥

(९) अथ सोमभक्षणे मन्त्रमाह। "मा यजमानं तमो विदत्। मर्त्विजो मा इमाः प्रजाः। मा यः सोममिमं पि-बात्। संसृष्टमुभयं कृतम्" इति। यदज्ञानरूपं 'तमः', अस्ति तत् 'यजमानं', 'माविदत्' मालभतां, तस्मिन् मा प्रविशत्वि-त्यर्थः। 'ऋत्विजः', अपि 'माविदत्', 'इमाः प्रजाः', अपि 'मा'

सर्व्वथैव, मा प्राप्नोतु, एतेषु मध्ये 'यः', कोपि 'इमं सोमं', पिबात् 'पिबति' तं पातारं 'तमो मा विदत्'। कीदृशं सोमं, 'उभयं' हुताहुतरूपं, 'संसृष्टं कृतं' परस्पराश्लेषेणैकीकृतं । तादृशसोमपानेपि तमो मा प्रविशतु ॥

अथ विनियोगसङ्ग्रहः ।

'यदस्ये*ति निमित्तेषु प्रायश्चित्ताहुतिः पशोः ।
सर्व्वसाधारणं लेदयस्माद्भीषे†ति वाशने ॥
शयनेऽपि तथा, यस्मा‡दुदस्रो¶त्यापर्यन्ततः ।
कम्पे पलायने मृत्यौ 'यस्मात्' मन्त्रत्रयं क्रमात् ॥
वाशनादौ हि सर्व्वत्र 'य इदे॥त्यपि चाहुतिं ।
'न वा' 'आशेति§' 'विश्वेति**' स्वयमेव मृते सति ॥
अप्सु तं सम्परित्यज्य तादृशं पशुमाहरेत् ।
हुताहुतस्य होमस्य संसर्गेजुहुयादिमं ॥
'यज्ञस्ये††त्यथ ‡‡'मा य'ेति शेषभक्षणमिष्यते ॥

इति अष्टमोऽनुवाकः ।

---

* 'यदस्य' इति प्रतीकम् ।
† 'यस्माभीषा' इति प्रतीकम् ।
‡ 'यस्मात्' इति प्रतीकम् ।
¶ 'उदुस्र' इति प्रतीकम् ।
|| 'य इद' इति प्रतीकम् ।
§ 'आशा' इति प्रतीकम् ।
** 'विश्वा' इति प्रतीकम् ।
†† 'यज्ञस्य' इति प्रतीकम् ।
‡‡ 'मा य' इति प्रतीकम् ।

अथ नवमोऽनुवाकः ।

(१) अष्टमे पशुविषया अच्छिद्रमन्त्रा उक्ताः । नवमेऽभिषवादिविषया मन्त्रा उच्यन्ते । तत्र उपांशुग्रहार्थाभिषवे मन्त्रमाह । "अनागसस्त्वा वयम् । इन्द्रेण प्रेषिता उप । वायुष्टे अस्त्वंशभूः । मित्रस्ते अस्त्वंशभूः वरुणस्ते अस्त्वंशभूः" इति । हे सोम 'अनागसः' अपराधरहिताः,'वयं',त्वां प्रति,'इन्द्रेण','उप प्रेषिताः' । तस्मान्नास्त्यस्माकमपराधः । 'वायुः', देवः 'ते' तव, 'अंशभूरस्तु' कस्यचिदंशस्य भावयिता भवतु । तथा मित्रो वरुणश्च ॥

(२) अथ ग्रावाभिमन्त्रणे मन्त्रमाह । "अपां क्षया ऋतस्य गर्भाः । भुवनस्य गोपाः श्येना अतिथयः । पर्व्वतानां ककुभः प्रयुतो न पातारः । वग्नुनेन्द्रं ह्वयत । घोषेणामीवांश्चातयत ॥ १ ॥ युक्ता स्थ वहतः" इति । एते ग्रावाणः 'अपां क्षयाः' जलस्य निवासहेतवः। यज्ञद्वारेण वृष्टिहेतुत्वात् 'ऋतस्य गर्भाः' यज्ञस्य गर्भवदन्तर्वर्त्तिनः, 'भुवनस्य गोपाः' कर्म्मनिष्पादनेन लोकस्य पालकाः । 'श्येनाः' श्येनवदतिप्रबलाः । 'अतिथयः' अतिथिवदिहाभिषवप्रदेशे समागताः । 'पर्व्वतानां ककुभः' प्राच्यादिदिग्वत् परितोवर्त्तमानाः । ग्रावाणो हि पर्व्वतेषूत्पद्यन्ते । 'प्रयुतः' प्रकर्षेण सोमं मिश्रयन्तः । 'न पातारः' पालका न भवन्ति किन्तु सोमस्य हिंसकाः । तादृशा हे ग्रावाणो यूयं 'वग्नुना' वाचा, भवदीयेन शब्देन, 'इन्द्रं ह्वयत'। इन्द्रो हि ग्रावध्वनिं श्रुत्वा तदानीमेवागच्छति । 'घोषेण' भव-

दीर्घेणोच्चध्वनिना, 'अमीवान्' रोगान्, 'चातयत' विनाशयत, 'युक्ता स्थ' परस्परं सम्बद्धा भवत, 'वहतः' इममभिषवं निर्व्वहत ॥

(३) अथमाध्यन्दिनसवनेऽभिषवादूर्द्धं प्रतिप्रस्थातुर्ग्राव्णामनुमोदने मन्त्रमाह। "देवा ग्रावाण इन्दुरिन्द्र इत्यवादिषुः। एन्द्रमचुच्यवुः परमस्याः परावतः। आस्मात् सधस्थात्। उरोरन्तरिक्षात्। आसुभूतमसुषवुः। ब्रह्मवर्च्चसं म आसुषवुः। समरे रक्षाᳬस्यवधिषुः। अपहतं ब्रह्मज्यस्य" इति। ये 'ग्रावाणः', 'देवाः' द्योतमानास्तदभिमानिदेवाः, सन्ति ते सर्व्वेऽपि अयम् 'इन्द्रः','इन्दुः'चन्द्रवदाह्लादकारी,'इत्यवादिषुः'। स्वयमपि 'परमस्याः' 'परावतः' अत्यन्तं दूराद्देशात्, 'इन्द्रं', प्रति 'आ-अचुच्यवुः' आभिमुख्येन प्राप्ताः, 'सधस्थात्' सर्व्वेषां सहावस्थानप्रदेशात्,'अस्मात्' भूलोकात्, आगत्य,तथा 'उरोः', विस्तीर्णात्, 'अन्तरिक्षात्', आगत्य 'सुभृतं' सुष्ठुनिष्पन्नमिमं, सोमं, 'आसुषवुः' साकल्येनाभिषुतं कृतवन्तः, 'मे' मम यजमानस्य, 'ब्रह्मवर्च्चसं' यागानुष्ठानरूपम्, 'आसुषवुः' साकल्येन सम्पादितवन्तः,'समरे' सङ्ग्रामे,'रक्षांसि', 'अवधिषुः' हतवन्तः, 'ब्रह्मज्यस्य' ब्राह्मणानां मन्त्राणां वा क्षपयितुर्दुरात्मनो राक्षसस्य, 'अपहतं' अपघातं, विनाशं कृतवन्त इति शेषः॥

(४) अथ दधिघर्म्मे स्रुचिगृहीतस्याभिघारितस्य दध्न आग्नीध्रीयाग्नावधिश्रयणे मन्त्रमाह। "वाक् च त्वा मनश्च श्रीणीताम्॥ २॥ प्राणश्च त्वापानश्च श्रीणीताम्। चक्षुश्च त्वा श्रो-

चक्षु श्रीणीताम्। दक्षश्च त्वा बलञ्च श्रीणीताम्। ओजश्च त्वा महश्च श्रीणीताम्। आयुश्च त्वा जरा च श्रीणीताम्। आत्मा च त्वा तनूश्च श्रीणीताम्। शृतोऽसि शृतं कृतः। शृताय त्वा शृतेभ्यस्त्वा" इति। हे दधिद्रव्य 'वाक्च' वाग्देवतापि, त्वां 'श्रीणीतां' तवाधिश्रयणं करोतु। एवं मनश्चेत्यादिषु योज्यं। 'दक्षः', उत्साहः। 'बलं' शरीरशक्तिः। 'ओजः' कान्तिः। 'महः' शत्रूणामभिभवनं। 'आयुः' दीर्घायुष्यं। 'जरा' तस्यायुषोऽन्त्यमावस्था। 'आत्मा' जीवः। 'तनूः' शरीरं। एतैर्देवैः 'शृतं कृतः', पक्वं यथा भवति तथा कृतः सन् 'शृतोऽसि' त्वं पक्वोऽसि, हे दधिपदार्थ 'शृताय' पाकाय, त्वामहं अत्र अपयामि, 'शृतेभ्यः' पूर्व्वपक्वेभ्यो हविर्भ्यः, त्वामतिशयेन पक्वं करोमि॥

(५) अथ दधिघर्म्मस्य होमे मन्त्रमाह। यमिन्द्रमाहुर्व्वरुणं यमाहुः। यं मित्रमाहुर्यमु सत्यमाहुः॥ ३॥ यो देवानां देवतमस्तपोजाः। तस्मै त्वा तेभ्यस्त्वा" इति। शास्त्राभिज्ञाः पुरुषाः 'यं' अग्निं, इन्द्रादिरूपम्, 'आहुः', सत्यं परं ब्रह्म 'यः' च अग्निः, 'देवानां' दीप्तिमतां मध्ये, 'देवतमः' दीप्तिमत्तमः, 'तपोजाः' नियमनरूपेण तपसा जन्यः, 'तस्मै' सर्व्वदेवाय सर्व्वात्मरूपायाग्नये, हे दधिद्रव्य त्वां जुहोमि 'तेभ्यः' तु इन्द्रादिभ्यः, 'त्वा', जुहोमीति शेषः॥

(६) अथ भक्षणमन्त्रमाह। "मयि त्यदिन्द्रियं महत्। मयि दक्षो मयि क्रतुः। मयि धायि सुवीर्यम्। त्रिशुग्घर्मो विभातु मे। आकूत्या मनसा सह। विराजा ज्योतिषा सह।

यज्ञेन पयसा सह। तस्य दोहमशीमहि॥ ४॥ तस्य सुम्नमशीमहि। तस्य भक्षमशीमही। वाग्जुषाणा सोमस्य तृप्यतु" इति। 'त्यत्' प्रसिद्धं 'महत्', 'इन्द्रियं' सामर्थ्यं, 'मयि', धीयतां तथा 'दक्षः' उत्साहः, 'क्रतुः' अनुष्ठानं, 'सुवीर्यं' सर्वेषु कार्य्येषु शोभनं सामर्थ्यं, तत् सर्व्वं मयि स्थाप्यताम्। 'त्रिशुक्' अग्निविद्युदादित्यात्मना त्रिधाभिन्नदीप्तिः, 'घर्मः' अग्निः, 'मे' मदर्थं, आकूत्यादिभिः 'सह', विविधं दीप्यताम्। 'आकूतिः' सङ्कल्पः, 'मनः' सङ्कल्पसाधनं, 'विराड्' अन्नं, 'ज्योतिः' तेजः, 'यज्ञः' क्रतुः, 'पयः' क्षीरं, 'तस्य' तैराकूत्यादिभिर्युक्तस्याग्नेः, 'दोहं' वृष्ट्यादिसमृद्धिं, वयम् 'अशीमहि', 'तस्य सुम्नं' तन्निमित्तं सुखं, च 'अशीमहि'। 'तस्य' अग्नेः, प्रसादात् 'भक्षं', च 'अशीमहि' व्याप्नुयाम, 'वाक्', च मदीया 'जुषाणा' प्रीयमाणा, 'सोमस्य', भक्षणेन 'तृप्यतु'॥

(७) अथ नाभिदेशाभिमर्शने मन्त्रयोः प्रतीके दर्शयति। "मित्रो जनान् प्रससमित्र" इति। मित्रो जनान् पातयतीत्येको मन्त्रः। प्रसमित्रमर्त्तो अस्त्वित्यपरो मन्त्रः। एतच्चोभयं "त्वमग्ने बृहद्वयः" इत्यत्र व्याख्यातं॥

(८) अथ षोडशीग्रहस्याभिमन्त्रणे मन्त्रमाह। "यस्मान्न जातः परो अन्यो अस्ति। य आविवेश भुवनानि विश्वा। प्रजापतिः प्रजया संविदानः। त्रीणि ज्योतीꣳषि सचते सषोडशी" इति। 'यस्मात्' प्रजापतेः, 'अन्यः' पुरुषः, कश्चिदपि 'परः' उत्कृष्टो जातः, 'न अस्ति'। 'यः' च प्रजापतिः, 'विश्वा भुव-

नानि' सर्व्वभूतजातानि, 'आविवेश'। अतएवोपनिषद्याम्नायते, तत्सृष्ट्वा। तदेवानुप्राविशदिति। स एव 'प्रजापतिः', 'प्रजया' स्वसृष्टया सह, 'संविदानः' ऐकमत्यं गतः, सर्व्वानुकूलस्वभावः सन् 'षोडशी' एतन्नामकग्रहो भूत्वा 'त्रीणि ज्योतींषि' अग्निविद्युदादित्यरूपाणि वा सवनत्रयरूपाणि, 'सचते' समवैति ॥

(९) तस्मिन्नेवाभिमन्त्रणे द्वितीयं मन्त्रमाह। "एष ब्रह्मा य ऋत्वियः। इन्द्रो नाम श्रुतो गणे" ॥ ५ ॥ इति। 'एषः' षोडशीग्रहः, स्वयं 'ब्रह्मा' प्रजापतिरूपः, 'यः' ग्रहः, 'ऋत्वियः' वसन्ताद्यृतुकाले प्राप्तः, 'गणे' सर्व्वस्मिन् ग्रहसमूहे, 'इन्द्रो नाम' ऐश्वर्य्ययोगादिन्द्र इत्येवं नाम धृत्वा, 'श्रुतः' वेदेऽवगतः, स एष ब्रह्मेति पूर्व्वत्रान्वयः ॥

(१०) अथ तत्रैव तृतीयं मन्त्रमाह। "प्र ते महे विदथे शꣳसिषꣳ हरी। य ऋत्वियः प्र ते वन्वे। वनुषो हर्य्यतं मदम्" इति। हे इन्द्र 'महे' महतः, 'ते' तव, 'हरी' अश्वौ, 'विदथे' यज्ञे, 'प्रशंसिषं' प्रशंसामि, 'यः' मदो हर्षः, 'ऋत्वियः' वसन्ताद्यृतुकाले प्राप्तः, 'वनुषः' सम्भजनीयस्य, 'ते' तव, 'हर्य्यतं' प्रेप्सितं, तादृशं 'मदं' हर्षं, 'प्रवन्वे' प्रकर्षेण सम्भजामि ॥

(११) अथ तस्मिन्नेवाभिमन्त्रणे चतुर्थमन्त्रमाह। "इन्द्रो नाम घृतं न यः। हरिभिश्चारु सेवते। श्रुतो गण आत्वा विशन्तु। हरिवर्प्पसङ्गिरः" इति। 'यः' देवः, 'इन्द्रो नाम' इन्द्र इत्येतादृशं नाम, धृत्वा, 'घृतं न' घृतमिव, प्रियो भूत्वा 'हरिभिः' अश्वैः, 'चारु' शोभनं, 'सेवते' समवैति, 'गणे'

देवतानां समूहे, 'श्रुतः' प्रख्यातः, यस्त्वमिन्द्रः तं त्वामिन्द्रं 'हरिवर्प्पसं' मनोहरवपुषं, 'गिरः' अस्मदीया स्तुतयः, 'आविशन्तु' प्राप्नुवन्तु॥

(१२) अथ षोडशिनो होमे मन्त्रमाह। "इन्द्राधिपतेऽधिपतिस्त्वं देवानामसि। अधिपतिं माम्। आयुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु"॥ ६॥ इति। हे 'अधिपते' अधिष्ठानपालकेन्द्र, 'त्वं', विशेषतः 'देवानामधिपतिरसि', अतः 'माम्', अपि 'मनुष्येषु', 'अधिपतिं' अधिष्ठानपालकं, 'आयुष्मन्तं' दीर्घेणायुषा युक्तं, 'वर्चस्वन्तं' अधिकेन वर्चसा तेजसा युक्तं, 'कुरु'॥

(१३) अथ षोडशिनो भक्षणे मन्त्रमाह। "इन्द्रश्च सम्राड् वरुणश्च राजा। तौ ते भक्षञ्चक्रतुरग्र एतम्। तयोरनुभक्षं भक्षयामि। वाग् जुषाणा सोमस्य तृप्यतु" इति। 'सम्राट्' साम्राज्ययुक्तः, 'इन्द्रश्च', 'राजा वरुणश्च', यौ देवौ विद्येते 'तौ' उभौ देवौ, 'अग्रे' प्रथमं, हे षोडशिग्रह 'ते' तव, 'एतं' अंशं, 'भक्षं चक्रतुः', 'तयोः', 'भक्षम्', 'अनु', अहमपि 'भक्षयामि', मदीया 'वाक्', 'जुषाणा' प्रीतियुक्ता सती, 'सोमस्य', भक्षणेन 'तृप्यतु'॥

(१४) अथ विहारे वह्निर्वा यदा भयमागच्छेत् तदा होमे मन्त्रमाह। "प्रजापतिर्विश्वकर्म्मा। तस्य मनो देवं यज्ञेन राध्यासम्। अर्थे गा अस्य जहितः। अवसानपतेऽवसानं मे विन्द" इति। विश्वं सर्व्वमपि जगत् कर्म्म कर्त्तव्यं यस्य असौ 'विश्वकर्म्मा', तादृशः 'प्रजापतिः', योऽस्ति 'तस्य' प्रजापतेः, 'देवं'

द्योतनात्मकं, 'मनः', 'यज्ञेन', अनेन 'राध्यासं' आराधयिष्यामि। 'अर्थं गा' अस्मद्रक्षणप्रयोजने निमित्तभूते सत्यस्मत्समीपं गतः प्रजापतिः, 'अस्य' भयहेतोर्दुरात्मनः, शरीरादिकं 'जहितः' परित्यजतु, विनाशयतु, हे 'अवसानपते' विघ्नमन्तरेणावसानस्य यागसमाप्तेः पालक प्रजापते, 'मे' मम, 'अवसानं' कर्म्मसमाप्तिं, 'विन्द' लभ॥

(१५) अथावभृथगमनकाले होममन्त्रमाह। "नमो रुद्राय वास्तोष्पतये। आयने विद्रवणे॥७॥ उद्याने यत्परायणे। आवर्त्तने विवर्त्तने। यो गोपायति तꣳ हुवे" इति। 'वास्तोष्पतये' गृहग्रामादिभूमिस्वामिने, 'रुद्राय', 'नमः', अस्तु। 'आयने' वास्तुं प्रत्यागमने प्रवेशावसरे, 'विद्रवणे' वास्तोः सकाशादन्यत्रागमनावसरे, 'उद्याने' अन्यत्र वासार्थं वास्तोः परित्यागे, 'परायणे' मरणेन वास्तोः परित्यागे यत्र, 'यः' रुद्रः, 'गोपायति', 'आवर्त्तनं' कुत्रचिद्गत्वा पुनर्व्वास्तुं प्रत्यागमनमावर्त्तनं, तस्मिन्नेव वास्तौ, विविधं वर्त्तनं 'विवर्त्तनं', तत्रोभयत्र च 'यः' रुद्रः, 'गोपायति', 'तं' रुद्रं, 'हुवे' आराधयितुमाह्वयामि॥

(१६) अथ यस्त्रिविधः सक्तुहोमस्तत्र प्रथमो मन्त्रो विश्वलोपविश्वदावस्येत्यसौ संहितायामेवाम्नातः। अत्र द्वितीयमन्त्रमाह। "यान्यपामित्यान्यप्रतीतान्यस्मि। यमस्य बलिना चरामि। इहैव सन्तः प्रति तद्यातयामः। जीवाजीवेभ्यो निहराम एनत्" इति। 'अपामित्यानि' अपाकर्त्तव्यानि, 'अप्र-

तीतानि' पूर्व्वमप्रत्यर्पितानि, तादृशानि यान्यृणानि प्राप्येति शेषः। अहमस्मिवर्त्ते तेषां सर्व्वेषामपाकरणाय 'यमस्य' देवस्य, 'बलिना' पूजया, 'चरामि' पूजां करोमीत्यर्थः। 'इहैव', जन्मनि 'सन्तः' वर्त्तमाना वयं, 'तत्' सर्व्वमृणम्* ॥

(१७) अथ तृतीयं मन्त्रमाह। "अनृणा अस्मिन्ननृणाः परस्मिन्। तृतीये लोके अनृणाः स्याम। ये देवयाना उत पितृयाणाः ॥ ८ ॥ सर्व्वान् पथो अनृणा आक्षीयेम" इति। 'अस्मिन्' वर्त्तमाने मनुष्यजन्मनि, 'अनृणाः' ऋणरहिताः, 'स्याम'। 'परस्मिन्' एतदपेक्षया भविष्येऽपि मनुष्यजन्मनि, 'अनृणाः', 'स्याम'। उभयापेक्षया 'तृतीये लोके' त्रिसङ्ख्यापूरके स्वर्गजन्मनि, 'अनृणाः', 'स्याम'। ततश्च 'ये देवयानाः' देवगमनयोग्याः पन्थानः, 'उत' अपि च, 'पितृयाणाः' पितृगमनयोग्याः ये पन्थानः सन्ति, तान् 'सर्व्वान् पथः', वयम् 'अनृणाः', एव 'आक्षीयेम' आभिमुख्येन प्राप्य निवसाम, यद्वा मन्त्रद्वयमिदमवभृथादागमने द्रष्टव्यम् ॥

(१८) अथ सौमिकवेदेः प्राच्यामुदीच्यां वोदवसायेष्टुर्द्धैवयजनाध्यवसाने मन्त्रमाह। "इदमू नु श्रेयाऽवसानमागन्म। शिवे नो द्यावापृथिवी उभे इमे। गामश्वनवदश्ववदूर्ज्जस्वत्। सुवीरा वीरैरनुसञ्चरेम" इति। 'इदमू नु' इदमेव परिदृश्यमानं 'श्रेयः' अतिशयेन प्रशस्तम्, 'अवसानं' देवयजनरूपं भूमेः प्रदेशं प्रति, 'आगन्म' आगतास्मः, 'इमे द्यावापृथिवी

---

* अत्र व्याख्या किञ्चिदवशिष्टा।

उभे', अपि 'नः' अस्मान् प्रति, 'शिवे' यागनिष्पादनेन सुखहेतू भवेतां। अतस्तत् 'गोमत्' बहुभिर्गोभिर्युक्तं, 'धनवत्' बहुधनोपेतं, 'अश्ववत्' बह्वश्वं, 'ऊर्ज्जस्वत्' बह्वन्नं, जीवनं यथा भवति तथा 'सुवीराः' शोभनापत्याः, वयं 'वीरैः' भृत्यादिभिः सह, 'अनुसञ्चरेम' अनुक्रमेण द्यावापृथिव्यौ वर्त्तेम हि॥

(१८) अथ महाव्रते फलकूर्चावाधिरुह्याध्वर्युः शस्त्रं प्रतिगृणाति, तत्रारोहणे द्वौ मन्त्रौ तयोः प्रथममन्त्रमाह। "अर्कः पवित्रꣳ रजसो विमानः। पुनाति देवानां भुवनानि विश्वा। द्यावापृथिवी पयसा संविदाने। घृतं दुहाते अमृतं प्रपीने" इति। योऽयम् 'अर्कः' आदित्यः, सोऽयं 'देवानां', मध्ये 'पवित्रं' पावनः, 'रजसः' रञ्जनात्मकस्यान्तरिक्षस्य, 'विमानः' विशेषेण परिच्छेत्ता, तादृश आदित्यः 'विश्वा भुवनानि' सर्व्वाणि भूतजातानि, 'पुनाति' शोधयति, ततस्तेनादित्येन पूते द्यावापृथिव्यौ 'पयसा', युक्ते सत्यौ 'संविदाने' परस्परमैकमत्यं गते, 'प्रपीने' प्रकर्षेण वृद्धे सत्यौ, 'घृतं' भूलोके पातव्यमाज्यम्, 'अमृतं' स्वर्गे पातव्यं पीयूषं, च 'दुहाते' सम्पादयत॥

(२०) अथ द्वितीयमाह। "पवित्रमर्क्को रजसो विमानः। पुनाति देवानां भुवनानि विश्वा। सुवर्ज्योतिर्यशो महत्। अशीमहि गाधमुत प्रतिष्ठाम्" इति। अत्रविश्वेत्यन्तं पूर्व्ववत्। तस्यादित्यस्य प्रसादात् 'ज्योतिः' प्रकाशोपेतं, 'यशः' कीर्त्या-

युक्तं, 'महत्' प्रभूतं, 'गाधं' सुस्थितं, 'सुवः' स्वर्गम्, 'अशीमहि' व्याप्नुयाम, 'उत' अपि च, 'प्रतिष्ठां' इह लोके स्थैर्य्यं, च 'अशीमहि' ॥

अत्र विनियोगसङ्ग्रहः।

अन्वे*पांशोरभिषवे: 'अपां' ग्राव्णोभिमन्त्रयेत्।
'देवा' पुनर्ग्रावमन्त्रो 'वाक्' अये दधिघर्मकम् ॥
'यं' होमे दधिघर्मस्य मयो†त्यतस्य भक्षणम्।
'मित्रो' नाभिं स्पृशेद्वाभ्यां 'यस्मात्' षोडशिमन्त्रणम् ॥
'इन्द्राधि'जुहुयादेतं इन्द्रश्च‡ति प्रभक्षयेत्।
'प्रजापति'र्भय होमो 'नमो'ऽवभृथहोमकः ॥
यान्या§गच्छेदवभृथात् 'इदमू' यागभृग्रहः।
'अर्को' महाव्रते कूर्चे ग्रस्तं प्रतिगृणं जपेत् ॥

इति नवमोऽनुवाकः।

---

अथ दशमोऽनुवाकः।

(१) नवमेऽनुवाके उपांश्वभिषवादिमन्त्रा उक्ताः। दशमे प्रायश्चित्तमन्त्रा उच्यते। तत्र हविर्धानादिपाते होमादिमन्त्रानाह। "उदस्ताम्पीत्सविता मित्रा अर्य्यमा। सर्व्वानमित्रानवधीद्युगेन। बृहन्तं मामकरद्वीरवन्तम्। रथन्तरे अयस्व

* 'अना' इति प्रतीकम्। ‡ 'इन्द्रश्च' इति प्रतीकम्।
† 'मयि' इति प्रतीकम्। § 'यान्ये' इति प्रतीकम्।

स्वाहा पृथिव्याम्। वामदेव्ये अयस्व स्वाहान्तरिक्षे। बृहति अयस्व स्वाहा दिवि। बृहता त्वोपस्तभ्नोमि" इति। योयं 'सविता', सोयम् 'उदस्थापीत्' पतितस्य हविर्धानादेरुत्तम्भनं करोतु, एवं 'मित्रः', 'अर्य्यमा', च उत्तम्भनं कुरुतां, सोयं देवतात्रयसमूहः, 'युगेन' योगेन, युगपदेव 'सर्व्वान्', 'अमित्रान्' वैरिणः, 'अवधीत्', तथा 'मां' यजमानं, 'बृहन्तं' धनादिसम्ृद्धियुक्तं, 'वीरवन्तं' कर्म्मसूरैः पुत्रैरुपेतम्, 'अकरत्' करोतु, 'रथन्तरे' साम्नि, 'पृथिव्यां', च 'अयस्व'। हे देवतासमूह हविर्धानमिदं तत्रोभयत्राश्रितं कुरु। 'स्वाहा' तुभ्यमिदं स्वाहुतमस्तु, तथा 'वामदेव्ये', साम्नि अन्तरिक्षलोके चैतत्सदः 'अयस्व' आश्रितं कुरु, तथा 'बृहति' साम्नि, 'दिवि' द्युलोके च, 'अयस्व' पतितमिदमाग्नीध्रीयमाश्रितं कुरु, तुभ्यमिदं स्वाहुतमस्तु। रथन्तरादयस्त्रयो मन्त्रा हविर्धानादिषु त्रिषु व्यवस्थिताः, उदस्थाचोदिति सर्व्वशेषोनुषज्यते। हे हविर्धानदेव त्वां 'बृहता' साम्ना, तत्सामर्थ्येन 'उपस्तभ्नोमि' उपेत्य उत्तम्भितं करोमि, सोयमुपस्तम्भनमन्त्रः॥

(२) अथ यदि वपा हविरवदानं वा स्कन्देत तदादाने मन्त्रमाह। "आ त्वा ददे यशसे वीर्य्याय च। अस्मास्वघ्निया यूयं दधायेन्द्रियं पयः" इति। हे स्कन्नद्रव्य मम यशोवीर्यसिद्ध्यर्थं त्वां पुनः 'आददे', हे 'अघ्नियाः' गावः, 'यूयं', 'इन्द्रियं पयः' इन्द्रियाभिवृद्धिसाधनं क्षीरम्, 'अस्मासु' 'दधाय' सम्पादयथ॥

(३) अथ पूर्व्वमन्त्रेण स्कन्ने द्रव्ये अुच्यवस्थापिते सति स्कन्दनप्रायश्चित्तार्थहोममन्त्रमाह। "यस्ते द्रप्सो यस्त उदर्षः।॥ १॥ दैव्यः केतुर्विश्वं भुवनमाविवेश। स नः पाह्यरिष्ट्यै स्वाहा" इति। हे हविः तव सम्बन्धी यो 'द्रप्सः' लेशः, यश्च 'उदर्षः' उद्भूतावयवः, स सर्व्वोपि 'दैव्यः' देवयोग्यः, 'केतुः' देवैः प्रज्ञातश्च सन्, 'विश्वं भुवनं' सर्व्वं जगत्, 'आविवेश', न त्वसौ विनष्टः, 'सः' त्वम्, 'अरिष्ट्यै' हिंसाराहित्याय, 'नः' अस्मान्, 'पाहि' रक्ष, तदर्थं स्वाहुतमिदमस्तु॥

(४) यदुक्तं सूत्रकारेण। यद्येन मार्त्विज्याद्वृतꣳ सन्तं निर्हरेरन्नाग्नीध्रे जुहुयादिति। तत्र मन्त्रमाह। "अनु मा सर्व्वो यज्ञोऽयमेतु। विश्वे देवा मरुतः सामार्कः। आप्रियश्छन्दाꣳसि निविदो यजूꣳषि। अस्यै पृथिव्यै तद्यज्ञियम्" इति। 'अयं यज्ञः', 'सर्व्वः' कृत्स्नावयवसंयुक्तः, 'मामन्वेतु', न त्वन्यमनुगच्छतु। सर्व्वशः सर्व्व एव स्वीक्रियते। येन 'विश्वे देवाः', यज्ञनिष्ठाः ये च 'मरुतः', देवाः यच्च 'साम' रथन्तरादिकं, यश्च 'अर्कः' आदित्यः, याश्च 'आप्रियः' प्रयाजयाज्याः, यानि च गायत्र्यादीनि 'छन्दांसि', याश्च 'निविदः' शस्त्रावयवाः, यानि च 'यजूंषि' छन्दोरहिता मन्त्राः, यच्चान्यत् 'यज्ञियं' यज्ञार्हमङ्गं, 'अस्यै पृथिव्यै' अस्यां पृथिव्यां, वर्त्तते 'तत्' सर्वम्, 'मामन्वेतु' मदीयो यज्ञः सगुणो भवतु॥

(५) यदुक्तं सूत्रकारेण। 'यद्येककपालꣳ स्कन्देत् परि वा

वर्त्तेत प्रजापतेर्वर्त्तनिमनुवर्त्तस्व। अनुवीरैरनुराध्याम गोभिः। अन्वश्वैरनुसर्वैरुपुष्टैः। अनु प्रजयान्विन्द्रियेण। देवा नो यज्ञमृजुधा नयन्त्विति यथा स्थानं कल्पयतीति'। तत्र मन्त्रमाह। "प्रजापतेर्वर्त्तनिमनुवर्त्तस्व। अनु वीरैरनुराध्याम गोभिः। अन्वश्वैरनु सर्व्वैरु पुष्टैः। अनु प्रजयान्विन्द्रियेण ॥ २ ॥ देवा नो यज्ञमृजुधा नयन्तु" इति। हे एककपाल 'प्रजापतेर्वर्त्तनिं' प्रजापतिना योऽयं मार्गस्तव सृष्टस्तमेव मार्गम्, 'अनुवर्त्तस्व' अनुसर, ततो वयमपि 'वीरैः' पुत्रादिभिः, 'अनु' क्रमेण, समृद्धा भूयास्म। तथा 'गोभिः', 'अश्वैः', 'सर्व्वैः', अपि 'पुष्टैः' धनैः, 'प्रजया' भृत्यादिरूपया, 'इन्द्रियेण' चक्षुरादिपाटवेन च, समृद्धा भूयास्म। 'देवाः', सर्व्वे 'नः' अस्मदीयं, 'यज्ञम्', 'ऋजुधा' वैकल्यरहितेन मार्गेण 'नयन्तु' ॥

(६)अथ तस्यैककपालस्य यजमानानुमन्त्रणे मन्त्रमाह। "प्रति क्षत्त्रे प्रतितिष्ठामि राष्ट्रे। प्रत्यश्वेषु प्रतितिष्ठामि गोषु। प्रति प्रजायां प्रतितिष्ठामि भव्ये। विश्वमन्याऽभिवावृधे। तदन्यस्यामधिश्रितम्। दिवे च विश्वकर्म्मणे। पृथिव्यै चाकरं नमः" इति। 'क्षत्त्रे' राष्ट्रस्वामिनि राजनि, 'प्रतितिष्ठामि' स्वतन्त्रो भवामि, तथा 'राष्ट्रे', 'अश्वेषु', 'गोषु', पुत्रादिरूपायां 'प्रजायां', 'भव्ये' प्रशस्ते स्वर्गे च, 'प्रतितिष्ठामि' स्वतन्त्रो भवामि, 'अन्या' द्यावापृथिव्योर्मध्ये एका द्यौः, 'विश्वं' भूतजातम्, 'अभिवावृधे' वृष्टिद्वाराभिमुख्येन वर्धयति, 'तत्' आभिवर्धितं विश्वं, 'अन्यस्यां' पृथिव्याम्, 'अधिश्रितं' उपरिस्थितं, 'विश्वकर्म्मणे'

कृत्स्नजगदभिवृद्धिकारिण्यै, 'दिवे च', जगतो धारयित्र्यै 'पृथिव्यै च', 'नमः' नमस्कारं, 'अकरं' करोमि ॥

(७) अथैककपालस्कन्नप्रायश्चित्तहोमे मन्त्रमाह। "अस्कान् द्यौः पृथिवीम्। अस्कानृषभो युवा गाः॥ १॥ स्कन्नेमा विश्वा भुवना। स्कन्नो यज्ञः प्रजनयतु। अस्कानजनि प्राजनि। आ स्कन्नाज्जायते वृषा। स्कन्नात् प्रजनिषीमहि" इति। अत्र स्कन्देतिधातुः प्राप्त्यर्थो न तु शोषणार्थः। 'द्यौः', इयं वृष्टिद्वारेण 'पृथिवीम्', 'अस्कान्' प्राप्नोति, 'युवा ऋषभः', च वत्सोत्पादनाय 'गाः', 'अस्कान्' प्राप्नोति, 'इमा विश्वा भुवनानि' दृश्यमानानि सर्व्वाणि भूतजातानि, 'स्कन्ना' परस्परं प्राप्नोति, 'स्कन्नः' प्राप्नोऽयं, 'यज्ञः', 'प्रजनयतु' प्रजां उत्पादयतु। यदिदं हविः 'अस्कान्' स्कन्दतिस्म, तदिदं न विनष्टं किन्तु 'अजनि', हविश्च नैव निष्पन्नं, अत एव 'प्राजनि' प्रजापशुरूपेण प्रकर्षेण जायते, 'स्कन्नात्', अस्माद्धविषः 'वृषा' सेचनसमर्थः, 'आजायते', अतो वयं च 'स्कन्नात्', हविषः 'प्रजनिषीमहि' प्रजा पशुसमृद्धिं भूयास्म ॥

(८) यदा यज्ञस्य विघ्नकरं भयमुपस्थितं भवति। तदा सर्व्वयागद्रव्याणि द्रोणकलशे गृहीत्वा होममन्त्रमाह। "ये देवा येषामिदं भागधेयं बभूव। येषां प्रयाजा उतानूयाजाः। इन्द्रज्येष्ठेभ्यो वरुणराजभ्यः। अग्निहोतृभ्यो देवेभ्यः स्वाहा" इति। 'ये देवाः', द्युलोकवासिनः सन्ति 'येषां' देवानां, 'इदं' सर्व्वं पुरोडाशादिकं, 'भागधेयं बभूव' सङ्कल्पितं भवति।

'येषां', च 'प्रयाजाः', 'अनूयाजाः', च भागधेयं तेभ्यः 'देवेभ्यः', स्वाहुतमस्तु। कीदृशेभ्यो देवेभ्यः, 'इन्द्रज्येष्ठेभ्यः' इन्द्रो ज्येष्ठः प्रधानभूतो येषां तेभ्यः, 'वरुणराजभ्यः' वरुणो राजा येषां तेभ्यः, 'अग्निहोतृभ्यः' अग्निर्होता येषां तेभ्यः ॥

(९) अथ यद्यभक्षिते चमसे स्तोत्रमुपाकुर्यात् तदा प्रायश्चित्तहोमार्थास्त्रयो मन्त्राः। तत्र प्रथममाह। "उत त्या नो दिवा मतिः ॥ ४ ॥ अदितिरूत्यागमत्। सा शन्ताची मयस्करत्। अप स्रिधः" इति। 'उत' अपि च, 'त्या' येषा, 'दिवा' द्योतनवती, 'अदितिः' अखण्डनीया, 'नः' अस्माकं, 'मतिः', 'ऊत्या' रक्षणेन निमित्तेन, 'आगमत्' आगच्छेत्, 'सा' तादृशी मतिः, 'शन्ताची' अनिष्टशमनप्रापिका सती, 'मयस्करत्' सुखं करोतु, 'स्रिधः' शोषणं कर्मविस्मरणनिमित्तमस्मदीयं शरीरादिक्षयम्, 'अपकरत्' अपकरोतु, अपगमयतु ॥

(१०) अथ द्वितीयं मन्त्रमाह। "उत त्या दैव्या भिषजा। शन्नस्करतो अश्विना। यूयातामस्मद्रपः। अप स्रिधः" इति। 'उत' अपि च, 'त्या दैव्या भिषजा' तौ देवसम्बन्धिनौ चिकित्सकावश्विनौ, 'नः' अस्माकं, 'शङ्करतः' सुखं कुरुतां, किञ्च 'रपः' विस्मरणनिमित्तं पापम्, 'अस्मद्यूयातां' अस्मत्तः पृथक् कुरुतां, 'स्रिधः' शोषणम्, अपगमयतां ॥

(११) अथ तृतीयं मन्त्रमाह। "शमग्निभिस्करत्। शन्नस्तपतु सूर्यः। शं वातो वात्वरपाः ॥ ५ ॥ अप स्रिधः" इति। अयमग्निराहवनीयः इतरैः 'अग्निभिः' सह 'शङ्करत्'

अस्माकं सुखं करोतु, 'सूर्यः', चास्माकं 'शं' सुखं यथा भवति तथा, 'तपतु', 'अरपाः' अपायो दुःखमकुर्व्वन्, 'वातः' वायुः, 'वातु' प्रवर्त्तताम्, 'स्रिधः' शोषणम्, अपगमयतु ॥

(१२) अथ तस्य चमसस्य प्रक्षालितस्येतरचमसेषु योजने मन्त्रमाह। "तदित्पदं न विचिकेत विद्वान्। यन्मृतः पुनरप्येति देवान्। त्रिवृद्यद्भुवनस्य रथवृत्। जीवो गर्भो न मृतः स जीवात्" इति। 'यत्' यस्मिन् कर्म्मानुष्ठानरूप पदे, स्थितः 'मृतः', पुरुषः 'पुनर्द्देवानप्येति', न तु नरकं प्राप्नोति 'तदित्पदं' तदेव कर्म्मानुष्ठानं मुख्यं पदं, तच्च शास्त्रतः 'विद्वान्', अपि पुरुषः 'न विचिकेत' विविच्य न जानाति, 'यत्' यस्मात् कारणात्, 'भुवनस्य गर्भः' लोकस्य मध्ये वर्त्तमानः, 'जीवः'। त्रिवृत्सात्त्विकाद्यास्तिस्रो वृत्तयो यस्यासौ 'त्रिवृत्', 'रथवृत्' रथचक्रवत्, पुनः पुनरावर्त्तमानः, अत एव लोकदृष्ट्या मृतोऽपि वस्तुतः 'सः' जीवः, 'न मृतः', किन्तु 'अजीवात्' जीवत्येव, सर्व्वात्मना अनारोहिरथचक्रवत् पुनः पुनरावृत्तिर्न स्यात्, अतो देहस्यैव मरणं आत्मा तु जीवत्येव। अयमर्थः, यथा रथचक्रं पुनः पुनः पर्य्यावर्त्तते तथा जीवोऽपि संसारे पुनः पुनः परिभ्रमति। स च सत्त्वरजस्तमोगुणैरावृतत्वात् कदाचित् सत्त्वगुणाधिक्येन शास्त्रार्थं जानन्नपि कालान्तरे तमोगुणाधिक्ये सति तं शास्त्रार्थं न जानाति अतस्तमोगुणकृतं प्रमादिकं चमसभक्षणविस्मरणं न त्वयं पुरुषापराध इति ॥

(१३) यदुक्तं सूत्रकारेण। 'अवहृष्टं भक्षमभिमन्त्र्येति'। तच्च

मन्त्रमाह। "प्रत्यस्मै पिपीषते। विश्वानि विदुषे हर। अरङ्गमाय जग्मवे। अपश्चाद्दघ्वने नरे" इति। हे वृष्टिजलमिश्रितभक्ष, 'अस्मै' भक्षकाय, 'प्रतिहर' तदीयं स्वरूपं प्रत्यावर्त्तय। कीदृशाय, 'पिपीषते' पातुमिच्छते, 'विश्वानि' कर्म्माणि, 'विदुषे' जानते, 'अरङ्गमाय' अरं अलं अन्यूनं यथा भवति तथा प्राप्नुवते, 'जग्मवे' पुनः पुनः कर्म्मसु गच्छते प्रवर्त्तमानाय, 'अपश्चाद्दघ्वने' पश्चाद्भोजोत्तरकालं दीप्तिरहिताय, भक्षितं जरयितुमसमर्थाय, 'नरे' ऋत्विगादिरूपाय मनुष्याय॥

(१४) अथावष्टस्याभिमन्त्रितस्य सोमस्य भक्षणे मन्त्रमाह। "इन्दुरिन्द्रमवागात्। इन्दोरिन्द्रोऽपात्। तस्य त इन्द विन्द्रपीतस्य मधुमतः। उपहूतस्योपहूतो भक्षयामि" ॥ ६ ॥ इति। 'इन्दुः' देवतारूपः सोमः, 'इन्द्रं' लतारूपं सोमं, 'अवागात्' स्वकीयत्वेनावगच्छति, 'इन्द्रः', देवः 'इन्दोः' नामात्मकस्य सोमस्य, अंशम् 'अपात्' पीतवान्, हे इन्दो लतात्मसोम, 'तस्य ते' तादृशस्य तव, अंशः 'उपहूतः' अन्यैरनुज्ञातः, अहं 'भक्षयामि', कीदृशस्य तव, 'इन्द्रपीतस्य' इन्द्रेण प्रथमं स्वीकृतस्य, 'मधुमतः' मधुरसोपेतस्य, 'उपहूतस्य' अन्यैरनुज्ञातस्य॥

अत्र विनियोगसङ्ग्रहः।

हविर्धाने सदसिवाग्नीध्रीये पतिते सति।
'उदस्ता'जुहुयाद्भेदोरस्य 'वाम' ऋचस्त्रिभिः॥

वृहो*ऽर्थयेन्मण्डपांस्तान् यानास्कन्नहविर्ग्रहः।
'यस्ते' होमोऽनु†मार्ष्टिश्चो निह्नता वाऽभिर्भवेत्॥
स्कन्देदेककपालश्चेत्स्थानं कल्पयेत् प्रजा।
'प्रति' तं मन्त्रयेत् 'अस्कान्' प्रायश्चित्तं जुहोति हि॥
'यद्देवाये' यज्ञविघ्नकरोऽमर्व्वक्रुतिर्हविः।
'उतत्य'ऽभचिते सोमचमसे तिसृभिर्हुतिः॥
'तदित्' प्रचालितं पात्रं चमसेष्वपि संसृजेत्।
'प्रति'दृष्टं मन्त्रयेत तमिन्दु‡रिति भक्षयेत्॥

इति दशमोऽनुवाकः।

---

अथ एकादशोऽनुवाकः।

(१) दशमे सौमिकप्रायश्चित्तमन्त्रा उक्ताः। एकादशे दार्शिकादौ प्रायश्चित्तमन्त्रा उच्यन्ते। तत्र प्रथमं मन्त्रमाह। "ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचः। ब्रह्म यज्ञानाꣳ हविषामाज्यस्य। अतिरिक्तं कर्मणो यच्च हीनम्। यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्। स्वाहाकृता आहुतिरेतु देवान्" इति। 'ब्रह्म' सर्व्वजगदुपादानं, यत्सत्यं ज्ञानमनन्तं ब्रह्मेत्युपनिषदि प्रोक्तं, तदेव 'मनसः', 'वाचः', 'यज्ञानां' दर्शपूर्णमासादीनां, 'हविषां' पुरोडाशादीनां, विशेषतः 'आज्यस्य', च 'प्रतिष्ठा' निर्वाह-

---

* 'वृह.' इति प्रतीकम्।
† 'अनु' इति प्रतीकम्।
‡ 'इन्दुः' इति प्रतीकम्।

हेतुः, सृष्टिस्थित्यादिकारित्वात्, एवं सति यत् 'अतिरिक्तं' मन्त्राद्याधिक्येन कृतं, 'यच्च', 'कर्म्मणः', सम्बन्धि 'हीनं' मन्त्रादिभिर्न्यूनं, तत् सर्वं 'यज्ञः' यष्टव्यं तदेव परब्रह्म, 'कल्पयन्', फलसाधनसमर्थान् 'पर्व्वाणि' यागकालांश्च, 'प्रतिरन्' वर्द्धयन्, यागैरशून्यं कुर्व्वन्, 'एति' अविच्छेदेन वर्त्तते, तस्मादियं 'स्वाहा कृता' स्वाहाकारेण संस्कृता, 'हुतिः', 'देवान्', 'एतु' गच्छतु ॥

(२) अथ द्वितीयं मन्त्रमाह। "आश्रावितमत्याश्रावितम्। वषट्कृतमत्यनूक्तं च यज्ञे। अतिरिक्तं कर्म्मणो यच्च हीनम्। यज्ञः पर्व्वाणि प्रतिरन्नेति कल्पयन्। स्वाहा कृता हुतिरेतु देवान्" ॥ १ ॥ इति। अस्मिन् 'यज्ञे', यद्धविः 'आश्रावितं' समीचीनाश्रावणयुक्तं, यच्च 'अत्याश्रावितं' अतिरिक्तं श्रावणयुक्तं, यच्च 'वषट्कृतं' सम्यग्वषट्कारेण दत्तं, यच्च 'अत्यनूक्तं' अतिक्रान्तानुवचनयुक्तं, तत् सर्व्वं 'यज्ञः कल्पयन्नेति', इत्यन्वयः। 'अतिरिक्तं' इत्यादि पूर्व्ववत् ॥

(३) अथ तृतीयं मन्त्रमाह। "यद्वो देवा अतिपादयानि। वाचाचित् प्रयतं देवहेडनम्। अरायो अस्मा अभिदुच्छुनायते। अन्यत्रास्मन्मरुतस्तन्निधेतन" इति। हे 'देवाः' मरुतः, 'वः' युष्माकं सम्बन्धि, 'यत्' कर्म्म, 'अतिपादयानि' अहमतिपन्नं करोमि। अकरणमन्यथाकरणं चातिपत्तिः। 'वाचाचित्' वाचा मनसापि, देवानां क्रोधकारणं यदस्माभिः प्रयत्नेन सम्पादितं 'अरायः' अरिः, शत्रुर्यः कोप्यस्मानभिलक्ष्य

'दुच्छुनायते' दारिद्रे युक्तान् करोति, 'तत्' सर्व्वम्, 'अस्मत्तः' 'अन्यत्र', 'निधेतन' हे 'मरुतः', स्थापयत, तत्फलमस्मासु माभूत् ॥

(४) अथ चतुर्थं मन्त्रमाह । "ततम्म आपस्तदु तायते पुनः । स्वादिष्ठा धीतिरुचथाय शस्यते । अयं समुद्र उत विश्वभेषजः । स्वाहाकृतस्य समुतृप्णुतर्भुवः" इति । 'मे' मदीयम्, 'आपः' कर्म, 'आततं' सर्व्वतो विस्तीर्णं, यावज्जीवं सङ्कल्पेन प्रवृत्तत्वात् । 'तद्' तदेव कर्म्म, इदानीं 'पुनः' 'तायते' भूयो विस्तीर्य्यते । किञ्च 'स्वादिष्ठा' स्वादुतमं, 'धीतिः' धारणहेतुराज्याहुतिः, 'उचथाय' कर्म्मणे, 'शस्यते' प्रशस्यतां भजते । उच समवाय इति धातुः । हविःसमवायाधीनत्वादुचथः कर्म्म । यस्मादयं हविर्विशेषः प्रशस्तस्तस्मात् 'अयं', 'समुद्रः' समुद्रसमानः । यावदेका देवता कामयते यावदेका । तावदाहुतिः प्रथत इति श्रुतेः । 'उत विश्वभेषजः' अपि च सर्व्वानिष्टभञ्जनहेतुः, हे 'ऋभुवः' देवाः, 'स्वाहाकृतस्य' स्वाहाकारेण प्रत्यर्पितस्य हविषः, स्वीकारेण 'समुतृप्णुत' सम्यगेव तृप्ता भवत ॥

(५-१३) अथ पञ्चममारभ्य त्रयोदशान्तानां नवानां मन्त्राणां प्रतीकानि दर्शयति । "उद्वयं तमसस्परि । उदुत्यं चित्रम् ॥ २ ॥ इमं मे वरुण तत्त्वायामि । त्वन्नो अग्ने सत्वन्नो अग्ने । त्वमग्ने अयासि प्रजापते" इति । उद्वयं तमस इत्ययं मन्त्रः समास्त्वाग्न इत्यनुवाके व्याख्यातः । उदुत्यं जातवेदसं चित्रं देवानामित्येतौ तदुत्यमित्यनुवाके व्याख्यातौ । इमं मे वरुण श्रुधीहवं तत्त्वायामि ब्रह्मणेत्येतौ मन्त्रौ इन्द्रं वो विश्वतस्परीन्द्रं

नर इत्यनुवाके व्याख्यातौ। त्वन्नो अग्ने वरुणस्य विद्वान् सत्वन्नो अग्नेवम इत्येतावायुष्ट आयुर्दा अग्न इत्यनुवाके व्याख्यातौ। त्वमग्ने अयास्ययामन्नित्ययं जुष्टोद्मूना इत्यत्र व्याख्यातः। प्रजापते न त्वदेतानीत्ययं सोमस्य त्विषिरसीत्यनुवाके व्याख्यातः॥

(१४) अथ चतुर्दशमन्त्रमाह। "इमं जीवेभ्यःपरिधिं दधामि। मैषान्नुगादपरो अर्द्धमेतम्। शतं जीवन्तु शरदः पुरूचीः। तिरो मृत्युं दधतां पर्व्वतेन" इति। 'जीवेभ्यः' सर्व्वेषां जीवानामर्थे, 'इमं' होमं, 'परिधिं' परितोधारकं, 'दधामि' स्थापयामि। 'एषां' जीवानां मध्ये, 'अपरः' कश्चिदपि, 'एतमर्धं' शतसंवत्सरसङ्ख्याकस्यायुषस्यार्धं पञ्चाशद्वर्षरूपमेतं भागं, 'मागात्' मा प्राप्नोतु। किन्तु 'शतं शरदः' शतसङ्ख्याकान् संवत्सरान्, 'जीवन्तु'। कीदृशीः शरदः, 'पुरूचीः' पुरून् बहून् भोगानञ्चन्ति प्राप्नुवन्तीति पुरूच्यः तादृशीः, एषां जीवानां 'मृत्युं', 'पर्व्वतेन' पर्व्वतसदृशेनानेन होमेन, 'तिरोदधतां' व्यवहितं कुर्व्वतां। यद्वा गोमायुपतनादिनिमित्ते सतीमं वरुणेत्यादिषड्भिरनेन मन्त्रेण वा दक्षिणतः पाषाणं स्थापयेत्। मन्त्रस्तत्परतया व्याख्येयः॥

(१५-२२) अथ पञ्चदशमारभ्य द्वाविंशपर्य्यन्तानष्टौ मन्त्रानाह। "इष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहा। भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा। दौराध्यै स्वाहा दैवीभ्यस्तनूभ्यः स्वाहा॥ ३॥ ऋध्यै स्वाहा समृध्यै स्वाहा।" इति। 'इष्टेभ्यः' सम्यग्यागेनारा-

धितेभ्योऽन्यादिभ्यः, तत्प्रतिशयार्थमिदं स्वाहुतमस्तु। ये तु 'अनिष्टाः' अनाराधिताः, तेभ्यः इदं 'वषट्' हविर्दत्तं, तदर्थमिदं स्वाहुतमस्तु। 'दुरिष्टिः' अन्यथानुष्ठानं, तस्य 'भेषजं' समाधानहेतुः, इदं स्वाहुतमस्तु। 'निष्कृत्यै' प्रायश्चित्तार्थम्, इदं स्वाहुतमस्तु। आसमन्तादृद्धिराधिः दुष्टाचासावृधिश्च 'दुराधिः' फलवैकल्यं, तत्समाधानार्थं स्वाहुतमिदमस्तु। याश्चान्याः 'दैव्यस्तनवः' ताभ्यः स्वाहुतमिदमस्तु। 'ऋद्धिः' फलप्राप्तिः, 'समृद्धिः' तत्रैवातिशयः, तदुभयार्थं स्वाहुतमस्तु॥

(२३) अथ त्रयोविंशं मन्त्रमाह।"यत इन्द्र भयामहे। ततो नो अभयं कृधि। मघवञ्छग्धि तव तन्न ऊतये। वि द्विषो वि मृधो जहि" इति। हे 'इन्द्र', 'यतः' मृत्युरगोचरादेः, 'भयामहे' वयं भीतिं प्राप्नुमः, 'ततः' सर्व्वस्मात्, 'नः' अस्माकम्, 'अभयं', 'कृधि' कुरु। हे 'मघवन्', तत्र भयस्थाने 'नः' अस्माकं, 'तवोतये' त्वदीयरक्षार्थं, शक्तो वर्त्तस्व, किञ्चास्माकं 'द्विषः' शत्रून्, 'विजहि' विनाशय, 'मृधः' सङ्ग्रामांश्च 'विजहि'॥

(२४) अथ चतुर्विंशमाह। "स्वस्तिदा विशस्पतिः। वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु नः। नो स्वस्तिदा अभयङ्करः" इति। अयम् 'इन्द्रः', 'नः' अस्माकं, 'पुर एतु' अग्रतो रक्षकत्वेन वर्त्ततां। कीदृशः, 'स्वस्तिदाः' क्षेमस्य दाता, 'विशस्पतिः' प्रजायाः पालकः, 'वृत्रहा' पापस्य हन्ता, 'विमृधः' विनिवारितसङ्ग्रामः, 'वशी' जितेन्द्रियः, 'वृषा' सेक्ता, 'स्व-

स्त्विदाः' शोभनं मद्भावमस्मभ्यः प्रयच्छन्, 'अभयङ्करः' भय-निवृत्तेः कर्त्ता ॥

(२५) अथ पञ्चविंशमाह। "आभिर्गीर्भिर्यदतो न ऊनम् ॥४॥ आप्यायय हरिवो वर्द्धमानः। यदा स्तोतृभ्यो महि गोत्रा रुजासि। भूयिष्ठभाजो अध ते स्याम" इति। हे 'हरिवन्' अश्वयुक्तेन्द्र, 'आभिर्गीर्भिः' अस्मदीयस्तुतिभिः, 'वर्धमानः', त्वं 'अतः' अस्मात्कर्म्मणः, 'ऊनम्', अङ्गं 'नः' अस्मदर्थम्, 'आप्यायय' अभिवर्धय। हे 'हरिवन्','यदा' यस्मिन् काले, 'स्तोतृभ्यः' स्तोत्रानुग्रहार्थम्, 'महि गोत्रा' महतः पर्व्वतान्, मेघान् वा, 'रुजासि' भग्नान् करोषि। अथ तदा वयं 'ते' तवानुगृहीताः, 'भूयिष्ठभाजः स्याम' प्रभूतधनानां लब्धारो भूयास्म ॥

(२६) अथ षड्विंशमाह। "अनाज्ञातं यदाज्ञातम्। यज्ञस्य क्रियते मिथु। अग्ने तदस्य कल्पय। त्वꣳ हि वेत्थ यथातथम्" इति। 'यज्ञस्य', सम्बन्धि किंयदङ्गं 'अनाज्ञातं' शास्त्रक्रमेणास्माभिरज्ञातं, 'यत्', अपि 'आज्ञातं' सम्यग्विज्ञातं सत्, 'मिथु क्रियते' मिथ्याक्रियते, ज्ञानादज्ञानाद्वान्यथानुष्ठीयते। हे 'अग्ने', 'अस्य' कर्म्मणः, सम्बन्धि 'तत्' सर्व्वमङ्गं, 'कल्पय' फलप्रदानसमर्थं कुरु। 'हि' यस्मात् कारणात्, 'त्वं', 'यथातथं' कर्म्मणो वस्तुतत्त्वं, 'वेत्थ' ॥

(२७) अथ सप्तविंशमाह। "पुरुषसम्मितो यज्ञः। यज्ञः पुरुषसम्मितः। अग्ने तदस्य कल्पय। त्वꣳ हि वेत्थ यथातथम्" इति। यः 'यज्ञः', सोऽयं 'पुरुषसम्मितः' पुरुषसदृशः, यथा पुरुषोऽय-

मन्यूनातिरिक्तविशिष्टावयवः तथा यज्ञोऽपि। किञ्चापि अयं 'यज्ञः', 'पुरुषसम्मितः' पुरुषेण सम्यङ्निर्मितस्य, यस्मादेवं तस्मात् हे 'अग्ने', तदस्येत्यादि पूर्व्ववत्॥

(२८) अष्टाविंशमाह। "यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्तासः। अग्निष्टद्धोता क्रतुविद्विजानन्। यजिष्ठो देवाꣳ ऋतुशो यजाति" ॥ ५ ॥ इति। पाको बालः तद्वदल्पैस्त्रायन्ते रक्ष्यन्त इति 'पाकत्राः' बालवदप्रबुद्धमतयः, 'दीनदक्षाः' क्षीणोत्साहाः, 'मर्त्तासः' मनुष्या यजमानाः, 'यज्ञस्य', 'यत्' अङ्गं, 'मनसा', स्वकीयेन 'न मन्वते' नावबुध्यन्ते, 'तत्' अङ्गं, 'विजानन्', 'क्रतुवित्' कृत्स्नयागाभिज्ञः, 'यजिष्ठः' अतिशयेन यष्टुं समर्थः, 'होता' देवानामाह्वाता, 'अग्निः,' 'देवान्', यष्टव्यान् 'ऋतुशो यजाति' तत्तदृतुकाले पूजयतु॥

अत्र विनियोगसङ्ग्रहः।

'ब्रह्मप्रतिष्ठा'दर्शादौ प्रायश्चित्तार्थहोमकाः।

इत्येकादशोऽनुवाकः।

---

अथ द्वादशोऽनुवाकः।

(१) एकादशे दर्शपूर्णमासप्रायश्चित्तमन्त्रा उक्ताः। द्वादशेऽग्निष्टोमादावैकविंशत्या दर्भपुञ्जीलैः पाव्यमानस्य यजमा-

नस्य जपार्था मन्त्रा उच्यन्ते। तत्र प्रथममन्त्रमाह। "यद्देवा देवहेडनम्। देवासश्चकृमा वयम्। आदित्यास्तस्मान्मा मुञ्चत। ऋतस्य तेन मामुत" इति। 'देवासः' देवनशीलाः, 'आदित्याः' अदितेः पुत्राः, हे 'देवाः', 'देवहेडनं' देवानां क्रोधकारणं, 'यत्' कर्म्म, 'वयं', 'चकृम', 'तस्मात्' अपराधात्, मां यूयं 'मुञ्चत', 'उत' अपि च, 'ऋतस्य' यज्ञस्य, सम्बन्धिना 'तेन' सत्येन, अनेन होमेन 'मा' मां, 'मुञ्चत'॥

(२) अथ द्वितीयमाह। "देवा जीवनकाम्या यत्। वाचानृतमूदिम। अग्निर्मा तस्मादेनसः। गार्हपत्यः प्रमुञ्चतु। दुरिता यानि चकृम। करोतु मामनेनसम्"॥ १॥ इति। हे 'देवाः', वयं 'जीवनकाम्याः' जीवनमात्मन इच्छन्तः, 'यदनृतं', 'वाचा', 'ऊदिम' राजसेवादौ तत्प्रियार्थं अनृतमुक्तवन्तः, 'तस्मात्' अनृतजन्यात्, 'एनसः' पापात्, 'गार्हपत्यः', 'अग्निः', मां प्रमुञ्चतु। 'यानि' चान्यानि, 'दुरितानि', 'चकृम', वयं मपुत्रपौत्राः, तत्र 'मां', 'अनेनसं' पापरहितं, 'करोतु'। एतच्चोपलक्षणं, पुत्रादीनपि पापरहितान् करोतु॥

(३) अथ तृतीयं मन्त्रमाह। "ऋतेन द्यावापृथिवी। ऋतेन त्वꣳ सरस्वति। कृतान्मा मुञ्चताꣳहसः। यदन्यकृतं मारिम" इति। हे 'द्यावापृथिव्यौ', 'ऋतेन' यज्ञेन, विगुणेन 'यत्' पापं, तथा हे 'सरस्वति', 'ऋतेन', 'यत्' पापं, प्राप्तं 'कृतात्' प्राप्तात्तस्मात्, 'अंहसः', द्यावापृथिव्यौ चेत्येता यूयं मां 'मुञ्चत' मुक्तं कुरुत। 'यत्' च 'अन्यकृतं' अन्येन यज्ञव्यतिरिक्तेन

निमित्तेन कृतं पापं, 'मारिम' वयं प्राप्तवन्तः, तस्माच्च मां 'मुञ्चत' ॥

(४) अथ चतुर्थं मन्त्रमाह। "सजातशꣳसादुतवा जामिशꣳसात्। ज्यायसः शꣳसादुतवा कनीयसः। अनाज्ञातं देवकृतं यदेनः। तस्मात् त्वमस्मान् जातवेदो मुमुग्धि" इति। 'सजाताः' समानजन्मानो ज्ञातयः समानवयस्काः, सखायो वा, तैः सम्यिकृतः 'शंसः' प्रशंसा, स्तुतिः, 'उतवा' अथवा, 'जामयः' जायाभार्याः, ताभिर्सम्यिकृतः 'शंसः' स्तुतिः, 'ज्यायान्' ज्येष्ठभ्राता, तस्य, 'शंसः' तेन सम्यिकृता स्तुतिः, 'उतवा' अथवा, 'कनीयान्' कनिष्ठभ्राता, तस्य 'शंसः', तेन सम्यिकृता स्तुतिः, 'तस्मात्' स्तुतिसङ्गात्, मत्तेन मया 'अनाज्ञातं', स्वचित्तेनापराद्धं, 'देवकृतं' देवविषये सम्पादितं, 'यत्' 'एनः' पापं, हे 'जातवेदः', त्वं 'अस्मात्' पापात्, 'मुमुग्धि' मां मुक्तं कुरु ॥

(५) अथ पञ्चमं मन्त्रमाह। "यद्वाचा यन्मनसा। बाहुभ्यामूरुभ्यामष्ठीवद्भ्याम्॥ २॥ शिश्नैर्यदनृतं चकृमा वयम्। अग्निर्मा तस्मादेनसः" इति। 'अष्ठीवद्भ्यां' जानुभ्याम, 'शिश्नैः' शिश्नचापलप्रकारैः वागादिभिः सर्व्वैः,'यदनृतं' लोकवेदविरुद्धं व्यापारं, 'वयं', 'चकृम'। अग्निरित्यादिकं द्वितीयमन्त्रोक्तस्य वाक्यशेषस्य प्रतीकं सवाक्यशेषोऽत्राध्याहृत्य योजनीयः ॥

(६) अथ षष्ठं मन्त्रमाह। "यद्धस्ताभ्यां चकर किल्बिषाणि। अक्षाणां वग्नुमुपजिघ्नमानः। दूरेपश्याच राष्ट्रभृच्च। तान्यप्सरसावनुदत्तामृणानि" इति। 'यत्' यानि, किल्बि-

षाणि' परद्रव्यापहरणादीनि, 'हस्ताभ्यां', वयश्चक्रम 'अक्षाणां' चक्षुरादीन्द्रियाणां, 'वग्नु' वर्ज्जनीयं, गन्तव्यं रूपादिविषय-मित्यर्थः। तं विषयम् 'उपजिघ्नमानः' उपहतं कुर्व्वन्, यत्पापं कृतवानस्मि 'तानि' पापात्मकानि, 'ऋणानि' 'दूरे पश्या च राष्ट्रभृच्च' इत्येतन्नामधारिण्यौ, 'अप्सरसौ', 'अनुदत्तां' आनुकूल्येन प्रत्यर्पयतं, पापरूपमृणं यथास्माकं न भवति तथा कुरुतामित्यर्थः॥

(७) अथ सप्तमं मन्त्रमाह। "अदीव्यन्नृणं यदहं चकार। यद्वाऽदास्यन्त्संजगारा जनेभ्यः। अग्निर्मा तस्मादेनसः" इति। 'अदीव्यन्' समीचीनं व्यवहारमकुर्व्वन्, 'अहं', यादृशं 'चकार' कपटेन परकीयं यद्वस्तु गृहीतवानस्मि, 'यद्वा', 'यत्' च अन्यद्वस्तु, 'अदास्यन्' अप्रत्ययिष्यन्, 'जनेभ्यः', सकाशादादाय सम्यग् भक्षितवानस्मि। अग्निरित्यादि पूर्व्ववत्॥

(८) अथाष्टममाह। "यन्मयि माता गर्भे सति॥ ३॥ एन-श्चकार यत्पिता। अग्निर्मा तस्मादेनसः" इति। 'मयि', 'गर्भ-रूपेणोदरं प्रविष्टे 'सति', 'माता', 'यत्' एनः, 'चकार' पर-पुरुषसेवादिकं कृतवती। 'पिता', 'यदेन.' प्रतिषिद्धदिने मैथु-नादि, 'चकार'। अग्निरित्यादि पूर्व्ववत्॥

(९) अथ नवमं मन्त्रमाह। "यदा पिपेष मातरं पितरम्। पुत्रः प्रमुदितो धयन्। अहिंसितौ पितरौ मया तत्। तदग्ने अनृणो भवामि" इति। 'यदा', बालः 'पुत्रः' शिशुरहं, 'प्रमुदितः' प्रकर्षेण हृष्टः, 'धयन्' स्तनं पिबन्, 'मातरं', 'पिपेष'

पीडितवानस्मि, तथा 'पितरं', च हस्तपादोपघातेन पीडितवानस्मि, 'तत्' तदानीं, 'पितरौ' मातापितरावुभौ 'मया', 'अहिंसितौ' अनुपद्रुतौ, भवतां 'तत्' तन्मात्रापित्रोर्व्विषये, हे 'अग्ने', अहम् 'अनृणो भवामि' प्रत्युपकाररराहित्यरूपं यत्पापं तेन मुक्तो भूयासं ॥

(१०) अथ दशमं मन्त्रमाह। "यदन्तरिक्षं पृथिवीमुत द्याम्। यन्मातरं पितरं वा जिहिꣳसिम। अग्निर्मा तस्मादेनसः" इति। 'अन्तरिक्षादिकं लोकत्रयं 'जिहिंसिम' वयं हिंसितवन्तः, इति 'यत्', च यया 'मातरं पितरं', च 'जिहिंसिम', इति 'यत्', लोकत्रयवर्त्तिनां मातापित्रोश्चानिष्टाचरणमेव हिंसः। अग्निरित्यादि पूर्व्ववत् ॥

(११) अथैकादशं मन्त्रमाह। "यदाशसा निशसा यत्पराशसा ॥ ४ ॥ यदेनश्चकृम नूतनं यत्पुराणम्। अग्निर्मा तस्मादेनसः" इति। शंसुहिंसायामितिधातुः। 'आशसा' आभिमुख्येन कृतया हिंसया, 'यत्' पापं, 'निशसा' नितरां कृतया हिंसया, 'यत्' पापं, 'पराशसा' पाराष्ट्त्तेन कृतया हिंसया, 'यत्' पापं, अन्यदपि 'नूतनम्' इदानीन्तनं, 'यदेनश्चकृम', 'पुराणं' चिरकालव्यवहितं, 'यदेनश्चकृम'। अग्निरित्यादि पूर्व्ववत् ॥

(१२) अथ द्वादशं मन्त्रमाह। "अतिक्रामामि दुरितं यदेनः। जहामि रिप्रं परमे सधस्थे। यत्र यन्ति सुकृतो नापि दुष्कृतः। तमारोहामि सुकृतां नु लोकम्" इति। 'दुरितं' दुर्गति-

कारणं, 'यदेनः', तादृशमग्नेः प्रसादात् 'अतिक्रामामि', किञ्च 'परमे' उत्कृष्टे, 'सधस्थे' सहास्थाने विद्वत्सभादौ, कृतं 'रिप्रं' पापं, 'जहामि' अग्नेः प्रसादात् परित्यजामि, ततश्च 'यत्र' यस्मिन् लोके, 'सुकृतः' पुण्यकृतः, 'यन्ति', न कदाचिदपि 'दुष्कृतः', 'यन्ति', 'सुकृतां लोकं', 'नु' क्षिप्रम्, 'आरोहामि' ॥

(१३) अथ त्रयोदशं मन्त्रमाह। "त्रिते देवा अमृजतैतदेनः। त्रित एतन्मनुष्येषु मामृजे। ततो मा यदि किञ्चिदानशे। अग्निर्मा तस्मादेनसः। गार्हपत्यः प्रमुञ्चतु। दुरिता यानि चकृम। करोतु मामनेनसम्" इति। एकतद्वितत्रिताख्यानां पुरुषाणामुत्पत्तिः पौरोडाशिककाण्डे उक्ता एव 'त्रितः', तत्रोक्तः तस्मिन् 'देवाः', 'एतदेनः' पापम्, 'अमृजत'। अतएव ब्राह्मणमाम्नायते। 'ते देवा आप्त्येष्वमृजत' इति। अद्भ्यो जाता एकतद्वितत्रिता आप्त्या देवा लपितपापापराधाः, सोऽयं 'त्रितः', 'एतत्' पापं, 'मनुष्येषु', 'मामृजे' सृष्टवान्, लपितवानित्यर्थः। एतदपि तत्रैवाम्नातम्। 'आप्त्या अमृजत सूर्याभ्युदिते सूर्याभ्युदितः सूर्याभिनिमुक्तः' इत्यादि। 'ततः' सूर्याभ्युदितादिमनुष्येष्ववस्थितात् पापात् सकाशात्, 'किञ्चित्' पापं, 'यदि', माम् 'आनशे'। अग्निरित्यादि पूर्ववत् ॥

(१४) अथ चतुर्दशमन्त्रमाह। "दिविजाता अप्सु जाताः। या जाता ओषधीभ्यः। अथो या अग्निजा आपः। ता नः शुन्धन्तु शुन्धनीः" इति। 'या आपः', 'दिविजाताः' द्युलोके प्रादुर्भूता नित्या वर्त्तन्ते, याश्च 'अप्सु' कर्मसु, 'जाताः, कर्मजन्याः, 'आपः',

कूपादिष्वाविर्भूताः, 'याः', 'ओषधीभ्यः', रसात्मका आविर्भूताः 'आपः', 'अथो' अपि च, 'याः', च 'आपः', 'अग्निजाः' विद्युतो जाता वर्ष्याः, 'ताः' सर्व्वा अपि, 'शुन्धनीः' सर्व्वस्य लोकस्य शोधयित्र्यः, अस्मात् 'शुन्धन्तु' शोधयन्तु॥

(१५)अथ पञ्चदशं मन्त्रमाह। "यदापो नक्तं दुरितञ्चराम। यद्वा दिवा नूतनं यत् पुराणं। हिरण्यवर्णास्तत उत्पुनीत नः" इति। 'नक्तं' रात्रौ 'यद्दुरितञ्चराम', 'यद्वा दिवा' यच्च दुरितमहनि, 'चराम', 'यत्' पापं, 'नूतनम्' इदानीन्तनं, 'यत्', 'पुराणं' चिरकालव्यवहितं, हे 'आपः', 'हिरण्यवर्णाः' सुवर्णवत्तेजस्विन्यो यूयं, 'ततः' सर्व्वस्मात् पापात्, 'नः' अस्मान्, 'उत्पुनीत' उत्कर्षेण शुद्धाः कुरुत॥

(१६,२०) अथ षोडशादीनां विंशान्तानां मन्त्राणां प्रतीकानि दर्शयति। "इमं मे वरुण तत्त्वायामि। त्वं नो अग्ने स त्वं नो अग्ने। त्वमग्ने अयासि" इति। एतानि प्रतीकानि पूर्व्वानुवाकवद्व्याख्येयानि॥

अत्र विनियोगसङ्ग्रहः।

'यद्देवा' दर्भपुञ्जीलैः पूतो जपति मन्त्रकान्।

इति द्वादशोऽनुवाकः।

---

अथ त्रयोदशोऽनुवाकः।

(१) द्वादशे यजमानेन जप्या मन्त्रा उक्ताः। त्रयोदशे त्ववभृथकर्म्मणि ऋजीषस्य दध्ना पयसा वा मधुमिश्रेण प्रोक्षणे

मन्त्रा उच्यन्ते। तत्र प्रथमं मन्त्रमाह। "यत्ते ग्राव्णा चिच्छिदुः सोमराजन् प्रियाण्यङ्गानि स्वधितापरूꣳषि। तत्सन्धत्स्वाज्येनोत वर्द्धयस्व। अनागसो अधमित्सङ्क्षयेम" इति। हे 'सोमराजन्', 'ते' तव, 'यत्' यानि, 'प्रियाण्यङ्गानि' प्रिया अवयवाः, 'स्वधितापरूꣳषि' स्वास्थ्येनावस्थितानि पर्वाणि, 'ग्राव्णा' पाषाणेन, 'चिच्छिदुः' छिन्नवन्तः, 'तत्' अङ्गजातम्, 'आज्येन' आज्यसदृशेन दध्ना पयसा वा, 'सन्धत्स्व' सन्धानप्राप्तानि प्रकृतिस्थानि यथा भवन्ति तथा कुरु, 'उत' अपि च, 'वर्धयस्व' भूयो वृद्धतराणि कुरु, ततो वयम् 'अनागसः' अपराधरहिताः, 'अधमित्' अनन्तरमेव, 'सङ्क्षयेम' सम्यङ्निवसेम॥

(२) अथ द्वितीयं मन्त्रमाह। "यत्ते ग्रावा बाहुच्युतो अचुच्यवुः। नरो यत्ते दुदुहुर्दक्षिणेन। तत्त आप्यायतां तत्ते निष्ट्यायतां देव सोम" इति। 'बाहुच्युतः' ऋत्विजो बाहुना प्रेरितो ग्रावा, 'ते' तव, 'यत्' अङ्गं, 'अचुच्यवुः' अच्यावयत्, 'नरः' पुरुषा ऋत्विजः, 'दक्षिणेन', हस्तेन, 'ते', 'यत्' अङ्गं, 'दुदुहुः' रसस्वीकारेण रिक्तीकृतवन्तः, 'ते' तव, 'तत्' अङ्गम्, 'आप्यायतां' अनेन प्रोक्षणेन वर्द्धतां, हे 'देव', 'सोम', 'ते', 'तत्' अङ्गं, 'निष्ट्यायतां' पूर्व्वं पीडनेन विश्लिष्टं सत्पुनः सङ्घीभवतु॥

(३) अथ तृतीयं मन्त्रमाह। "यत्ते त्वचं बिभिदुर्यच्च योनिम्। यदास्थानात् प्रच्युतो वेनसि त्मना॥ १॥ त्वया तत्सोम गुप्तमस्तु नः। सा नः सन्धासत्परमे व्योमन्" इति।

हे सोम 'ते' तव, 'त्वचं', 'विभिदुः' ऋत्विजो भिन्नवन्तः, इति 'यत्', 'योनिञ्च' कारणं कन्दमूलमपि, 'विभिदुः' उत्पाटितवन्तः, इति 'यत्', तथा त्वम् 'आस्थानात्' उत्पत्तिस्थानात्, 'प्रच्युतः', सन् 'त्मना वेनसि' आत्मना सोचितेनैव तत्स्थानं स्मरसि, इति यत् हे 'सोम', 'नः' अस्मदीयं, 'तत्' सर्व्वमपराधजातं, 'त्वया', 'गुप्तं' रहस्येवावस्थापितम्, 'अस्तु'। 'नः' अस्माकं, 'परमे' उत्कृष्टे, 'व्योमन्' विशेषेण रक्षके स्वर्गे निमित्तभूते सति त्वया सह, 'सा सन्धा' तत्स्थानमपकारणविस्मृतिलक्षणम्, 'असत्' अस्तु ॥

(४) अथ चतुर्थं मन्त्रमाह। "अहाच्छरीरं पयसा समेत्य। अन्योन्यो भवति वर्णो अस्य। तस्मिन् वयमुपहूतास्तव स्मः। आ नो भज सदसि विश्वरूपे" इति। 'अस्य' ऋजीषरूपस्य सोमस्य, पूर्व्वसिद्धो यः 'अन्यः', 'वर्णः' नीरसत्वाकारः, स तु प्रोक्षणसाधनेनानेन 'पयसा समेत्य', 'शरीरं' पूर्व्वसिद्धं स्वरूपम्, 'अहात्' त्यक्तवान्, 'अन्यो वर्णः' नूतनः सरसत्वाकारः, 'अस्य भवति', 'तस्मिन्' नीरसत्वे गते सरसत्व समागते सति, हे सोम तादृशे त्वयि 'उपहूताः' अनुज्ञाता वयं, 'तव स्मः' त्वत्सम्बन्धीनि कर्म्माणि समर्था भूयास्मः, अतस्त्वं 'विश्वरूपे' सर्व्वसाम्यफलजनके, 'सदसि' स्थाने, 'नः' अस्मान् 'भज' सर्व्वतः स्थापयस्व ॥

(५) अथ पञ्चममन्त्रमाह। "नृचक्षाः सोम उत शुश्रुगस्तु। मा नो विहासीद्गिर आवृणानः। अनागास्तनुवो वावृधानः। आ नो रूपं वहतु जायमानः" ॥ १ ॥ इति। 'उत'

अपि च' अयं 'सोमः', 'नृचक्षाः' नृन्मनुष्याननुग्रहदृष्ट्या पश्य, 'शुश्रुवस्तु' अस्मद्गिरां श्रोता भवतु, 'गिरः' स्तुतिम्, 'आवृणानः' सम्भजमानोयं सोमः, 'नः' अस्मान्, 'मा विहासीत्' मा परित्यज, स्तुतिभिः प्रसन्नः सन् अभिषवाद्यपराधं क्षमतामित्यर्थः। ततो वयम् 'अनागाः' विस्मृतास्मदीयापराधः सन्, 'तनुवः' निजशरीराणि, 'वावृधानः' प्रत्यङ्गं वर्द्धयन्, 'नः' अस्माकम्, 'आजायमानः' सर्व्वतः सर्व्वकार्य्येषु वर्त्तमानः, 'रूपं', तदनुकूलस्वरूपं 'वहतु' स्वीकरोतु ॥

(६) अथ षष्ठमन्त्रमाह। "उपचरन्ति जुह्वो घृतेन। प्रियाण्यङ्गानि तव वर्द्धयन्ती। तस्मै ते सोम नमइद्वषट् च। उप मा राजन् सुकृते ह्वयस्व" इति। 'जुहू'प्रभृतयः स्रुचः 'घृतेन' क्षरणात्मकेन पयोदध्यादिद्रव्येण, 'उपचरन्ति' हे सोम त्वामुपेत्य सिञ्चन्ति, कीदृश्यो जुह्वः, 'तव प्रियाण्यङ्गानि', अवयवाप्यायनेन 'वर्द्धयन्त्यः', हे सोम 'तस्मै ते' तादृशाय तुभ्यं, 'नमइत्' नमस्कारश्च, 'वषट् च' वषट्कारो हविष्ट्रेन प्रदानं, हे 'राजन्', 'सुकृते' शोभने कर्म्मफले, माम् 'उपह्वयस्व' अनुजानीहि ॥

(७) अथ सप्तममन्त्रमाह। "सम्प्राणापानाभ्याꣳ समु चक्षुषा त्वम्। सꣳ श्रोत्रेण गच्छस्व सोम राजन्। यत्त आस्थितꣳ शमु तत्ते अस्तु। जानीतान्नः सङ्गमने पथोनाम्" इति। हे 'सोम राजन्', त्वं प्राणादिभिः 'सङ्गच्छस्व' पूर्व्वमभिषवादिना त्वत्तो वियुक्ताः प्राणादयः पुनस्त्वया संयुज्यतां, 'यत्',

तव शरीरे 'आस्थितं' अस्माभिः कृतं निष्पीडनादिविकार-जातमवस्थितं 'तत्' सर्व्वं, 'ते' तव, 'शम्' सुखनिमित्तमेव, 'अस्तु', 'पथीनां' स्वर्गाद्युत्तमलोकमार्गाणां, 'सङ्गमने' सम्यक् प्राप्तौ, 'जानीतात्' हे सोम त्वं 'नः' अस्मान्, जानीहि अस्माभिः कथितमित्येवमनुस्मर ॥

(८) अथाष्टमं मन्त्रमाह। "एतं जानीतात्परमे व्योमन्। वृकाः सधस्था विद रूपमस्य ॥ ३ ॥ यदा गच्छात्पथिभिर्द्देवयानैः। इष्टापूर्त्ते कृणुतादा विरस्मै" इति। हे सोम 'परमे व्योमन्' उत्कृष्टे विशेषेण रक्षके स्वर्गे, 'एतं' यजमानं, 'जानीतात्' त्वं जानीहि, स्वर्गप्राप्त्यर्थमेतमनुगृहाण, हे 'सधस्थाः' अनेन यजमानेन सहास्मिन्नवस्थिता हे देवाः, 'वृकाः' पापनिवारकाः सन्तः, 'अस्य', यजमान'रूपं' कर्म्मानुष्ठाने वृत्तलक्षणं 'विद' जानीत, एतावत् पुण्यमनेन कृतमिति स्मरत। तव सतो 'यदा', अयं यजमानो 'देवयानैः' देवगमनार्हैः, 'पथिभिः' मार्गैः, 'गच्छात्' गच्छेत्, तदानीं 'अस्मै' अस्य यजमानस्य इष्टापूर्त्ते श्रौतस्मार्त्ते कर्म्मणी, दैविकपैतृककर्म्मणी वा, 'आविष्कृणुतात्' हे सोम स्वर्गलोके प्रकटीकुरु ॥

(९) अथ नवमं मन्त्रमाह। "अरिष्टो राजन्नगदः परेहि। नमस्ते अस्तु चक्षसे रघूयते। नाकमारोह सह यजमानेन। सूर्य्यं गच्छतात् परमे व्योमन्" इति। हे 'सोम राजन्', 'अरिष्टः' केनचिदप्यहिंसितः, 'अगदः' रोगरहितश्च सन्, 'परेहि' परावृत्त्य स्वस्थाने गच्छ, 'चक्षसे' दर्शने कुशलाय,

'रघूयते' लघ्वीं शीघ्राङ्गतिमात्मन इच्छते, 'ते' तुभ्यं, 'नमोस्तु'। त्वं 'यजमानेन सह', 'नाकं' स्वर्गम्, 'आरोह'। 'परमे व्योमन्' उत्कृष्टे विशेषेण रक्षके स्वर्गस्थाने स्थितं, 'सूर्यं', 'गच्छतात्' अयं यजमानो गच्छतु॥

(१०) अथ दशमं मन्त्रमाह। "अभूद्देवः सविता वन्द्यो नु नः। इदानीमह्नः उपवाच्यो नृभिः। वि यो रत्ना भजति मानवेभ्यः। श्रेष्ठं नो अत्र द्रविणं यथा दधत्" इति। 'सविता देवः', 'नः' अस्माकं, 'नु' क्षिप्रमेव, 'वन्द्यः' नमस्कार्य्यः, 'अभूत्'। 'इदानीम्' अस्मिन्नुदयकाले, 'अह्नः', निमित्तभूतात् 'नृभिः' मनुष्यैः, अयं सविता 'उपवाच्यः' उपेत्य वक्तव्यः, स्वस्वव्यापारसिद्ध्यर्थं प्रकाशं कुर्व्विति प्रार्थनीयः, सविता 'मानवेभ्यः', रत्नश्रेष्ठानि धनानि 'भजति' अस्येदमिति विभागं करोति, सोयं सविता 'अत्र' अस्मिन् कर्म्मणि, 'नः' अस्माकं, 'श्रेष्ठं द्रविणं' अतिप्रशस्तं धनं, 'यथादधत्' यथावत् सम्पादयतु॥

(११) अथैकादशं मन्त्रमाह। "उप नो मित्रावरुणाविहावतम्। अन्वादीध्याथामिह नः सखाया। आदित्यानां प्रसितिर्हेतिः। उग्रा शतापाष्ठा घ विषा परि णो वृणक्तु" इति। हे 'मित्रावरुणौ', 'नः' अस्मान् सोमापराधरहितान्, 'इह' कर्म्मणि, 'उपावतं' उपेत्य रक्षतं। हे 'सखाया' सखिवदत्यन्तस्निग्धौ युवां, 'इह' कर्म्मणि, 'नः' अस्मान्, 'अन्वादीध्याथां' अनुक्रमेण सर्व्वतो दीप्तान् कुरुतं। 'आदित्यानां' सम्बन्धी 'हेतिः' पापिषु हिंसाकरणसाधनमायुधं, 'नः' अस्मान्,

'परिवृणक्तु' सर्व्वतो वर्ज्जयतु । कीदृशो हेतिः, 'प्रसितिः' प्रकृष्टबन्धना, 'उग्रा' तीक्ष्णा, 'शता पाष्ठा' बहुभिरवयवैः प्रहर्त्तुं समर्थेत्यर्थः । 'विषाख्यायिनी' 'च'शब्दो यथोक्तविशेषण-समुच्चयार्थः ॥

(१२-१३) अथ द्वादशत्रयोदशमन्त्रयोः प्रतीकं दर्शयति । "आप्यायस्व सन्ते" इति । आप्यायस्व समेतु त, सन्ते पयांसी-त्येतौ मन्त्रौ मा नो हिंसीज्जनितेत्यनुवाके व्याख्यातौ ॥

अत्र विनियोगसङ्ग्रहः ।

'यत्तेग्राव' ऋजीषं तु प्राचे द्धा च शाखया ।

इति त्रयोदशोऽनुवाकः ।

## अथ चतुर्दशोऽनुवाकः ।

त्रयोदशे ऋजीषप्रोक्षणमन्त्रा उक्ताः चतुर्दशे त्ववभृथादि-षेचनादिमन्त्रा उच्यन्ते । अत्र यजमानोऽवभृथे स्नात्वा त्रिभि-र्मन्त्रैरञ्जलिनापो विषिञ्चति । तत्र प्रथमं मन्त्रमाह । "यद्दि-दीक्षे मनसा यच्च वाचा । यद्वा प्राणैश्चक्षुषा यच्च श्रोत्रेण । यद्रेतसा मिथुनेनाप्यात्मना । अद्भ्यो लोका दधिरे तेज इन्द्रि-यम् । शुक्रा दीक्षायै तपसो विमोचनीः । आपो विमोक्त्रीर्मयि तेज इन्द्रियम्" इति । अहं यजमानो 'मनसा', 'यद्दिदीक्षे' यां दीक्षां प्राप्तवानस्मि । मनसो नियमनमेव मानसी दीक्षा । एवं

वागादिषु द्रष्टव्यं। ब्रह्मचर्य्येणैतमो दीक्षा स्त्रिया सह विनोदाभावो मिथुनेन दीक्षा प्रकृतकर्म्मव्यतिरिक्तात् पुरुषार्थानिवृत्तिरात्मनो दीक्षा तस्याः सर्व्वस्या मदीयदीक्षाया एता 'आपः', 'विमोक्त्रीः' विमोचनकर्त्र्यः, अतस्ताभिर्दीक्षापाभिर्विमोचिते 'मयि तेज इन्द्रियम्', च सम्पद्यतां। अपां विमोचनहेतुत्वं तेजआदिहेतुत्वं स्पष्टीक्रियते। 'लोकाः' सर्व्वेपि, 'अद्भ्यः', सकाशात् 'तेज इन्द्रियं', च 'दधिरे'। अप्सु स्नानेन शरीरमलाभावात् कान्तिर्भवति अपां पानेन चेन्द्रियं वर्द्धते तथा 'शुक्राः' निर्म्मला आपः, 'दीक्षायै', 'तपसो विमोचनीः' सर्व्वस्य दीक्षादिरूपस्य तपसो विमोचनहेतवः, स्नानादिना नियमसमाप्तिर्भवति तस्मात् ममापि आप एव दीक्षाया विमोचनं कृत्वा 'इन्द्रियादिकं प्रयच्छन्तु॥

(२) अथ द्वितीयं मन्त्रमाह। "यदृचा साम्ना यजुषा पशूनां चर्मन् हविषा दिदीक्षे। यच्छन्दोभिरोषधीभिर्वनस्पतैा। अद्भ्यो लोका दधिरे तेज इन्द्रियम्॥ १॥ शुक्रा दीक्षायै तपसो विमोचनीः। आपो विमोक्त्रीर्मयि तेजइन्द्रियम्" इति। अहमृगादिभिर्यां दीक्षामृगादिदेवतानुग्रहार्थं दीक्षानियमं प्राप्तोस्मि तथा 'पशूनां', 'चर्म्मणि' कृष्णाजिनादैा, 'यत्', 'दिदीक्षे', यच्च हविःपयसादिना 'दिदीक्षे'। यच्च 'छन्दोभिः' मन्त्रगतैः, 'दिदीक्षे', यच्च 'ओषधीभिः' दर्भपुञ्जीलादिभिः, 'दिदीक्षे', यच्च 'वनस्पतैा' दण्डादैा, 'दिदीक्षे'। अद्भ्य इत्यादि पूर्व्ववत्॥

(३) अथ तृतीयं मन्त्रमाह। "येन ब्रह्म येन चत्रं। येनेन्द्राग्नी प्रजापतिः सोमो वरुणो येन राजा। विश्वे देवा ऋषयो येन प्राणाः। अद्भ्यो लोका दधिरे तेज इन्द्रियम्। शुक्रा दोचायै तपसो विमोचनीः। आपो विमोक्त्रीर्मयि तेज इन्द्रियम्" इति। 'येन' दीक्षाकर्म्मणा, ब्रह्मचत्रादीनि स्वस्वमहिमानं प्रतिपेदिरे 'प्राणाः', च यजमानानुच्छ्रितादीचाकर्म्मणैव स्वकीयोच्छ्वासनिश्वासादिव्यापारचमत्वं प्रतिपेदिरे। अद्भ्य इत्यादि पूर्ववत्॥

(४) य आहिताग्निरन्यदीये यागे आर्त्विज्यं कृत्वा सोमं भक्षयेत् तस्य होमार्थास्त्रयो मन्त्राः। तत्र प्रथमं मन्त्रमाह। "अपां पुष्पमस्योषधीनाꣳ रसः। सोमस्य प्रियं धाम॥ २॥ अग्नेः प्रियतमꣳ हविः स्वाहा" इति। हे आज्य त्वं 'अपां', 'पुष्पं' कार्य्यम्, 'असि'। अप्सु गोभिः पीतासु चीरद्वारेणाज्यनिष्पत्तेः। तथा 'ओषधीनां', 'रसः' सारभूतम्, 'असि'। गोभिर्भचिताभ्य ओषधिभ्यो निष्पन्नत्वात्। तथा 'सोमस्य', 'प्रियं', 'धाम' स्थानम्, 'असि'। सोमो हि देवतात्मा ऽऽज्येन हुतेन परितुष्यति। किञ्च 'अग्नेः प्रियतमं हविः', 'असि'। तादृशं त्वां स्वाहुतं करोमि॥

(५,६) अथ द्वितीयतृतीयौ मन्त्रावाह। "अपां पुष्पमस्योषधीनाꣳ रसः। सोमस्य प्रियं धाम। इन्द्रस्य प्रियतमꣳ हविः स्वाहा। अपां पुष्पमस्योषधीनाꣳ रसः। सोमस्य प्रियं धाम। विश्वेषां देवानां प्रियतमꣳ हविः स्वाहा" इति। पूर्ववद्व्याख्येयं॥

(७) तथा आज्यशेषस्य भक्षणमन्त्रमाह। "वयꣳ सोम-व्रते तव। मनस्तनुषु पिप्रतः। प्रजावन्तो अशीमहि" ॥ ३ ॥ हे सोम वयं 'व्रते' अस्मिन् कर्म्मणि, वर्त्तमानाः 'मनः', च 'तनुषु' शरीरेषु, 'पिप्रतः' पूरयन्तः, 'प्रजावन्तः' पुत्रपौत्रादि-युक्ताः, 'अशीमहि' हविःशेषं भक्षयामः ॥

(८-१०) अथ ये दक्षिणाग्नौ होममन्त्रास्तानाह। "देवेभ्यः पितृभ्यः स्वाहा। सोम्येभ्यः पितृभ्यः स्वाहा। कव्येभ्यः पितृभ्यः स्वाहा" इति। ये पितरो 'देवाः' दीप्तिमन्तः, ये च 'सोम्याः' सोमार्हाः, 'कव्याः' हविर्भुजः, तेभ्यः सर्व्वेभ्यः 'पितृभ्यः', स्वाहुतमस्तु ॥

(११-१३) यदुक्तं सूत्रकारेण। तं जघनेन दक्षिणाग्नेः प्रागग्रान् दर्भान् सꣳस्तीर्य्य दधि दधातीति। तत्र मन्त्रत्रयमाह। "देवास इह मादयध्वम्। सोम्यास इह मादयध्वम्। कव्यास इह मादयध्वम्" इति। देवसोम्यकव्यशब्दवाच्याः पूर्व्वोक्तास्त्रिविधाः पितरः 'इह' अस्मिन्नहनि, स्वयं हृष्टा अस्मानपि हर्षयध्वं ॥

(१४) अथोपस्थाने मन्त्रमाह। "अनन्तरिताः पितरः सो-म्याः सोमपीथात्" इति। 'सोम्याः' सोमयोग्याः, 'पितरः', 'सोमपीथात्' सोमपानात्, 'अनन्तरिताः' अन्तरायरहिताः, भवन्तु ॥

(१५) अथ द्वादशाहे दीक्षितेषु समन्वारब्धेषु गार्हपत्ये हो-ममन्त्रमाह। "अपैतु मृत्युरमृतन्न आगन्। वैवस्वतो नो अभयं कृणोतु। पर्णं वनस्पतेरिव ॥ ४ ॥ अभि नः शी-

यताꣳ रयिः। सचतान्नः शचीपतिः" इति। सोयं 'मृत्युः', सोयम् 'अपैतु', 'अमृतं' मरणराहित्यं, 'नः' अस्मान्, प्रति 'आगन्' आगच्छतु। 'वैवस्वतः', 'अस्माकं' 'अभयं कृणोतु' मरणभीतिराहित्यं करोतु। किञ्च यथा 'वनस्पतेः', पक्कं 'पर्णं', अयत्नेनैव पतति तथा 'रयिः' धनं, 'नोभि' अस्मानभिलक्ष्य, 'शीयतां' पततु, स्वयमेवागच्छत्वित्यर्थः। अपि च 'शचीपतिः' इन्द्रः, 'नः' अस्मान्, 'सचतां' भजतु॥

(१६) अथ दक्षिणाग्नौ होममन्त्रमाह। "परं मृत्यो अनुपरेहि पन्थाम्। यस्ते स्व इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि। मा नः प्रजाꣳ रीरिषो मोत वीरान्" इति। हे 'मृत्यो', 'परं पन्थां' अस्मान्मार्गादन्यं मार्गं, 'अनुपरेहि' क्रमेण पुनरावृत्तिरहितो गच्छत्, 'देवयानात्' स्वर्गलोकमार्गात्, 'इतरः', यो मार्गस्तम्, 'अनुपरेहि', इति पूर्व्वत्रान्वयः। 'चक्षुष्मते' अस्मास्वनुग्रहकारिदृष्टियुक्ताय, 'शृण्वते' अस्मद्विज्ञापनमादरेण स्वीकुर्व्वते, 'ते' तुभ्यम्, इदं 'ब्रवीमि'। 'मा' मां, 'नः' अस्माकं, 'प्रजां' पुत्रादिकां, 'मा रीरिषः' माहिंसीः, 'उत' अपि च, 'वीरान्' भृत्यानपि, 'मा रीरिषः'॥

(१७) अथाहवनीये होममन्त्रमाह। "इदमु नु श्रेयोवसानमागन्म। यद्गोजिद्धनजिदश्वजिद्यत्। पर्णं वनस्पतेरिव। अभि नः शीयताꣳ रयिः। सचंतान्नः शचीपतिः"॥ ५॥ इति। 'यत्' यागगृहं, गोधनाश्वजयकारणं, 'इदमु' इदमेव, 'श्रेयः'

प्रशस्यतरं, 'अवमानं' यागगृहं, 'नु' चिप्रम्, 'आगन्म' आगताः स्म। पर्षमित्यादि पूर्व्ववत् ॥

अत्र विनियोगसङ्ग्रहः।

*यद्दीत्यवभृथे स्नात्वा त्रिभिर्नीरं विषिञ्चति।
'अपां' जुहोत्याहिताग्निरार्त्विज्यं सोमभक्षणे ॥
'वयं' सोमं भक्षयेत 'देवेभ्यः' दक्षिणानले।
'देवा' दर्भे दधि क्षिप्त्वा †स्थानमित्युपतिष्ठते ॥
'अपे' होमो द्वादशाहे क्रमादग्निवये त्रिभिः।
वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे तृतीयकाण्डे सप्तमे प्रपाठके चतुर्द्दशोऽनुवाकः।

समाप्तश्च प्रपाठकः।

---

* 'यद्दि' इति प्रतीकम्। † 'अनम्' इति प्रतीकम्।

# अथ तैत्तिरीय-ब्राह्मणे

## तृतीयकाण्डे अष्टमप्रपाठके.

### प्रथमोऽनुवाकः ।

॥ हरिः ॐ ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
अच्छिद्रार्थाः कर्म्ममन्त्राः सप्तमे पाठके श्रुताः ।
अष्टमे नवमे वाश्वमेधब्राह्मणमुच्यते ॥
अश्वमेधस्त्रिरात्रोयं महत्राद्यं त्विहाष्टमे ।
पाठके वर्ण्यतेतत्र योक्तादौ स्वामिसंस्कृतिः ॥

(१) सूत्रकारेण राजा सार्व्वभौमोऽश्वमेधेन यजेतेत्युपक्रम्य चैत्र्यां पौर्णमास्याꣳ साङ्ग्रहण्येष्ट्या यजत इति यदुक्तं तदिदं विधत्ते। "साङ्ग्रहण्येष्ट्या यजते। इमां जनताꣳ सङ्गृह्णानीति" इति। 'इमां जनतां' स्वस्यापेक्षितं जनसमूहं, सङ्ग्रहीष्यामीत्यभिप्रेत्य 'साङ्ग्रहण्याख्ययेष्ट्या' यजेत्। सा चेष्टिर्वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकाम इत्यत्रोत्पन्ना सङ्गृह्यते, अपेक्षितं सर्व्वं ययासौ सङ्ग्रहणी सैव साङ्ग्रहणी ॥

(२) यदुक्तं सूत्रकारेण। द्वादशारत्निस्त्रयोदशारत्निर्वा दर्भमयी मौञ्जी वा रशनेति। तत्राश्वबन्धनार्थाया रशनायाः

परिमाणं प्रकृतिद्रव्यं च क्रमेण विधत्ते। "द्वादशारत्नी रशना भवति। द्वादशमासाः संवत्सरः। संवत्सरमेवावरुन्धे। मौञ्जी भवति। ऊर्ग्वै मुञ्जाः। ऊर्ज्जमेवावरुन्धे" इति। चतुर्व्विंशतित्यङ्गुलयोऽरत्निः 'द्वादशारत्नी'प्रमाणेयं अश्वाभिधानी 'रशना', कर्त्तव्या। तत्र सङ्ख्याबलान्मासद्वारा संवत्सरप्राप्तिर्भवति। मुञ्जाख्येन तृणविशेषेण सा रशनानिष्पाद्या। पशुभिर्भक्ष्यत्वात् मुञ्जानामूर्ग्रूपत्वं॥

(३) अश्वमेधस्य सङ्कल्पकाले नक्षत्रविशेषं विधत्ते। "चित्रा नक्षत्रं भवति। चित्रं वा एतत् कर्म्म॥१॥ यदश्वमेधः समृद्ध्यै" इति। बहुविधानामनुष्ठेयानामिष्टिपशुसोमरूपाणां सद्भावादश्वमेधकर्म्मणश्चित्रत्वमतस्तस्य समृद्ध्यर्थं॥

(४) चित्रानक्षत्रं कालविशेषं विधाय देशविशेषं विधत्ते। "पुण्यनाम देवयजनमध्यवस्यति। पुण्यामेव तेन कीर्त्तिमभिजयति" इति। 'पुण्यं' पावनं नामधेयं यस्य श्रवणमात्रेण प्रतीयते तत् 'पुण्यनाम', स्थानं पुष्करवनं गौतमवनं वाराणसीकुरुक्षेत्रमित्यादि, तादृशं 'देवयजन',देशं चित्रानक्षत्रकाले 'अध्यवस्यति' तेन पुण्यां कीर्त्तिं प्राप्नोति॥

(५) देशकालयोर्विशेषं विधाय ऋत्विगानयने विशेषं विधत्ते। "अपदातीनृत्विजः समावहन्त्यासुत्रह्मण्यायाः। सुवर्गस्य लोकस्य समष्ट्यै" इति। ये ऋत्विजः स्वस्वगृहे वृताः तान्, 'ऋत्विजः', 'अपदातीनावहन्ति' पादसञ्चारं निवार्य्य हस्त्यश्वादीनारोह्य राजपुरुषास्तानृत्विज आनयन्ति। तत्रकालविधिः

आसुब्रह्मण्यायाः', इति। यस्यां चैत्र्यां पौर्णमास्यां साङ्ग्रहिणी तत्र आरभ्य संवत्सरेऽतीते सत्युपरितनसंवत्सरे वैशाख्याममावास्यायां त्रैधातवीयरूपायां दीक्षणीयामारभ्य सप्तसु दिनेषु तस्यां दीक्षणीयायां समाप्तायां तत्समाप्तिदिनमारभ्य दिनत्रये दीक्षाः परिसमाप्य तत्र उपरितने प्रायणीयेऽहनि सुब्रह्मण्या प्रवर्त्तते। तत् सुब्रह्मण्यपर्यन्तमृत्विजां समावहनं कर्त्तव्यं। तद्यथा साङ्ग्रहण्येष्टिदिने तस्य तस्य गृहे गत्वा सोमप्रवाकेण वृतानध्वर्युब्रह्महोतॄनाग्नीध्रञ्च हस्त्यश्वादिकमारोप्यार्थमानयन्ति। अनन्तरभाविन्यां वैशाख्यां पौर्णमास्यां प्राजापत्यमृषभन्तूपरमालभ्य सोमप्रवाकवृतौ मैत्रावरुणप्रतिप्रस्थातारौ हस्त्यश्वादिकमारोप्य राजपुरुषा आनयन्ति। अनन्तरभाविन्यां वैशाख्याममावास्यायां अग्न्याधानार्थं चतुर्णां महर्त्विजामपेक्षितत्वादध्वर्युब्रह्महोतॄणां पूर्वमेवानीतत्वादवशिष्टमहर्त्विजमुद्गातारं हस्त्यश्वादिभिरानयन्ति। अथागामिसंवत्सरगतायां वैशाख्याममावास्यायां दीक्षणीयेष्टौ साम गातुं प्रस्तोतारं हस्त्यादिभिरानयन्ति। ततो दीक्षारम्भदिवसादूर्ध्वं तृतीयादिष्वहःसु अन्यानितरानष्टावृत्विजो हस्त्यश्वादिकमारोप्यानयन्ति। ब्राह्मणाच्छंसिनमच्छावाकं नेष्टारं प्रतिहर्त्तारं ग्रावस्तुतं पोतारमुन्नेतारं सुब्रह्मण्यमित्येतान् सामार्थमानयन्ति। एवमासुब्रह्मण्याह्वानादपदातीनृत्विज आवहन्ति तदीक्षितस्यानारोहणमास्यात् स्वर्गप्राप्तिर्भवति॥

(६) यद्यप्ययमश्वमेधो द्वादशाहविकृतित्वद्वारा परम्परया-

ग्निष्टोमविकृतिः। अतो वपनादिकमत्र प्राप्तं तथाप्यन्तर्दीक्षासमीपे न तत्र अतोऽप्राप्तमपूर्व्वं वपनादिकमत्र विधत्ते। "केशश्मश्रु वपते। नखानि निकृन्तते। दतो धावते। स्नाति। अहतं वासः परिधत्ते। पाप्मनोऽपहत्यै। वाचं यत्वोपवसति। सुवर्गस्य लोकस्य गुप्त्यै। रात्रिं जागरयन्त आसते। सुवर्गस्य लोकस्य समष्ट्यै" ॥ २ ॥ इति। 'अहतं' अच्छिन्नं नूतनं, तेन पापं विनश्यति वाग्यमनपूर्व्वकेणोपवासेन स्वर्गलोकः रक्षितो भवति। येन यजमानं राजानं 'रात्रिं', 'जागरयन्तः' निवृत्तनिद्रं कुर्व्वतः, कथाभिर्नानाविधाभिः विनोदयन्तः पार्श्वस्थाः, 'आसते'। तज्जागरणं स्वर्गस्य सम्यक् प्राप्तये भवति॥

इति प्रथमोऽनुवाकः।

---

अथ द्वितीयोऽनुवाकः।

(१) प्रथमेनुवाके यजमानसंस्कारा उक्ताः। द्वितीये ब्रह्मौदनोऽभिधीयते। तदर्थमादौ चतुर्व्विधानि जलानि विधत्ते। "चतुष्टय्य आपो भवन्ति। चतुःशफो वा अश्वः प्राजापत्यः समृद्ध्यै" इति। प्रजापतिदेवताकस्याश्वस्य शफसङ्ख्यासाम्याज्जलचतुष्टयं समृद्धिहेतुः आनयति। वर्ष्याः कूप्या स्थावरा वहन्त्यश्चेति जलानां चातुर्विध्यं। एतच्चारुणकेतुके चयने स्पष्टमाम्नातं॥

(२) तासामपामाहरणे देशविशेषान् विधत्ते। "ता दिग्भ्य

समाभृता भवन्ति। दिक्षु वा आपः। अन्नं वा आपः। अद्भ्यो वा अन्नं जायते। यदेवाद्भ्योऽन्नं जायते। तदवरुन्धे" इति। प्राच्यादिभ्यस्तत्तद्भ्यः 'दिग्भ्यः', 'ताः' आपः, आहर्त्तव्याः। न केवला दिशः। आपश्च सर्वासु 'दिक्षु', वर्त्तन्ते, ताश्चान्न-रूपाः, अन्नस्याद्भ्यो जातत्वात् तस्मादपामाहरणे सति 'अन्नं', जातमन्नं सर्वं प्राप्तं भवति॥

(३) आहृतास्वप्स्वोदनपाकं विधत्ते। "तासु ब्रह्मौदनं पचति। रेत एव तद्दधाति" ॥ १ ॥ इति। रेतस ओदनस्य-न्यत्वात्तेनौदनपाके 'रेत एव', धारयति॥

(४) ओदनस्य परिमाणं विधत्ते। "चतुःशरावो भवति। दिक्ष्वेव प्रतितिष्ठति" इति। शरावचतुष्टयपरिमितैर्व्रीहिभिर-यममोदनो निष्पादनीयः। चतुःसङ्ख्यासाम्येन दिक्षु प्रतिष्ठा॥

(५) यदुक्तं सूत्रकारेण। प्राच्यां राजतं रुक्मं निधाय तस्मिन् ब्रह्मौदनमुद्धृत्य प्रभूतेन सर्पिषोपसिच्य सौवर्णं रुक्ममुपरिष्टात् कृत्वा दर्भेष्वनुदिक्ष्वग्रतुर्थ्य आसिच्य सर्पिष्मन्तमुपाहरति, प्राशितवद्भ्यः चतुरः माहरान् सौवर्णनिष्कान् ददाति। तदेतत् सर्वं क्रमेण विधत्ते। "उभयतो रुक्मौ भवतः। उभयत एवास्मिन् रुचं दधाति। उद्धरति शृतत्वाय। सर्पिष्वान् भवति मेध्यत्वाय। चत्वार आर्षेयाः प्राश्नन्ति। दिशामेव ज्योतिषि जुहोति। चत्वारि हिरण्यानि ददाति। दिशामेव ज्योतिष्यवरुन्धे" ॥ २ ॥ इति। ओदनस्याधस्तादुपरिष्टाच्च रुक्मस्थापनेन 'उभयतः', ज्योतिः सम्पादयति। पात्रादुद्

रणेन पक्कत्वं स्पष्टी भवति। प्रभूतसर्पिर्योगेन शुद्धतया यज्ञ-योग्यं भवति। 'आर्षेयाः' ऋषिपुत्रसमानाः, 'चत्वारः', मुख्या ऋत्विजः, तेषां प्राशनेन चतसृणां दिशां सम्बन्धिनि ज्योतिष्येव कृतं भवति। चतुःसहस्रनिष्कदानेन चतुर्दिक्सम्बन्धीनि ज्योतींषि प्राप्नोति॥

(६) यदुक्तं सूत्रकारेण। द्वादशारत्निस्त्रयोदशारत्निर्वा दर्भमयी मौञ्जी वा रशना तां ब्रह्मौदनोच्छेषणेनानक्तीति। तदिदमञ्जनं विधत्ते। "यदाज्यमुच्छिष्यते। तस्मिन् रशनान् युनक्ति। प्रजापतिर्वा ओदनः। रेत आज्यम्। यदाज्ये रशनान् युनक्ति। प्रजापतिमेव रेतसा समर्द्धयति" इति। पात्र्यामुद्धृत ओदने बह्वाज्यं प्रक्षिप्तं, तच्चाज्यविशिष्ट ओदनो यावानृत्विग्भ्यो दत्तस्तस्मादन्नात् 'यदाज्यं', ओदनविशिष्टं पात्र्यां 'उच्छिष्यते' 'तस्मिन्' आज्ये, अश्वबन्धनहेतुं 'रशनां', 'युनक्ति' नितरां क्लिन्नां कुर्य्यात्। ओदनस्य प्रजापतिसृष्टत्वेन प्रजापतिस्वरूपत्वादाज्यस्य च रेतःकारणत्वेन रेतोरूपत्वादोदनविशिष्ट आज्ये रशनाया अञ्जनेन प्रजापतिमेव रेतसा समृद्धं करोति तस्या रशनायाः मौञ्जीत्वपक्षः पूर्व्वानुवाकेऽभिहितः॥

(७) दर्भमयत्वपक्षमत्र विधत्ते। "दर्भमयी रशना भवति। बहु वा एष कुचरो मेध्यमुपगच्छति। यदश्वः। पवित्रं वै दर्भाः॥ ३॥ यद्दर्भमयी रशना भवति। पुनात्येवैनम्। पूतमेनं मेध्यमालभते" इति। 'कुचरः' भूम्यां सञ्चरन्, अयं 'अश्वः', 'बहु वै' प्रभूतमेव, 'अमेध्यं' अशुचिरूपं, उपगच्छति।

उच्छिष्टाद्युपेक्षितेषु देशेषु सञ्चरणात् दर्भाणां शुद्धिहेतुत्वात् तन्मयरशनया तं 'एनं' अश्वं, 'पुनाति', ततः शुद्धत्वेन यज्ञयोग्यं 'एनं' अश्वं, 'आलभते' ॥

(८) चत्वार आर्षेयाः प्राश्नन्तीति । यदुक्तं तदेव स्पष्टीकुर्वन् प्रशंसति । "अश्वस्य वा आलब्धस्य महिमोदक्रामत् स महर्त्विजः प्राविशत् । तन्महर्त्विजां महर्त्विक्त्वम् । यन्महर्त्विजः प्राश्नन्ति । महिमानमेवास्मिन् तद्दधति" इति । पुरा कदाचिदालब्धादश्वादुत्क्रान्तस्तदीयो 'महिमा' सामर्थ्यातिशयः, 'महर्त्विजः', अध्वर्युब्रह्महोतोद्गातृलक्षणा मुख्या ऋत्विजः, 'प्राविशत्' । 'तत्' तस्मात्, महिम्नः प्रवेशात्, 'महर्त्विक्त्वं', एषां सम्पन्नं 'तत्' तेन, महर्त्विजां अश्वोदनप्राशनेन, 'अस्मिन्' यजमाने, 'महिमानमेव', सम्पादयन्ति ॥

(९) यदुक्तं, चत्वारि हिरण्यानि ददातीति । तदेतत् प्रशंसति । "अश्वस्य वा आलब्धस्य रेत उदक्रामत् । तत्सुवर्णꣳ हिरण्यमभवत् । यत्सुवर्णꣳ हिरण्यं ददाति । रेत एव तद्दधाति" इति । पुरा कदाचित्, 'आलब्धस्य', 'अश्वस्य', 'रेतः' सारभूतांशः, तस्मादश्वादुत्क्रम्य शोभनवर्णोपेत 'हिरण्यमभवत्' । अतस्तस्य दानेन 'रेत एव', धारयति ॥

(१०) सुवर्णदानस्य कालं विधत्ते । "ओदने ददाति । रेतो वा ओदनः । रेतो हिरण्यम् । रेतसैवास्मिन् रेतो दधाति" इति । हिरण्यस्य रेतःकार्य्यत्वात् ओदनस्य तत्कारणत्वाच्चोभयोरपि रेतोरूपत्वं, अतः 'ओदने', भुक्ते सत्य-

नन्तरमेव यदानन्त्येन दानेन 'अस्मिन्' यजमाने, ओदनरूपेण 'रेतस्येव', हिरण्यरूपं 'रेतः', धारयति ॥

इति द्वितीयोऽनुवाकः ।

---

अथ तृतीयोऽनुवाकः ।

(१) द्वितीये ब्रह्मौदनोऽभिहितः । तृतीये रशनयाऽश्वबन्धनमभिधीयते । तत्रादौ ब्रह्माणं प्रत्यनुज्ञायै मन्त्रमुत्पादयितुं प्रशंसति । "यो वै ब्रह्मणे देवेभ्यः प्रजापतयेऽप्रतिप्रोच्याश्वं मेध्यं बध्नाति । आ देवताभ्यो वृश्च्यते । पापीयान् भवति । यः प्रतिप्रोच्य । न देवताभ्य आवृश्च्यते । वसीयान् भवति" इति । 'यः' अश्वमेधयाजी, देवार्थं प्रजापत्यर्थञ्च वर्त्तमानं यागयोग्यं 'अश्वं', ऋत्विग्रूपाय 'ब्रह्मणे', स्वयं 'अप्रतिप्रोच्य' अनुक्त्वा, तदनुज्ञामलब्ध्वा 'बध्नाति' । सोयं 'देवताभ्यः', 'आवृश्च्यते' विच्छिद्यते, तदनुग्रहाभावात् 'पापीयान्' अतिशयेन दरिद्रः, 'भवति' । 'यः', तु ब्रह्मणे तस्मै 'प्रतिप्रोच्य' तदनुज्ञां लब्ध्वा, बध्नाति । सोयं 'देवताभ्यो न', विच्छिद्यते तत एवातिशयेन धनवान् भवति ॥

(२) इदानीं मन्त्रमुत्पाद्य तदीयं तात्पर्यं दर्शयति । "यदाह । ब्रह्मन्नश्वं मेध्यं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति ब्रह्म वै ब्रह्मा । ब्रह्मण एव देवेभ्यः प्रजापतये प्रतिप्रोच्याश्वं मेध्यं बध्नाति ॥ १ ॥ न देवताभ्य आवृश्च्यते ।

वसीयान् भवति" इति। हे 'ब्रह्मन्', देवार्थं प्राजापत्यर्थं 'मेध्यं' यागयोग्यं, 'अश्वं', 'भन्त्स्यामि' रशनया बद्धं करिष्यामि, 'तेन' अश्वबन्धनेन, 'राध्यासं' समृद्धो भूयासं। 'इति' एतं मन्त्रं, यद्यध्वर्युः 'आह', तदानीं देवताभ्यो न वृश्च्यते। अतिशयेन धनवांश्च भवति। मन्त्रे योऽयमुल्लिखितो ब्रह्मा कथितः सोऽयं ब्रह्मैव अतस्तस्मै परब्रह्मण एव कथयित्वा मेध्यमश्वं बध्नाति ततो युक्तास्य धनिकत्वादिः ॥

(३) अत्र रशनास्वीकारे मन्त्रः सप्तमकाण्डे समाम्नातः। देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्यां। पूष्णो हस्ताभ्यामाददे इति। तेन मन्त्रेण स्वीकारं विदधानमनूद्य व्याचष्टे। "देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्ताम्। पूष्णो हस्ताभ्यामित्याह यत्यै" इति। तदिदं ब्राह्मणं तत्र तत्रासकृद्व्याख्यातं। स्वीकृताया रशनाया अभिमन्त्रणार्थो मन्त्रः सप्तमकाण्ड एवमाम्नातः। इमामगृभ्णन् रशनामृतस्य पूर्व्व आयुषि विदथेषु कव्या। तया देवाः सुतमाबभूवुर्ऋतस्य सामन् सरमारयन्तीति ॥

(४) तमिमं मन्त्रं रशनाभिमन्त्रणे विनियुङ्क्ते। "व्यृद्धं वा एतद्यज्ञस्य यदयजुष्केण क्रियते। इमामगृभ्णन् रशनामृतस्येत्यधिवदति यजुष्कृत्यै। यज्ञस्य समृद्ध्यै" ॥ २ ॥ इति। 'यज्ञस्य', सम्बन्धि 'यत्' अङ्गं, 'अयजुष्केण' मन्त्ररहितेन व्यापारेण, 'क्रियते'। तदिदमङ्गं 'व्यृद्धं' समृद्धिविकलं, [illegible]। तथापि

युज्यत इति व्युत्पत्त्या यजुर्वेदपठितत्वेन च यजुरित्युच्यते। तस्मात् सर्वयज्ञानुष्ठानाय 'इमां', इति मन्त्रं पठेत्। ततो यज्ञाः समृद्धा भवन्ति। प्रथमपादस्यायमर्थः यत्र यज्ञाङ्गाश्वस्य सम्बन्धिनीं 'इमां' रशनां, पूर्वे पुरुषा 'अगृभ्णन्' स्वीकृतवन्तः, इति अस्या अश्वरशनाया द्वादशारत्निपक्षः प्रथमानुवाकेऽभिहितः॥

(५) अत्र त्रयोदशारत्निलपक्षं विचारमुखेन विधत्ते। "तदाहुः। द्वादशारत्नी रशना कर्त्तव्या३ त्रयोदशारत्नी३रिति। ऋषभो वा एष ऋतूनाम्। यत् संवत्सरः। तस्य त्रयोदशो मासो विष्टपम्। ऋषभ एष यज्ञानाम्। यदश्वमेधः। यथा वा ऋषभस्य विष्टपम्। एवमेतस्य विष्टपम्। त्रयोदशमरत्निं रशनायामुपादधाति यथर्षभस्य विष्टपं संस्करोति। तादृगेव तत्" इति। तत्र तत्र रशनाविषये परीक्षकाः परस्परमेवमाहुः। किमेषा 'द्वादशारत्नीः', कर्त्तव्या किं वा 'त्रयोदशारत्नीः,' इति। तत्राभिज्ञः कश्चिद्दृष्टान्तमुखेनोत्तरं ब्रूते। यथा लोके गवां 'ऋषभः' पतिः, एवं गोस्थानीयानां 'ऋतूनां', 'संवत्सरः', स्वामी। अथ प्रथमानुवाके मासद्वारा संवत्सरसाम्यात् द्वादशारत्निलपक्षः समर्थितः। इह तु तत ऊर्द्ध्वं त्रयोदशारत्निल·पक्षं समर्थयितुमपरो विशेष उच्यते। तथा लोके ऋषभस्योपरि ककुत् उन्नतं भवति। एवं द्वादशमासात्मकस्य संवत्सरस्य ऋषभस्थानीयस्य योयमधिकमासः 'त्रयोदशः', सोयं 'विष्टपं' ककुत्स्थानीयः एवं सत्यत्राप्यग्निष्टोमा-

दयो यज्ञा गोस्थानीयाः। अश्वमेध ऋषभस्थानीयः तस्य च लौकिकस्य 'ऋषभस्य', 'विष्टपं' ककुत्, अपेचिता, अतो विष्टपत्वेन 'रशनायां त्रयादशमरत्निं', सम्पादयेत्। तथा सति 'ऋषभस्य', इवाश्वमेधस्य 'विष्टपं', संस्कृतं भवति॥

(६) अथ रशनादानमन्त्रस्य द्वितीयस्मिन् पादे आयुःशब्दतात्पर्यमाह। "पूर्व्वे आयुषि विदथेषु कव्येत्याह। आयुरेवास्मिं दधाति" इति। 'विदथेषु' यज्ञेषु, 'आयुषि', निमित्तभूते सति 'कव्या' कवयो विद्वांसः, 'पूर्व्वे' महर्षयः, इमां रशनां गृहीतवन्त इति मन्त्रपादस्याचरार्थः। तत्रायुषीति प्रयोगादायुर्यजमाने सम्पादयति॥

(७) तृतीयपादे बभूवुरिति शब्दस्य तात्पर्य्यं दर्शयति। "तया देवाः सुतमाबभूवुरित्याह। भूतिमेवापावर्त्तते" इति। 'देवाः', सर्व्वे 'तया' रशनया, अश्वबन्धनादि द्वारेण 'सुतं' अभिषवोपेतं अश्वमेधात्मकं सोमयागं, 'आबभूवुः' सर्व्वतः प्राप्ता इत्यचरार्थः। तत्र भवतिधातोर्भूतेरभिधायकत्वात् तत्पाठनैश्वर्य्यमेव प्राप्नोति॥

(८) चतुर्थपादे ऋतशब्दस्य तात्पर्य्यं दर्शयति। "ऋतस्य सामन् सरमारपन्तीत्याह। सत्यं वा ऋतं। सत्येनैवैनमृतेनारभते" इति। 'ऋतस्य' सत्यभूतस्य यज्ञस्याश्वमेधस्य, 'सामन्' समीचीनेऽनुष्ठाने, 'सरं' प्रवृत्तिं, पारं 'आरपन्ती' कथयन्ती सम्पादयन्ती, रशनेत्यचरार्थः। तत्र ऋशब्द ऋगतावितिधातुजन्यः प्राप्त्यर्थो न भवति किं त्वत्र रूढः सत्यवाची, तस्मात्

'सत्यात्मकेन' 'ऋतेन' यथावदनुष्ठानेन 'एनं' अश्वमेधं, प्रारभते ॥

(६) यदुक्तं सूत्रकारेण अभिधा असीत्यश्वमभिदधातीति। तत्राश्वबन्धनमन्त्रः सप्तमकाण्ड एवमाम्नातः। "अभिधा असि भुवनमसि यन्तासि धर्त्तासि सोऽग्निं वैश्वानरं सप्रथसङ्गच्छ स्वाहाकृतः पृथिव्यां यन्ता राड् यन्तासि यमनो धर्त्तासि धरुणः कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा" इति। तस्मिन्मन्त्रे प्रतिवाक्यं तात्पर्य्यं दर्शयति। "अभिधा असीत्याह। तस्मादश्वमेधयाजिनꣳ सर्व्वाणि भूतान्यभिभवति। भुवनमसीत्याह। भूमानमेवोपैति। यन्तासीत्याह। यन्तारमेवैनं करोति। धर्त्तासीत्याह। धर्त्तारमेवैनं करोति। सोऽग्निं वैश्वानरमित्याह। अग्नावेवैनं वैश्वानरे जुहोति। सप्रथसमित्याह। ॥ ५ ॥ प्रजयैवैनं पशुभिः प्रथयति। स्वाहाकृत इत्याह। होम एवास्यैषः। पृथिव्यामित्याह। अस्यामेवैनं प्रतिष्ठापयति। यन्ता राड् यन्तासि यमनो धर्त्तासि धरुण इत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे कृष्यै त्वा क्षेमाय त्वा रय्यैत्वा पोषाय त्वेत्याह। आशिषमेवैतामाशास्ते" इति। हे अश्व त्वं 'अभिधा' बन्धनीयः, 'असि'। तत्राभिशब्दप्रयोगात् अभिभवितृत्वं यजमानस्य युक्तं। भुवनत्वेन स्तुतत्वात् भूमप्राप्तिर्यजमानस्य। यन्तृधर्तृशब्दप्रयोगात् तद्रूपत्वमश्वस्य सम्पाद्यते। हे अश्व स त्वमग्निं गच्छेत्युक्त्वा तमेतमश्वमग्नौ हुतवान् भवति। प्रथावाचिना 'स प्रथसः', इत्यपि विशेषेण यजमानं प्रजादिभिः

प्रथयति । 'स्वाहाकृतः', इत्युक्तत्वात् तस्य होम एव सम्पद्यते । 'पृथिव्यां', इत्युक्त्वा तमश्वं भूमौ प्रतिष्ठापयति । हे अश्व त्वं 'पृथिव्यां', 'यन्ता' मनुष्यादीनां नियामकः, 'राट्' दीप्यमानश्च, 'असि', तथान्तरिक्षेऽपि गृहनक्षत्रादीनां 'नियन्ता' नियमनसमर्थश्चासि तथा द्युलोकेऽपि देवादीनां धारको धारणसमर्थश्चासि । एतस्मिन्मन्त्रभागे पठिते सत्यस्य मन्त्रस्यैतत् प्रतीयमानं स्वरूपमेवास्याश्वस्य महिमानं विशेषेण कथयति । न चात्रास्माभिर्व्याख्यातव्यं किञ्चिदस्ति । अथ कृष्यादिसिद्ध्यर्थं त्वां बध्नामीत्यनयोक्त्या स्वस्याशिषमेव प्रार्थितवान् भवति ॥

(१०) अथ सप्तमकाण्डानुक्तं शाखान्तरगतमन्त्रशेषं वाक्यद्वयमनूद्य तात्पर्यं दर्शयति । "स्वगा त्वा देवेभ्य इत्याह । देवेभ्य एवैनꣳ स्वगा करोति । स्वाहा त्वा प्रजापतय इत्याह । प्राजापत्यो वा अश्वः । यस्या एव देवताया आलभ्यते । तयैवैनꣳ समर्धयति" इति । हे अश्व 'त्वां' 'देवेभ्यः' देवार्थं, 'स्वगा' स्वागतं स्वाधीनं, बध्नामि अनयोक्त्या । तमश्वं देवानां स्वाधीनं 'करोति' । हे अश्व त्वां 'प्रजापतये', 'स्वाहा' समर्पयामि । एतस्मिन्मन्त्रांशे पठिते सति अश्वस्य प्राजापत्यत्वाद् यद्देवतार्थोऽस्यालम्भः 'तयैव' देवतया, अश्वं समृद्धं करोति ॥

इति तृतीयोऽनुवाकः ॥

अथ चतुर्थोऽनुवाकः ।

(१) तृतीये अश्वबन्धनमुक्तं । चतुर्थे रशनया बध्नन्तमश्वं नीत्वा जलेऽवगाहनमुच्यते । अतएवानुवाकस्याभिप्रेतमवगाहनं । शाखान्तरपर्य्यालोचनया सूत्रकारः स्पष्टमाह । आपोऽश्वमभ्यवगाहयन्तीति । तत्राश्वस्यावगाहनप्रदेशे श्वा कश्चिन्नेतव्यः तन्नयनप्रकारं सूत्रकार आह । आनयन्ति श्वानं चतुरक्षं विश्वग्बन्धेन बद्धं पितुरनुजायाः पुत्रः पुरस्तान्नयति मातुरनुजायाः पुत्रः पश्चात् सैध्रकं मुसलं पौंश्चलेयः पेशमा जानु वेष्टयित्वा पश्चादन्वेत्यापोऽश्वमभ्यवगाहयन्ति श्वानञ्चेति । तदेतद्विधत्ते । "यः पितुरनुजायाः पुत्रः स पुरस्तान्नयति । यो मातुरनुजायाः पुत्रः । स पश्चान्नयति । विश्वञ्चमेवास्मात् पाप्मानं विहृतः" इति । यजमानस्य राज्ञः पितृष्वसीयो मातृष्वसीयश्च गच्छतः सर्व्वतो बध्वा नीयमानस्य शुनः 'पुरस्तात् पश्चाच्च', उभौ गच्छतः तेन 'विश्वञ्चमेव' यजमानस्य सर्व्वतो वर्त्तमानमेव, 'पाप्मानं', 'विहृतः' यजमानाद्वियोजयतः ॥

(२) अथाश्वस्य शुनश्चावगाहने सति जलमध्ये यत्र शुनः पादा भूमिं न स्पृशन्ति तत्र श्वानं हन्तुं दासीपुत्रस्याध्वर्य्युरनुज्ञां प्रयच्छति । स च दासीपुत्रो मुसलेन श्वानं हन्ति तदितत्सर्वं विधत्ते । "यो अर्वन्तं जिघांसति तमभ्यमीति वरुण इति श्वानं चतुरक्षं प्रसौति । परो मर्त्तः परः श्वेति शुनश्चतुरक्षस्य प्रहन्ति । श्वेव वै पाप्मा भ्रातृव्यः । पाप्मानमेवास्य भ्रातृव्यंहन्ति" इति ।

'यः' अयं श्वा, अस्मदीयमश्वं हन्तुमिच्छति। 'तं' श्वानं, जलाधिपतिः 'वरुणः', 'अभ्यमीति' विनाशयति। तमिमं मन्त्रं पठन्नध्वर्युः 'चतुरक्षं' 'श्वानं', प्रति, दासीपुत्रमनुजानीयात्। हे दासीपुत्र श्वानं जहीति ब्रूयात्। अक्ष्णोरुपरिभागेऽक्षिसदृशं बिन्दुद्वयं लाञ्छनं यस्य शुनः सोयं चतुरक्षः। योयमस्याश्वस्य विरोधी 'मर्त्तः' मनुष्यः, सः 'परः' भवतु परस्मात् तिष्ठतु। यश्च 'श्वा', सोपि 'परः' भवतु परस्मात् तिष्ठतु। एतस्मिन् मन्त्रेऽध्वर्युणा पठ्यमाने दासीपुत्रः 'चतुरक्षं श्वानं' हन्यात्। सूत्रकारस्तु ब्राह्मणान्तरमनुसृत्य यो अर्वन्तमिति मन्त्रं हनने विनियुज्य परो मर्त्त इति मन्त्रं पादानामधः शुनोऽक्ष्णोरुपरिभागे अक्षिसदृशं बिन्दुद्वयलाञ्छनं प्रक्षेपो विनियुक्तवान्। योयं पापरूपः शत्रुः सोऽयं शुना सदृशः। अतः शुना वधेन पाप्मैव हतो भवति॥

(३) हननसाधनं विधत्ते। "सैध्रकं मुसलं भवति॥ १॥ कर्म्म कर्म्मैवास्मै साधयति" इति। 'सैध्रकः' महासारो वृक्षः, यस्य वृक्षस्य मध्ये लोहसमानं सारं कृष्णारुणादिवर्णयुक्तं विद्यते तदीयं, 'मुसलं', साधनं। तच्च 'अस्मै' यजमानाय, अपेक्षितमवघातादिकं सर्व्वं 'कर्म्म साधयति'।

(४) हन्तारं विधत्ते। "पौꣳश्चलेयो हन्ति। पुꣳश्चल्यां वै देवाः शुचं न्यदधुः। शुचैवास्य शुचꣳ हन्ति" इति। बहुषु पुरुषेषु चलति नत्वेकस्मिन् भर्त्तरि नियता वर्त्तत इति पुꣳश्चली दासी तत्पुत्रः शुनो हन्ता। पुरा 'देवाः', दास्यामेव शोकं

मर्व्वं स्थापितवन्तः। अतः शोकरूपेण 'एव', दासीपुत्रेण शोकरूपस्य शुनो हननं युक्तं ॥

(५) हतस्य शुनः अश्वपादानामधस्तादवस्थापनं विधत्ते। "पाप्मा वा एतमीप्सतीत्याहुः। योऽश्वमेधेन यजत इति। अश्वस्याधस्पदमपास्यति। वज्री वा अश्वः प्राजापत्यः। वज्रेणैव पाप्मानं भ्रातृव्यमवक्रामति" इति। योऽश्वमेधमनुतिष्ठति। 'एतं', 'पाप्मा', प्राप्तुमिच्छति। हिंसाया बहुलात् 'इति' एवं, अभिज्ञाः 'आहुः'। अतः पापप्राप्तिपरिहाराय मृतं श्वानमश्वपादानामधस्तात् प्रक्षिपेत्। अयम् 'अश्वः', 'वज्री', वज्रसमानैः खुरैर्युक्तत्वात्, अतस्तेन 'वज्रेण', पापरूपं श्वानं वैरिणम् 'अवक्रामति' ॥

(६) पादानामधस्तात्प्रक्षिप्तस्य मृतस्य शुनः पश्चादश्वस्य दक्षिणपार्श्वे जलमध्ये परित्यागं विधत्ते। "दक्षिणाय प्लावयति। पाप्मानमेवास्माच्छमलमपप्लावयति" इति। दक्षिणपार्श्वे प्लावनेन मलरूपं पाप्मानं यजमानादपनयति ॥

(७) अथ जलमध्ये स्थितस्याश्वस्य तीरे प्रत्यङ्मुखत्वेनोद्गमयितुं साधनं विधत्ते। "ऐषीक उदूहो भवति। आयुर्वा इषीकाः। आयुरेवास्मिन् दधाति" इति। उदूह्यते ऊर्द्धन्तीरप्रदेशे प्रेर्य्यते येन दण्डवद्दृढतृणसमूहेन सोयं 'उदूहः', स चैषीकाख्येन तृणविशेषेण निर्म्मितत्वात्'ऐषीकः'। स च प्रौढः कार्य्यः। अतएव सूत्रकारेणोक्तं। तं द्वेशते दक्षिणता धारयन्तो द्वे उत्तरतः तेनाश्वं पुरस्तात् प्रत्यञ्चमभ्युदूहन्तीति। इषीकाणां तृणा-

नां गवादिभक्षत्वेनायुर्हेतुत्वं । अतएवामृतरूपत्वं । तस्मादैषीकेणायुरपमृत्युपरिहारञ्च यजमानं सम्पादयति ॥

(८) अश्विनुदूहे वेतसशाखाया बन्धनं विधत्ते । "वेतसशाखोपसम्बद्धा भवति । अप्सु योनिर्वा अश्वः । अप्सुजो वेतसः । स्वादेवैनं योनेर्निर्मिमीते" इति । अश्वजातीयस्याच्चैःश्रवसः समुद्रादुत्पत्तेरपां योनित्वं । वेतसस्य स्थावरस्यापां योनित्वं प्रसिद्धं । अतोऽश्वस्य स्वकीयादेव योनेरेनमुदूहं निर्मितवान् भवति ॥

(९) जलमध्यान् तीरं प्रत्यश्वस्य उदूहनं विधत्ते । "पुरस्तात् प्रत्यञ्चमभ्युदूहति पुरस्तादेवास्मिन् प्रतीच्यमृतं दधाति" इति । पूर्व्वस्यां दिशि वर्त्तमानश्चतुःशतमल्लाकैर्धारितोऽयमुदूहः प्रत्यङ्मुखमश्वन्तीरमभिलक्ष्य 'उदूहति' ऊर्द्धं प्रेरयति । तथा सति 'पुरस्तात्' एव पूर्व्वस्मादेव वयसः, आरभ्य प्रतीची प्रतीचीनेपि वयस्यस्मिन् यजमाने अमृतमरणत्वं दधाति ॥

(१०) अथ सप्तमकाण्डाम्नातौ द्वौ मन्त्रौ क्रमेण विधत्ते । "अहञ्च त्वञ्च वृत्रहन्निति ब्रह्मा यजमानस्य हस्तं गृह्णाति । ब्रह्मा चत्र एव मन्दधाति । अभिक्रत्वेन्द्र भूरधज्मन्नित्यध्वर्युर्यजमानं वाचयत्यभिजित्यै" इति । स्पष्टार्थः । मन्त्रयोः प्रतीकमात्रमिह निर्द्दिष्टं सम्पूर्णयास्तत्रैवाम्नातत्वात् तदर्थोपि तत्रैव द्रष्टव्यः ॥

इति चतुर्थोऽनुवाकः ।

---

अथ पञ्चमोऽनुवाकः ।

(१) चतुर्थेऽश्वस्य जलावगाहनमुक्तं पञ्चमे महर्त्विजामश्व-प्रोक्षणमुच्यते । तदेतद्विधत्ते । "चत्वार ऋत्विजः समुक्षन्ति । आभ्य एवैनं चतसृभ्योऽभिसमीरयन्ति" इति । अध्वर्युर्ब्रह्म-होतोद्गातारः 'चत्वारः', तदीयेन समुक्षणेन प्राच्यादिभ्यश्च-तसृभ्यो दिग्भ्यः सकाशात् 'एनं' अश्वं, अभिसमीरयन्ति 'आ-भिमुख्येन तत्तद्दिशि सम्यगुत्साहयन्ति' ।

(२) चतुर्णां प्रोक्षणं सङ्क्षेपोक्तत्वाद्विवरीतुमादावध्वर्योः प्रोक्षणं विधत्ते । "शतेन राजपुत्रैः सहाध्वर्युः । पुरस्तात् प्रत्यङ् तिष्ठन् प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयꣳ राजा वृत्रं बध्यादिति । राज्यं वा अध्वर्युः । क्षत्रꣳ राजपुत्रः । राज्येनैवा-स्मिन् क्षत्रं दधाति" इति । 'राजपुत्राः' अभिषिक्तक्षत्रियपुत्राः स्वयं राज्यार्हाः । तैः शतसङ्ख्याकैः सहितोऽयं 'अध्वर्युः', पूर्वस्यां दिशि प्रत्यङ्मुखः स्थित्वा तमश्वं प्रोक्षेत् । अनेनेत्यादिबध्यादि-त्यन्तः प्रोक्षणमन्त्रः । स्पष्टो मन्त्रार्थः । 'वृत्रं' वारकं पापं, शत्रुं वा, राज्यस्वरूपोऽयं 'अध्वर्युः', यजमानेन राज्यार्थमध्वर्योः परोदानात् । तथाच सूत्रकारेणोक्तं । 'ब्राह्मणा राजानस्त्वायं वोऽध्वर्यू राजाया समापचितिः सा वा एतस्मिन् यद एष करोति तदः कृतमसदिति सम्प्रेष्य यावदह्नमध्वर्यू राजा भवतीति"। योऽयं राजपुत्रः स 'क्षत्रं' बलरूपः, अतस्तत्प्रोक्षणे सति अस्मिन् यजमाने राज्येनैव सह बलं सम्पादयति ।

(३) ब्रह्मणः प्रोक्षणं विधत्ते । "शतेनाराजभिरुग्रैः सह ब्रह्मा ॥ १ ॥ दक्षिणत उदङ् तिष्ठन् प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा ।। अयꣳ राजाऽप्रतिधृष्योऽस्त्विति । बलं वै ब्रह्मा । बलमराजोग्रः । बलेनैवास्मिन् बलं दधाति इति" । क्षत्रियाः सन्तोपि राज्यानर्हाः 'अराजानः', 'उग्राः' शूराः, 'अप्रतिधृष्यः' केनाप्यतिरस्कार्य्यः । स्पष्टमन्यत् ॥

(४) होतुः प्रोक्षणं विधत्ते । "शतेन सूतग्रामणिभिः सह होता । पश्चात् प्राङ् तिष्ठन् प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयꣳ राजास्यै विशः ॥ २ ॥ बहुग्वै बह्वश्वायै बह्वजाविकायै । बहुव्रीहियवायै बहुमाषतिलायै । बहुहिरण्यायै बहुहस्तिकायै । बहुदासपूरुषायै रयिमत्यै पुष्टिमत्यै । बहुरायस्पोषायै राजास्त्विति । भूमा वै होता । भूमा सूतग्रामण्यः भूम्नैवास्मिन् भूमानं दधाति" इति । 'सूताः' सारथयः, 'ग्रामण्यः' ग्रामनेतारः ग्रामस्वामिनः, 'विट्' प्रजा, सा विशेष्यते । बहवो गावो यस्या विशः सा 'बहुगुः', तथा बह्वश्वादीनि विशेषणानि । 'रयिमती' प्रभूतधनयुक्ता, 'पुष्टिमती' शरीरपुष्टियुक्ता, 'बहुरायस्पोषा' बहुविधमणिमुक्तादिधनपुष्टियुक्ता, यथोक्तविशेषविशिष्टायाः प्रजाया अयं यजमानः 'राजास्तु' । प्रतिविशेषणं पृथक्त्वे तु आदरार्थं वा राजेति द्विरुक्तिः । होतुर्भूमरूपत्वं पठनीयमन्त्रबाहुल्यादवगन्तव्यं । सूतानां ग्रामण्यानां भूमरूपत्वं व्यापारबाहुल्यात् ॥

(५) उद्गातुः प्रोक्षणं विधत्ते । "शतेन क्षत्तसङ्ग्रहीतृभिः

सहोद्गाता। उत्तरतो दक्षिणा तिष्ठन् प्रोक्षति ॥ ३ ॥ अनेनाश्वेन मेध्येनेष्ट्वा। अयꣳ राजा सर्व्वमायुरेत्विति । आयुर्व्वा उद्गाता। आयुः चत्त सङ्ग्रहीतारः। आयुरेवास्मिन्नायुर्द्दधाति" इति। वैश्यशूद्राभ्यां मातापितृभ्यामुत्पादिताः 'चत्तारः', कोशवृद्धिकारिणः 'सङ्ग्रहीतारः', उद्गात्रादीनामायुष्ट्वं तद्धेतुत्वादुपचर्य्यते ॥

(६) प्रतिदिशं राजपुत्रादीनां या शतसङ्ख्या तां प्रशंसति। "शतꣳ भवन्ति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति" इति। दशेन्द्रियाणां प्रत्येकं दशसु नाडीषु वृत्तेः शतेन्द्रियत्वं ॥

(७) शतसङ्ख्यागता या चतुःसङ्ख्यासमूहे प्रवृत्ता तां प्रशंसति। "चतुःशता भवन्ति। चतस्रो दिशः। दिक्ष्वेव प्रतितिष्ठति" ॥ ४ ॥ इति। 'चतुःशता' चत्वारिंशतानि ॥

इति पञ्चमोऽनुवाकः ।

---

अथ षष्ठोऽनुवाकः ।

(१) पञ्चमे सहर्त्विजां प्रोक्षणमुक्तं। षष्ठेऽश्वशरीराद्भूमौ पततां विन्दूनामनुमन्त्रणमुच्यते। तदेतद्विधत्ते। "यथा वै हविषो गृहीतस्य स्कन्दति। एवं वा एतदश्वस्य स्कन्दति। यन्निक्तमनालब्धमुत्सृजन्ति। यत् स्तोक्या अन्वाह। सर्व्वहुतमेवैनं करो-

त्यस्कन्दाय। अस्कन्नꣳ हि तत्। यद्धुतस्य स्कन्दति" इति। 'यत्' यदि, 'निक्तं' स्नानेन शोधितमश्वं, 'अनालब्धं' आलम्भनरहितम्, 'उत्सृजन्ति' विन्दवः परिक्षिपन्ति। तदानीं यस्य यागान्तरेषु 'गृहीतस्य हविषः', कश्चिदंशः 'स्कन्दति' भूमौ पतित्वा विनश्यति, 'एवं', एव 'अश्वस्य', तद्बिन्दुजातं 'स्कन्दति' भूमौ पतित्वा विनश्यति, तस्य विन्दुस्कन्दनदोषपरिहाराय, 'स्तोक्या अन्वाह' स्तोक्या जलस्य लेशा विन्दवः तद्विषया अग्नये स्वाहेत्यादिमन्त्रोक्तयः स्तोक्यास्ता अनुब्रूयात्, भूमौ पतितस्तोकाननु इत्यादि तदानीमेव पठेत्। यदेतदनुवचनं तेनानुवचनेन विन्दूनां 'अस्कन्दाय' स्कन्दनदोषपरिहारार्थं, 'एनं', अश्वं, 'सर्व्वहुतमेव करोति', स्वाहाकारयुक्तस्य मन्त्रस्य पाठादेव सर्व्वविन्दुभिः सहितोऽश्वो हुतएव भवति। यथा सति 'हुतस्य', द्रव्यस्य 'यत्' लेशरूपं, 'स्कन्दति', तदस्कन्दनं हि न हि तत्र स्कन्दनदोषोऽस्ति॥

(२)अनुवचनीयानां मन्त्राणां सङ्ख्यां विधत्ते। "सहस्रमन्वाह। सहस्रसम्मितः सुवर्गो लोकः। सुवर्गस्य लोकस्याभिजित्यै" इति। सप्तमकाण्डे प्रथमप्रपाठकस्य दशमीषु अग्नये स्वाहेत्यनुवाकास्त्रय आम्नाताः। तत्र मध्यमानुवाके पठिता एकादश मन्त्राः। तत्रान्तिमः सर्व्वस्मै स्वाहेत्ययमुपसंहाररूपत्वात् अन्ते पठनीयः। ततःपूर्व्वे तु दश मन्त्राः शतकृत्व आवृत्ताः सहस्रं सम्पद्यन्ते। तत् सहस्रमनुब्रूयात्। स्वर्गलोकस्य बहुमूल्यत्वाभिप्रायेण सहस्रसम्मितत्वमुक्तं। न हि स्वर्गभोगा मूल्येन

सम्पादयितुं शक्यन्ते। अतः सहस्रानुवचनेन स्वर्गाभिजयो भवति ॥

(३) अथ मन्त्रसङ्ख्यायां पक्षान्तरं विधत्ते। "यत् परिमिता अनुब्रूयात्। परिमितमवरुन्धीत। अपरिमिता अन्वाह। अपरिमितः सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै" इति। सहस्रसङ्ख्यां गणयित्वा परिमितस्यानुवचने भागमपि परिमितमेव प्राप्नुयात्। अतो गणनामकृत्वैव अपरिमिता अनुब्रूयात्। स्वर्गलोकभोगस्येयत्तया परिमितत्वाभावेनापरिमितवचनं तत्प्राप्तये सम्पद्यते ॥

(४) मन्त्राणां स्वाहाकारोपेतत्वेन अनुवचनस्य होमसाम्यमभिप्रेत्य प्रशंसति। "स्तोक्या जुहोति। या एव वर्ष्या आपः। ता अवरुन्धे" इति। विन्दुविषया मन्त्रोक्तयः 'स्तोक्याः', तासामनुवचनरूपेण होमेन वर्षेषु भवा आपः प्राप्नोति ॥

(५) होतव्यानां विन्दूनां भूमौ पतनाद्भूमेरग्निसादृश्यमभिप्रेत्य प्रशंसति। "अस्यां जुहोति। इयं वा अग्निर्वैश्वानरः ॥ २ ॥ अस्यामेवैनाः प्रतिष्ठापयति" इति। होमाधारत्वसाम्यादनाद्भूमेर्वैश्वानराग्निरूपत्वम्। अतस्तत्र होमे सति भूमौ 'एव', 'एनाः' आपः, 'प्रतिष्ठापयति' ॥

(६) स्तोक्यानुवचनस्य यज्ञसमाप्तिहेतुत्वमापद्य प्रशंसति। "उवाच ह प्रजापतिः। स्तोक्यासु च। अहमश्वमेधꣳ सꣳस्थापयामि। तेन ततः सꣳस्थितेन चरामीति" इति। 'स्तोक्यासु' स्तोकरूपास्वप्सु, तद्विषयासु मन्त्रोक्तिषु 'च', एनमश्वमेधक्रतुं

'अहं' प्रजापतिः, 'संस्थापयामि' समापयामि, 'ततः', 'संस्थितेन' तावतैव समाप्तेन, 'तेन' अश्वमेधेन, युक्तोऽहं 'चरामि' अवशिष्टं सर्व्वं प्रतिपत्तिकर्म्मरूपत्वेनानुतिष्ठामि, इत्येवं पुरा कदाचित् प्रजापतिरुवाच किल। तस्मात्प्रशस्तमिदं स्तोक्यानुवचनं।

(७) तत्र प्रथममन्त्रस्य तात्पर्य्यं दर्शयति। "अग्नये स्वाहेत्याह। अग्नय एवैनं जुहोति" इति। चतुर्थ्यन्तमग्निशब्दमुच्चार्य्य प्रदानार्थस्य 'स्वाहा'शब्दस्य प्रयोगात् 'एनं' स्तोकम्, 'अग्नये', हुतवानेव भवति॥

(८) एवमुत्तरेषां नवानां मन्त्राणां तात्पर्य्यं दर्शयति। "सोमाय स्वाहेत्याह। सोमायैवैनं जुहोति। सवित्रे स्वाहेत्याह। सवित्र एवैनं जुहोति॥ ३॥ सरस्वत्यै स्वाहेत्याह। सरस्वत्या एवैनं जुहोति। पूष्णे स्वाहेत्याह। पूष्ण एवैनं जुहोति। वृहस्पतये स्वाहेत्याह। वृहस्पतय एवैनं जुहोति। अपां मोदाय स्वाहेत्याह। अद्भ्य एवैनं जुहोति। वायवे स्वाहेत्याह। वायव एवैनं जुहोति॥ ४॥ मित्राय स्वाहेत्याह। मित्रायैवैनं जुहोति। वरुणाय स्वाहेत्याह। वरुणायैवैनं जुहोति" इति। प्रथममन्त्रवद्व्याख्येयं॥

(९) सर्व्वमन्त्रतात्पर्य्यं निगमयति। "एताभ्य एवैनं देवताभ्यो जुहोति" इति। अग्न्यादिभ्यो वरुणान्ताभ्यः 'एव', 'देवताभ्यः', उक्तमन्त्रपाठेन 'एनं' स्तोकसङ्घं 'जुहोति'॥

(१०) पूर्व्वत्र सहस्रमन्वाहेति यदुक्तं। तत्रैकैकस्य मन्त्रस्य शतावृत्त्यापि क्रमेण सहस्रं सम्पादयितुं शक्यते। तद्व्यावर्त्तयितुं

मन्त्रदशकस्यैवावृत्तिं विधत्ते। "दश दश सम्पादं जुहोति द-शाक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे" इति। एकैकस्यामावृत्तौ दशसङ्ख्याकान्मन्त्रान् सम्पाद्यानुब्रूयात्। सङ्घ-स्यैवानुवृत्तिर्न त्वेकैकस्य मन्त्रस्य सङ्ख्यायां सत्यां 'विराट्' छन्दो दशाक्षरत्वादन्नहेतुत्वेनान्नरूपत्वात् 'विराजैव', भक्षमा-णयोग्यमन्नं प्राप्नोति ॥

(११) दशानां मन्त्राणां आवृत्तिं विधत्ते। "प्र वा एषोऽस्मां-ल्लोकाच्च्यवते। यः पराचीराहुतीर्जुहोति। पुनःपुनरभ्या-वर्त्तं जुहोति। अस्मिन्नेव लोके प्रतितिष्ठति" इति। 'यः' यजमानः, मन्त्रानुवचनरूपा एताः 'आहुतीः', 'पराचीः' आवृत्तिरहिताः, 'जुहोति'। 'एषः' यजमानः, पुनरावृत्त्य-भावाद्भूलोकात् 'प्रच्यवते', अतस्तत्परिहाराय भूयोभूयोमन्त्रा-नावृत्त्यावृत्त्य एताः 'जुहोति'। तेन भूमौ 'प्रतितिष्ठति' ॥

(१२) योऽयमनुवाकादावुपक्रान्तस्कन्दनदोषः तं समाधा-योपसंहरति। "एताꣳ ह वाव सोऽश्वमेधस्य सꣳस्थितिमु-वाचास्कन्दाय अस्कन्नꣳ हि तत्। यद्यज्ञस्य सꣳस्थितस्य स्क-न्दति" इति। 'सः' प्रजापतिः, 'एतां' एवोक्तामाहुतिं, स्क-न्दनदोषपरिहाराय 'अश्वमेधस्य', समाप्तिहेतुम् 'उवाच', 'संस्थितस्य यज्ञस्य', सम्बन्धि 'यत्', द्रव्यं 'स्कन्दति'। 'तत्', अस्कन्दनमेव ॥

इति षष्ठोऽनुवाकः।

---

अथ सप्तमोऽनुवाकः।

(१) षष्ठे लोकानुमन्त्रणमुक्तं। सप्तमेऽध्वर्य्योरेकस्यैव चतुर्द्दिक्षु प्रोक्षणमुच्यते। तत्र प्राच्यां प्रोक्षणं विधत्ते। "प्रजापतये त्वा जुष्टं प्रोक्षामीति पुरस्तात् प्रत्यङ् तिष्ठन् प्रोक्षति। प्रजापतिर्वै देवानामन्नादो वीर्य्यावान्। अन्नाद्यमेवास्मिन् वीर्यं दधाति। तस्मादश्वः पशूनामन्नादो वीर्य्यवत्तमः" इति। हे अश्व 'प्रजापतये', 'जुष्टं' प्रियं, त्वां 'प्रोक्षामि'। अनेन मन्त्रेण पूर्व्वस्यां दिशि प्रत्यङ्मुखावस्थितोऽध्वर्युः प्रोक्षेत्। 'देवानां', मध्ये प्रजापतेरतिशयेनान्नभक्षणसमर्थत्वाद्वीर्योपेतत्वाच्च तन्मन्त्रत्वात् 'अस्मिन्' अश्वे, अन्नादनसामर्थ्यं शक्त्यतिशयं च सम्पादयति। 'तस्मात्' कारणात्, लोकेपि 'अश्वः', 'पशूनां', मध्ये बहन्नभक्षकातिशयेन वीर्य्यवांश्च दृश्यते।

(२) दक्षिणस्यां प्रोक्षणं विधत्ते। "इन्द्राग्निभ्यां त्वेति दक्षिणतः। इन्द्राग्नी वै देवानामोजिष्ठौ बलिष्ठौ। ओज एवास्मिन् बलं दधाति। तस्मादश्वः पशूनामोजिष्ठो बलिष्ठः" इति। 'इन्द्राग्निभ्यां त्वा', जुष्टं प्रोक्षामीति वाक्यशेषः। 'देवानां', मध्ये तावतिशयेनौजसा बलहेतुना युक्तौ बलाधिक्ययुक्तौ च अतोऽश्वेऽपि तदुभयं सम्पादयति। तस्माल्लोकेऽप्यश्वस्तादृशो दृश्यते॥

(३) पश्चिमदिशि प्रोक्षणं विधत्ते। "वायवे त्वेति पश्चात्। वायुर्वै देवानामाशुः सारसारितमः। जवमेवास्मिन्दधाति। तस्मादश्वः पशूनामाशुः सारसारितमः" इति। 'देवानां', मध्ये 'वायुः', 'आशुः' शैघ्र्यवान्, अत एवातिशयेन 'सारसारी' उत्क-

र्षगामी, वायुमन्त्रेण अस्मिन् अश्वे वेगावस्थापनाल्लोकेऽप्यश्वस्तादृशो दृश्यते ॥

(४) उदीच्यां प्रोक्षणं विधत्ते। "विश्वेभ्यस्त्वा देवेभ्य इत्युत्तरतः। विश्वे वै देवा देवानां यशस्वितमाः। यश एवास्मिन् दधाति। तस्मादश्वः पशूनां यशस्वितमः" इति। युद्धादावश्वस्यातिशयेन यशस्वित्वं। स्पष्टमन्यत् ॥

(५) अश्वस्याधोभागे प्रोक्षणं विधत्ते। "देवेभ्यस्त्वेत्यधस्तात्। देवा वै देवानामपचिततमाः। अपचितिमेवास्मिन् दधाति। तस्मादश्वः पशूनामपचिततमः" इति। सर्व्वलोकवर्त्तिनां सर्व्वेषां 'देवानां', मध्ये हविर्भुजो देवा अतिशयेन पूजिताः ॥

(६) ऊर्ध्वभागे प्रोक्षणं विधत्ते। "सर्व्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टात्। सर्व्वे वै देवास्त्विषिमन्तो हरस्विनः। त्विषिमेवास्मिन् हरो दधाति। तस्मादश्वः पशूनां त्विषिमान् हरस्वितमः" इति। 'त्विषिमन्तः' दीप्तिमन्तः, 'हरस्विनः' हरसा कार्य्यक्षमत्वलक्षणेन तेजसा युक्ताः। स्पष्टमन्यत् ॥

(७) अथावशिष्टप्रोक्षणमन्त्रे पूर्व्वभागस्य तात्पर्य्यं दर्शयति। "दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेत्याह। एभ्य एवैनं लोकेभ्यः प्रोक्षति" इति। 'दिवे त्वा', जुष्टं प्रोक्षामीत्यध्याहृत्यार्थो द्रष्टव्यः। एवमन्तरिक्षायत्वेत्यादौ योजनीयं। अनेन लोकत्रयप्रीतिर्भवति ॥

(८) उत्तरभागस्य तात्पर्य्यं दर्शयति। "सते त्वा सते त्वा-

ष्टस्त्वौषधीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्य इत्याह। तस्मादश्वमेधयाजिनꣳ सर्वाणि भूतान्युपजीवन्ति" इति। 'सते' वर्त्तमानवस्तुप्रीत्यर्थं, 'असते' इदानीमप्यविद्यमानाय कालान्तरवर्त्तिने, यस्मात् 'विश्वेभ्यो भूतेभ्यः', इति मन्त्रेणाश्वः प्रोक्षितः, 'तस्मादश्वमेधयाजिनं', देवादिरूपेणोत्पन्नं सर्व्वं प्राणिनः 'उपजीवन्ति'। संहितायां पृथिव्यैत्वान्तरिक्षाय त्वा दिवे त्वेति मन्त्रपाठः। अत्र तु दिवेत्वेत्यादिक इति पाठो विकल्प्यते॥

(८) अथ विश्वेभ्यस्त्वा देवेभ्य इति मन्त्रेण प्रश्नोत्तराभ्यां प्रशंसति। "ब्रह्मवादिनो वदन्ति। यत्प्राजापत्योऽश्वः। अथ कस्मादेनमन्याभ्यो देवताभ्योऽपि प्रोक्षतीति। अश्वे वै सर्व्वा देवता अन्वायत्ताः। तं यद्विश्वेभ्यस्त्वाभूतेभ्य इति प्रोक्षति। देवता एवास्मिन्नन्वायातयति। तस्मात् अश्वे सर्व्वा देवता अन्वायत्ताः" इति। अश्वस्य प्रजापतिदेवताकत्वात् प्रजापत्यर्थं प्रोक्षणं युक्तं। अत्र त्विन्द्राग्न्यादिदेवतार्थमपि प्रोक्ष्यते तत् किं निमित्तमिति ब्रह्मवादिनां प्रश्नः। यद्यपि प्रजापतिरेव मुख्यस्वामी तथापि प्रजापतेः सर्व्वदेवतात्मकत्वात्तद्द्वारा सर्व्वासामपि देवतानां अश्वेनुगतिरस्ति। अतएवोदीच्यां दिशि 'विश्वेभ्यस्त्वा देवेभ्यः' इति मन्त्रेणाश्वः प्रोक्षितः। तेन प्रोक्षणेन 'सर्व्वाः', अपि 'देवताः', अस्मिन् 'अश्वे', अनुगताः करोति। तस्मात् प्रजापतिद्वारा मन्त्रसामर्थ्यादप्यस्मिन्नश्वे सर्व्वा अपि देवता अनुगता इति तदर्थमपि प्रोक्षणं युक्तं॥

इति सप्तमोऽनुवाकः॥

अथाष्टमोऽनुवाकः ।

(१) सप्तमेऽश्वस्य प्रोक्षणमुक्तं । अष्टमेऽश्वचरितानां अश्वरूपाणाञ्च होमा उच्यन्ते । तत्राश्वचरितहोमं विधत्ते । "यथा वै हविषो गृहीतस्य स्कन्दति । एवं वा एतदश्वस्य स्कन्दति । यत्प्रोक्षितमनालभ्यमुत्सृजन्ति । यदश्वचरितानि जुहोति । सर्व्वहुतमेवैनं करोत्यस्कन्दाय । अस्कन्नꣳ हि तत् । यद्धुतस्य स्कन्दति" इति । स्रोक्यानुमन्त्रणविधिवाक्यवदिदमश्वचरितहोमविधिवाक्यं व्याख्येयं ॥

(२) होममन्त्राणां तात्पर्य्यं दर्शयति । "ईङ्काराय स्वाहेङ्कृताय स्वाहेत्याह । एतानि वा अश्वचरितानि । चरितैरेवैनꣳ समर्धयति" इति । अश्वो हि खाद्यं दृष्ट्वा याचितुं यं शब्दं करोति स शब्दः 'ईङ्कारः', तस्मै, स्वाहुतमिदमस्तु । ईङ्कारेण शब्देन विषयीकृतं यद्द्रव्यं तत् 'ईङ्कृतं', तस्मै, स्वाहुतमिदमस्तु । ईङ्कारायेत्यादिकः सप्तमकाण्डोक्तो योऽनुवाकः, तस्मिन्ननुवाके प्रोक्तानि 'एतानि' सर्व्वाणि, 'अश्वचरितानि', तद्धोमेना'श्वचरितैः', समृद्धं करोति ॥

(३) अश्वचरितहोममाक्षिप्य समाधत्ते । "तदाहुः । अनाहुतयो वा अश्वचरितानि । नैता होतव्या इति । अथो खल्वाहुः । होतव्या एव । अत्र वावैवं विद्वानश्वमेधꣳ सꣳस्थापयति । यदश्वचरितानि जुहोति । तस्माद्धोतव्याः" इति । तत्राश्वचरितहोमविषये केचिदाक्षेपवादिन एवमाहुः । यान्ये-

तानि 'अश्वचरितानि' ईङ्कारादीनि, तेषां चेष्टारूपत्वेन देवतानामभावाद्देवतारहितस्य च हविःप्रदानस्याभावादश्वचरितानामाहुतियोग्यता नास्ति तस्मात् 'एताः', अश्वचरितप्रतिपादकमन्त्रैः साध्या आहुतयः, 'न होतव्या इति'। अत्र समाधानवादिन एवम् 'आहुः'। 'होतव्या एव', एता आहुतयः, देवतानां सद्भावात्। जैमिनीयमते तावद्विग्रहवती देवता नापेक्षिता। मन्त्रगतशब्दोपहितस्यैवार्थस्य देवतात्वाभ्युपगमात्। वैयासिकमते तु सर्व्वत्र तत्तदभिमानिन्यो देवताः। अभिमानिव्यपदेशस्त्विति सूत्रेण मृदब्रवीदापोऽब्रुवन्नित्यादौ विग्रहवतीनां देवतानां प्रतिपादितत्वात् 'तस्माद्धोतव्याः', एव। न चात्र होमे प्रयोजनाभावः शङ्कनीयः। 'यदश्वचरितानि', जुहुयात् तदानीमेवं 'विद्वान्', एतद्धोमाभिज्ञः, कृत्स्नचेष्टाविषयहोमेन कृत्स्नावयवस्याश्वस्य हुतसमानत्वादग्नौ हुतत्वादेवैव सर्व्वमश्वमेधं समापयति। अतः प्रोक्षितस्याश्वस्यालम्भात्प्रागेवोत्सर्गेऽपि स्कन्देन दोषाभावाद्धोतव्या आहुतय इति निर्णयः॥

(४) तासामाहुतीनां देशकालौ विधत्ते। "बहिर्धावा एनमेतदायतनाद्दधाति। भ्रातृव्यमस्मै जनयति। यस्यानायतनेऽन्यत्राग्नेराहुतीर्जुहोति। सावित्रिया इष्ट्याः पुरस्तात्स्विष्टकृतः। आहवनीयेऽश्वचरितानि जुहोति। आयतन एवास्याहुतीर्जुहोति। नास्मै भ्रातृव्यं जनयति" इति। 'यस्य' यजमानस्य, 'अग्नेः', 'अन्यत्र' प्रदेश, 'अनायतने' आहुतीनामयोग्य

स्थाने, यस्य 'आहुतीर्जुहोति', तदानीमेनं यजमानं 'एतत्' एतेनान्यत्र होमेन, 'आयतनात्', 'बहिर्धा' बहिर्दधाति, स्वकीयस्थानान् निःसारयति। किञ्चास्य यजमानस्य शत्रुं 'जनयति'। तस्माद्धेयमिष्टिः सावित्रमष्टाकपालं निर्वपति इति विधास्यते। तदीयः 'स्विष्टकृतः', पूर्वं आहवनीयाग्नौ तानि जुहुयात्। 'स्विष्टकृतः पुरस्तात्', इति कालविधिः। 'आवहनीय' इति देशविधिः। एवं सत्याहुतियोग्य एव स्थाने हुतवान् भवति। शत्रुश्च नोत्पद्यते॥

(५) तत्सावित्रिया इष्ट्या इति विशेषमसहमानानां केषाञ्चिन्मतमुपन्यस्यति। "तदाहुः। यज्ञमुखे यज्ञमुखे होतव्याः। यज्ञस्य क्लृप्त्यै। सुवर्गस्य लोकस्यानुख्यात्यै इति" इति। तत्तदिष्टिप्रारम्भे सर्वत्र होतव्याः सर्वस्याः स्वफलसामर्थ्याय सहोमः सम्पद्यते। किञ्च स्वर्गलोकोऽपि नैरन्तर्येण प्रख्यापितो भवति॥

(६) एतस्य पूर्वपक्षमतस्य निरोधकर्तृणां सिद्धान्तिनां मतं दर्शयति। "अथो खल्वाहुः। यद्यज्ञमुखे यज्ञमुखे जुहुयात्। पशुभिर्यजमानं व्यर्द्धयेत्। अव सुवर्गाल्लोकात्पद्येत। पापीयान्त्स्यादिति। सकृदेव होतव्याः। न यजमानं पशुभिर्व्यर्द्धयति। अभिसुवर्गं लोकं जयति। न पापीयान् भवति" इति। यत्तदिष्ट्यारम्भे यदि जुहुयात्। तदानीमेकस्मिन् होमे फलसाधकत्वविश्वासाभावेनेह लोके 'यजमानं', 'पशुभिः', वियुक्तं कुर्यात्। जन्मान्तरेऽपि स्वर्गप्राप्तेश्चावपद्यते। तस्मात्पापिरचितो

भवेत्। यत्रोत्पन्नस्तत्रापि 'पापीयान्' अतिशयेन दरिद्रः, भवेत्। 'इति' एवम्, अभिज्ञाः पूर्व्वमतं दूषयन्ति। तस्मात् 'सकृदेव होतव्याः'। तथा सति तत्र विश्वासमङ्गावात् मोक्ष-दोषाः प्रसरन्ति।

(७) यथाक्तास्वचरितहोमानन्तरमेवाज्ञ्यताय स्वाहा कृ-ष्णाय स्वाहेत्यनुवाकद्वयोक्तानामश्वरूपाणां होमं विधत्ते। "अ-ष्टाचत्वारिंशतमश्वरूपाणि जुहोति। अष्टाचत्वारिंशदक्षरा जगती। जागतोऽश्वः प्राजापत्यः समृद्ध्यै" इति। अञ्ज्यताय स्वाहेति मन्त्रोऽश्वस्य रूपं ब्रूते। अञ्जिरं जनवर्णः कृष्णः एतः शुक्लः। उभयवर्णमेलनेन मिश्रमश्वस्य रूपमन्त्रोक्तं। एवमु-त्तरेष्वपि मन्त्रेषु नानाविधानि स्वरूपाण्युच्यन्ते। तद्रूपप्रति-पादकाश्वमन्त्रा अनुवाकद्वये मिलित्वा चत्वारिंशत्सङ्ख्याका-स्तत्प्रतिपाद्यानि तावन्ति रूपाण्युद्दिश्य जुहुयात्। जगती-छन्दसस्तत्सङ्ख्यायुक्ताक्षरोपेतत्वात्। पशूनां जगतीछन्दो लभ्यते तेनाश्वस्य जागतत्वात्। तादृशः 'अश्वः', प्रजापतिर्देवताकः। अनुवाकद्वयेऽपि सर्व्वस्मै स्वाहेत्ययं मन्त्रान्ते समाम्नातः। नास्य पूर्व्वं मन्त्रवत्। कश्चिद्रूपविशेषं ब्रूते॥

(८) तस्य रूपं समष्टिवाचकत्वान्नाप्यष्टाचत्वारिंशत् तत्स-ङ्ख्यायामन्तर्भूतः तस्मात्तद्धोमं पृथग् विधत्ते। "एकमतिरिक्तं जुहोति। तस्मादेकः प्रजास्वर्धुकः" इति। यस्माद्य समष्टि-वाचक उक्तसङ्ख्यातिरिक्तः। तस्मात्लोकेऽपि प्रजासु सर्व्वासु मध्ये 'एकः', एव स्वामी समृद्धिशीलश्च भवति॥

इत्यष्टमोऽनुवाकः॥

अथ नवमोऽनुवाकः ।

(१) अष्टमेऽश्वचरितानामश्वरूपाणाञ्च होम उक्तः । नवमेऽश्वनामवाचनमभिधीयते । तथा च सूत्रकार आह । 'विभूर्मात्रा प्रभूः पित्रेत्यश्वस्य दक्षिणे कर्णे यजमानमश्वनामानि वाचयित्वेति' । तानि च नामानि सप्तमकाण्ड एवमाम्नातानि । 'विभूर्मात्रा प्रभूः पित्राश्वोऽसि हयोऽस्यत्योऽसि नरोऽस्यर्वासि सप्तिरसि वाज्यसि वृषासि नृमणा असि ययुर्नामास्यादित्यानां पत्वान् विहीति' । तत्राद्यस्य नामद्वयस्य तात्पर्यं दर्शयति । "विभूर्मात्रा प्रभूः पित्रेत्याह । इयं वै माता । असौ पिता । आभ्यामेवैनं परिददाति" इति । तत्राद्यस्य नामत्रयस्य अयमश्वः स्वकीयमातृसामर्थ्येन 'विभूः' वैभवयुक्तः, स्वकीयपितृसामर्थ्येन 'प्रभूः' प्रभावयुक्तः, वैभवं विविधभत्तसम्पत्तिः । प्रभवं युद्धादौ योद्धृत्वं, इत्येव मन्त्रौ यत् 'आह', तेन सर्व्वजगन्मात्रे पृथिव्यै सर्व्वं जगत् पितृस्थानीयेषु लोकाय च 'एनम्' अश्वं, समर्पितवान् भवति ॥

(२) तृतीयचतुर्थयोर्नाम्नोस्तात्पर्यं दर्शयति । "अश्वोऽसि हयोऽसीत्याह । शास्त्येवैनमेतत् । तस्माच्छिष्टाः प्रजा जायन्ते" इति । 'अश्वोऽसि' व्याप्तिशीलोऽसि, 'हयोऽसि' शीघ्रगतिमानसि, 'एतत्' एतेन मन्त्रेण, 'एनम्' अश्वं, 'शास्त्येव' व्याप्तिशीलः शीघ्रगतिशीलो भवेत्युपदिशत्येव । यस्मादत्र शासनं कृतं 'तस्मात्', लोकेऽपि 'प्रजाः' पुत्रादयः, 'शिष्टा जायन्ते' । एवमेवं वर्त्तध्वमिति मातापितृभ्यामनुशिष्टा भवन्ति ॥

(३) पञ्चमनाम्नस्तात्पर्य्यं दर्शयति । "अत्योमीत्याह । तस्मादश्वः सर्व्वान् पशूनत्येति । तस्मादश्वः सर्व्वेषां पशूनाꣳ श्रैष्ठ्यं गच्छति" इति । पशुजातीयान् 'सर्व्वान्' अपि श्रेष्ठत्वेन जेतुं समर्थत्वात् 'अत्यनामाऽसि', यस्मान्मन्त्र एवमाह । 'तस्मात्', लोकेऽपि 'अश्वः', गोमहिषादीन् 'सर्व्वान् पशून्', 'अत्येति' 'श्रैष्ठ्यं', च 'गच्छति' । अधिककार्य्यकारित्वम् 'अत्ययः', बहुमूल्यार्हत्वं 'श्रैष्ठ्यं' ॥

(४) एतन्मन्त्रनामवेदनं प्रशंसति । "प्रयशः श्रैष्ठ्यमाप्नोति । य एवं वेद" इति । यशः कीर्तिधनविद्यादिभिराधिक्यं श्रैष्ठ्यं ॥

(५) षष्ठादीनां चतुर्णां नाम्नां तात्पर्यं दर्शयति । "नरोऽस्यर्व्वासि सप्तिरसि वाज्यसीत्याह । रूपमेवास्यैतन्महिमानं व्याचष्टे" इति । उपर्य्यारूढान् पुरुषान् नेतुं समर्थः 'नरः', 'अर्वा' गमनकुशलः । 'सप्तिः' सङ्ग्रामेषु समवायकुशलः, 'वाजी' वेगवान्, तेषां नाम्नां स्वरूपमेवाश्वस्य 'महिमानं', विख्यापयति । अतो नाम्नाभिर्वक्तव्यं किञ्चिदस्ति ॥

(६) दशमस्य नाम्नस्तात्पर्य्यं दर्शयति । "ययुर्नामासीत्याह । एतद्वा अश्वस्य प्रियं नामधेयम् । प्रियेणैवैनं नामधेयेनाभिवदति । तस्माद्प्यामित्रौ सङ्गत्य । नाम्ना ह्वयेते । मित्रमेव भवतः" इति । यानशीलः 'ययुः', 'नामासि' एतन्नामधार्यसि, ययुरित्येतदेव सर्व्वेषां नाम्नां मध्ये 'अश्वस्य प्रियं नामधेयं' । एतदेव प्रियत्वं दर्शयतुमत्र •मन्त्रे नामशब्दः प्रयुक्तः ।

एतन्मन्त्रपाठे सति 'प्रियेणैव', 'नामधेयेन', 'एनं' अश्वं, अभिमुखीकृत्य ब्रवीति। यस्मादप्रियं नामोक्तं 'तस्मात्', 'अमित्रौ' परस्परवैरिणावपि, क्वचिन्मार्गादौ परस्परं 'सङ्गत्य', हे स्वामिन् हे पितरित्यादिना प्रियेण 'नाम्ना', परस्परमाह्वयेते चेत् तदानीमेव वैरं परित्यज्य मित्रतां प्रतिपद्यते॥

(७) एकादशस्य नाम्नस्तात्पर्य्यं दर्शयति। "आदित्यानां पत्वान्विहीत्याह। आदित्यानेवैनं गमयति" इति। हे अश्व त्वं 'आदित्यानां', 'पत्वं' पतनं गमनं, 'अन्विहि' अनुगच्छ, अत्रादित्यसमानगतिरित्येतन्नामार्थतो निर्द्दिष्टमनेन मन्त्रेण। 'एनं' अश्वं, 'आदित्यानेव', प्रापयति॥

(८) एतस्मान्नामवाचनादनन्तरं अनुष्ठेयान् होमान् विधत्ते। "अग्नये स्वाहा स्वाहेन्द्राग्निभ्यामिति पूर्व्वहोमाञ्जुहोति। पूर्व्व एव द्विषन्तं भ्रातृव्यमतिक्रामति" इति। आहवनीयविहरणानन्तरमेवेतरहोमेभ्यः पूर्व्वमनुष्ठेयत्वात् पूर्व्वहोमाः। तत्रैते पञ्चमन्त्राः संहितायामाम्नाताः। 'अग्नये स्वाहा। स्वाहेन्द्राग्निभ्याꣳ। स्वाहा प्रजापतये। स्वाहा विश्वेभ्यो देवेभ्यः। स्वाहा सर्व्वाभ्यो देवताभ्यः' इति। अत्र प्रथममन्त्रः स्वाहान्तः। इतरे स्वाहादिकाः तानेतान् पञ्चाभिप्रेत्य होमानिति बहुवचनयुक्तमनेन होमेनेतरयजमानेभ्यः पूर्व्वाभावापेचद्वेषकारिणं शत्रुमतिक्रामति॥

(९) होमादूर्द्ध्वमश्वोत्सर्गं विधत्ते। "भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वेत्युत्सृजति सर्व्वत्वाय" इति। हे अश्व त्वं

'भरमि' नित्यं सत्तायुक्तोमि, अतो 'भुवे' भूताय, पूर्वं निष्पन्नाय वस्तुने, त्वामुत्सृजामि। 'भव्याय' भवते वर्त्तमानाय, त्वामुत्सृजामि, तथा 'भविष्यते', वस्तुने त्वामुत्सृजामि। कालत्रयवर्त्तिवस्तुरक्षार्थमित्यर्थः। अस्य मन्त्रस्य शेषो विश्वेभ्यस्त्वा भूतेभ्य इत्ययमंशः संहितायामाम्नातः। अतोऽनेन मन्त्रेणोत्सर्गः 'सर्व्वत्वाय' सर्व्वत्रस्तुरक्षार्थं, सम्पद्यते॥

(१०) यदुक्तं सूत्रकारेण। 'अश्वमुत्सृज्य देवा आशापाला इति चिभ्यः परिददाति। शतं कवचिनो रक्षन्त्यपर्य्यावर्त्तयन्तो अश्वमनुचरन्ति चतुःशता इत्येकेषामिति'। तन्मन्त्रमनूद्य तात्पर्य्यं दर्शयति। "देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं गोपायतेत्याह। शतं वै तल्प्या राजपुत्रा देवा आशापालाः। तेभ्य एवैनं परिददाति" इति। हे 'आशापालाः' दिक्पालकाः, 'देवाः', 'देवेभ्योऽश्वं', 'मेधाय' देवसम्बन्धियागार्थं, 'प्रोक्षितं', 'एतं' अश्वं, 'गोपायत'। अस्मिन्मन्त्रे आशापालदेवशब्देन अभिषिक्तस्य राज्ञः पुत्राः। 'तल्प्याः' राज्ञा सहैकस्मिंस्तल्पे शयनार्हाः। शतमङ्ख्याका विवक्षिताः, अतोऽनेन मन्त्रेण 'तेभ्यः' 'एव', राजपुत्रेभ्यः रक्षार्थं 'एनं' अश्वं, 'परिददाति'॥

(११) यदुक्तं सूत्रकारेण। रथकारकुले वसतिर्भवतीह धृतिः स्वाहेति सायमश्वस्य चतुर्षु पत्सु चतस्रो धृतीर्जुहोतीति। तदिदं विधत्ते। "ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः। इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहेति चतुर्षु पत्सु जुहोति॥ १॥ एता वा अश्वस्य

बन्धनम्। ताभिरेवैनं बध्नाति। तस्मादश्वः प्रमुक्तो बन्धनमागच्छति। तस्मादश्वः प्रमुक्तो बन्धनं जहाति" इति। स्वेच्छासञ्चाराय 'प्रमुक्तोऽश्वः', 'परां परावतं' अत्यन्तं दूरं, 'गन्तोः' 'ईश्वरः' गन्तुं समर्थः। अतो रात्रौ रक्षकेषु राजपुत्रेषु यत्र क्वापि गमिष्यतीति भीत्या सायङ्काले तमश्वं रथकारगृहे स्थापयित्वा तदीयेषु चतुर्षु पदेषु चतुर्भिर्मन्त्रैर्जुहुयात्। मन्त्राणामयमर्थः। 'इह' दक्षिणपूर्व्वपादस्य स्थाने, 'धृतिः' धारणं नैश्चल्यमस्तु, तदर्थमिदं स्वाहुतम्। 'इह' वामपूर्व्वपादस्थाने, 'विधृतिः' विशेषेण धारणमस्तु, तदर्थमिदं स्वाहुतम्। 'इह' दक्षिणपृष्ठपादस्थाने, 'रन्तिः' स्थैर्येण क्रीडास्तु। एवं वामपादपृष्ठस्थानेऽपि 'रमतिः' स्थैर्येण क्रीडास्तु। इति 'एताः' आहुतयः, एव 'अश्वस्य', 'बन्धनं' साधनं, 'ताभिरेव' आहुतिभिः, 'एनं' अश्वं, 'बध्नाति'। 'तस्मात्' आहुतिसामर्थ्यात्, एव स्थानसञ्चाराय 'प्रमुक्तः', अपि 'अश्वः', सायं बन्धनस्थानं प्रति 'आगच्छति', 'तस्मात्' एव सामर्थ्यात्, 'प्रमुक्तोपि' 'अश्वः', रात्रौ बन्धनस्थानं न परित्यजति॥

(१२) शतं राजपुत्रा रक्षका इत्यमुं पक्षमुक्त्वा शतचतुष्टयसङ्ख्याका रक्षका इत्यमुं पक्षं विधत्ते। "राष्ट्रं वा अश्वमेधः। राष्ट्रे खलु वा एते व्यायच्छन्ते। येऽश्वं मेध्यꣳ रक्षन्ति। तेषां य उदृचं गच्छन्ति। राष्ट्रादेव ते राष्ट्रं गच्छन्ति। अथ य उदृचं न गच्छन्ति। राष्ट्रादेव ते व्यवच्छिद्यन्ते। परा वा एष सिच्यते। योऽबलोऽश्वमेधेन यजते। यदमित्रा अश्वं विन्देरन्।

हन्येतास्य यज्ञः । चतुःशता रक्षन्ति । यज्ञस्याघाताय" इति । योयमश्वमेधो यागः सोऽयं 'राष्ट्र'स्वरूपभूत एव तत्प्राप्तिहेतुत्वात् । एवं सति यागयोग्यम् 'अश्वं ये रक्षन्ति' । ते राष्ट्रनिमित्तमेव तस्करैः सह कलहं कुर्व्वन्ति ।"तेषां' रक्षकाणां मध्ये, 'ये' पुरुषाः, 'उदृचं' उत्तमसमन्तपर्य्यन्तं, रक्षणसमाप्तिपर्य्यन्तमित्यर्थः । तां समाप्तिं ये 'गच्छन्ति', 'ते' पुरुषाः, अस्मादर्त्तमानात् 'राष्ट्रादेव', कर्म्मफलरूपं भावि'राष्ट्रं', 'गच्छन्ति' । 'अथ', 'ये' रक्षकाः, 'उदृचं' रक्षणसमाप्तिं, 'न गच्छन्ति', 'ते', वर्त्तमानात् 'एव', 'राष्ट्राद्व्यवच्छिद्यन्त', किन्तु कर्त्तव्याभाविराष्ट्रात् । एवं सति 'यः', राजतस्करानश्वापहारिणो जेतुं बलहीनः 'अश्वमेधेन', यष्टुमारभते । 'एषः' राजा, 'पराभिद्यते' यज्ञात्पराभूतो भवति । यदि शत्रवः 'अश्वं', 'विन्देरन्' लभेरन्, अपहरेयुः, तदानीम् 'अस्य', 'यज्ञो हन्येत' । तस्मात्तद्धान्त्यर्थं शतचतुष्टयसङ्ख्याकाः मुख्याः पुरुषाः तमश्वं रक्षेयुः । तान् सूत्रकार उदाजहार । शतं तल्प्या राजपुत्राः सन्नद्धाः सन्नद्धसारथिनः शतमुग्रा राजानः सन्नद्धाः सन्नद्धसारथिनः शतं वैश्या विपाथिनः शतं शूद्रा विमाथिनः तेऽश्वस्य गोप्तारो भवन्तीति ॥

(१३) प्रमादादश्वेऽपहृते सति प्रायश्चित्तं विधत्ते । "अथान्यमानीय प्रोक्षेयुः । सैव ततः प्रायश्चित्तिः" ॥ ४ ॥ इति । चतुःशतैः संरक्षमाणमप्यश्वं यद्यमित्रा गृह्णीयुः । तदानीम्, 'अन्यं' अश्वं, तद्रूपवर्णवयसं तं 'आनीय', प्रोक्षणं कुर्य्युः ।

'सैव' प्रोक्षणक्रिया, 'ततः' अश्वनाशदोषात्, 'प्रायश्चित्तिः' विमोचणहेतुः ॥

इति नवमोऽनुवाकः ।

---

अथ दशमोऽनुवाकः ।

(१) नवमेश्वनामवाचनमश्वोत्सर्गश्चेत्युभयमभिहितं। दशमे दीक्षाभिधीयते। यदुक्तं सूत्रकारेण। एतस्य संवत्सरस्य योत्त-रामावास्यास्तस्यामुखां सम्भरति चैधातवीया दीक्षणीयाकूत्यै प्रयुजेऽग्नये स्वाहेति चत्वार्यौद्ग्रहणानि जुहोति स्वाहाधिमाधी-ताय स्वाहेति त्रीणि वैश्वदेवानीति। तत्र वैश्वदेवानि विधत्ते। "प्रजापतिरकामयताश्वमेधेन यजेयेति। स तपोऽतप्यत। तस्य तेपानस्य। सप्तात्मनो देवता उदक्रामन्। सा दीक्षाऽभवत्। स एतानि वैश्वदेवान्यपश्यत्। तान्यजुहोत्। तैर्वै स दीक्षामवा-रुन्ध। यद्वैश्वदेवानि जुहोति दीक्षामेव तैर्यजमानोऽवरुन्धे"॥१॥ इति। 'प्रजापतिः', अश्वमेधं यष्टुं कामयमानस्तत्सिद्धये 'तपः', अकुरुत। 'तेपानस्य' तपःकृतवतः, प्रजापतेः 'आत्मनः', सका-शात्, 'सप्त'शीर्षण्या प्राणरूपा 'देवताः', 'उदक्रामन्'। ताश्च देवताः स्वकीयं रूपमुपसंहृत्य दीक्षारूपेणाविर्भूताः, ततः 'सा' सप्तदेवात्मिका, 'दीक्षाऽभवत्'। तस्यां दीक्षायां 'सः' प्रजापतिः, 'एतानि' स्वाहाधिमाधीतायस्वाहेत्यादीनि वैश्वदेवनामकानि मन्त्रवाक्यानि, दृष्ट्वा तानि कृत्वा 'तैः', 'दीक्षां', स्वाधीनां

कृतवान्, अतो यजमानः 'वैश्वदेवानि', जुहुयात्। 'तैः', 'दीक्षां', स्वाधीनां करोति ॥

(२) सङ्ख्यां विधत्ते। "सप्त जुहोति। सप्त हि ता देवता उदक्रामन्" इति। देवतानां दीक्षारूपेण परिणतानां सप्तत्वादत्रापि सप्त जुहुयात् ॥

(३) तेषां सप्तानां प्रतिदिनं होमं विधत्ते। "अन्वहं जुहोति। अन्वहमेव दीक्षामवरुन्धे" इति। स्पष्टार्थः ॥

(४) सामान्येन विहितं विशेषेण विभज्य विधत्ते। "त्रीणि वैश्वदेवानि जुहोति। चत्वार्यौद्ग्रहणानि। सप्त सम्पद्यन्ते। सप्त वै शीर्षण्याः प्राणाः। प्राणा दीक्षा। प्राणैरेव प्राणां दीक्षामवरुन्धे ॥ २ ॥" इति। स्वाहाधिमित्यादीनि 'त्रीणि', आकूत्यै प्रयुज इत्यादीन्यौद्ग्रहणसञ्ज्ञकानि 'चत्वारि', एवं सप्तसङ्ख्यायाः 'शीर्षण्यप्राण',समा एते होमाः। 'दीक्षा', च प्राणरूपा, अतः प्राणरूपैर्होमैः प्राणरूपां 'दीक्षां', प्राप्नोति ॥

(५) स्वाहाधिमित्यादीनां वैश्वदेवाख्यानां सप्तसु दिनेषु होतव्यानां सङ्ख्यां विधत्ते। "एकविंꣳशतिं वैश्वदेवानि जुहोति। एकविंꣳशतिर्वै देवलोकाः द्वादशमासाः पञ्चर्त्तवः। त्रय इमे लोकाः। असावादित्य एकविंꣳशः" इति। एकैकस्मिन् दिने त्रीणि त्रीणि त्रीणीत्येवं सप्तस्वपि दिनेषु मिलित्वा एकविंꣳशतिसङ्ख्या सम्पद्यते। अतएव स्वाहाधिमित्यनुवाकेऽप्येकविंꣳशतिरेव मन्त्रा आम्नाताः। भागहेतवो देव-

लोकाश्च एकविंशतिसङ्ख्याका मासर्त्तुलोकादित्याभिमानी-भिर्द्देवैरधिष्ठिताः। अतस्तच्च भोगसिद्धये सा सङ्ख्या युक्ता॥

(६) तत्रादित्यलोकं विशेषतः प्रशंसति। "एष सुवर्गो लोकः। तद्दैव्यं चत्रम्। सा श्रीः। तद्ब्रध्नस्य विष्टपम्। तत्स्वाराज्यमुच्यते" इति। यत्रादित्यस्तिष्ठति। एष एवोत्तमः 'स्वर्गो लोकः'। तदेवादित्यस्थानं। 'तद्दैव्यं चत्रं' देवसम्बन्धिबलं। तस्य बलस्यादित्यप्रकाशाधीनत्वात् सैवादित्यावस्थानभूमिः। 'श्रीः' दैवी विभूतिः। तत्र ह्यैश्वर्य्यमहदस्ति। तदेवादित्यस्थानं। 'ब्रध्नस्य' परिवृढस्य स्वर्गस्य लोकस्य, 'विष्टपं' उत्तमस्थानं, उत्तमभोगानां तत्र विद्यमानत्वात्। 'तत्' एवादित्यस्थानं,'स्वाराज्यं' ब्रह्मलोकरूपं, इति 'उच्यते'। आदित्यमण्डलं भित्वा ब्रह्मलोके गन्तव्यत्वादतो वैश्वदेवानामेकविंशतिसङ्ख्या प्रशस्ता। प्रतिदिनं त्रीणि त्रीणि इत्येवमेकविंशतिसङ्ख्यां सूत्रकारः स्पष्टीचकार, सप्ताहमन्वहमौद्ग्रहणैर्वैश्वदेवस्योत्तरोत्तरैः प्रचरति षडुत्तमेहन्यौद्ग्रहणानि जुहोति। सर्व्वस्मै स्वाहेति पूर्णाहुतिमुत्तमामिति॥

(७) प्रकारान्तरेण सङ्ख्यां सम्पाद्य होमं प्रशंसति। "त्रिंशत्तमौद्ग्रहणानि जुहोति। त्रिंशदक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे" इति। यानि वैश्वदेवानि स्वाहाधिमित्यादीनि तान्यश्वमेधस्योद्यमनहेतुत्वात् औद्ग्रहणानीत्युच्यते। उद्यमनहेतुत्वञ्चोत्तरानुवाके वक्ष्यते, तं वैश्वदेवान्येवोदयच्छन्निति। 'ततो वैश्वदेवरूपिण्यौद्ग्रहणान्येकविं-

प्रतिप्राकृतानीत्यौद्ग्रहणानि चत्वारि चत्वारि। प्रकृतौ हि यथा-ध्वर्युः 'औद्ग्रहणानि जुहोति'। तद्यजमानोऽध्वर्युमन्वारभ्य पञ्च जुहोति वाचामेवागदीक्षितामिति सूत्रोक्ताः पञ्चाहुतयोऽत्र प्रवर्त्तन्ते। वक्ष्यमाणपूर्णाहुतिरेका। तदेवं त्रिंशत्सङ्ख्या-सम्पत्तिः। तथा सति विराट्छन्दोद्वारान्नप्राप्तिर्भवति॥

(८) वैश्वदेवमन्त्रेषु विद्यमानं किञ्चिद्विशेषं प्रशंसति। "त्रेधा विभज्य देवतां जुहोति। त्र्यावृतो वै देवाः। त्र्यावृत इमे लोकाः। एषां लोकानामाप्त्यै। एषां लोकानां क्लृप्त्यै" इति। वैश्वदेवमन्त्रेष्वेकैकां 'देवतां त्रेधा विभज्य', आम्नाता। तद्यथा। अदित्यै स्वाहा, अदित्यै मह्यै स्वाहा, अदित्यै सुमृडीकायै स्वा-हेत्यदितिरेव त्रेधोक्ता। एवमितरदप्युदाहार्यं। अतस्त्रेधा-विभागेनैकैकस्या देवताया होमः कर्त्तव्यः। यथा 'देवाः', 'त्र्यावृतः' पूर्वोदाहृतप्रकारेण त्रिःप्रकारदृष्टाः। एवं 'लोकाः', अपि पृथिव्यन्तरिक्षद्युभेदेन 'त्र्यावृतः' त्रिप्रकाराः। अतस्त्रे-धाविभक्तदेवताहोमो लोकत्रयप्राप्त्यै भवति॥

(९) दीक्षायां दिनसङ्ख्यां विधत्ते। "अप वा एतस्मात् प्राणाः क्रामन्ति॥ ४॥ यो दीक्षामतिरेचयति। सप्ताहं प्रच-रन्ति। सप्त वै शीर्षण्याः प्राणाः। प्राणा दीक्षा। प्राणैरेव प्राणां दीक्षामवरुन्धे" इति। 'यः' यजमानः, "दीक्षामतिरेच-यति' सप्तभ्यो दिनेभ्योऽधिकां करोति, 'एतस्मात्', 'प्राणाः', सप्त-सङ्ख्याकाः, 'अप', गच्छन्ति। अतस्तत्परिहाराय सप्तैव दिना-नि दीक्षां कुर्य्युः। तेन शीर्षण्यप्राणरूपां 'दीक्षां', प्राप्नोति॥

(१०) अथ सर्व्वस्मै स्वाहेत्यनेनानुवाकसमाप्तिगतेन मन्त्रेणाहुतिं विधत्ते। "पूर्णाहुतिमुत्तमां जुहोति। सर्व्वं वै पूर्णाहुतिः। सर्व्वमेवाप्नोति। अथो इयं वै पूर्णाहुतिः। अस्यामेव प्रतितिष्ठति" ॥ ५ ॥ इति। पूर्णाहुतेः सर्व्वफलसाधनत्वात् सर्व्वभूतत्वं। किञ्च पूर्णाहुत्या पृथिवीरूपया पृथिव्यां प्रतिष्ठा च भवति ॥

इति दशमोऽनुवाकः।

---

अथ एकादशोऽनुवाकः।

(१) दशमे वैश्वदेवहोमो विहितः। एकादशे तन्मन्त्रा व्याख्यायन्ते। तत्रादौ तं विधिमनूद्य प्रशंसति। "प्रजापतिरश्वमेधमसृजत। तꣳ सृष्टं न किञ्चनोदयच्छत्। तं वैश्वदेवान्येवोदयच्छन्। यद्वैश्वदेवानि जुहोति। यज्ञस्योद्यत्यै" इति। सृष्टस्याश्वमेधस्योद्यमनं नामोद्धरणमनुष्ठानयोग्यत्वापादनं तच्च वैश्वदेवैरेव निष्पन्नं नान्येन केनचित्। तस्माद्यज्ञस्योद्यमनहेतुत्वात्। अयं होमः प्रशस्तः ॥

(२) तत्र प्रथमद्वितीयदिनयोर्होतव्यानां षसां मन्त्राणां तात्पर्यं दर्शयति। "स्वाहाधिमाधीताय स्वाहा। स्वाहाऽधीतं मनसे स्वाहा। स्वाहा मनः प्रजापतये स्वाहा। काय स्वाहा. कस्मै स्वाहा कतमस्मै स्वाहेति प्राजापत्ये मुख्ये भवतः। प्रजापतिमुखाभिरेवैनं देवताभिरुद्यच्छते" ॥ १ ॥ इति। तत्र प्र-

थमदिने प्रयोक्तव्यास्तयो मन्त्रा आद्यन्तयोः स्वाहाकारयुक्ताः। तेषामयमर्थः। अधीयते उत्पाद्यते जगदनेनेति आधिः प्रजापतिः, स एव सर्व्वदा सनुष्यैर्ध्यायमानः आधीत इत्युच्यते। स एव सर्व्वजगन्मननान्मन इत्युच्यते, प्रजानां पालनात् प्रजापतिरित्यपि। तत्रैकैकस्मिन् मन्त्रे प्रथमस्वाहाकारो हविःस्वीकारार्थः, द्वितीयः प्रदानार्थः। आधिं जगत्स्रष्टारं प्रजापतिमुद्दिश्य 'स्वाहा' यद्धविः स्वीकृतं, तदेतत् 'आधीताय' प्राणिभिः सर्व्वत्र ध्याताय प्रजापतये, स्वाहुतमस्त्वित्याद्यमन्त्रस्यार्थः। 'आधीतं' सर्व्वैर्ध्यातं प्रजापतिं, उद्दिश्य यत् स्वीकृतं, तत् 'मनसे' मननशीलाय प्रजापतये, स्वाहुतमस्त्विति द्वितीयमन्त्रस्यार्थः। यच्च मननशीलाय स्वीकृतं, तत् प्रजानां पालकाय स्वाहुतमिति तृतीयमन्त्रार्थः। एतैस्त्रिभिः प्रथमदिने जुहुयात्। अकारान्तः कशब्दः प्रजापतिवाची तस्मै 'काय', स्वाहुतमस्तु। मकारान्तः किंशब्दः सर्व्वनामत्वात् सर्व्वात्मकं प्रजापतिमाचष्टे। 'कस्मै' तादृशाय प्रजापतये, स्वाहुतमिदमस्तु। अथकतृत्वेन प्रश्नवाचिना कतमशब्देनापि स एवोच्यते। 'कतमस्मै' तादृशाय प्रजापतये, स्वाहुतमिदमस्तु। एतैस्त्रिभिर्मन्त्रैर्द्वितीयदिने जुहुयात्। मुख्ययोराद्ययोर्दिनयोर्भवे होमकर्म्मणी 'मुख्ये', ते च 'प्राजापत्ये' प्रजापतिदेवताके, 'भवतः'। तथा सति प्रजापतिमेव मुखं प्रथमं कृत्वा तन्मुखाभिः सर्व्वाभिर्देवताभिः 'एनं' अश्वं, 'उद्गच्छते' अनुष्ठानं करोति॥

(२) तृतीयदिनगतानां मन्त्राणां तात्पर्य्यं दर्शयति। "अ-

दित्यै स्वाहादित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहेत्याह। इयं वा अदितिः। अस्या एवैनं प्रतिष्ठायोद्यच्छते" इति। अदितिरखण्डनीया पृथिवी सा च स्वविस्तारेण, महती, प्राणिनां धारणेन, सुमृडीका सुखकरी, अखण्डनमहत्त्व-सुखकरत्वविशेषणभेदैस्त्रेधाविभक्तायै स्वाहुतमिदमस्तु। अनेन होमेन 'अस्याः' पृथिव्याः, प्रसादात् स्वयं प्रतिष्ठां प्राप्य 'एनं' अश्वमेधं, 'उद्यच्छते'॥

(४) चतुर्थदिनगतानां मन्त्राणां तात्पर्य्यं दर्शयति। "सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा सरस्वत्यै पावकायै स्वाहेत्याह। वाग्वै सरस्वती। वाचैवैनमुद्यच्छते" इति। पूर्व्ववत्त्रेधा विभज्य व्याख्येयं॥

(५) पञ्चमदिनगतानां मन्त्राणां तात्पर्य्यं दर्शयति। "पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहेत्याह। पशवो वै पूषा। पशुभिरेवैनमुद्यच्छते" इति। पोषको देवः पूषा स च प्रपथ्यः प्रकृष्टमार्गरचकः। नरन्धिषो नराणां स्वानुग्रहेण धारयिता। अनेन होमेन पशूनां पोषकतया पूषरूपत्वात् 'पशुभिरेव', अश्वमेधमुद्धृतवान् भवति॥

(६) षष्ठदिनगतानां मन्त्राणां तात्पर्य्यं दर्शयति। "त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहेत्याह। त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्। रूपमेव पशुषु दधाति। अथो रूपैरेवैनमुद्यच्छते" इति। त्वष्टा विश्वकर्म्मा स च तुरीपः तूर्णपालकः। पुरुरूपो बहुविधरूपनिर्माता। एते-

होमे सति तस्य देवस्य रूपनिर्माहत्वात् 'पशुषु रूपं', तस्मात् 'रूपैरेव', 'एनं' अश्वमेधं, उद्धरति॥

(७) सप्तमदिनगतानां मन्त्राणां तात्पर्य्यं दर्शयति। "विष्णवे स्वाहा विष्णवे निखुर्यपाय स्वाहा विष्णवे निभूयपाय स्वाहेत्याह। यज्ञो वै विष्णुः। यज्ञायैवैनमुद्यच्छते" इति। व्यापको यज्ञो विष्णुशब्दार्थः। स च निखुर्यपः, खुरमर्हन्तीति खुर्य्याः अश्वादयः तेषां नितरां पालकः। तथाच निभूयपाः, भवन्त्युत्पद्यन्त इति भूतानि भूयशब्देनोच्यन्ते तेषामपि नितरां पालकः। अनेन होमेन यज्ञपुरुषप्रीत्यर्थमेव 'एनं' अश्वमेधं, उद्धरति॥

(८) सर्व्वस्मै स्वाहेत्येतां पूर्णाहुतिं प्रशंसति। "पूर्णाहुतिमुत्तमां जुहोति। प्रत्युत्तब्ध्यै सयत्वाय" ॥ २ ॥ इति। सर्व्वस्मै कृत्स्नदेवतासमूहाय स्वाहुतमित्यनेन होमेनाश्वमेधस्य प्रत्युत्तब्धिः। पुनः पुनरुत्तम्भनं भवति। षीञ्‌ बन्धन इति धातोरुत्पन्नः सयशब्दस्तयसत्वाश्वमेधस्य दृढबन्धत्वं। तदर्थेयं पूर्णाहुतिः॥

इति एकादशोऽनुवाकः।

---

अथ द्वादशोऽनुवाकः।

(१) एकादशे दीक्षाऽभिहिता। अस्या दीक्षायाः पूर्व्वं प्रमुक्तोऽश्वः चतुःशतैः पालितः सन् स्वेच्छया सम्वत्सरमेकं सञ्च-

इति। तस्मिन् संवत्सरे देवयजनदेशे प्रतिदिनं कर्त्तव्यमिष्टि-त्रयं द्वादशेऽभिधीयते। तत्र प्रातरनुष्ठेयामिष्टिं विधत्ते। "सा-वित्रमष्टाकपालं प्रातर्निर्वपति। अष्टाक्षरा गायत्री। गायत्रं प्रातःसवनम्। प्रातःसवनादेवैनं गायत्रियाश्छन्दसोऽधिनि-र्मिमीते। अथो प्रातःसवनमेव तेनाप्नोति। गायत्रीं छन्दः" इति। यस्मिन्नहनि रक्षिभ्योऽश्वपरिदानं तदुत्तरेद्युः प्रातःकाले सेयमिष्टिः। यद्यपि छन्दोऽन्तरयुक्ता अपि मन्त्राः प्रातःसवने प्रयुज्यन्ते। तथापि गायत्रीदेवतैव मदीयसवनमित्यभिमन्यते। तस्मात्तस्य गायत्रत्वं। अनयेष्ट्या प्रातःसवनाद्गायत्रीदेवतया-ऽश्वसकाशात् एनमश्वमेधं निर्मितवान् भवति। किञ्च सोम-यागे यत् प्रातःसवनं तदपि प्राप्नोति। गायत्रीदेवतां च प्रा-प्नोति॥

(२) मध्याह्ने कर्त्तव्यामिष्टिं विधत्ते। "सवित्रे प्रसवित्र एकादशकपालं मध्यन्दिने। एकादशाक्षरा त्रिष्टुप्। त्रैष्टुभं माध्यन्दिनꣳ सवनम्। माध्यन्दिनादेवैनꣳ सवनात् त्रिष्टुभ-श्छन्दसोऽधिनिर्मिमीते॥ १॥ अथो माध्यन्दिनमेव सवनं ते-नाप्नोति। त्रिष्टुभं छन्दः" इति। प्रकर्षेण स्तौति प्रेरयतीति प्रसविता तादृशाय 'सवित्रे', इयमिष्टिः। अन्यत् पूर्व्ववत् व्याख्येयं॥

(३) अपराह्णे कर्त्तव्यामिष्टिं विधत्ते। "सवित्र आसवित्रे द्वादशकपालमपराह्णे। द्वादशाक्षरा जगती। जागतं तृतीय-सवनम्। तृतीयसवनादेवैनं जगत्याश्छन्दसोऽधिनिर्मिमीते।

अथो तृतीयमवनमेव तेनाप्नोति। जगती छन्दः" इति। आ समन्तात् स्तौति प्रेरयतीत्यासविता। शेषं पूर्ववत्॥

(४) द्वादशकपालेष्टेरूर्ध्वं सायङ्काले धृतं होमं विधत्ते। "ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः। इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहेति चतस्र आहुतीर्जुहोति। चतस्रो दिशः। दिग्भिरेवैनं परिगृह्णाति" इति। पूर्ववद्व्याख्येयं। पूर्वत्राश्वरक्षका राजपुत्राः सायं यस्मिन् रथकारगृहे निवसन्ति। तत्राश्वस्य पादेषु होम उक्तः। इह तु देवयजनमावाहवनीयहोम इति विशेषः॥

(५) यदुक्तं सूत्रकारेण। ऊर्द्ध्वमेकादशान्मासादाश्वत्थे व्रजे सम्बध्नन्ति तस्मै बद्धाय यवसमाहरन्तीति तमेव व्रजं विधत्ते। "आश्वत्थो व्रजो भवति। प्रजापतिर्देवेभ्योऽनिलायत। अश्वो रूपं कृत्वा। सोऽश्वत्थे संवत्सरमतिष्ठत्। तदश्वत्थस्याश्वत्थत्वम्। यदाश्वत्थो व्रजो भवति। स्व एवैनं योनौ प्रतिष्ठापयति"॥ २॥ इति॥ अश्वत्थकाष्ठनिर्म्मितः शालाविशेषः 'आश्वत्थः', 'व्रजः'। स चाश्वबन्धनार्थं कर्त्तव्यः। केनापि निमित्तेन 'देवेभ्यः', सकाशान्निगूढः 'प्रजापतिः', अश्वशरीरं धृत्वा तदीयं 'रूपं', च समीचीनं कृत्वा संवत्सरमात्रं कस्मिंश्चित् 'अश्वत्थे अतिष्ठत्'। ततोऽश्वस्तिष्ठत्यत्रेति व्युत्पत्त्या अश्वत्थनामसम्पन्नं। अश्वत्थे व्रजे बन्धनेन स्वकीयस्थान एवाश्वं प्रतिष्ठापयति॥

इति द्वादशोऽनुवाकः।

---

अथ त्रयोदशोऽनुवाकः।

(१) द्वादशे दीक्षायाः प्राचीने संवत्सरे प्रतिदिनं कालचयेनुष्ठेया इष्टय उक्ताः। तस्मात् संवत्सरादूर्द्ध्वं दीक्षाकाल उखासम्भरणं कृत्वा तस्योखास्थाग्नेराब्रह्मन्नित्यादिमन्त्रैरुपस्थानं कर्त्तव्यं। तथाच सूत्रकार आह। आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतां जज्ञिबीजमिति जातमुख्यमुपतिष्ठत इति। तत्राब्रह्मन्नित्यनुवाके द्वादशवाक्यानि। तेषां क्रमेण व्याख्यानन्त्रयोदशानुवाके अभिधीयते। तत्र प्रथमं वाक्यं व्याचष्टे। "आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामित्याह। ब्राह्मण एव ब्रह्मवर्चसं दधाति। तस्मात् पुरा ब्राह्मणो ब्रह्मवर्चस्यजायत" इति। 'ब्रह्मन्' ब्राह्मणजातियुक्ते पुरुषे, 'ब्रह्मवर्चसी' वेदशास्त्राभिज्ञः पुत्रः, 'ब्राह्मणः', 'आजायतां'। एतन्मन्त्रोपस्थानेन सर्व्वस्मिन्नपि ब्राह्मणे वेदशास्त्राभिज्ञत्वं सम्पादयति। 'तस्मात्' मन्त्रसामर्थ्यादेव, 'पुरा' सृष्ट्यादौ, 'ब्राह्मणः', वेदशास्त्राभिज्ञः तदर्थानुष्ठायी वा 'अजायत'॥

(२) द्वितीयं वाक्यं व्याचष्टे। "आस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतामित्याह। राजन्य एव शौर्य्यं महिमानं दधाति। तस्मात् पुरा राजन्य इषव्यः शूरो महारथोऽजायत" इति। 'इषव्यः' बाणेषु कुशलो धानुष्कः। स्पष्टमन्यत्॥

(३) तृतीयादीनि चत्वारि वाक्यानि क्रमेण व्याचष्टे।

"दोग्ध्री धेनुरित्याह। धेन्वामेव पयो दधाति। तस्मात् पुरा दोग्ध्री धेनुरजायत। वोढानड्वानित्याह ॥ १ ॥ अनडुह्येव वीर्य्यं दधाति। तस्मात् पुरा वोढानड्वानजायत। आशुः सप्तिरित्याह। अश्व एव जवं दधाति। तस्मात् पुराऽऽशुरश्वोऽजायत। पुरन्धिर्योषेत्याह। योषित्येव रूपं दधाति। तस्मात् स्त्री युवतिः प्रिया भावुका" इति। एतेषु मन्त्रेषु दोग्ध्री धेनुरित्यादिष्वाजायतामित्यनुवर्त्तते। पुरं सर्व्वगुणं सम्पूर्णं शरीरं धारयतीति 'पुरन्धिः'। स्पष्टमन्यत्॥

(४) सप्तमं व्याचष्टे। "जिष्णू रथेष्ठा इत्याह। आ ह वै तत्र जिष्णू रथेष्ठा जायते ॥ २ ॥ यत्रैतेन यज्ञेन यजन्ते" इति। योद्धुं यो रथमारोहति स 'रथेष्ठाः'। स च जयशील आजायताम्। तस्मिन् देशे एतेन जिष्णुरित्यादिमन्त्रयुक्तेन यजन्ते तत्र रथारूढः सर्व्वोपि 'जिष्णुः' जयशील एव, 'आजायते'॥

(५) अष्टमं व्याचष्टे। "सभेयो युवेत्याह। यो वै पूर्व्ववयसी। स सभेयो युवा। तस्माद्युवा पुमान् प्रियो भावुकः" इति। पूर्व्ववयस्कस्य यौवनोपेतत्वात् सभायोग्यत्वं, अत एव युवति च युवा सर्व्वेषां प्रियो भवति॥

(६) नवमं व्याचष्टे। "आस्य यजमानस्य वीरो जायतामित्याह। आह वै तत्र यजमानस्य वीरो जायते। यत्रैतेन यज्ञेन यजन्ते" इति। जिष्णुवाक्यवद्व्याख्येयं॥

(७) दशमं व्याचष्टे। "निकामे निकामे नः पर्जन्यो वर्ष-

मित्याह। निकामे निकामे ह वै तत्र पर्जन्यो वर्षति। यत्रै-तेन यज्ञेन यजन्ते" इति। 'नः' अस्माकं, 'निकामे', अपेक्षा यदा भवति तदा तदा, 'पर्जन्यो वर्षतु'। स्पष्टमन्यत्॥

(८) एकादशद्वादशे व्याचष्टे। "फलिन्यो न ओषधयः पच्यन्तामित्याह। फलिन्यो ह वै तत्रौषधयः पच्यन्ते। यत्रै-तेन यज्ञेन जयन्ते। योगक्षेमो नः कल्पतामित्याह। कल्पते ह वै तत्र प्रजाभ्यो योगक्षेमः। यत्रैतेन यज्ञेन जयन्ते" ॥३॥ इति। 'फलिन्यः' प्रभूतफलोपेताः। अलब्धस्य लाभो योगः। लब्धस्य पालनं 'क्षेमः'। योगसहितः क्षेमः 'योगक्षेमः'॥

इति त्रयोदशोऽनुवाकः।

---

अथ चतुर्दशोऽनुवाकः।

(१) त्रयोदशे उखाग्न्युपस्थानमन्त्रा व्याख्याताः। चतुर्दशे-ऽन्नहोमा उच्यन्ते। तांश्च सूत्रकार उदाजहार। पत्नीसंया-जान्तमहः सन्तिष्ठते संस्थितेऽहन्यभित आहवनीयं षट्त्रिंशत्त-माश्वत्थानुपतल्प्यान्मिलंत्यस्त्वमित आदित्ये षट्त्रिंशतमध्वर्यव उपतल्प्यानधिरुह्य खादिरस्रुवैः सर्वां रात्रिमन्नहोमान् जु-होति आज्यं मधु तन्दुलान् पृथुकान् लाजान् करम्भान् धानाः सक्तून् मसूस्यानि प्रियङ्गुतन्दुलानिति। तानेतानन्नहो-मान् विधत्ते। "प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स आत्म-न्नश्वमेधमधत्त। तं देवा अब्रुवन्। एष वाव यज्ञः। यद-श्वमेधः। अप्येव नोऽत्रास्त्विति" इति। तेभ्य एतानन्नहोमान् प्रा-

न्विधत्ते। "प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्। स आत्मन्नश्वमेधमधत्त। तं देवा अब्रुवन्। एष वाव यज्ञः। यदश्वमेधः। अप्येव नो वास्त्विति। तेभ्य एतानन्नहोमान् प्रायच्छत्। तानजुहोत्। तैर्वै स देवानप्रीणात्। यदन्नहोमान् जुहोति॥१॥ देवानेव तैर्यजमानः प्रीणाति" इति। पुरा 'प्रजापतिः', अन्येभ्यः 'देवेभ्यः' अग्न्यादिभ्यः, अश्वमेधव्यतिरिक्तान् 'यज्ञान्', विभज्य दत्त्वा स्वात्मनि 'अश्वमेधं', स्थापितवान्। तदानीं 'देवाः', प्रजापतिमेवम् 'अब्रुवन्', योऽयम् 'अश्वमेधः', 'एष एव', मुख्यः 'यज्ञः', अतोऽस्माकं भागः 'अस्त्वेवेति'। ततः प्रजापतिः 'तेभ्यः', 'अन्नहोमान्', कृत्वा तद्धोमेन 'तान्' सर्व्वान् 'देवान्', प्रीतानकरोत्। तस्मात् सर्व्वदेवप्रीत्यर्थमन्नहोमाः कर्त्तव्याः॥

(२) तेषु होमेषु यानि दशद्रव्याणि तत्रैकं द्रव्यं विधत्ते। "आज्येन जुहोति। अग्नेर्वा एतद्रूपम्। यदाज्यम्। यदाज्येन जुहोति। अग्निमेव तत् प्रीणाति" इति। आज्यस्याग्निप्रियत्वात् तद्रूपत्वं। अत आज्यहोमेनाग्निं प्रीतं करोति॥

(३) एवमन्यानि नव द्रव्याणि क्रमेण विधत्ते। "मधुना जुहोति। महत्यै वा एतद्देवतायै रूपम्। यन्मधु। यन्मधुना जुहोति॥२॥ महतीमेव तद्देवतां प्रीणाति। तण्डुलैर्जुहोति। वसूनां वा एतद्रूपम्। यत्तण्डुलाः। यत्तण्डुलैर्जुहोति। वसूनेव तत्प्रीणाति। पृथुकैर्जुहोति। रुद्राणां वा एतद्रूपम्। यत् पृथुकाः। यत् पृथुकैर्जुहोति॥३॥ रुद्रानेव तत्प्रीणाति।

लाजैर्जुहोति। आदित्यानां वा एतद्रूपम्। यल्लाजाः। यल्ला-जैर्जुहोति। आदित्यानेव तत्प्रीणाति। करम्भैर्जुहोति। वि-श्वेषां वा एतद्देवानाꣳ रूपम्। यत्करम्भाः। यत्करम्भैर्जुहोति ॥ ४ ॥ विश्वानेव तद्देवान् प्रीणाति। धानाभिर्जुहोति। नक्षत्राणां वा एतद्रूपम्। यद्धानाः। यद्धानाभिर्जुहोति। नक्षत्राण्येव तत्प्रीणाति। सक्तुभिर्जुहोति। प्रजापतेर्वा एत-द्रूपम्। यत्सक्तवः। यत्सक्तुभिर्जुहोति ॥ ५ ॥ प्रजापतिमेव तत्प्री-णाति। मसूस्यैर्जुहोति। सर्व्वासां वा एतद्देवतानाꣳ रूप-म्। यन्मसूस्यानि। यन्मसूस्यैर्जुहोति। सर्व्वा एव तद्देवताः प्रीणाति। प्रियङ्गुतण्डुलैर्जुहोति। प्रियाङ्गा इ वै नामैते। एतै-र्वै देवा अश्वस्याङ्गानि समदधुः। यत्प्रियङ्गुतण्डुलैर्जुहोति। अश्वस्यैवाङ्गानि सन्दधाति" इति। 'महती देवता' शास्त्रप्र-सिद्धो महादेवः। विश्वाधिक्यं तस्य महत्त्वं। तस्य प्रियत्वात् मधुद्रव्यं तद्रूपमेव। ब्रीहितण्डुलादीनां वस्वादिप्रियत्वात् वस्वादिरूपत्वं। 'पृथुकाः' चिपिटकाः, 'लाजाः' ब्रीहिप्र-भवाः पुष्पवद्विकसिताः, 'करम्भाः' आज्यमिश्रिताः सक्तवः, 'धानाः' भर्ज्जितयवतण्डुलाः, 'सक्तवः' भर्ज्जिततण्डुलपिष्टानि, 'मसूस्यानि' एतेनैव नाम्नोत्तरदेशे प्रसिद्धो धान्यविशेषः। तेन सूपनिष्पत्तिः। 'प्रियङ्गुतण्डुलाः', तु हेमसमानवर्णत्वात् 'प्रियाङ्गाः'। 'एतैर्देवाः', अश्वाङ्गानि पुरासमाहितानि चक्रुः। स्पष्टमन्यत् ॥

(७) दशद्रव्याणां मिश्रीकृत्य होमं विधत्ते। "दशाज्ञानि

जुहोति। दशाक्षरा विराट्। विराट् कृत्स्नस्यान्नाद्यस्यावरुद्ध्यै" ॥ ६ ॥ इति। दशसङ्ख्यासाम्याद्विराट्सम्पत्तिः ॥

इति चतुर्दशोऽनुवाकः।

---

अथ पञ्चदशोऽनुवाकः।

(१) चतुर्दशेऽन्नहोमा विहिताः। पञ्चदशे तु प्रकारविशेषो विधीयते। तत्रादौ कालविशेषं विधत्ते। "प्रजापतिरश्वमेधमसृजत। तꣳ सृष्टꣳ रक्षाꣳस्यजिघाꣳसन्। स एतान् प्रजापतिर्नक्तꣳहोमानपश्यत्। तानजुहोत्। तैर्वै स यज्ञाद्रक्षाꣳस्यपाहन्। यन्नक्तꣳ होमाञ्जुहोति। यज्ञादेव तैर्यजमानो रक्षाꣳस्यपहन्ति" इति। प्रजापतिसृष्टम् 'अश्वमेधं', यदा 'रक्षाꣳसि', हन्तुमैच्छन्। तदा 'प्रजापतिः', तत्परिहारसमर्थान् रात्रावनुष्ठेयान् 'एतान्', अन्नहोमान् निश्चित्य तद्धोमेन 'रक्षांसि', अपहतवान्। अतः 'यजमानः', रात्रावेतेषां होमेन 'रक्षाꣳसि', विनाशयति ॥

(२) तत्र पूर्वानुवाके विहितं प्रथमद्रव्यं सविधिकमनूद्य प्रशंसति। "आज्येन जुहोति। वज्रो वा आज्यम्। वज्रेणैव यज्ञाद्रक्षाꣳस्यपहन्ति" ॥ १ ॥ इति। आज्यस्य प्रतिपदं करोति। प्राणो वा आज्यं मुखत एवास्य प्राणं दधातीति तामूनमन्नाज्ये घृतं खलु वै देवा वज्रं कृत्वेत्युक्तत्वादाज्यस्य वज्रत्वं ॥

(३) तस्य द्रव्यस्येतरद्रव्येभ्यो होमं प्रथमं विधत्ते। "आज्यस्य प्रतिपदं करोति। प्राणो वा आज्यम्। मुखत एवास्य प्राणं दधा-

ति" इति। 'प्रतिपदं' प्राथम्यं, 'आज्यस्य', प्राणावस्थितिहेतुत्वात् प्राणत्वं, तस्य प्राथम्येन यजमानस्य मुख एव 'प्राणं', स्थापयति।

(४) आज्यहोमादूर्ध्वमितरान् होमान् विधत्ते। "अन्नहोमान् जुहोति। शरीरवदेवावरुन्धे" इति। शरीरमस्यास्तीति 'शरीरवत्' गवादिकं, तत् सर्व्वं प्राप्नोति॥

(५) यदुक्तं सूत्रकारेण, एकस्मै स्वाहेत्येतेषामनुवाकानामयुज आज्येन युजोऽन्नेनाज्येनान्तत इति। तत्रादुग्मयुग्मसञ्ज्ञयोरनुवाकयोर्व्यवस्थां विधत्ते। "व्यत्यासं जुहोति। उभयस्यावरुद्ध्यै" इति। सप्तमकाण्डस्य द्वितीयप्रपाठके द्विशतीयमनुवाकानामियमानुपूर्व्वी, एकस्मा एकस्मै द्वाभ्यां त्रिभ्यश्चतुर्भ्यः पञ्चभ्यो दशभ्योविंशत्यै पञ्चाशते शतायेति। तत्र प्रथमतृतीयपञ्चमसप्तमनवमानुवाका अयुजः। तानाज्येन जुहुयात्। द्वितीयचतुर्थषष्ठाष्टमदशमानुवाकास्तु युजः। तानन्नेन जुहुयात्। एवञ्च सत्याज्यमन्नं पुनरप्याज्यमन्नमिति व्यत्यस्य कृतं भवति। स च 'व्यत्यासः','उभयस्य' आज्यस्यान्नस्य च, सम्प्राप्त्यर्थाय भवति॥

(६) पूर्व्वञ्च यन्नक्तं होमान् जुहोति इत्युक्तो योऽयं रात्रिरूपो होमकालः तमिमं प्रशंसति। अथवा तत्र नक्तहोमानिति होमविशेषसंज्ञा। अत्र तु कालं विधत्ते। "नक्तं जुहोति। रक्षसामपहत्यै" इति। रात्रौ हि रक्षांसि सञ्चरन्ति तानि च अनेन होमेनापहतानि भवन्ति॥

(७) पूर्वोक्तव्यत्यासप्रकारेण शताय स्वाहेत्यस्यानुवाकस्यान्नं द्रव्यं प्राप्तं, तदपोद्य आज्यद्रव्यं विधत्ते। "आज्येनान्ततो

जुहोति ॥२॥ प्राणो वा आज्यं । उभयत एवास्य प्राणं दधाति । पुरस्ताच्चोपरिष्टाच्च" इति । आज्यस्य प्रतिपदं करोतीत्येवं प्रथमानुवाकस्याज्यं द्रव्यं विहितं । तत्राज्यस्याप्याज्ये द्रव्ये विहिते सति 'अस्य' यजमानस्य, 'उभयतः पुरस्ताच्चोपरिष्टाच्च', आद्यन्तयोर्व्वयसोः 'प्राणं', सम्पादयति ॥

(८) तत्र होमे दशानुवाकमन्त्राणां विधीनभिप्रेत्य प्रथमानुवाके मन्त्रद्वयं व्याचष्टे । "एकस्मै स्वाहेत्याह । अस्मिन्नेव लोके प्रतितिष्ठति । द्वाभ्याᳪ स्वाहेत्याह । अमुष्मिन्नेव लोके प्रतितिष्ठति । उभयोरेव लोकयोः प्रतितिष्ठति । अस्मिᳪश्चामुष्मिᳪश्च" इति । स्वनिवासापेक्षया प्रथमत्वादेकशब्दसामर्थ्येनैतल्लोकप्रतिष्ठा, एतदपेक्षया द्वितीयत्वाद् द्वितीयशब्दसामर्थ्येन स्वर्गलोके प्रतिष्ठा । एवं लोकद्वये प्रतिष्ठा सिद्ध्यति ॥

(९) अन्त्यानुवाकेऽपि मन्त्रद्वयं व्याचष्टे । "शताय स्वाहेत्याह । शतायुर्व्वै पुरुषः शतवीर्य्यः । आयुरेव वीर्य्यमवरुन्धे । सहस्राय स्वाहेत्याह । आयुर्वै सहस्रम् । आयुरेवावरुन्धे" इति । शतसङ्ख्याकासु नाडीषु दशेन्द्रियव्यापारेण पुरुषस्य शतवीर्य्यत्वं । आयुषि मासानां दिवसानाञ्च सहस्रसङ्ख्योपेतत्वादायुरेव सहस्रम् ॥

(१०) अन्त्यानुवाकेपि चरमं मन्त्रं व्याचष्टे । "सर्वस्मै स्वाहेत्याह । अपरिमितमेवावरुन्धे" इति । सङ्ख्याविशेषस्यानुपात्तत्वात् अपरिमितप्राप्तिः । एवमत्र होमानुवाकानामाद्यन्तव्याख्यानेन ते सर्व्वेऽप्यनुवाका अत्र विनियुक्ता इत्यवगन्तव्यम् ॥

इति पञ्चदशोऽनुवाकः ।

---

अथ षोडशोऽनुवाकः ।

(१) अन्नहोमप्रकारविशेषः पञ्चदशेभिहितः । तत्र मन्त्रविधानायाद्यन्तावनुवाकौ सङ्क्षेपेण व्याख्यातौ । अथ षोडशे तावेव विस्तरेण व्याख्यायेते । तत्रादौ तद्व्याख्यानोपयुक्तं प्रस्तौति । "प्रजापतिं वा एष ईप्सतीत्याहुः । योऽश्वमेधेन यजत इति । अथो आहुः । सर्व्वाणि भूतानीति" इति । 'यः' अश्वमेधयाजी, स 'एषः' 'प्रजापतिं' चतुर्मुखम्, 'ईप्सति' प्राप्तुमिच्छति, 'इति' एवं, केचिदभिज्ञाः 'आहुः' । अपि चान्य एवमाहुः, न केवलं प्रजापतिप्राप्तिरश्वमेधस्य फलं किन्तु सर्व्वभूतप्राप्तिरिति । अतो जगति यद्यदेकत्वादिसङ्ख्याविशिष्टं वस्तु तत्तत्प्राप्तये तत्र सङ्ख्याहोम इत्यभिप्रायः ॥

(२) तत्र प्रथममन्त्रस्य प्रजापतिप्राप्तिहेतुतां दर्शयति । "एकस्मै स्वाहेत्याह । प्रजापतिर्वा एकः । तमेवाप्नोति" इति । नहि द्वितीयः प्रजापतिः कश्चिदस्ति, तथा सत्यनेकेश्वरत्वप्रसङ्गात् । ततः प्रजापतेरेकत्वात्तेन मन्त्रेण तमेव प्राप्नोति ॥

(३) तस्मिन्ननुवाके सङ्ख्याविशेषा आनुपूर्व्येणाम्नाताः, तदानुपूर्व्यं प्रशंसति । "एकस्मै स्वाहा द्वाभ्याᳪ स्वाहेत्यभिपूर्व्वमाहुतीर्जुहोति । अभिपूर्व्वमेव सुवर्गं लोकमेति" इति । एकद्वित्रिचतुःपञ्चादिक्रमेण यदानुपूर्व्यं तत् 'अभिपूर्व्वम्', इत्युच्यते । तदेवोदाहर्त्तुमेकस्मै स्वाहा द्वाभ्यां स्वाहेति प्रदर्शितं । एवंविधक्रमहोमेन भोगानुपूर्व्या युक्तो यः स्वर्गस्तं प्राप्नोति ॥

(४) अत्रोत्तरोत्तरसङ्ख्यायाः पूर्व्वपूर्व्वसङ्ख्यागर्भितत्वं यदा-म्नातं तत् प्रशंसति। "एकोत्तरं जुहोति॥१॥ एकवदेव सुवर्गं लोकमेति" इति। पूर्व्वोक्तायाः सङ्ख्याया एकमुत्तरं यस्मिन् मन्त्रे सोयम् 'एकोत्तरः'। तद्यथा प्रथममन्त्रोक्ताया एक-सङ्ख्यायाः पुनरेकस्मिन्नधिके सति द्वाभ्यां स्वाहेति मन्त्रो भवति। तस्या अपि सङ्ख्यायाः पुनरेकस्मिन्नधिके सति त्रिभ्यः स्वाहेति मन्त्रो भवति। तदिदमेकोत्तरत्वम्। एवंविधमन्त्र-सामर्थ्यादेकवदेव एकत्ववत् सर्व्वमपि स्वर्गमेकेनैव प्रयत्नेन प्राप्नोति॥

(५) उत्तरेष्वनुवाकेषु तत्र तत्र काश्चित् सङ्ख्या अन्त-रिताः, प्रथमेत्वनुवाके तथाविधान्तरायाभावाद्यत् सातत्य, तत् प्रशंसति। "सन्ततं जुहोति। सुवर्गस्य लोकस्य सन्तत्यै" इति। सङ्ख्यासातत्येन भोगसातत्यं सिध्यति॥

(६) तदेवं प्रथमानुवाकव्याख्यानं प्रपञ्च्य चरमानुवाक-व्याख्यानं प्रपञ्चयितुमाद्यं मन्त्रं व्याचष्टे। "शताय स्वाहे-त्याह। शतायुर्वै पुरुषः शतवीर्य्यः। आयुरेव वीर्य्यमवरुन्धे। सहस्राय स्वाहेत्याह। आयुर्वै सहस्रम्। आयुरेवावरुन्धे" इति। पूर्व्वानुवाकवद्व्याख्येयं॥

(७) तृतीयचतुर्थपञ्चममन्त्राणां तात्पर्य्यं दर्शयति। "अ-युताय स्वाहा नियुताय स्वाहा प्रयुताय स्वाहेत्याह॥२॥ त्रय इमे लोकाः। इमानेव लोकानवरुन्धे" इति। दशगु-णितं सहस्रम् 'अयुतं'। तत् पुनर्दशगुणितं 'नियुतं', तदपि

पुनर्दशगुणितं 'प्रयुतं'। तया चयेष्ट लोकत्रयवर्त्तिनो भोगा प्राप्नोति ॥

(८) षष्ठं मन्त्रं व्याचष्टे। "अर्बुदाय स्वाहेत्याह। वाग्वा अर्बुदम्। वाचमेवावरुन्धे" इति। पूर्व्वोक्तं प्रयुतं दशगुणितं सत् 'अर्बुदम्', इत्युच्यते। वाग्देवतायाः शब्दविशेषाणां बहुविधत्वात् सैव 'अर्बुदं', इत्युपचर्य्यते। अतः 'वाचमेव', प्राप्नोति ॥

(९) सप्तमं व्याचष्टे। "न्यर्बुदाय स्वाहेत्याह। यो वै वाचो भूमा। तान्यर्बुदम्। वाच एव भूमानमवरुन्धे" इति। अर्बुदमेव दशगुणवृद्धौ सत्यां न्यर्बुदं भवति। पूर्व्वोक्तसङ्ख्याबाहुल्यविशिष्टाया वाचो यदत्यन्तबाहुल्यं 'तत्', एव 'न्यर्बुदं', तस्मात्तद्बाहुल्यं प्राप्नोति ॥

(१०) एवमुत्तरोत्तरदशगुणवृद्धियुक्तानां समुद्रादिसङ्ख्यानां तत्तत्सङ्ख्येयवस्तुप्राप्तिरित्येतद्दर्शयति। "समुद्राय स्वाहेत्याह ॥ २ ॥ समुद्रमेवाप्नोति। मध्याय स्वाहेत्याह। मध्यमेवाप्नोति। अन्ताय स्वाहेत्याह। अन्तमेवाप्नोति। परार्द्धाय स्वाहेत्याह। परार्द्धमेवाप्नोति" इति। ब्रह्माण्डाभिमानी परमेश्वरः परशब्देनोच्यते। तदीयस्यायुषोऽर्द्धं 'परार्द्धं', जनैर्व्यवह्रियमाणा सङ्ख्या तत्र पर्य्यवसिता, तद्धोमेन तत्सङ्ख्येयवस्तुप्राप्तिः ॥

(११) सङ्ख्यामन्त्राणां पर्य्यवसानं व्याख्यायोत्तरं मन्त्रद्वयं व्याचष्टे। "उषसे स्वाहा व्युष्ट्यै स्वाहेत्याह, रात्रिर्वा उषाः।

अहर्व्युष्टिः। अहोरात्रे एवावरुन्धे। अथो अहोरात्रयोरेव प्रतितिष्ठति" इति। 'उषःशब्देन' रात्र्यभिमानिनी देवतोच्यते। 'व्युष्टि'शब्देनाहरभिमानिनी देवता। तदुभयहोमेनाहोरात्रदेवतयोः स्वाधीनत्वात् तत्कालयोरसौ प्रतितिष्ठति ॥

(१२) अत्रोषसे स्वाहेत्यादिमन्त्राणां कालविशेषं विधत्ते। "ता यदुभयोर्दिवा वा नक्तं वा जुहुयात्। अहोरात्रे मोहयेत्। उषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वाहोद्यते स्वाहेत्यनुदिते जुहोति। उदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहेत्युदिते जुहोति। अहोरात्रयोरव्यतिमोहाय" ॥ ४ ॥ इति। अत्रोषसे स्वाहेत्यादयो लोकाय स्वाहेत्यन्ताः सप्ताहुतयः। तास्तोभयविधाः। तत्र चतस्रो रात्रिपक्षपातिन्यः, तिस्रस्त्वहःपक्षपातिन्यः। एवं सत्युभयविधास्ताः सप्ताहुतयोऽपि दिवारात्रौ वा यद्येकस्मिन्नेव काले जुहुयात् तदानीमिदमहरियं रात्रिरिति विभागस्य ज्ञातुमशक्यत्वाद्व्यामोहो भवेत्। अतस्तत्परिहाराय विभज्य जुहुयात्। तं विभागप्रकारं सूत्रकारस्पष्टमुदाजहार। एकस्मै स्वाहेत्येतामनुवाकान् पुनः पुनरभ्यासं रात्रिशेषं हुत्वोषसे स्वाहेत्युषसि व्युच्छन्त्यै स्वाहेति व्युच्छन्त्यां व्युष्ट्यै स्वाहेति व्युष्टाय स्वाहोदेष्यते स्वाहेत्युपादेयं उद्यते स्वाहेत्युद्यत्युदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहेत्युदिते हुत्वा प्रज्ञातानन्नपरिशेषान् निदधातीति। अत्र व्युच्छन्त्यै स्वाहेत्येष शाखान्तरमन्त्रः ॥

इति षोडशोऽनुवाकः।

अथ सप्तदशोऽनुवाकः ।

(१) षोडशेन होममन्त्राणामाद्यन्तौ एकस्मै स्वाहा शताय स्वाहेत्यन्तावनुवाकौ विस्तरेण व्याख्यातौ। सप्तदशाष्टादश-योरनुवाकयोः सप्तमकाण्डगतद्वितीयप्रपाठकव्यतिरिक्तप्रपा-ठकगता अन्नहोममन्त्रानुवाका व्याख्यायन्ते, तेषाञ्च मन्त्राणां च विविधानि श्रौतनामानि। तत्राम्बनामाख्यमन्त्रानुवाकस्य तात्पर्यं दर्शयति। "विभूर्मात्रा प्रभूः पित्रेत्यम्बनामानि जुहोति। उभयोरेवैनं लोकयोर्नामधेयं गमयति" इति। पूर्वत्र नामवाचनविधौ इयं वै माता असौ पिता इति लोक-द्वयपरत्वेन व्याख्यातत्वात् अनेन नामहोमेन लोकद्वयेऽपि यजमानं प्रसिद्धनामधेयं प्रापयति ॥

(२) उद्रावमन्त्रानुवाकस्य तात्पर्यं दर्शयति। "आयनाय स्वाहा प्रायणाय स्वाहेत्युद्रावाञ्जुहोति। सर्व्वमेवैनमस्क-न्नꣳ सुवर्गं लोकं गमयति" इति। आयनायेत्यनुवाकेऽ-स्मिन् मन्त्र उद्रावाय स्वाहेत्याम्नातः। तद्योगात् सर्व्वेऽपि मन्त्रास्छत्रिणोन्यायेन 'उद्रावाः', तेषामुद्रवणहेतुत्वेन तद्धो-मेन सर्व्वमपि स्वर्गमार्गे 'अस्कन्नं' अविनष्टमेव, यजमानस्य सम्पादयति ॥

(३) पूर्व्वहोममन्त्राणां तात्पर्यं दर्शयति। "अग्नये स्वा-हा सोमाय स्वाहेतिपूर्व्वहोमान् जुहोति। पूर्व्व एव द्विषन्तं भ्रातृव्यमतिक्रामति" इति। तस्मिन् प्रपाठकेऽग्नये स्वाहेति अ-ष्टोऽनुवाकाः। तेषां मध्ये प्रथमभावित्वादेतदनुवाकोक्ताः

'पूर्व्वहोमाः'। अश्वहोमात् पूर्व्वभावित्वाद्वा पूर्व्वहोमत्वं। एत-द्धोमेनेतरेभ्यः पूर्व्वभावी सर्व्वभावो सन् वैरिणां विनाश-यति॥

(४) अनुवाकान्तरतात्पर्य्यस्य स्पष्टतां दर्शयति। "पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्याह। यथा यजुरेवैतत्" इति। अत्र हि पृथिव्यादिदेवतातुष्ट्यर्थकाहुतिप्रदानं यजुर्मन्त्रेणोच्यते। तत्तथैव भवति। पृथिव्यादिदेवताः तेन तुष्यन्तीत्यर्थः। एतेऽपि पूर्व्वहोमा द्रष्टव्याः॥

(५) पृथिव्यै स्वाहेत्यादेरनुवाकान्तरस्य वक्ष्यमाणत्वात् पू-र्व्वदीक्षामन्त्राणां तात्पर्य्यं दर्शयति। "अग्नये स्वाहा सोमा-य स्वाहेति पूर्व्वदीक्षा जुहोति। पूर्व्व एव दिवसं भ्रातृव्य-मतिक्रामति"॥ ५॥ इति। दीक्षायाः पूर्व्वं लोकानुमन्त्रण-स्यानुवाकस्य विहितत्वादनेनोक्ता आहुतयः 'पूर्व्वदीक्षाः', तत्-फलं प्रथम एव शत्रूणां निराकरणं॥

(६) उत्तरानुवाकोक्तमन्त्राणां सङ्ख्यामुपजीव्य प्रशंसति। "पृ-थिव्यै स्वाहान्तरिक्षाय स्वाहेत्येकविंशिनीं दीक्षां जुहोति। एकविंशतिर्वै देवलोकाः। द्वादशमासाः पञ्चर्त्तवः। त्रय इमे लोकाः। असावादित्य एकविंशः। एष सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै" इति। एकविंशतिभिर्मन्त्रैरेतैः पुरुषे संस्कारस्योत्पाद्यत्वादयं मन्त्रसमूहः 'एकविंशिनी दी-क्षा', तद्धोमेन स्वर्गप्राप्तिः। एकविंशतिरित्यादिकन्तु पूर्व्वो-क्तवैश्वदेवविधौ व्याख्यातं॥

(७) ऋतुदीक्षामन्त्राणां तात्पर्य्यं दर्शयति। "भुवो देवानां कर्म्मणेत्यृतुदीक्षा जुहोति। ऋतूनेवास्मै कल्पयति" इति। वसन्तेन ऋतुना हविषा दीक्षयामीत्याद्यभिधानादेता आहुतयः 'ऋतुदीक्षाः'। तद्धोमेन तत्तदृतूचितफलप्राप्तिः॥

(८) उत्तरानुवाकस्य तात्पर्य्यं दर्शयति। "अग्नये स्वाहा वायवे स्वाहेति जुहोत्यनन्तरित्यै" इति। अनेन होमेन यजमानस्य प्रजादिभिरव्यवधानं भवति। एवं प्रथमप्रपाठकोक्ता मन्त्रानुवाका व्याख्याताः। तत्र द्वितीयप्रपाठकोक्ता स्लोकस्मै स्वाहेत्यादयः पूर्व्वमेव व्याख्याताः॥

(९) अथ तृतीयप्रपाठकोक्ता अनुवाका व्याख्यायन्ते। तत्राप्तिमन्त्राणां तात्पर्य्यं दर्शयति। "अर्वाङ् यज्ञः सङ्क्रामत्वित्याप्तीर्जुहोति। सुवर्गस्य लोकस्याप्त्यै" इति। स्वर्ग आप्यते याभिस्ता 'आप्तयः'। अतस्तद्धोमः स्वर्गप्राप्त्यै भवति॥

(१०) पर्य्याप्तिमन्त्राणां तात्पर्य्यं दर्शयति। "भूतं भव्यं भविष्यदिति पर्य्याप्तीर्जुहोति। सुवर्गस्य लोकस्य पर्य्याप्त्यै" इति। स्वर्गपूर्त्तिर्याभिराहुतिभिर्भवति ताः 'पर्य्याप्तयः', तद्धोमेन स्वर्गः सम्पूर्णः प्राप्यते॥

(११) आभूमन्त्राणां तात्पर्य्यमाह। "आ मे गृहा भवन्त्वित्याभूर्जुहोति। सुवर्गस्य लोकस्याभूत्यै" इति। याभिः स्वर्ग आ समन्ताद्भवति ता आहुतयः 'आभुवः' ताभिः स्वर्गः सर्व्वोऽपि प्राप्यते॥

(१२) अनुभूमन्त्राणां तात्पर्य्यमाह। "अग्निना तपोऽन्व-

भवदित्यनुभूर्जुहोति । सुवर्गस्य लोकस्यानुभूत्यै" इति । यथा पूर्व्वेषु मन्त्रेषु आभवन्विति शब्दसद्भावात् 'आभुवः' । एवमत्राप्यन्वभवदिति शब्दसद्भावादेता आहुतयः 'अनुभुवः' । आभिः स्वर्गं अनुभूयते ॥

(१३) वैश्वदेवमन्त्राणां तात्पर्य्यमाह । "स्वाहाधिमाधीताय स्वाहेति समस्तानि वैश्वदेवानि जुहोति । समस्तमेव द्विषन्तं भ्रातृव्यमतिक्रामति" इति । सर्व्वदेवात्मकप्रजापतिविषयत्वादेतानि 'वैश्वदेवानि समस्तानि', च । तद्धोमेन शत्रुसमुच्चयः ॥

(१४) अङ्गमन्त्राणां तात्पर्य्यमाह । "दद्भ्यः स्वाहा हनूभ्यां स्वाहेत्यङ्गहोमाञ्जुहोति । अङ्गे अङ्गे वै पुरुषस्य पाप्मोपश्लिष्टः । अङ्गादङ्गादेवैनं पाप्मनस्तेन मुञ्चति" इति । दन्ताद्यङ्गोद्देशेन क्रियमाणत्वात् 'अङ्गहोमाः', यजमानस्य प्रत्यवयवं यः 'पाप्मा', सम्बद्धः तस्मात् सर्व्वस्मात् 'पाप्मनः', 'एनं', 'तेन' होमेन, 'मुञ्चति' ॥

(१५) रूपमन्त्राणां तात्पर्य्यं दर्शयति । "अञ्जेताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यश्वरूपाणि जुहोति । रूपैरेवैनꣳ समर्द्धयति" इति । अस्यानुवाकद्वयस्याश्वरूपप्रतिपादकत्वं पूर्व्वमेवोक्तं । एतद्धोमेन 'एनं' यजमानं, 'रूपैः', समीचीनैः सम्बद्धं करोति ॥

(१६) ओषधिमन्त्राणां तात्पर्य्यमाह । "ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहेत्योषधिहोमाञ्जुहोति । द्वय्यो वा ओषधयः ।

पुष्पेभ्योऽन्याः फलं गृह्णन्ति। मूलेभ्योऽन्याः। ता एवोभयीरवरुन्धे" ॥ ४ ॥ इति। ओषधितदवयवोद्देशेन हूयमानत्वात् 'ओषधिहोमाः'। तिलमाषचणकाद्योषधीनां 'पुष्पेभ्यः', फलग्रहणं। शृङ्गवेरसूरणादीनां मूलाभिवृद्धिरेव फलत्वात् 'मूलेभ्यः', फलग्रहणं। मूलेभ्यः स्वाहा। पुष्पेभ्यः स्वाहेत्याद्यभिधानात् उभयविधौषधिप्राप्तिः ॥

(१७) वनस्पतिमन्त्रतात्पर्यं दर्शयति। "वनस्पतिभ्यः स्वाहेति। वनस्पतिहोमाञ्जुहोति। आरण्यस्यान्नाद्यस्यावरुध्यै" इति। अश्वत्थोदुम्बरादीन्वनस्पतीनुद्दिश्य हूयमानत्वात् वनस्पतिहोमाः। तेन होमेनादनयोग्यं नीवारादिकमारण्यं प्राप्यते। इत्थं तृतीयप्रपाठकोक्ता अनुवाका व्याख्याताः ॥

(१८) अथ चतुर्थप्रपाठकोक्तास्त्रयोऽनुवाका व्याख्यास्यन्ते। तत्रापाव्यमन्त्राणां तात्पर्यं दर्शयति। "मेषस्त्वा पचतैरवत्वित्यपाव्यानि जुहोति। प्राणा वै देवा अपाव्याः। प्राणानेवावरुन्धे" इति। अवितुं रक्षितुं योग्या अव्याः तेभ्योऽपेतानि 'अपाव्यानि', स्वयमितररक्षकत्वादन्यरक्षानिरपेक्षाणीत्यर्थः। एतद्धोमेन रक्षानिरपेक्षाणां प्राप्तिर्भवति प्राणैर्हि देहो रक्ष्यते। न तु प्राणा अन्येन रक्ष्यन्ते ॥

(१९) अम्बूक्तकानामनुवाकद्वयोक्तानां मन्त्राणां तात्पर्यं दर्शयति। "कूप्याभ्यः स्वाहाद्भ्यः स्वाहेत्यपाꣳ होमाञ्जुहोति। अप्सु वा आपः। अन्नं वा आपः। अद्भ्यो वा अन्नं जायते। यदेवाद्भ्योऽन्नं जायते। तदवरुन्धे" ॥ ५ ॥ इति। कूपा-

द्विषूत्पन्ना अप उद्दिश्य हूयमानत्वात् 'अपां होमाः'। 'अप्सु', हि 'आपः', उत्पद्यन्ते। आप्यत इति व्युत्पत्त्या अन्नमेवाप्शब्देन विवक्षितं। 'अद्भ्यः', हि 'अन्नं जायते'। तस्मादाप्यमन्नशब्दवाच्यमन्नमप्सु वर्त्तत इत्युच्यते। अनेन होमेन यदद्भ्यो जायते तदाप्नोति ॥

इति सप्तदशोऽनुवाकः।

---

अथ अष्टादशोऽनुवाकः।

(१) सप्तदशे सङ्ख्यानुवाकव्यतिरिक्तेष्वन्नहोमानुवाकेषु केचिद्व्याख्याताः। अष्टादशेऽवशिष्टा व्याख्यायन्ते। तत्राग्नये स्वाहेत्यनुवाकान्तेऽम्भोभ्यः स्वाहा नभोभ्यः स्वाहा महोभ्यः स्वाहेति मन्त्रत्रयमाम्नातं। तच्च बहुप्रशंसनीयमस्तीत्यभिप्रेत्यानुवाकान्तरे पृथगुक्तिः। तत्रादावम्भोमन्त्रं प्रशंसति। "अम्भाꣳसि जुहोति। अयं वै लोकोऽम्भाꣳसि। तस्य वसवोऽधिपतयः। अग्निर्ज्योतिः। यदम्भाꣳसि जुहोति। इममेवं लोकमवरुन्धे। वसूनाꣳ सायुज्यं गच्छति। अग्निं ज्योतिरवरुन्धे" इति। अम्भोभ्यः स्वाहेति मन्त्रस्य बहुवचनोपेतत्वाद्विधावपि बहुवचनोक्तिः। अम्भसामाधारत्वाद्भूलोकस्य तद्रूपत्वं। वसवश्च तस्य पालकाः। अग्निस्तस्य प्रकाशकः। अतस्तद्धोमेन भूलोकवस्वग्नीनां स्वाधीनता भवति॥

(२) नभोमन्त्रमहोमन्त्रौ प्रशंसति। "नभाꣳसि जुहोति।

अन्तरिक्षं वै नभाꣳसि ॥ १ ॥ तस्य रुद्रा अधिपतयः। वायु-र्ज्योतिः। यन्नभाꣳसि जुहोति। अन्तरिक्षमेवावरुन्धे। रुद्रा-णाꣳ सायुज्यं गच्छति। वायुं ज्योतिरवरुन्धे। महाꣳसि जुहोति। असौ वै लोको महाꣳसि। तस्यादित्या अधिप-तयः। सूर्यो ज्योतिः ॥ २ ॥ यन्महाꣳसि जुहोति। अमुमेव लोकमवरुन्धे। आदित्यानाꣳ सायुज्यं गच्छति। सूर्यं ज्योति-रवरुन्धे" इति। अत्रापि पूर्ववत् मन्त्रानुसारेण बहुवचनं। नभःशब्दस्यान्तरिक्षपर्यायत्वात्तदाचित्वं। सूर्यस्य महनीय-त्वात् महःशब्दाभिधेयत्वम्। अन्यत् पूर्ववद्व्याख्येयं ॥

(३) यव्याख्यानां मन्त्राणां तात्पर्यं दर्शयति। "नमो राज्ञे नमो वरुणायेति यव्यानि जुहोति। अन्नाद्यस्यावरुध्यै" इति। यवे मिश्रणं तत्साधनानि 'यव्यानि'। तेषु मन्त्रेष्वधि-पतिं साकुर्व्वधिपतिरहं प्रजानां भूयासमिति स्वामित्वेन प्रजासु मिश्रणमाम्नायते ततो यव्यत्वं। प्रजास्वामित्वेन्नाद्या-द्यसम्भोगं भवति ॥

(४) गव्यमन्त्राणां तात्पर्यं दर्शयति। "मयोभूर्वातो अ-भिवातूस्रा इति गव्यानि जुहोति। पशूनामवरुध्यै" इति। 'उस्रा'शब्दो गोवाचकः। तद्योगाद्गव्यत्वं तद्धोमेन पशुप्राप्तिः ॥

(५) सन्तत्याख्यमन्त्रतात्पर्यं दर्शयति। "प्राणाय स्वाहा व्यानाय स्वाहेति सन्ततिहोमाञ्जुहोति। सुवर्गस्य लोकस्य सन्तत्यै" ॥ ३ ॥ इति। तन्मन्त्रेषु सन्तानेभ्यः स्वाहेत्याम्नानात् सन्ततिनामत्वं। तद्धोमेन स्वर्गः सन्ततो भवति ॥

(६) प्रमुक्तिमन्त्राणां तात्पर्य्यमाह। "सिताय स्वाहा सिताय स्वाहेति प्रमुक्तीर्जुहोति। सुवर्गस्य लोकस्य प्रमुक्त्यै" इति। प्रमुक्ताय स्वाहेति तेष्वाम्नानात् प्रमुक्तिनामत्वं। सुवर्गस्य 'प्रमुक्तिः' मुक्त्यभावः, सर्व्वदा स्वेन सम्बन्धः, यथापस्मारणमित्युक्तेः स्मृत्यभावः, तद्वत् इयं॥

(७) चतुर्थप्रपाठकोक्ता अनुवाका व्याख्याताः। अथ पञ्चमप्रपाठकोक्ता अनुवाका व्याख्यास्यन्ते। तत्रैकस्यानुवाकस्य स्पष्टार्थतां दर्शयति। "पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्याह। यथा यजुरेवैतत्" इति॥

(८) शरीरहोममन्त्राणां तात्पर्य्यं दर्शयति। "दत्वते स्वाहा दन्तकाय स्वाहेति शरीरहोमाञ्जुहोति। पितृलोकमेव तैर्यजमानोऽवरुन्धे" इति। दन्तादीनां शरीरसम्बन्धादेते शरीरहोमाः। तद्धोमेन शरीरपातानन्तरभाविनः पितृलोकस्य प्राप्तिः॥

(६) योगमन्त्राणां तात्पर्य्यं दर्शयति। "कस्त्वा युनक्ति स त्वा युनक्त्विति परिधीन् युनक्ति। इमे वै लोकाः परिधयः। इमानेवास्मै लोकान् युनक्ति। सुवर्गस्य लोकस्य समष्ट्यै" इति। 'युनक्ति' हस्तेन स्पृशेत्, सकृत् 'परिधीन्', स्पृष्ट्वा पश्चात् उत्तरे मन्त्रा होतव्या इत्यर्थः। परीधीनां लोकत्रयरूपत्वात् लोका एव स्पृष्टा भवन्ति। तेन स्वर्गप्राप्तिः॥

(१०) महिममन्त्रयोस्तात्पर्यं दर्शयति। "यः प्राणतो य आत्मदा इति महिमानौ जुहोति। सुवर्गो वै लोको महः।

सुवर्गमेव ताभ्यां यजमानोऽवरुन्धे" इति। तयोर्मन्त्रयोस्तस्य च पृथिवी महिमा तस्य तयोर्महिमेत्यभिधानान्महिमनामत्वं। स्वर्गस्य पूज्यत्वात् महःशब्दाभिधेयत्वम्। तद्धोमेन स्वर्गप्राप्तिः॥

(११) ब्रह्मवर्चसमन्त्राणां तात्पर्यं दर्शयति। "आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामिति समस्तानि ब्रह्मवर्चसानि जुहोति। ब्रह्मवर्चसमेव तैर्यजमानोऽवरुन्धे" इति। ब्रह्मवर्चसशब्दयोगान्मन्त्राणां तन्नामत्वं। प्राणभृत उपदधातीति न्यायेनैकस्मिन्नेव मन्त्रे तल्लिङ्गसमवायेऽपि सर्वेषां तन्नामत्वं दर्शयितुं समस्तशब्दप्रयोगः। तेन होमेन ब्रह्मवर्चसप्राप्तिः॥

(१२) अनुवाकान्तरतात्पर्यं दर्शयति। "जज्ञिबीजमिति जुहोत्यनन्तरित्यै" इति। बीजमुत्पाद्यतामित्युक्त्या धान्यादीनां नैरन्तर्यं सिद्ध्यति॥

(१३) सन्नतिमन्त्राणां तात्पर्यं दर्शयति। "अग्नये समनमत् पृथिव्यै समनमदिति सन्नतिहोमाञ्जुहोति। सुवर्गस्य लोकस्य सन्नत्यै" इति। 'समनमत्', इति शब्दसद्भावात् सन्नतिनामत्वं। तद्धोमेन स्वर्गस्य सन्नतिप्राप्तिर्भवति॥

(१४) संहितायामनाम्नातं मन्त्रद्वयमुत्पाद्य व्याचष्टे। "भूताय स्वाहा भविष्यते स्वाहेति भूताभव्यौ होमौ जुहोति। अयं वै लोको भूतं॥ ५॥ असौ भविष्यत्। अनयोरेव लोकयोः प्रतितिष्ठति। सर्वस्याप्त्यै। सर्वस्यावरुध्यै" इति। भूलोकस्य पूर्वमेव लब्धत्वात्तद्भूतत्वं, स्वर्गस्यैतत्परं लभ्यत्वाद्भविष्यत्त्वं, तद्धोमेन

लोकद्वये प्रतिष्ठायां सत्यां तत्रत्यसर्वभोग्यस्य प्राप्त्यवरोधौ सिध्यतः। प्राप्तिः लाभः, अवरोधः स्वाधीनत्वं ॥

(१५) चतुर्थकाण्डोक्तस्यानुवाकत्रयस्य तात्पर्यं दर्शयति। "यदक्रन्दः प्रथमं जायमान इत्यश्वस्तोमीयं जुहोति। सर्वस्याप्त्यै। सर्वस्य जित्यै" इति। अश्वस्य स्तोम स्तोत्रं, तद्यस्मिन् मन्त्रजाते विद्यते तदिदम् 'अश्वस्तोमीयं'। तद्धोमेन सर्वभोगस्य प्राप्तिर्वशीकारश्च भवति ॥

(१६) उक्तान्नहोमसहितस्याश्वमेधस्यानुष्ठानं वेदनञ्च प्रशंसति। "सर्वमेव तेनाप्नोति। सर्वं जयति। योऽश्वमेधेन यजते। य उ चैनमेवं वेद" इति। अत्राश्वमेधशब्देन तदङ्गभूतोऽन्नहोम उपलक्ष्यते ॥

(१७) उक्तेष्वन्नहोमेषु कृतेषु पश्चादपि रात्रिरवशिष्यते चेत् तदानीमेकस्मै स्वाहेत्यादिमन्त्राणां यावद्रात्र्यवशेषमभ्यासाय पुनर्विधत्ते। "यज्ञꣳ रक्षाꣳस्यजिघाꣳसन्। स एतान् प्रजापतिर्नक्तꣳहोमानपश्यत्। तानजुहोत्। तैर्वै स यज्ञाद्रक्षाꣳस्यपाहन्। यन्नक्तꣳ होमा जुहोति। यज्ञादेव तैर्यजमानो रक्षाꣳस्यपहन्ति" इति। पूर्ववद्व्याख्येयं। अत्रैकस्मै स्वाहेत्याद्यनुवाकानां आदौ सकृद्धोमः, ततो विभूर्मात्रेत्यारभ्य यदक्रन्द इत्यन्तानां होमः। तत ऊर्द्ध्वमारात्रिसमाप्तेः पुनरप्येकस्मै स्वाहेत्यादीनां होमः ॥

(१८) तेष्वनुवाकेष्वन्तर्भूतानां तद्वत् पुनः पुनरभ्यासप्राप्तौ तद्वारयितुं सर्वान्ते होमं विधत्ते। "उषसे स्वाहा व्युष्ट्यै

स्वाहेत्यन्ततो जुहोति । सुवर्गस्य लोकस्य समष्ट्यै" ॥६॥ इति । सर्वान्ते प्रकाशार्थहोमेन प्रकाशितः स्वर्गः प्राप्यते ॥

इति अष्टादशोऽनुवाकः ॥

अथ ऊनविंशोऽनुवाकः ।

(१) त्रिरात्रे क्रतुरूपस्याश्वमेधस्य प्रथमेऽहनि संस्थिते सति रात्रौ कर्त्तव्या येऽन्नहोमाः, ते सर्वेऽप्यष्टादशानुवाके समर्पिताः। तस्मात् प्रथमाह्नःपूर्वस्मिन्नौपवसथ्यदिने यूपाः प्रयोक्तव्याः, तेऽस्मिन्नेकोनविंशेऽनुवाके अभिधीयन्ते। तत्र यूपसङ्ख्यां विधत्ते। "एकयूपो वैकादशिनी वा। अन्येषां यज्ञानां यूपा भवन्ति। एकविंशिन्यश्वमेधस्य। सुवर्गस्य लोकस्याभिजित्यै" इति। अश्वमेधव्यतिरिक्ता ये यज्ञाः, तेषां सर्वेषाम् 'एकः', एव 'यूपः', इत्येकः पक्षः। एकादशानां यूपानां समूह इत्यपरः पक्षः। 'अश्वमेधस्य', त्वेकविंशतिसङ्ख्यानां यूपानां समूहः कर्त्तव्यः, तेन स्वर्गाभिजयः॥

(२) तत्राग्निष्ठनामकस्य मुख्ययूपस्य वृक्षविशेषं विधत्ते। "बैल्वो वा खादिरो वा पालाशो वा। अन्येषां यज्ञक्रतूनां यूपा भवन्ति। राज्जुदाल एकविंशत्यरत्निरश्वमेधस्य। सुवर्गस्य लोकस्य समष्ट्यै" इति। आहवनीयस्य समीपे यो यूपस्तिष्ठति स एवाग्निष्ठस्तस्याग्निष्ठस्य बैल्वादीनामन्यतमो वृक्ष इतरेषु यज्ञक्रतुषु भवति। देवतोद्देशेन द्रव्यत्यागात्मकाः,यज्ञाः।

तेष्वपि यूपवन्तः, क्रतवः। तत्र 'अश्वमेधस्य', क्रतोरग्निष्ठो यूपो 'राज्जुदालः', कर्त्तव्यः। श्लेष्मातकवृक्षो राज्जुदालः। स च यूपः 'एकविंशत्यरत्निः' चतुर्विंशतिरङ्गुलयः अरत्निः, तादृगरत्निभिरेकविंशतिभिः परिमितः कार्य्यः, स चात्युन्नतत्वात् स्वर्गप्राप्त्यै भवति॥

(३) अश्वसम्बन्धियूपविशेषप्रसङ्गादवदाने साधनविशेषं विधत्ते। "नान्येषां पशूनां तेजन्या अवद्यन्ति। अवद्यन्त्यस्य॥१॥ पाप्मा वै तेजनी। पाप्मनोऽपहत्यै" इति। अश्वस्य रुधिरस्य धारयित्री 'तेजनी', इत्युच्यते। इतरेषां 'पशूनां', रुधिरधारणाभावादवदानं 'तेजन्या न', क्रियते, 'अश्वस्य', तु तत्सद्भावादवदानं तेजन्या कर्त्तव्यं। तस्याश्वतेजन्याः पापरूपत्वात् तयावदाने सति पापस्यापहतिर्भवति॥

(४) अन्यमपि साधनविशेषं विधत्ते। "प्लक्षशाखायामन्येषां पशूनामवद्यन्ति। वेतसशाखायामश्वस्य। अप्सु योनिर्वा अश्वः। अप्सुजो वेतसः। स्व एवास्य योनाववद्यति" इति। अश्ववेतसयोरब्जन्यत्वेन वेतसस्य अपाञ्चाभेदोपचारेण वेतसोऽश्वस्य स्वकीयो योनिरित्युच्यते॥

(५) विहितानामेकविंशतियूपानां पशुविशेषनियोजने व्यवस्थां विधत्ते। "यूपेषु ग्राम्यान् पशून् नियुञ्जन्ति। आरोकेष्वारण्यान् धारयन्ति। पशूनां व्यावृत्त्यै" इति। रोहितो धूम्ररोहित इत्यादयः पशवो 'ग्राम्याः'। इन्द्राय राज्ञे शूकर इत्यादयः'आरण्याः'। तत्र 'ग्राम्याः','यूपेषु', उद्बन्धनीयाः,

'आरण्याः', तु 'आरोकेषु' यूपान्तरालेषु, रशनाभिर्बध्वा धारणीयाः। एवञ्च सति ग्राम्याणामारण्यानाञ्च परस्परव्यावृत्तिर्भवति ॥

(६) तेषु पशुष्वपरमवान्तरविशेषं विधत्ते। "आ ग्राम्यान् पशून् लभन्ते। प्रारण्यान्सृजन्ति। पाप्मनोऽपहत्यै"॥२॥ इति। ग्राम्या रोहितादय आलम्भनीयाः, आरण्यास्तु सूकरादयः॥

पर्य्यग्निकरणानन्तरं विशेषं विधत्ते। "प्रकर्षेणोत्सृष्टव्याः" तेषां परित्यागेन पाप्म हतं भवति॥*

इति ऊनविंशोऽनुवाकः॥

---

अथ विंशोऽनुवाकः।

(१) एकोनविंशे यूपा अभिहिताः। तेषां यूपानां स्थानादयो विशेऽभिधीयन्ते। तत्र प्रधानयूपस्थापनं विधत्ते। "राज्जुदालमग्निष्ठं मिनोति। भ्रूणहत्याया अपहत्यै" इति। योऽयं श्लेष्मातकवृक्षजन्या यूपः। तं एनं 'अग्निष्ठं मिनोति' अग्निसमीपे यथा स्थितो भवति तथा प्रक्षिपेत्। तत्प्रक्षेपेण 'भ्रूणहत्या' गर्भादिवधः, विनाशितो भवति॥

(२) तस्याग्निष्ठस्य यूपस्य पार्श्वद्वये देवदारुयूपौ विधत्ते। "पौतुद्रवावभितो भवतः। पुण्यस्य गन्धस्यावरुध्यै। भ्रूणहत्यामेवास्मादपहत्य। पुण्येन गन्धेनोभयतः परिगृह्णाति" इति। देवदारुवृक्षस्य गन्धः सुरभिः। अतस्ताभ्यां यूपाभ्यां पुण्य-

* प्रकर्षेणोत्सृष्टव्या इति पाठः मूले नास्ति अनुक्रमणिकाधृतमन्त्रसङ्ख्यायापि नैतल्लभ्यते।

गन्धप्राप्तिः। अग्निष्ठयूपप्रक्षेपेणास्माद्यजमानाद् भ्रूणहत्यादि-दोषमपहृत्य देवदारुयूपद्वयेन यजमानस्य 'उभयतः', सुरभिगन्धपरिग्रहो भवति ॥

(३) अथैतस्य यूपत्रयस्य पार्श्वयोर्बैल्वयूपान् विधत्ते। "षड् बैल्वा भवन्ति। ब्रह्मवर्चसस्यावरुद्ध्यै" इति। दक्षिणपार्श्वे त्रयः, उत्तरपार्श्वे त्रयः, इत्येवं षड् यूपाः ॥

(४) उक्तस्य यूपनवकस्य पार्श्वयोः षड् यूपान् विधत्ते। "षट् खादिराः। तेजसोऽवरुद्ध्यै" ॥ १ ॥ पूर्ववद्दक्षिणतस्त्रयः, उत्तरतस्त्रयः, इत्येवं खदिरवृक्षजास्तेजःप्राप्तिहेतवः ॥

(५) उक्तायाः पञ्चदशयूपपङ्क्तेः पार्श्वयोः पुनः षड् यूपान् विधत्ते। "षट् पालाशाः। सोमपीथस्यावरुद्ध्यै" इति। पूर्ववद्दक्षिणतस्त्रयः, उत्तरतस्त्रयः, इत्थं षट्। पलाशवृक्षस्य सोमजन्यत्वात् सोमपानप्राप्तिहेतुत्वं। तदेतत् सर्वं सूत्रकारेण सङ्गृहीतं। 'रज्जुदालमेकविंशत्यरत्निमग्निष्ठं मिनोति पौतुद्रवावभितस्त्रयो बैल्वा दक्षिणतस्त्रय उत्तरतस्त्रयः खादिरा दक्षिणतस्त्रय उत्तरतस्त्रयः पालाशा दक्षिणतस्त्रय उत्तरतस्त्रय इति ॥

(६) तानेतान् मिलित्वा प्रशंसति। "एकविंशतिः सम्पद्यन्ते। एकविंशतिर्वै देवलोकाः। द्वादशमासाः पञ्चर्त्तवः। त्रय इमे लोकाः। असावादित्य एकविंशः। एष सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै" इति। स्पष्टोऽर्थः ॥

(७) यूपसङ्ख्यास्तुतिप्रसङ्गेन पशुबीजत्वं स्तौति। "शतं

पशवो भवन्ति॥ २ ॥ शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति'' इति। अत्र शतशब्दो बाहुल्यमुपलक्षयति॥

(८) अवत्यायाः पशुसङ्ख्यायाः शतादप्यधिकत्वादत्र स-ङ्ख्याविशेषनियमं वारयति। "सर्वं वा अश्वमेधाप्नोति। अपरि-मिता भवन्ति। अपरिमितस्यावरुध्यै" इति। अश्वमेधयाजिनः सर्वफलप्राप्तिरपेक्षिता तस्मात् 'अपरिमितस्य', फलस्य प्राप्त्यै पशवोऽपि 'अपरिमिताः' सङ्ख्याविशेषनियमरहिताः, कर्त्तव्याः॥

(९) अथ प्रश्नोत्तराभ्यां पशूनामवदानप्रदेशविशेषं वि-धत्ते। "ब्रह्मवादिनो वदन्ति। कस्मात् सत्यात्। दक्षिणतो ऽन्येषां पशूनामवद्यन्ति। उत्तरतोऽश्वस्येति। वारुणो वा अश्वः ॥३॥ एषा वै वरुणस्य दिक्। स्वायामेवास्य दिश्यवद्यति। यदितरेषां पशूनामवद्यति। शतदेवत्यं तेनावरुन्धे" इति। अत्र ह्यश्वतूवरगोमृगहवींषि होमाधारस्याग्नेरुत्तरतः सादि-तानि, इतरपशूनां हवींषि दक्षिणतः सादितानि। अतोऽव-दानमपि तथैव क्रियते। तत्र ब्रह्मवादिनः पृच्छन्ति। इतर-पशूनां दक्षिणस्यां दिश्यवदानं अश्वस्य तूत्तरस्यां दिश्यव-दानमित्यत्र वैषम्ये किं कारणमिति प्रश्नः। तत्रोत्तरवादिन एवमाहुः। 'अश्वः', हि 'वारुणः'। प्रजापतिर्वरुणायाश्वमनय-दिति श्रुतेः। 'एष' उत्तरा च, 'दिक्', 'वरुणस्य', सम्बन्धिनी। सर्वा-निष्टनिवारकत्वात्। अत एवानिष्टशमनहेतुत्वमन्यत्र श्रूयते। 'उ-दीचीनमुद्वासयति। एषा वै देवमनुष्याणाᳪ शान्ता दिगिति'। अतस्तस्यामवदानेनाश्वस्य या स्वकीया दिक् तत्रैवावदानं भव-

ति। 'यत्', च 'इतरेषां पशूनां', दक्षिणस्यामवदानं 'तेन', बहुदेवत्यं यागफलं लभते। तस्माद्वैषम्यमुचितमित्यभिप्रायः॥

(१०) उत्तरस्यां दिश्यश्वहविषोऽवस्थापनं विधत्ते। "चित्ते-ऽग्नावधि वैतसे कटेऽश्वं चिनोति। अप्सु योनिर्वा अश्वः। अप्सुजो वेतसः। स्व एवैनं योनौ प्रतिष्ठापयति" इति। योऽयञ्चयने निष्पादितश्चितोऽग्निः स्थूलरूपः तस्मिन्नग्निनामके स्थले 'अधि' उपरि, 'वेतस'शाखाभिर्निष्पादितं कटं प्रसार्य तस्मिन् 'कटे', हविरश्वाङ्गरूपं स्थापयेत्। अप्सु योनिरित्यादि स्पष्टं॥

(११) तूपरगोमृगहविषां सादने प्रकारं विधत्ते। "पुर-स्तात् प्रत्यञ्चं तूपरं चिनोति। पश्चात् प्राचीनं गोमृगम्॥४॥ प्राणापानावेवास्मिन्त्सम्यञ्चौ दधाति" इति। यदिदमश्व-सम्बन्धि हविरवस्थापितं तस्य पूर्व्वस्यां दिशि तूपरस्य हविः प्रत्यङ्मुखं सादयेत्। प्रतीच्यां दिशि गोमृगस्य हविः प्राङ्मुखः सादयेत्। शृङ्गहीनः पशुः 'तूपरः', शृङ्गवन्मनुष्यहिंसको धूर्त्तो बलीवर्द्दः 'गोमृगः'। यद्वा गोहरिणयोः संयोगेनोत्पन्नः स-ङ्कीर्णजातिर्गोमृगः। तयोः 'पुरस्तात्', 'पश्चात्', च सादने सति मध्येऽवस्थितस्याश्वस्य 'प्राणापानौ', सम्यग् धारितौ भवतः॥

(१२) आसादने विशेषमुक्त्वा होमविशेषं विधत्ते। "अश्वं तूपरं गोमृगमिति सर्वहुत एतान् जुहोति। एषां लोका-नामभिजित्यै" इति। अश्वादीन् 'एतान्', 'सर्व्वहुत'निरवशेषेण यथा हूयमाना भवन्ति तथा जुहुयात्। तदीयमंशमल्प-मपि नावशेषयेत्॥

(१३) तस्योपरि होमान्तरं विधत्ते। "आत्मनाऽभिजुहोति। आत्मानमेवैनꣳ सतनुं करोति" इति। अश्वस्यात्मीयावयवप्रतिपादकं, स्तेगान् दꣳष्ट्राभ्यामिति मन्त्रजातं मन्त्रात्मशब्देनोपलक्ष्यते। हुतमश्वमभिलक्ष्योपरि 'आत्मना' स्तेगानिति मन्त्रजातेन, जुहुयात्। तथा सति 'एनं' अश्वं, जीवात्मसहितं शरीरसहितं 'करोति'॥

(१४) एतद्वेदनं प्रशंसति। "आत्माऽमुष्मिँल्लोके भवति। य एवं वेद। अथो वसोरेव धारां तेनावरुन्धे" इति। एवं वेदिता स्वर्गलोके 'आत्मा' शरीरी, भवति। अपि च 'वसोर्धारां' धनस्य परम्परां, 'तेन' होमेन, लभते॥

(१५) तत ऊर्द्ध्वमाहुतिद्वयं विधत्ते। "इलुवर्दाय स्वाहा बलिवर्दाय स्वाहेत्याह। संवत्सरो वा इलुवर्दः। परिवत्सरो बलिवर्दः। संवत्सरादेव परिवत्सरादायुरवरुन्धे। आयुरेवास्मिन्दधाति। तस्मादश्वमेधयाजी जरसा विस्रसामुं लोकमेति" इति। प्रभवादिपञ्चके प्रथमोऽब्दः 'संवत्सरः', द्वितीयोऽब्दः 'परिवत्सरः'। तदीयहोमेनोभयस्मादपि 'आयुः', प्राप्नोति। अतएवायं 'अश्वमेधयाजी', बाल्ये यौवने वा न म्रियते। किन्तु 'जरसा', युक्तः शनैर्हस्तपादादिविस्रंसनेन मृत्वा स्वर्गं प्राप्नोति। अत्रौपवसथ्येऽहनि यूपाः प्रकृता वर्णिताः। यूपप्रसङ्गाद् बुद्धिस्थमश्वावदानादिकमत्र प्रतिपादितम्। एतदीयानुष्ठानं तु त्रिरात्रस्य मध्यमेऽहनि द्रष्टव्यं॥

इति विंशोऽनुवाकः॥

अथ एकविंशोऽनुवाकः ।

(१) विंशेऽनुवाके यूपानां स्थानादयो विहिताः । एकविंशे तु चेतव्याग्न्यादेर्विशेषोऽभिधीयते । तमिमं विशेषं विधत्ते । "एकविꣳशोऽग्निर्भवति । एकविꣳशः स्तोमः । एकविꣳशति र्यूपाः" इति । एकविंशतिसङ्ख्याकैः पुरुषैः सम्मितः 'अग्निः', चेतव्यः । तथा स्तोमेषु त्रिवृदादिषु मध्ये 'एकविंशतिस्तोम'युक्त हविर्विशेषे उक्थ्यः कार्य्यः । 'यूपाः', च 'एकविंशति'सङ्ख्याकाः कर्त्तव्याः । एवं सिद्धान्तोऽभिहितः ॥

(२) अथ पूर्व्वपक्षत्वेनाग्न्यादीनां द्वादशत्वविधित्सया पूर्व्वोक्तमेकविंशत्वं दृष्टान्तपुरःसरं दूषयति । "यथा वा अश्वा वर्षभा वा वृषाणः सꣳस्फुरेरन् । एवमेतत् स्तोमाः सꣳस्फुरन्ते । यदेकविꣳशः । त यत्समृच्छेरन् । हन्येतास्य यज्ञः" इति । 'यथा', लोके केचिद्दुर्दान्ताः, 'ऋषभाः' 'अश्वा वा', 'वृषाणः' सेक्तुं समर्थाः, औत्सुक्यातिशयेन गां वडवां वा प्रौढ़ु 'संस्फुरेरन्' अतिशयेन संस्फुरयुः, त्वरां कुर्य्युरित्यर्थः । अनेनैव प्रकारेण ये प्रौढाः एकविंशति स्तोमाः', एते सहसा वर्त्तमानाः 'संस्फुरन्ति' त्वरां कुर्व्वन्ति । तथाचार्य्यमाणाः 'ते' स्तोमाः, यदि 'समृच्छेरन्' स्खलिताः स्युः, तदानीम् 'अस्य', 'यज्ञः', 'हन्येत' । स्तोमवदग्नियूपयोरप्युपघात उन्नयः ॥

(३) एवमेकविंशत्वपक्षं दूषयित्वा पूर्व्वपक्षवादिनां मतमुपन्यस्यति । "द्वादश एवाग्निःस्यादित्याहुः । द्वादशः स्तोमः ।

एकादश यूपाः" इति। द्वादशपुरुषपरिमित एव 'अग्निः', कर्त्तव्यः। 'स्तोमः', अपि द्वादशसङ्ख्यायुक्त एव कार्य्यः। यूपानान्तु द्वादशसङ्ख्यायाः काप्यभावात् 'एकादश', ते कर्त्तव्याः॥

(४) तत्राद्ययोर्द्वादशपुरुषपरिमितत्वं प्रशंसति। "यद्द्वादशोऽग्निर्भवति। द्वादश मासाः सम्वत्सरः। संवत्सरेणैवास्मा अन्नमवरुन्धे" इति। स्पष्टोऽर्थः॥

(५) इयमेव प्रशंसा द्वादशस्तोमेऽपि योजनीया। यूपानामेकादशसङ्ख्यां विभज्य प्रशंसति। "यद्दश यूपा भवन्ति। दशाक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे। य एकादशः। स्तन एवास्यै सः। दुह एवैनां तेन" इति। तत्रैकादशयूपेषु दशयूपगतया सङ्ख्यया विराड्द्वाराऽन्नप्राप्तिः। 'यः' अयमवशिष्टः, 'एकादशः', यूपः 'सः', अयं 'अस्याः' पूर्व्वोक्ताया धेनुरूपाया विराजः, 'स्तन'स्थानीयः। 'तेन' स्तनस्थानीयेन, 'एनां' विराजं, 'दुह एव' अभिमानफलं दोग्धेव। तस्मादग्निस्तोमयोर्द्वादशसङ्ख्या यूपेष्वेकादशसङ्ख्या च कर्त्तव्या। सोऽयं पक्षः सिद्धान्तिभिर्दूषितः॥

(६) तदेतद्दूषणं दर्शयति। "तदाहुः। यद्द्वादशोऽग्निः स्याद्द्वादशस्तोम एकादश यूपाः। यथा स्थूरिणा यायात्। तादृक् तत्" इति। तत्र द्वादशयूपपक्षे केचिदभिज्ञा दूषणमेवं 'आहुः', यद्यग्निस्तोमयोर्द्वादशत्वं यूपेष्वेकादशत्वं स्यात्। तदानीं यथा लोके 'स्थूरिणा' स्थूलभारयुक्तेन सकटादिना, सम एव देशे गन्तुं शक्नुयात्, न तु विषमे पर्व्वतारोहणादौ। 'तत्' अल्प-

सङ्ख्यायुक्तत्वं, 'तादृक्', स्यात्। स्वल्पया द्वादशसङ्ख्यया स्वल्पा एव क्रतवो निर्वोढुं शक्यन्ते। न तु महाक्रतवोऽश्वमेधादय इत्यर्थः॥

(७) पूर्व्वपक्षं दूषयित्वा सिद्धान्तं निगमयति। "एकविꣳश एवाग्निः स्यादित्याहुः। एकविꣳशस्तोमः। एकविꣳशति र्यूपाः। यथा प्रष्टिभिर्याति। तादृगेव तत्" इति। 'प्रष्टिभिः' शिरसि भारवाहिनीयुक्तः पुरुषः समे देशे विषमेऽपि पर्व्वतारोहणादौ गन्तुं शक्नुयात्। 'तत्' एकविंशत्वं, 'तादृक्', 'स्यात्'। तया सङ्ख्यया स्वल्पा महान्तश्च क्रतवोऽनुष्ठातुं शक्याः। यत्तुदान्तवृषभादिदृष्टान्तेन स्खलनमाशङ्कितं, तत् सावधानेषु पुरुषेषु सम्भवतीत्यभिप्रायः। तदेतदेकविꣳशतित्वं वृषभस्य ककुदं॥

(८) दृष्टान्तीकृत्य प्रशंसति। "यो वा अश्वमेधे तिस्रः ककुभो वेद। ककुद्ध राज्ञां भवति। एकविꣳशोऽग्निर्भवति। एकविꣳशस्तोमः। एकविꣳशतिर्यूपाः। एता वा अश्वमेधे तिस्रः ककुभः। य एवं वेद। ककुद्ध राज्ञां भवति" इति। यथा वृषभस्य ककुदुन्नतावयवः एवमश्वमेधस्य 'तिस्रः ककुभः', उन्नतावयवाः। तदभिज्ञो यजमानः 'राज्ञां', मध्ये 'ककुत्', इवोन्नतः 'भवति'। कस्मात् ककुभ इति विवक्षायामेकविंश इत्यादिना उच्यन्ते॥

(९) य एवं वेदेत्यादेः पुनरुक्तिरुपसंहारार्था, तां शिरोदृष्टान्तेन प्रशंसति। "यो वा अश्वमेधे त्रीणि शीर्षाणि वेद।

शिरो ह राज्ञां भवति" इति। एकविꣳशोऽग्निर्भवति। एक-विꣳशः स्तोमः। एकविꣳशतिर्यूपाः। एतानि 'वा अश्वमेधे त्रीणि शीर्षाणि', य एवं 'वेद'। 'शिरो ह राज्ञां भवति' इति यथा पुरुषस्य शिर उन्नतावयवः, तद्वदश्वमेधस्य शिर-स्थानीयान्यग्न्यादीनि। अन्यत् पूर्ववद्व्याख्येयं॥

इति एकविंशोऽनुवाकः।

---

अथ द्वाविंशोऽनुवाकः॥

(१) एकविंशपुरुषपरिमिताग्न्यादयः एकविंशाऽनुवाके उक्ताः। तत्रैकविंशस्तोमयुक्तं मुख्यं यद्द्वितीयमहः तस्मिन् वहि-ष्पवमाने विशेषा द्वाविंशाऽनुवाके उच्यन्ते। तत्र वहिष्पवमान-सर्पणकालेऽश्वमाहित्वं विधत्ते। "देवा वा अश्वमेधे पवमाने। सुवर्गं लोकं न प्राजानन्। तमश्वः प्राजानात्। यदश्वमेधे-ऽश्वेन मेध्येनोदञ्चो बहिष्पवमानꣳ सर्पन्ति। सुवर्गस्य लोकस्य प्रज्ञात्यै। न वै मनुष्यः सुवर्गं लोकमञ्जसा वेद। अश्वो वै सुवर्गं लोकमञ्जसा वेद" इति। पुरा कदाचित् 'देवाः', अश्व-मेधमनुतिष्ठन्तः 'वहिष्पवमान'स्तोत्रे स्वर्गलोकं न ज्ञातवन्तः, अयमश्वः स्वर्गप्राप्तिहेतुरिति तेषां ज्ञानं नासीत्। 'अश्वः', तु प्राजापत्यत्वात् 'तं' स्वर्गलोकं, प्रज्ञातवान्। तस्माद्याग-योग्येन 'अश्वेन', सह उदङ्मुखा ऋत्विजः 'वहिष्पवमानम्', उद्दिश्य सर्पेयुः। तच्च स्वर्गलोकप्रज्ञानाय भवति। 'मनुष्यः',

शास्त्रदृष्ट्या स्वर्गं 'लोकं', जानन्नपि 'अञ्जसा', 'न वेद' अदृष्ट-पूर्व्वत्वात् सम्यङ् न जानाति, 'अश्वः', तु प्रजापतिसामर्थ्याज्जानाति। तस्मादश्वेन सहैव सर्पेयुः॥

(२) तस्याश्वस्योद्गातृस्थाने वरणं विधत्ते। "यदुद्गातोद्गायेत्। यथा क्षेत्रज्ञोऽन्येन पथा प्रतिपादयेत्। तादृक्तत्॥ १॥ उद्गातारमपरुध्य। अश्वमुद्गीथाय वृणीते। यथाऽक्षेत्रज्ञोऽञ्जसा नयति। एवमेवैनमश्वः सुवर्गं लोकमञ्जसा नयति" इति। यदि तस्मिन् वहिष्यवमाने उद्गात्रम् 'उद्गाता', कुर्य्यात् तदानीं 'यथा', लोके कश्चित् 'अक्षेत्रज्ञः' मार्गज्ञानरहितः, अपेक्षितं मार्गं परित्यज्य 'अन्येन', मार्गेण पुरुषान् गमयेत्। 'तत्' उद्गातुरज्ञानं, 'तादृक्', स्यात्। तस्मात् 'उद्गातारं', निराकृत्य, 'अश्वं', एवोद्गात्रकर्म्मणे 'वृणीते'। तथा सति यथा 'क्षेत्रज्ञः' पुरुषः, 'अञ्जसा' सम्यङ् मार्गेण, 'नयति', 'एवम्', अयं 'अश्वः', सम्यक् स्वर्गं 'नयति'॥

(३) अन्वारम्भणं विधत्ते। "पुच्छमन्वारभन्ते। सुवर्गस्य लोकस्य समष्ट्यै" इति। ये वहिष्पवमानाय सर्पन्ति ते सर्व्वे तस्याश्वस्य 'पुच्छं', अवलम्ब्य सर्पेयुः। तच्च स्वर्गप्राप्त्यै भवति॥

(४) अश्वकर्तृकमुद्गानं दर्शयति। "हिङ्करोति। सामैवाकः। हिङ्करोति। उद्गीथ एवास्य सः"॥ २॥ इति। अश्वस्य पुरस्तात् वडवानामवस्थापनं विधास्यते। तथा सति वडवादर्शनेनायमश्व औत्सुक्याद्यदि 'हिं', कुर्य्यात् तदानीं 'सः' अश्वः, 'सामैव', करोति। हिङ्कारस्य सामोपक्रमरूपत्वात् न केवलमुप-

क्रममात्रं किन्तूद्गात्रा गातव्यो योऽयम् 'उद्गीथः', तत्स्थानीयो ऽप्ययं हिङ्कार इति दर्शयितुं पुनरपि 'हिङ्करोति', इत्युक्तं ॥

(५) तदेतद्विधत्ते। "बडवा उपरुन्धन्ति। मिथुनत्वाय प्रजात्यै। अथो यथोपगातार उपगायन्ति। तादृगेव तत्" इति। 'बडवा', अश्वस्य पुरस्तादवस्थापनीया। तच्च स्त्रीपुरुष-रूपमिथुनभावाय प्रजोत्पत्तये च सम्पद्यते। किञ्चाश्वस्य हि-ङ्कारं श्रुत्वा यदि बडवाः प्रत्यभिहिङ्कुर्य्यात् तदानीमेतदुप-गानसमं भवति ॥

(६) विधत्ते। "उद्गासीदश्वो मेध्य इत्याह। प्राजापत्यो वा अश्वः। प्रजापतिरुद्गीथः। उद्गीथमेवावरुन्धे। अथो ऋक्-सामयोरेव प्रतितिष्ठति" इति। हिङ्कारानन्तरमध्वर्युरेवं ब्रूयात् यागयोग्योऽयं 'अश्वः', उद्गानमकरोदिति अश्वस्य प्राजा-पत्यत्वादुद्गीथस्यापि प्रशस्तत्वेन प्रजापतिरूपत्वात्तदीयहिङ्कार उद्गातृवचनेन उद्गीथमेव प्राप्नोति। किञ्चायम् 'ऋक्साम-योः', प्रतिष्ठितो भवति ॥

(७) प्रकृतौ बर्हिषा स्तोत्रस्योपाकरणं, अत्र बर्हिस्थाने हि-रण्यं विधत्ते। "हिरण्येनोपाकरोति। ज्योतिर्वै हिरण्यम्। ज्योतिरेव मुखतो दधाति। यजमाने च प्रजासु च। अथो हिरण्यं ज्योतिरेव यजमानः सुवर्गं लोकमेति" ॥ ३ ॥ इति। हिरण्यस्य ज्योतिरूपत्वात्तेनोपाकरणे सति 'यजमाने', तदीय-'प्रजासु च', 'मुखतः' पुरस्तात्, 'ज्योतिरेव', सम्पादयति। किञ्चायं 'यजमानः', हिरण्यज्योतिर्युक्तस्स्वर्गं प्राप्नोति ॥

इति द्वाविंशोऽनुवाकः।

अथ त्रयोविंशोऽनुवाकः।

(१) एकविंशोक्थ्यरूपे द्वितीयेऽह्नि बहिष्पवमानेऽश्वस्योद्गातृत्वं द्वाविंशानुवाकेऽभिहितं। तच्च सूत्रकारेणैवं सङ्गृहीतं। अश्वमन्वारभ्य बहिष्पवमानं सर्पन्त्यग्निर्मूर्धेत्युद्गातारमपरुध्याश्वमुद्गीथाय वृणीते तस्मै बडवा उपरुन्धन्ति ता यदभिहिङ्करोति स उद्गीथो यत् प्रत्यभिकुर्वन्ति स उपगीय उदगासीदश्वो मेध्यो यज्ञिय इत्यादि। अथाश्वे पर्य्यग्न्यानां पशूनां नियोजनं त्रयोविंशानुवाकेऽभिधीयते। तदेतद्विधत्ते। "पुरुषो वै यज्ञः। यज्ञः प्रजापतिः। यदश्वे पशून् नियुञ्जन्ति। यज्ञादेव तद्यज्ञं प्रयुङ्क्ते" इति। यागकर्तुः पुरुषस्य सर्वव्यापाराधारत्वात् यज्ञरूपत्वं, यज्ञस्य प्रजापतिसृष्टत्वात् प्रजापतिरेव अश्वस्य प्रजापतिर्देवता। कः तस्मात् तादृशेऽश्वे यूपस्थानीये तदवयवसम्बन्धित्वेन, ये पशवः पर्य्यग्न्यास्तान् सर्वान् तस्मिन्नेव वियुञ्जीत। तथा सत्यश्वरूपाद्यज्ञात्तदेवेतरपशुरूपं यज्ञं प्रयुङ्क्ते॥

(२) प्रथमं तावदश्वादित्रयस्य नियोजनं विधत्ते। "अश्वं तूपरं गोमृगं। तानग्निष्ठ आलभते। सेनामुखमेव तत् सꣳश्यति। तस्माद्राजमुखं भीष्मं भावुकं" इति। अग्निष्ठाख्यः प्रधानभूतो यो यूपः तस्मिन्नश्वतूपरगोमृगाणामालम्भनोपलक्षितं नियोजनं कुर्य्यात्। तथा सति मुख्यपशुनियोजनेन तेन राज्ञः 'सेनामुखं', 'संश्यति' तीक्ष्णीकरोति, सेनायां पुरो-

गामिनः पुरुषान् शूरान् करोति। यस्मात् सेनामुखस्य तीक्ष्णत्वं 'तस्मात्', लोके 'राजमुखं', 'भीष्मं भावुकं' भयानकं भवितुं योग्यं भवति। प्रायेण हि राजानः प्रजा भीषयितुं सभायामुग्रमुखा दृश्यन्ते॥

(३) मुख्यपशूनां नियोजनं विधायाश्वाङ्गसम्बन्धिषु पशुष्वाद्यस्य नियोजनं विधत्ते। "आग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे। पूर्वाग्निमेव तं कुरुते॥ १॥ तस्मात् पूर्वाग्निं पुरस्तात् स्थापयन्ति" इति। ग्रीवायां कृष्णवर्णो यस्य अजस्य सः अयं अजः, 'कृष्णग्रीवः', स च अग्निदेवताकः, तादृशमजं अग्निष्ठे नियुक्तस्याश्वस्य 'ललाटे', नियुञ्जीत बध्नीयात्, यदि ललाटे बन्धनमयोग्यं तर्हि तथा भावयेत्। तेन भावितेन ललाटबन्धनेन 'तं' आग्नेयं पशुं 'पूर्वाग्निमेव' आहवनीयरूपमेव, 'कुरुते'। यस्मादाहवनीयस्थानीयस्याग्नेयस्य पशोर्ललाटरूपे पूर्वभागे बन्धनं 'तस्मात्', 'पूर्वाग्निं' आहवनीयं, पूर्वदेशे 'स्थापयन्ति'॥

(४) द्वितीयस्य पशोर्नियोजनं विधत्ते। "पौष्णमन्वञ्चं। अन्नं वै पूषा। तस्मात् पूर्वाग्नावाहार्यमाहरन्ति" इति। योऽयमाग्नेयः पशुर्ललाटे नियुक्तः तमनु पश्चादञ्चति गच्छतीत्यन्वञ्चः पशुरन्वट् तं 'अन्वञ्चं', पूषदेवताकं नियुञ्जीत, आग्नेयस्य पश्चाद्भागे बध्नीयादित्यर्थः। योऽयं पूषदेवः सोऽयं पुष्टिहेतुत्वादन्नरूपः। तस्मात् तथाविधदेवताकः 'पौष्णः', पशुः पूर्वभागे नियुक्तः। 'तस्मात्', यागेषु 'आहार्यं' आनेतव्यं, सर्वं 'पूर्वाग्नौ' 'आहवनीये', 'आहरन्ति'॥

(५) तृतीयपशोर्नियोजनं विधत्ते । "ऐन्द्रापौष्णमुपरिष्टात् । ऐन्द्रो वै राजन्योऽन्नं पूषा । अन्नाद्येनैवैनमुभयतः परिगृह्णाति । तस्माद्राजन्योऽन्नादो भावुकः" इति । अश्वस्य 'उपरिष्टात्' ऊर्द्धभागे, पशुं 'ऐन्द्रापौष्णं', नियुञ्जीत । योऽयं यजमानो 'राजन्यः', सोऽयमिन्द्रदेवताकः, 'पूषा', चान्नात्मक इत्युक्तं । एवञ्च सति पूर्व्वत्रापि पूषदेवताकस्य पशोरुक्तत्वादत्रापि पूषदेवताकस्योच्यमानत्वात् 'एनं' राजानं, 'उभयतः', 'अन्नाद्येन', युक्तं करोति । यस्मादुभतोन्नाद्य उक्तः 'तस्माद्राजन्यः', सर्व्वत्र 'अन्नादः', भवितुं शक्यः ॥

(६) चतुर्थपञ्चमपश्वोर्नियोजनं विधत्ते । "आग्नेयौ कृष्णग्रीवौ बाहुवोः । बाह्वोरेव वीर्य्यं धत्ते ॥ २ ॥ तस्माद्राजन्यो बाहुबली भावुकः" इति । ग्रीवायां कृष्णवर्णेन लाञ्छितौ अग्निदेवताकावजावश्वस्य 'बाह्वोः', नियुञ्जीत । तेन राजबाह्वोः 'वीर्य्यं', स्थापितं भवति । यस्मादेवं 'तस्माद्राजन्यः', खड्गधनुरादिधारणेन बाहुबलयुक्तो भवितुं समर्थः ॥

(७) षष्ठसप्तमयोः पश्वोर्नियोजनं विधत्ते । "त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । सक्थ्योरेव वीर्य्यं धत्ते । तस्माद्राजन्य ऊरुबली भावुकः" इति । लोमयुक्ते शक्थिनी ययोः तौ 'लोमशसक्थौ', तादृशौ त्वष्टृदेवताकौ पशू अश्वस्योर्वोर्नियुञ्जीत । तथा सति ऊर्व्वोः 'वीर्य्यं', धृतं भवति । 'तस्माद्राजन्यः', अश्वारोहणादावूरुबलयुक्तो भवति ॥

(८) अष्टमनवमयोः पश्वोर्नियोजनं विधत्ते। "शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे। ब्रह्मवर्चसमेवोपरिष्टाद्धत्ते। अथो कवचे एवैते अभितः पर्य्यूहते। तस्माद्राजन्यः सन्नद्धो वीर्य्यं करोति" इति। उपरि भागे श्वेतवर्णौ ययोः तौ 'शितिपृष्ठौ', तौ च वृहस्पतिदेवताकौ अश्वस्य 'पृष्ठे' पार्श्वभागे, नियुञ्जीत। उपरिभागे श्वेतवर्णसद्भावादयं यजमान इत ऊर्द्धभाविनि काले 'ब्रह्मवर्चसमेव', धारयति। अपि च अश्वस्य पुरस्तात् पश्चाच्च पशुनियोजनेन राज्ञः 'अभितः', 'कवच एव', प्रतिष्ठाचिते भवतः, यस्मात् कवचस्थानीयमिदं 'तस्मात्', कवचादिभिः 'सन्नद्धः', राजा युद्धे शौर्य्यं 'करोति' ॥

(६) दशमस्य पशोर्नियोजनं विधत्ते। "धात्रे पृषोदरमधस्तात्। प्रतिष्ठामेवैतां कुरुते। अथो इयं वै धाता। अस्यामेव प्रतितिष्ठति" इति। 'पृषोदरं' श्वेतबिन्दुचिह्नोदरं, धातृदेवताकं पशुं अश्वस्याधोभागे नियुञ्जीत। 'एतां' अधोभागनियोजनरूपां अश्वस्य 'प्रतिष्ठां', स्थैर्य्यं 'एव', सम्पादयति। अपि च 'धाता', पृथिवीरूपः। ततः पृथिव्यां 'एव', असौ 'प्रतितिष्ठति' ॥

(१०) एकादशस्य पशोर्नियोजनं विधत्ते। "सौर्य्यं बलक्षं पुच्छे। उत्सेधमेव तं कुरुते। तस्मादुत्सेधं भये प्रजा अभिसंश्रयन्ति" इति। 'बलक्षः' श्वेताजः, तादृशं सूर्य्यदेवताकं पशुं 'पुच्छे', नियुञ्जीत। उन्नतदेशवर्त्तिसूर्य्यदेवताकत्वेन 'तं' अश्वं,

'उत्सेधं' उन्नतदेशवर्त्तिनं, करोति । यस्मादेवं 'तस्मात्', लोकेऽपि कस्मिंश्चित् 'भये', प्राप्ते कश्चित् 'उत्सेधं', उन्नतपर्व्वतादिप्रदेशं, प्रजा आश्रयन्ति ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुर्ब्राह्मणे तृतीयकाण्डेऽष्टमप्रपाठके त्रयोविंशोऽनुवाकः ॥ ० ॥

समाप्तश्च अष्टमप्रपाठकः ।

## तैत्तिरीय-ब्राह्मणभाष्ये

### तृतीयकाण्डे नवमप्रपाठके

### प्रथमोऽनुवाकः ।



यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
त्रिरात्रस्याश्वमेधस्य यदहः प्रथमं भवेत् ।
प्रपाठकेऽष्टमे तद्धि साकल्येन प्रपञ्चितं ॥
नवमेऽहर्द्वयं तत्र मध्यमेऽहन्युपाकृते ।
अश्वेऽथ रोहितादीनां आलम्भाद्यभिधीयते ॥

(१)तत्र प्रथमेऽनुवाकेऽष्टादशिनामालम्भोऽभिधीयते । तदेतद्विधत्ते । "प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टोऽपाक्रामत् । तमष्टादशिभिरनु प्रायुङ्क्त । तमाप्नोत् । तमाप्त्वाष्टादशिभिरवारुन्ध । यदष्टादशिन आलभ्यन्ते । यज्ञमेव तैराप्त्वा यजमानोऽवरुन्धे" इति । प्रजापतिना सृष्टोऽश्वमेधयागाभिमानी देवः केनापि निमित्तेन 'अस्मात्' प्रजापतेः, 'अपाक्रामत्' अपागच्छत् । तदा 'तं' अश्वमेधं, 'अनु'लक्ष्य 'अष्टादशिभिः, अष्टादशसङ्ख्यायुक्तैः, रोहितो धूम्ररोहित इत्यादिभिराम्नातैः पशुभिः, 'प्रायुङ्क्त' । एकैकस्मिन्ननुवाकेऽष्टादशसङ्ख्याका ये पशव आम्नातास्तेऽष्टादशिनः । तेषामग्नौ प्रक्षेपलक्षणं प्रयोगं

कृतवान् तेन प्रयोगेण 'तं' अश्वमेधं, प्राप्य तैरेव पशुभिः स्वाधीनं कृतवान्। तस्मादष्टादशिनो रोहितो धूम्ररोहित इत्यादिभिरनुवाकैरुक्ताः प्रत्यनुवाकमष्टादशसङ्ख्या मिलित्वाऽशीत्यधिकशतसङ्ख्याकाः पशव आलब्धव्याः। 'तैः' पशुभिः, 'यज्ञं', प्राप्य स्वाधीनं करोति॥

(२) पशुगतामष्टादशसङ्ख्यां प्रशंसति। "संवत्सरस्य वा एषा प्रतिमा। यदष्टादशिनः। द्वादशमासाः पञ्चर्त्तवः॥ १॥ संवत्सरोऽष्टादश। यदष्टादशिन आलभ्यन्ते। संवत्सरमेव तेनाप्त्वा यजमानोऽवरुन्धे" इति। य एतेऽष्टादशिनः पशवः त एते सङ्ख्यया संवत्सरमासर्त्तुद्वारा संवत्सरेऽप्यष्टादशसङ्ख्या विद्यते। अतः सङ्ख्यासाम्यात् 'तैः' पशुभिः, संवत्सरं प्राप्य स्वाधीनं करोति॥

(३) तेषामुपाकरणाय यूपविशेषं विधत्ते। "अग्निष्ठेऽन्यान् पशूनुपाकरोति। इतरेषु यूपेष्वष्टादशिनो जामित्वाय" इति। अष्टादशव्यतिरिक्ता येऽन्ये पशवः आदिष्टदेशरहिताः। तान् सर्व्वान् 'अग्निष्ठे', बध्वोपाकुर्य्यात्। अतएव सूत्रकारेणोक्तं। अश्वतूपरगोमृगानग्निष्ठ उपाकरोति येषाञ्चानादिष्टो देश इति। 'अष्टादशिनः', तु 'पशून्', अग्निष्ठव्यतिरिक्तेषु यूपेषूपाकुर्य्यात्, एवं सति सर्व्वेषां पशूनामेकविधत्वाभावादालस्यं न भवति॥

(४) इतरयूपेष्वष्टादशिनामुपाकरणे विभज्य सङ्ख्यां विधत्ते। "नव नवालभ्यन्ते सवीर्य्यत्वाय" इति। एकैकस्मिन् यूपे 'नव नव', पशवो बध्वोपाकर्त्तव्याः। रोहितो धूम्र इत्यादिषु दश-

स्वनुवाकेष्वाम्नातानां प्रत्यनुवाकमष्टादशानां पशूनां विभज्य द्वयोर्यूपयोर्बन्धने सति विंशतिसङ्ख्याकेषु यूपेषु सर्व्वे पशवो बध्यन्ते। तथा सति यजमानः सर्व्वार्थी भवति ॥

(५) अत्र यूपान्तरालेषु धारिता आरण्या ये पशवः तेषां पशूनां समाप्तिपर्य्यन्तं प्रयोगं निन्दामुखेन निषेधति। "यदारण्यैः सꣳस्थापयेत्। व्यवस्यतां पितापुत्रौ। व्यध्वा न क्रामेयुः विदूरं ग्रामयोर्ग्रामान्तौ स्याताम् ॥ २ ॥ ऋचीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिनीस्तस्करा अरण्येष्वाजायेरन्" इति। इन्द्राय राज्ञे सूकरो इत्याद्यनुवाकेषूक्ता आरण्याः पशवो यूपान्तरालेषु धारयित्वोपाकृताः। तैः पशुभिर्यद्यन्य पशुवत् पाशुकं प्रयोगं समापयेत् तदानीं ते दोषाः प्रसज्येरन्। तदेवोदाह्रीयन्ते। 'पितापुत्रौ', परस्परं 'व्यवस्यतां' विरुद्धाध्यवसायौ कलहकारिणौ भवेतां। अध्वानस्य विक्रामेयुः। अध्वशब्देन मार्गे गच्छन्तो जना उपलक्ष्यन्ते। ते च परस्परं विरुद्धं क्रामेयुः परस्परबाधकाः स्युः आरण्यपशूनां तथा विरुद्धत्वात् किञ्च 'ग्रामान्तौ ग्रामयोः', सीमानौ तयोर्ग्रामयोर्विदूरं यथा भवति तथा 'स्यातां', ग्रामसीम्नोः अत्यन्तदूरत्वे सति मार्गमध्ये भयकारणं महारण्यमुत्पद्यतेत्यभिप्रायः। तेषु च 'अरण्येषु', ऋचीकादयः सर्व्वत उत्पद्येरन् 'ऋचीकाः' भल्लूकप्रभृतयः, हिंसिका मृगाः। व्याघ्रजातावतिक्रूराः 'पुरुषव्याघ्राः' मार्गचोराः, 'परिमोषिणः' चोरप्रभूणां सेना 'आव्याधिन्यः'। मायाविलेतापहर्त्तारः 'तस्कराः' ॥

(६) एतेष्वारण्यपशुषु आक्षेपवादिनां पूर्व्वपक्षिणां मतमुपन्यस्यति। "तदाहुः। अपशवो वा एते। यदारण्याः। यदारण्यैः सꣳस्थापयेत्। क्षिप्रे यजमानमरण्यं मृतꣳ हरेयुः। अरण्यायतना ह्यारण्याः पशव इति। यत्पशूनालभेत। अनवरुद्धाः अस्य पशवः स्युः। यत्पर्य्यग्निकृतानुत्सृजेत्॥ ३॥ यज्ञवेशसं कुर्य्यात्" इति। तत्रैष्वारण्यपशुष्वाक्षेपवादिन एवं 'आहुः'। ये 'एते' कर्म्मयोग्याः, पशवो न भवन्ति पशुकार्य्याभावात्। तथाहि किमेते पशवः समाप्तिपर्य्यन्तमनुष्ठेयाः किंवा तेषामारम्भ एव माभूत्। अथवा प्रारब्धानां तेषां पर्य्यग्निकरणादूर्ध्वमुत्सर्ग इति विचारणीयं। तत्र समाप्तिपर्य्यन्तं प्रयोगे 'क्षिप्रे' स्वल्प एव काले, 'मृतं यजमानं', दाहार्थमारण्ये पुत्रादयो 'हरेयुः', आरण्यपशुवधस्याल्पायुष्यहेतुत्वात्। यस्मादारण्यानां पशूनामारण्यमेवायतनं, अतो यजमानस्यापि तत्रैवायतनं भवति। नापि द्वितीयः पक्षो युक्तः। आरण्यानामालम्भाभावे यजमानेन 'पशवः', न प्राप्येरन्। पर्य्यग्निकरणादूर्द्ध्वमुत्सर्गे तु पशुप्रयोगसमाप्त्यभावाद्यज्ञविघातं कुर्य्यात्॥

(७) अत्र समाधानवादिनां मतं दर्शयति। "यत् पशूनालभते। तेनैव पशूनवरुन्धे। यत्पर्य्यग्निकृतानुत्सृजत्ययज्ञवेशसाय। अवरुद्धा अस्य पशवो भवन्ति। न 'यज्ञवेशसं', भवति। न 'यजमानमरण्यं मृतꣳ', हरन्ति" इति। आरण्यान् 'पशून्', आलभ्युमुपाकरणं करोति तेनालम्भदोषाभावात् पशुप्राप्तिर्भवति। उपाकृतेषु पर्य्यग्निकरणस्यानुष्ठितत्वात्। 'यज्ञवेशसं',

सम्पद्यते। तदेतद्दोषद्वयराहित्यमुपसंहर्तुं पुनरप्यवरुद्धा इत्यादिकमुच्यते। यत्तु यजमानस्य शीघ्रमरणमुक्तं तदपि न भविष्यति। आरण्यपशूनां बधाभावादित्यभिप्रेत्याह। न यजमानमरणं स्तृतꣳ हरन्तीति ॥

(८) अग्निष्ठयूपव्यतिरिक्तेषु यूपेषु नियुक्तानां रोहिता धूम्ररोहित इत्यनुवाकोक्तानामष्टादशिनां ग्राम्यपशूनां समाप्तिपर्य्यन्तं प्रयोगं विधत्ते। "ग्राम्यैः सꣳस्थापयति। एते वै पशवः क्षेमो नाम। सं पितापुत्राववस्यत। समध्वानः क्रामन्ति। समन्तिकं ग्रामयोर्ग्रामान्तौ भवतः। नर्छीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिनीस्तस्करा अरण्येष्वाजायन्ते" ॥ ४ ॥ इति। रोहितादिभिः 'ग्राम्यैः', पशुभिः प्रयोगं समापयेत्। 'एते' ग्राम्याः, 'पशवः', 'क्षेमः', इत्येतत् 'नाम', अर्हन्ति, तैः प्रजोपकारदर्शनात्। तस्मादारण्यपशुसंस्थापने पितृपुत्रविरोधादयो ये दोषाः पूर्व्वमुपन्यस्तास्तत्र न भवन्ति ॥

इति प्रथमोऽनुवाकः।

---

अथ द्वितीयोऽनुवाकः ॥

(१) प्रथमेऽनुवाके रोहितादीनां ग्राम्यपशूनाञ्च प्रयोगोऽभिहितः। द्वितीयेऽनुवाके चातुर्मास्यपशूनां प्रयोग उच्यते। तत्रादौ तावत् पूर्व्वोक्तानां ग्राम्याणामारण्यानाञ्च पशूनां प्रशंसा क्रियते। "प्रजापतिरकामयतोभौ लोकाववरुन्धीयेति।

स एतानुभयान् पशूनसृजत। ग्राम्यांश्चारण्यांश्च तानालभत। तैर्वै स उभौ लोकाववारुन्ध। ग्राम्यैरेव पशुभिरिमं लोकमवारुन्ध। आरण्यैरमुम्। यद्ग्राम्यान् पशूनालभते। इममेव तैर्लोकमवरुन्धे। यदारण्यान्। अमुं तैः" इति। लोकद्वयप्राप्तिं कामयमानः 'प्रजापतिः', यथा द्विविधैः 'पशुभिः', प्राप्तवान्। एवमन्योऽपि प्राप्नोति॥

(२) अथ चातुर्मास्यपशून् विधत्ते। "अनवरुद्धा वा एतस्य संवत्सर इत्याहुः। य इत इतश्चातुर्मास्यानि संवत्सरं प्रयुङ्क्त इति। एतावान्वै संवत्सरः यच्चातुर्मास्यानि। यदेते चातुर्मास्याः पशव आलभ्यन्ते। प्रत्यक्षमेव तैः संवत्सरं यजमानोऽवरुन्धे" इति। 'यः' यजमानः, संवत्सरात् 'इतः', 'चातुर्मास्यानि', स्थापयित्वा 'संवत्सरं प्रयुङ्क्ते' संवत्सरमध्येऽस्मिन्नश्वमेधकर्मणि चातुर्मास्यपशून् प्रवेश्य तान्यत्र क्वापि संवत्सराद्बहिरेवावस्थाप्य संवत्सरसाध्यमिदमश्वमेधाख्यं कर्मानुतिष्ठति। 'एतस्य' यजमानस्य, पशवोऽनवरुद्धा अप्राप्ताः 'इति' एवमभिज्ञाः 'आहुः'। तत्रेयमुपपत्तिः। 'चातुर्मास्यानि', इति, यदस्ति 'एतावान्', एव 'संवत्सरः'। नहि चातुर्मास्यानुष्ठानपरिमितात् कालादन्यः संवत्सरो नामास्ति। तस्मात् 'एते चातुर्मास्या पशवः', आलब्धव्याः, चातुर्मास्येषु हि चत्वारि पर्वाणि विद्यन्ते, वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीरीयाख्यानि। तत्सम्बन्धिनस्तु पशवः सूत्रकारेणोदाहृत्य कृष्णग्रीवा आग्नेया बभ्रवः उपध्वस्ताः सावित्राः सारस्वत्यो वत्सतर्यः पौष्णश्यामाः पृष्णयो मारुताः बहुरूपा वैश्वदेवा वशा द्यावा-

पृथिव्याः कृष्णग्रीवा इत्युक्तमित्यादयः। त एते वैश्वदेवपर्व्व-विषयाः पशवः। वैश्वदेवे हि पर्व्वण्याग्नेयमष्टाकपालं निर्व्वपति सौम्यं चरुमित्यादीनि यद्देवताकानि हवींष्याम्नातानि तद्देवताका एव कृष्णग्रीवाद्याः पशवः शाखान्तरोक्ताः सूत्रकारेणोदाहृताः। एवमुत्तरपर्व्वसम्बन्धिनोऽपि पशवः सूत्रे द्रष्टव्याः। एकैकस्य देवस्य त्रयः पशव इत्यभिप्रेत्य कृष्णग्रीवा इत्यादि बहुवचननिर्द्देशः। 'तैः' चातुर्म्मास्य पशुभिरेकस्मिन्नेव दिनेऽनुष्ठितैरपि, 'संवत्सरं', 'प्रत्यक्षमेव' सम्पूर्णमेव, 'यजमानः', प्राप्नोति॥

(२) चातुर्म्मास्यपशून् विधायैकादशिनान् पशून् विधत्ते। "विवा एष प्रजया पशुभिर्ऋध्यते। यः संवत्सरं प्रयुङ्क्ते। संवत्सरः सुवर्गो लोकः॥ २॥ सुवर्गं तु लोकं नापराध्नोति। प्रजा वै पशव एकादशिनी। यदेत एकादशिनाः पशव आलभ्यन्ते। साक्षादेव प्रजां पशून् यजमानोऽवरुन्धे" इति। 'यः' यजमानः, चातुर्म्मास्यपशुभिः 'संवत्सरं', अनुतिष्ठति। 'एषः' यजमानः, 'प्रजया' 'पशुभिः','ऋध्यते' वियुक्त एव भवति, अनुष्ठाने प्रवृत्तस्य प्रयोज्यार्थप्रयत्नाभावात्। स्वर्गलोकस्तु संवत्सरात्मक इति कृत्वा तं 'लोकं ना पराध्नोति'। अपराधस्तु लोकप्राप्त्यभावः, सोऽस्य न भवति। तर्हि प्रजापशुप्राप्तेः क उपाय इति स उच्यते। येयं पश्वेकादशिनी सा प्रजापशुस्वरूपैव। तस्मात् 'ऐकादशिनाः पशवः', आलब्धव्याः। ते च द्विप्रकाराः, प्राकृता आश्वमेधिकाश्च। आग्नेयः कृष्णग्रीवः सारस्वती मेषो-

त्याद्यनुवाकेनोक्ताः प्राकृताः । अग्नयेऽनीकवते रोहिताञ्जिर-
नड्वानित्याद्यनुवाकेनोक्ता आश्वमेधिकाः । अत एव सूत्रकार
आह । इयानेकादशिनानालभन्ते प्राकृतानाश्वमेधिकांश्चेति
एतेषामालम्भनेन 'साक्षादेव' कालविलम्बमन्तरेणैव, 'प्रजां
पशून् यजमानः', प्राप्नोति ॥

(४) एकादशिनान् पशून्विधाय दशिनः पशून् विधत्ते ।
"प्रजापतिर्विराजमसृजत । सा सृष्टाश्वमेधं प्राविशत् । तां
दशिभिरनु प्रायुङ्क्त । तामाप्नोत् । तामाप्त्वा दशिभिरवारु-
न्ध । यद्दशिन आलभ्यन्ते ॥ ३ ॥ विराजमेव तैराप्त्वा यज-
मानोऽवरुन्धे" इति । पुरा 'प्रजापतिः', 'विराजं' अन्नं, सृष्टवान् ।
अन्नं वै विराडिति श्रुत्यन्तरं । 'सा' च 'सृष्टा' विराट, प्रजा-
पतेरपेता सती स्वात्मनो गोपनाया 'अश्वमेधं', 'प्राविशत्', तदा
प्रजापतिः 'तां' विराजं, "अनुलक्ष्य", दशिनामकैः पशुभिर-
नुष्ठानं कृतवान् । ततः 'तां' विराजं, प्राप्य तैरेव 'दशिभिः',
'तां', स्वाधीनां कृतवान् । तस्मात् 'दशिनः', पशव, आल-
भ्यव्याः । इन्द्राय राज्ञे सूकर इत्यादिष्वनुवाकेषूक्ता आरण्याः
पशवः । एकैकस्मिन्ननुवाके दशसङ्ख्याविशिष्टत्वेन दशिन इत्यु-
च्यन्ते । 'तैः' दशभिः, अन्नं प्राप्य स्वाधीनं करोति ॥

(५) पशुवर्गसङ्ख्यां विधत्ते । "एकादश दश त आल-
भ्यन्ते । एकादशाक्षरा त्रिष्टुप् । त्रैष्टुभाः पशवः । पशूनवा-
वरुन्धे" इति । दशानां पशूनां वर्गो दशशब्देनोच्यते ।
तादृशा वर्गा एकादशसङ्ख्याकाः इन्द्राय राज्ञे सूकर इत्याद-

भ्य सुपर्णः पर्ज्जन्य इत्यन्तेषु एकादशस्वनुवाकेषु आम्नातत्वात्। अतो वर्गनिष्ठैकादशसङ्ख्यायाः त्रिष्टुप्छन्दोद्वारा पशुप्राप्तिर्भवति। यद्यप्याद्यानुवाक एकादश पशव आम्नाताः। तथाप्यन्येष्वनुवाकेषु दशानामेवाम्नातत्वात् बहनुरोधेन 'दशत' इत्युक्तं॥

(६) एतेषु सर्व्वेषु पशुदेवताभेदं जातिभेदं वर्णादिरूपभेदं च क्रमेण प्रशंसति। "वैश्वदेवो वा अश्वः। नानादेवत्याः पशवो भवन्ति। अश्वस्य सर्व्वत्वाय। नानारूपा भवन्ति। तस्मान्नानारूपाः पशवः। बहुरूपा भवन्ति। तस्माद्बहुरूपाः पशवः समृद्ध्यै" इति। विश्वेऽपि देवा यस्याश्वस्य देवताः सोऽयं 'वैश्वदेवः'। तच्च सर्व्वदेवतात्मकप्रजापतिरूपत्वादुपपन्नं। अतोऽश्वस्य सर्व्वपश्वात्मकत्वात् 'पशवो नानादेवत्याः', कार्य्याः, यद्देवत्योऽन्यः पशुः अश्वस्यापि तद्देवत्यत्वात् तत्पश्वात्मकत्वमुपपन्नं। इन्द्राय राज्ञे सूकरो वरुणाय राज्ञे कृष्ण इत्यादौ वराहहरिणादिजातिभेदश्रवणान्नानारूपत्वं। अतएवाद्यापि नानाजातिभेदभिन्नाः 'पशवः', दृश्यन्ते। रोहितो धूम्ररोहित इत्यादौ वर्णभेदश्रवणात् बहुरूपत्वं, अतएव लोकेऽपि वर्णभेदभिन्नाः पशवो दृश्यन्ते॥

इति द्वितीयोऽनुवाकः।

अथ तृतीयोऽनुवाकः।

(१) द्वितीये चातुर्मास्यादिपशवोऽभिहिताः। तृतीये रोहितादीनां पशूनां वपाहोममाहित्यमभिधीयते। तत्रादौ ग्राम्यारण्यपशून् बहुधा प्रशंसति। "असौ वै लोकाय ग्राम्याः पशव आलभ्यन्ते। अमुष्मा आरण्याः। यद्ग्राम्यान् पशूनालभते। इममेव तैर्लोकमवरुन्धे। यदारण्यान्। अमुं तैः। उभयान् पशूनालभते। ग्राम्याꣳश्चारण्याꣳश्च। उभयोर्लोकयोरवरुध्यै। उभयान् पशूनालभते॥१॥ ग्राम्याꣳश्चारण्याꣳश्च। उभयस्यान्नाद्यस्यावरुध्यै। उभयान् पशूनालभते। ग्राम्याꣳश्चारण्याꣳश्च। उभयेषां पशूनामवरुध्यै" इति। ग्राम्यारण्यपश्वालम्भनेन लोकद्वयजयो ग्राम्यारण्यान्नाद्यजयो ग्राम्यारण्यपशुजयश्च भवति॥

(२) एकैकस्य देवस्याम्नातं पशुत्रित्वं प्रशंसति। "त्रयस्त्रयो भवन्ति। त्रय इमे लोकाः। एषां लोकानामाप्त्यै" इति। रोहितो धूम्ररोहितः कर्कन्धुरोहितः ते प्राजापत्या इत्येकस्यैव 'त्रयः', प्रजापतेः पशव आम्नाताः। तथा वभ्रुररुणवभ्रुः शुकवभ्रुस्ते रौद्रा इत्येकस्यैव रुद्रस्य त्रय आम्नाताः। एव मन्यदप्युदाहार्य्यं॥

(३) एकैकस्य बहुपशुत्वं प्रश्नोत्तराभ्यां प्रशंसति। "ब्रह्मवादिनो वदन्ति। तस्मात् सत्यात्॥२॥ अस्मिन् लोके बहवः कामा इति। यत्समानीभ्यो' देवताभ्योऽन्येऽन्ये पशव

आलभ्यन्ते। अस्मिन्नेव तल्लोके कामान् दधाति। तस्मादस्मिन् लोके बह्वः कामाः" इति। 'लोके', ह्येकैकस्यैव पुरुषस्य पुत्र-पशुधनादिविषयाः 'बह्वः कामाः', दृश्यन्ते। तत् कस्मात् कारणादिति ब्रह्मवादिनां प्रश्नः। यस्मादत्रैकैकस्यै देवतायै बह्वः पशव आलब्धास्तत्र बहुकामसाधनं। 'तस्मात्', एकैकस्य 'बह्वः कामाः लोके', भवन्ति॥

(४) वपानां होमसाहित्यं विधत्ते। "त्रयाणां त्रयाणाꣳ सह वपा जुहोति। त्र्यावृतो वै देवाः। त्र्यावृत इमे लोकाः। एषां लोकानामाप्त्यै। एषां लोकानां क्लृप्त्यै" इति। एकस्य प्रजापते रोहितादयः पशवः तेषां 'त्रयाणां', 'वपाः', युगपद्धोतव्याः। एवमेकैकदेवताकेषु रौद्रादिषु सर्व्वेषु पशुषु द्रष्टव्यं। त्रिभिः पशुभिः सम्बन्धत्वात् एकैको देवस्त्रिविधः। 'लोकाः', च भूरादयस्त्रिविधाः। अतो लोकत्रयप्राप्त्यै वपात्रयस्य सहहोमः॥

(५) ग्राम्यपशूनामिवारण्यानामपि वपाहोमप्रसक्तिं वारयितुं तेषां परित्यागं विधत्ते। "पर्य्यग्निकृतानारण्यानुत्सृजन्त्यहिꣳसायै" ॥ ३ ॥ इति। पर्य्यग्निकरणपर्य्यन्तान् संस्कारान् कृत्वा तान् 'आरण्यान्', पशून् परित्यजेत्। स च परित्यागो हिंसाराहित्याय सम्पद्यते॥

इति तृतीयोऽनुवाकः॥

---

अथ चतुर्थोऽनुवाकः।

(१) तृतीयेऽनुवाक एकदेवत्यानां पशूनां युगपदुपाकरणोऽभिहितः। चतुर्थेऽश्वस्य रथयोजनाख्याङ्गादयो विधीयन्ते। यदुक्तं सूत्रकारेण। युञ्जन्ति ब्रध्नमिति दक्षिणयुगधूर्य्ये तमश्वं युनक्तीति। सोऽयं मन्त्रः सप्तमकाण्ड एवमाम्नातः। युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः। रोचन्ते रोचना दिवि इति। तत्र पूर्व्वार्द्धभागान् व्याचष्टे। "युञ्जन्ति ब्रध्नमित्याह। असौ वा आदित्यो ब्रध्नः। आदित्यमेवास्मै युनक्ति। अरुषमित्याह। अग्निर्वा अरुषः। अग्निमेवास्मै युनक्ति। चरन्तमित्याह। वायुर्वै चरन्। वायुमेवास्मै युनक्ति। परितस्थुष इत्याह॥ १॥ इमे वै लोकाः परितस्थुषः। इमानेवास्मै लोकान् युनक्ति" इति। स्वप्रकाशेन जगदुपबृंहणादादित्यः 'ब्रध्नः', इत्युच्यते। यागपरेषु रोषराहित्यादग्निः 'अरुषः'। सर्व्वदाचरणस्वभावत्वात् 'वायुश्चरन्'। परितोऽवस्थानात् पृथिव्यादयस्त्रयो लोकाः परितस्थिवांसः। आदित्यादित्रयेणायमश्वः स्तूयते। तादृशमश्वं रथयुगस्य दक्षिणभागे देवा ऋत्विजो वा युञ्जन्ति॥

(२) उत्तरार्द्धं व्याचष्टे। "रोचन्ते रोचना दिवीत्याह। नक्षत्राणि वै रोचना दिवि। नक्षत्राण्येवास्मै रोचयति" इति। दीप्तियुक्तानि 'नक्षत्राणि', 'रोचनाः' इत्युच्यन्ते। तानि रोचनाः 'दिवि' दीप्यन्ते। अनेनार्द्धद्वयकथनेन यजमाना

आदित्यादयः अन्ये योजिता भवन्ति। 'नक्षत्राणि', चैतदर्थं दीपयति ॥

(३) यदुक्तं सूत्रकारेण। युञ्जन्त्यस्य काम्येति प्रष्टी इति। तस्याश्वस्य पार्श्ववर्त्तिनस्त्वश्वौ 'प्रष्टी', इत्युच्यते। युञ्जन्तीत्यनुवर्त्तते। मन्त्रस्तु तत्काण्ड एवं पठ्यते। युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे। शोणा धृष्णू नृवाहसेति। तत्र प्रथमपादस्य तात्पर्यं दर्शयति। "युञ्जन्त्यस्य काम्येत्याह। कामानेवास्मै युनक्ति" इति। 'अस्य' यजमानस्य, रथे काम्यकामप्रदानसमर्थौ अश्वौ देवाः 'युजन्ति'। अनेन मन्त्रपाठेन यजमानार्थं 'कामानेव', सम्पादयति ॥

(४) द्वितीयपादस्य तात्पर्यं दर्शयति। "हरी विपक्षसेत्याह। इमे वै हरी विपक्षसा। इमे एवास्मै युनक्ति" ॥२॥ इति। 'विपक्षसा' तस्य प्रधानस्याश्वस्य विविधपार्श्ववर्त्तिनौ, 'हरी' द्वावश्वौ, युञ्जन्तीत्यन्वयः। 'इमे' द्यावापृथिव्यौ, 'एव', पार्श्ववर्त्तिनौ तावश्वौ, अतस्तयोर्योगेन द्यावापृथिव्यावेव 'युनक्ति' ॥

(५) तृतीयपादस्य तात्पर्यं दर्शयति। "शोणा धृष्णू नृवाहसेत्याह। अहोरात्रे वै नृवाहसा। अहोरात्रे एवास्मै युनक्ति" इति। शोणवर्णौ धार्ष्ट्ययुक्तौ मनुष्यवाहकाविति मन्त्रो ब्रूते। तत्र 'अहोरात्रे', एव मनुष्याणां निर्वाहके। अतस्ते 'एव', अश्वरूपेण 'युनक्ति' ॥

(६) उक्तमन्त्रद्वयतात्पर्यं सङ्गृह्य दर्शयति। "एता एवास्मै देवता युनक्ति। सुवर्गस्य लोकस्य समष्ट्यै" इति। आदित्यं

ब्रह्मशब्दवाच्यमारभ्य अहोरात्रपर्यन्ता या देवता उक्ताः, 'एताः' सर्व्वाः, 'एव', 'अस्मै' यजमानार्थं, रथे युनक्ति ॥

(७) रथे ध्वजस्थापनं विधत्ते। "केतुं कृण्वन्नकेतव इति ध्वजं प्रतिमुञ्चति। यश एवैनꣳ राज्ञां गमयति" इति। सप्तमकाण्डोक्तस्य मन्त्रस्य केतुमित्यादिकं प्रतीकं। मन्त्रस्य पाठार्थौ तु तत्र च द्रष्टव्यौ। अनेन ध्वजस्थापनेन सर्व्वेषां राज्ञां मध्ये 'एनं' 'एव', राजानं, 'यशः', प्रापयति ॥

(८) यदुक्तं सूत्रकारेण। जीमूतस्येति कवचमध्यूहते। धन्वनागा इति धनुरादत्त इत्यादि च। तच्च चतुर्थकाण्ड समाम्नातस्य जीमूतस्येति अनुवाकस्य स्पष्टार्थतां दर्शयति। "जीमूतस्येव भवति प्रतीकमित्याह। यथा यजुरेवैतत्" इति। तस्मिन् यजुषि मन्त्रे अनाविद्धया तनुवा जयेति विजयः प्रतीयते, स च तथैव भवति ॥

(९) रथमारुह्योत्तरस्यां दिशि यजमाने जलसमीपं गत सति तत्राध्वर्य्युणा सप्तमकाण्डोक्तमन्त्रवाचनं विधत्ते। "ये त पन्थानः सवितः पूर्व्यास इत्यध्वर्य्युर्यजमानं वाचयत्यभिजित्यै" ॥ ३ ॥ इति। तदेतद्वचनं यजमानस्य जयाय भवति ॥

(१०) यदुक्तं सूत्रकारेण अपोऽश्वमवघ्राप्य यद्वातो अपो अगमदिति प्रदक्षिणमावर्त्तत इति। तत्र यद्वात इति मन्त्र-गतस्योत्तरार्द्धस्येमꣳ स्तोतरित्यादेस्तात्पर्य्यं दर्शयति। "परा वा एतस्य यज्ञ एति। यस्य पशुरुपाकृतोऽन्यत्र वेद्या एति। एतꣳ स्तोतरेतेन पथा पुनरश्वमावर्त्तयासि न इत्याह।

वायुर्वै स्तोता। वायुमेवास्य परस्ताद्दधात्यावृत्त्यै" इति। 'यस्य' यजमानस्य, उपाकरणसंस्कृतः 'पशुः', 'वेध्याः' 'अन्यत्र', गच्छति 'एतस्य' यजमानस्य, 'यज्ञः', 'परैति' विनश्यति। अतो विनाशाभावार्थः' एवमित्यादिमन्त्राथं पठेत्। हे 'स्तोतः', वायो 'नः' अस्मदीयं, 'एतं' अश्वं, 'एतेन' यथा वेदमार्गेण, 'पुनः', अश्यावर्त्तय। अस्मिन् मन्त्रे स्तोत्रशब्देन 'वायुः', विवचितः। वायुर्हि ताल्वादिवर्णस्थानाभिघातेन स्तोत्रमुत्पादयति। तं 'एव', 'वायुं', 'अस्य' अश्वस्य, पृष्ठभागे स्थापयति। तत्राश्वस्यावर्त्तनाय सम्पद्यते॥

(११) अथ तस्याश्वस्य रथयोजनात् पूर्व्वं मणिभिः शृङ्गारं विधत्ते। "यथा वै हविषो गृहीतस्य स्कन्दति। एवं वा एतदश्वस्य स्कन्दति। यदस्योपाकृतस्य लोमानि शीर्यन्ते। यद्बालेषु काचानावयन्ति। लोमान्येवास्य तत्सम्भरन्ति"॥ ४॥ इति। यद्युपाकरणादिसंस्कृतस्याश्वस्य 'लोमानि', भूमौ पतेयुः। तदानीं 'गृहीतस्य हविषः', स्कन्दनं, "यथा" तथैव 'अश्वस्य', स्कन्दनं भवति। तन्निवारणार्थमश्वस्य लोमसु काचोपलक्षितान् सौवर्णराजतसामुद्रमणीन् 'आवयन्ति' श्रोतान् कुर्व्वन्ति। तेन पतितानि 'लोमानि' पुनः सम्पादयति॥

(१२) तत्र सप्तमकाण्डोक्तव्याहृतित्रयरूपान् मन्त्रान् विधत्ते। "भूर्भुवः सुवरिति प्राजापत्याभिरावयन्ति। प्राजापत्यो वा अश्वः। स्वयैवैनं देवतया समर्द्धयन्ति" इति। प्रजापतिशरीरभूतलोकत्रयवाचित्वाद्व्याहृतयः 'प्राजापत्याः'।

अश्वस्य 'प्राजापत्यः', तस्मात् 'एनं' अश्वं, स्वकीयदेवतया समृद्धं करोति॥

(१३) व्याहृतित्रयं पत्नीभेदेन व्यवस्थापयति। "भूरिति महिषी भुव इति वा वाता। सुवरिति परिवृक्ती। एषां लोकानामभिजित्यै" इति। राज्ञः पत्न्यः उत्तममध्यमाधमा महिष्यादिशब्दैरुच्यन्ते। तत्र व्याहृतयो व्यवस्थिताः। तथाच सूत्रकार आह। भूरिति सौवर्णान् महिषी प्राग् वहाद्भुव इति, राजतान् वा वाता प्रत्यग्वहात् प्राक्श्रोणेः, सुवरिति सामुद्रान् परिवृक्ती, प्रत्यक् श्रोणेर्बालेषु कुमार्य्यः शङ्खमणीनुपग्रन्थन्तीति। तदेतन्महिष्यादिभिस्तिसृभिर्मणिग्रथनं 'लोकानां', जयाय भवति॥

(१४) तत्र महिष्या ग्रथनीयानां मणीनां कारणद्रव्यं विधत्ते। "हिरण्ययाः काचा भवन्ति। ज्योतिर्वै हिरण्यम्। राष्ट्रमश्वमेधः॥ ५॥ ज्योतिश्चैवास्मै राष्ट्रञ्च समीची दधाति" इति। 'काचाः' मणयः, 'हिरण्ययाः' सुवर्णेन निर्मातव्याः। हिरण्यस्य ज्योतिष्ट्वादश्वमेधस्य राष्ट्रप्रदत्वेन तद्रूपत्वादुभयमप्यस्यानुकूलं सम्पादयति॥

(१५) मणिसङ्ख्यां विधत्ते। "सहस्रं भवन्ति। सहस्रसम्मितः सुवर्गो लोकः। सुवर्गस्य लोकस्याभिजित्यै" इति। स्वर्गस्थानां भोग्यद्रव्याणां बहुमूल्यार्हत्वात् स्वर्गस्य सहस्रतुल्यत्वं॥

(१६) यदुक्तं सूत्रकारेण। अथास्य स्वदेशानाज्येनाभ्यञ्जन्ति। वसवस्त्वां जन्तु गायत्रेण छन्दसेति। मौञ्जेनेन महिषी रुद्रा

इति कामाम्नवेन वा वातादित्यादिमीमांसाक्रतेनाज्योनारिष्ट-क्रीति। तदिदं विधत्ते। "अप वा एतस्मात्तेज इन्द्रियं पशवः श्रीः क्रामन्ति। योऽश्वमेधेन यजते। वसवस्त्वां जन्तु गायत्रेण छन्दसेति महिष्यभ्यनक्ति। तेजो वा आज्यम्। तेजो गायत्री। तेजसैवास्मै तेजोऽवरुन्धे॥ ६॥ रुद्रास्त्वां जन्तु त्रैष्टुभेन छन्दसेति वा वाताः। तेजो वा आज्यम्। इन्द्रियं त्रिष्टुप्। तेजसैवास्मा इन्द्रियमवरुन्धे। आदित्यास्त्वां जन्तु जागतेन छन्दसेति परिवृक्ती। तेजो वा आज्यम्। पशवो जगती। तेजसैवास्मै पशूनवरुन्धे" इति। 'तेजः' शरीरकान्तिः, 'इन्द्रियं' चक्षुरादिपाटवं, 'पशवः' गवाश्वादयः, 'श्रीः' धनादिसमृद्धिः, अश्वमेधयाजिनो बहुद्रव्यव्ययेन शरीरप्रयासेन च तेजसादिकमपगच्छति अतस्तत्समाधानाय वसवस्त्वेत्यादिभिर्मन्त्रैर्महिष्यादयोऽभ्यञ्जनं कुर्युः। तत्र गोलाङ्गुलवाद्याज्यस्य तेजोरूपत्वात्। मन्त्रोक्तानां गायत्रीत्रिष्टुब्जगतीच्छन्दसां क्रमेण तेज इन्द्रियपशुहेतुत्वात् सर्वमनेन प्राप्तं भवति॥

(१७) अथाभ्यञ्जनस्य पत्नीकर्तृत्वं प्रशंसन्ति। "पत्नयोऽभ्यञ्जन्ति श्रिया वा एतद्रूपं॥ ७॥ यत्पत्नयः। श्रियमेवास्मिन् तद्दधति। नास्मात्तेज इन्द्रियं पशवः श्रीरपक्रामन्ति" इति। यः पत्नीबहुत्वं 'श्रियाः', स्वरूपं। धनवान् हि बह्वीः पत्नीरुद्वहति। अतः श्रीस्वरूपाः पत्न्योऽश्वमभ्यञ्जन्त्यः, तेनाभ्यञ्जनेन यजमाने 'श्रियमेव', सम्पादयन्ति। ततः 'अस्मात्', तेजसादयो 'नापक्रामन्ति'॥

(१८) उक्तक्रमेणालङ्कृतेष्वश्वेष्ववगाहनं कृत्वा समागतेषु अनन्तरं मुख्यायाश्वाय पूर्व्वं प्रजापतित्वेन निहितानामन्नशेषाणामुपहरणं विधत्ते। "लाजी३ञ्छाचो३न् यशोममा३न् इत्यतिरिक्तमन्नमश्वायोपाहरन्ति। प्रजामेवान्नादीं। कुर्व्वते" इति। उपलालनपूर्व्वकमश्वसम्बोधनार्थं लाज्यादिशब्दजातं। हे 'लाजिन्' लाजोपलक्षित युवन्, हे 'शाचिन्' शक्तिमन्, हे 'यशोमन्' यशसःसम्पादक, इत्यादिमन्त्रेणान्नहोमेत्त्ववशिष्टमन्नमानीयाश्वाय समर्पयेयुः। तेन स्वकीयां प्रजां अन्नादनयुक्तां कुर्व्वन्ति॥

(१९) अस्मिन् मन्त्र उत्तरभागस्य तात्पर्य्यं दर्शयति। "एतद्देवा अन्नमत्तेतदन्नमद्धि प्रजापत इत्याह। प्रजायामेवान्नाद्यं दधते" इति। हे 'देवाः', अश्वे प्रविश्य तत् 'एतदन्नं', भक्षयत। हे 'प्रजापते', विशेषतः 'तदन्नमद्धि',। अनेन मन्त्रपाठभागेन पुत्रादिरूपायां 'प्रजायामेवान्नाद्यं', सम्पादयन्ति॥

(२०) अथ पञ्चमकाण्डोक्तं मन्त्रं एतदन्नावघ्राणे विनियुङ्क्ते। "यदि नावजिघ्रेत्। अग्निः पशुरासीदित्यवघ्रापयेत्। अव हैव जिघ्रति" इति। स्वयमेव 'अवजिघ्रति', चेत् तदा नायं मन्त्रः प्रयोक्तव्यः। अन्यथानेन मन्त्रेण 'अवघ्रापयेत्'। ततः स्वयमेवाघ्राणकृतं भवति॥

(२१) अथ सप्तमकाण्डगतमन्त्रेण पञ्चमकाण्डगतमन्त्राभ्यां चानुमन्त्रणं विधत्ते। "आक्रान्वाजी क्रमैरत्यक्रमीद्दाैर्द्यौस्ते पृष्ठं पृथिवी सधस्थमित्यश्वमनुमन्त्रयते। एषां लोकानामभिजित्यै" इति। मन्त्रत्रयेण लोकत्रयजयो भवति॥

(२२) पञ्चमकाण्डोक्तमनुवाकं प्रयाजयाज्यारूपेण विनियुङ्क्ते। "समिद्धो अञ्जन्कृदरं मतीनामित्यश्वस्याप्रियो भवन्ति स्वरूपत्वाय" इति। आसमन्तात् प्रीतिहेतवः 'आप्रियः'। तेषु मन्त्रेषु देवानां वंचि गिरमित्युच्यते। 'अश्वस्य', तथा करोति अतो मन्त्राणां स्वरूपत्वं॥

इति चतुर्थोऽनुवाकः।

---

अथ पञ्चमोऽनुवाकः।

(१) चतुर्थे रथयोजनाश्वालङ्कारावुक्तौ। पञ्चमे ब्रह्मोद्यनामको होतृब्राह्मणोत्तरकथितप्रश्नोत्तररूपाः संवादा उच्यन्ते। यदुक्तं सूत्रकारेण। उत्तरौ महिमानपरिवप्यौ हुत्वा चात्वाले मार्ज्जयित्वाऽभितोऽग्निष्ठं ब्रह्मोद्याय पर्य्युपविशतो दक्षिणतो ब्रह्मोत्तरहोता किंस्विदासीत् पूर्व्वचितिरित्येतस्यानुवाकस्य प्रष्टानि होतुः प्रतिज्ञातानि ब्राह्मण इति। पृष्टानि प्रश्नवाक्यानि प्रतिज्ञातानि उत्तरवाक्यानि। तदिदं ब्रह्मोद्यं विधत्ते। "तेजसा वा एष ब्रह्मवर्चसेन व्यृध्यते। योऽश्वमेधेन यजते। होता च ब्रह्मा च ब्रह्मोद्यं वदतः। तेजसा चैवैनं ब्रह्मवर्चसेन च समर्द्धयतः" इति। अश्वमेधयाजिनः शरीरायासेन तेजोवृद्धिः। मन्त्रवैकल्यसम्भवाद्ब्रह्मवर्चसव्यृद्धिः। तदुभयपरिहाराय होतृब्रह्माणौ 'ब्रह्मोद्यं', ब्रूयातां। जगत्स्थितिहेतोः परब्रह्मणो विषये संवादः 'ब्रह्मोद्यः', तेन यजमानस्य तेजोब्रह्मवर्चससमृद्धिर्भवति॥

(२) अग्निष्ठस्य यूपस्य दक्षिणभागे ब्रह्मण उपवेशनं विधत्ते। "दक्षिणतो ब्रह्मा भवति। दक्षिणत आयतनो वै ब्रह्मा। बार्हस्पत्यो वै ब्रह्मा। ब्रह्मवर्चसमेवास्य दक्षिणतो दधाति। तस्माद्दक्षिणोऽर्द्धो ब्रह्मवर्चसितरः" इति। आहवनीयस्य दक्षिणभागो ब्रह्मणः प्रतिनियतं स्थानं। अतोऽत्रापि दक्षिणभागे उपविशेत्। बृहस्पतिदेवताकश्चायं 'ब्रह्मा'। अतोऽयं यजमानस्य दक्षिणभागे 'ब्रह्मवर्चसं', सम्पादयति। यस्मात्सम्पत्तिः, 'तस्मात्', दक्षिणभागोऽतिशयेन ब्रह्मवर्चसयुक्तो दृश्यते। दक्षिणहस्तेन हि होमपूजादिकं क्रियते॥

(३) होतुर्यूपस्योत्तरभाग उपवेशनं विधत्ते। "उत्तरतो होता भवति॥१॥ उत्तरत आयातनो वै होता। आग्नेयो वै होता। तेजो वा अग्निः। तेज एवास्योत्तरतो दधाति। तस्मादुत्तरोऽर्द्धस्तेजस्वितरः" इति। सामिधेन्यनुवचनादौ वेद्या उत्तरश्रोणिर्होतुर्नियतं स्थानं। अतोऽत्रापि यूपस्योत्तरभाग उपविशेत्। दैविकेष्वृत्विक्षु होतृत्वमग्नेराम्नातं, अग्निर्होता अश्विनाध्वर्यू इति। तत्सम्बन्धादयं मानुषो 'होता आग्नेयः'। अतः 'अस्य' यजमानस्य, उत्तरभागे 'तेजः', सम्पादयति। यस्मादेवं 'तस्मात्', केषुचित् पुरुषेषु 'उत्तरः' वामभागः, शक्तिमत्तरः। दक्षिणोत्तरदेशौ द्वयोर्विहितौ, कस्य दक्षिणा-(कस्यो)त्तरः वेद्याकाङ्क्षितत्वात्॥

(४) अग्निष्ठं यूपं तत्प्रतियोगित्वेन विधत्ते। "यूपमभितो वदतः। यजमानदेवत्यो वै यूपः। यजमानमेव तेजसा

च ब्रह्मवर्चसेन च समर्द्धयतः” इति। यजमानवद्यूपस्य पशु-प्रयोगनिर्व्वाहकत्वात् यजमानदेवत्यत्वं। तस्य पार्श्वयोः स्थित्वा ब्रह्मवदने सति ‘यजमानमेव’, तेजोब्रह्मवर्च्चसाभ्यां समृद्धं कुरुतः॥

(५) तत्रोत्तरतोऽवस्थितो होता किंस्विदित्यादीनि प्रश्न-वाक्यानि पठति। दक्षिणतोऽवस्थितो ब्रह्मा द्यौरासीदित्याद्यु-त्तरवाक्यानि पठति। तत्र प्रश्नवाक्यानि यथासमाम्नातमनूद्य तद्व्याख्यानव्याजेनोत्तरवाक्यानां तात्पर्य्यं प्रदर्श्यते। तत्र प्र-थमप्रश्नवाक्यं दर्शयति। “किꣲस्विदासीत् पूर्व्वचित्तिरि-त्याह। द्यौर्वै वृष्टिः पूर्व्वचित्तिः॥२॥ दिवमेव वृष्टिमवरुन्धे” इति। ‘पूर्व्वचित्तिः’ प्रथमतश्चेतयमाना, ‘किं’, नाम ‘आ-सीत्’, इति प्रश्नः। या वृष्टिकारणभूता ‘द्यौः’, सैव प्रथमत-श्चेतयमाना। प्रथमतो वृष्टौ सत्यां पश्चादोषधिद्वारा सर्व्वे प्राणिनो जीवन्ति। एताभ्यां प्रश्नोत्तराभ्यां वृष्टिहेतुं ‘दिव-मेव’, प्राप्नोति, वृष्टिं लभत इत्यर्थः॥

(६) द्वितीयं वाक्यं दर्शयति। “किꣲस्विदासीद्बृहद्वय इत्याह। अश्वो वै बृहद्वयः। अश्वमेवावरुन्धे” इति। युद्धे ज-यद्वारा वीरजीवनहेतुत्वात् ‘अश्वो बृहद्वयः’॥

(७) तृतीयं दर्शयति। “किꣲस्विदासीत् पिशङ्गिलेत्याह। रात्रिर्वै पिशङ्गिला। रात्रिमेवावरुन्धे” इति। अतिशयेन रूपवती ‘पिशङ्गिला’, ‘रात्रिः’, च तादृशी, चन्द्रिकया नक्षत्रैः स्वरूपवत्त्वप्रतिभासात्॥

(८) चतुर्थं दर्शयति। "किंस्विदासीत् पिलिप्पिलेत्याह। श्रीर्वै पिलिप्पिला। अन्नाद्यमेवावरुन्धे"॥ ३ ॥ इति। प्रजासमृद्धिनिमित्तस्य ध्वनिविशेषस्य 'पिलिप्पिला', इत्यनुकरणं, तथाविधध्वनियुक्ता यस्मिन् गृहे धनसमृद्धिः, तत्र जनबाहुल्यान्निरन्तरं तथाविधः शब्दो भवति॥

(९) पञ्चमं दर्शयति। "कः स्विदेकाकी चरतीत्याह। असौ वा आदित्य एकाकी चरति। तेज एवावरुन्धे" इति। आदित्यस्य हि सहायनैरपेक्ष्येण जगद्भ्रमणं प्रसिद्धं॥

(१०) षष्ठं दर्शयति। "क उ स्विज्जायते पुनरित्याह। चन्द्रमा वै जायते पुनः। आयुरेवावरुन्धे" इति। कृष्णपक्षे क्षीणश्चन्द्रः शुक्लपक्षे 'पुनर्जायते', इति हि प्रसिद्धं॥

(११) सप्तमं दर्शयति। "किंस्विद्धिमस्य भेषजमित्याह। अग्निर्वै हिमस्य भेषजम्। ब्रह्मवर्चसमेवावरुन्धे" इति। अग्निसेवया हिमशैत्योपद्रवो निवर्त्यते॥

(१२) अष्टमं दर्शयति। "किंस्विदावपनं महदित्याह। ॥ ४ ॥ अयं वै लोक आवपनं महत्। अस्मिन्नेव लोके प्रतितिष्ठति" इति। व्रीह्यादिवीजानां सर्व्वत आवापस्थानं भूमिः॥

(१३) नवमं दर्शयति। "पृच्छामि त्वा परमं तं पृथिव्या इत्याह। वेदिर्वै परोऽन्तः पृथिव्याः। वेदिमेवावरुन्धे" इति। यागसम्बन्धिनी या 'वेदिः', सा पृथिव्यामुत्कृष्टप्रदेशः। नहि ततोऽन्य उत्कृष्टदेशः कश्चिद्विद्यते॥

(१४) दशमं दर्शयति। "पृच्छामि त्वा भुवनस्य नाभि-

मित्याह। यज्ञो वै भुवनस्य नाभिः। यज्ञमेवावरुन्धे" इति। यथा शरीरस्य नाभिर्मध्यप्रदेशः, तथा 'यज्ञः', सर्व्वस्य लोकस्य मध्यस्थानीयः। कर्म्माधीनत्वात् सर्व्वजगद्व्यवहारस्य॥

(१५) एकादशं दर्शयति। "पृच्छामि त्वा वृष्णो अश्वस्य रेत इत्याह। सोमो वै वृष्णो अश्वस्य रेतः। सोमपीथमेवावरुन्धे" इति। 'वृष्णः' सेक्तृत्वेन बलवतोऽश्वस्य सम्बन्धी सारभूतः पदार्थः सोमः। एवं सति ह्यश्वे त्रिरात्ररूपोऽश्वमेधाख्यः सोमयागो निष्पद्यते॥

(१६) द्वादशं दर्शयति। "पृच्छामि वाचः परमं व्योमेत्याह। ब्रह्म वै वाचः परमं व्योम। ब्रह्मवर्चसमेवावरुन्धे" ॥ ५ ॥ इति। जगत्कारणं 'ब्रह्म', एव 'वाचः' वेदरूपायाः, 'परमं व्योम' पर्य्यवसानभूमिः। सर्व्वे वेदा यत् पदमामनन्तीति श्रुतेः। तदेवं ब्रह्मकार्य्यभूते कृत्स्नजगद्व्यवहारविषयप्रश्नोत्तररूपाभ्यां मन्त्राभ्यां होतृब्रह्मणोः संवादरूपं ब्रह्मोद्यं प्रसिद्धं॥

इति पञ्चमोऽनुवाकः।

---

अथ षष्ठोऽनुवाकः।

(१) पञ्चमे ब्रह्मोद्यमुक्तं। षष्ठसप्तमयोर्म्मृताश्वोपचारोऽभिधीयते। तत्रादावश्वसञ्ज्ञपनकालीयाननुष्ठेयान् होमान् विधत्ते। "अप वा एतस्मात् प्राणाः क्रामन्ति। योऽश्वमेधेन यजते।

प्राणाय स्वाहा व्यानाय स्वाहेति मन्त्रगणमान आहुतीर्जुहोति। प्राणानेवास्मिन् दधाति। नास्मात् प्राणा अपक्रामन्ति" इति। अश्वमेधयाजिनोऽश्वबधदोषेणायुःसमाप्तेः पूर्व्वमेवाकस्मात् 'प्राणाः' 'अपक्रामन्ति'। अतस्तत्परिहाराय सप्तमकाण्डे चतुर्थ-प्रपाठके प्राणाय स्वाहेति योऽनुवाकः। तत्रत्यैर्मन्त्रैर्जुहुयात्। तेन यजमाने 'प्राणान्', अवस्थापयति। ततो काले 'प्राणा अस्मात् नापक्रामन्ति'॥

(२) यदुक्तं सूत्रकारेण। अम्बे अम्बाल्यम्बिक इति प्रति-प्रस्थाता पत्नीमुदानयति तां दक्षिणान् केशपक्षानुद्ग्रथ्य सव्यान् प्रस्रस्य दक्षिणानूरूनाघ्नानाः सव्यानूरूनाघ्नानाः समि-द्भिरभिधून्वन्त्यः त्रिप्रदक्षिणमश्वं धून्वन्त्यः पर्य्यन्त्यवन्तो स्थेति सव्यानुद्ग्रथ्य दक्षिणान् प्रस्रस्य सव्यानूरूनाघ्नाना अनभि-धून्वन्त्यस्त्रिः प्रतिपर्य्यन्ति। प्रदक्षिणमन्ततो यथा पुरस्तात् नव-कृत्वः सम्पादयन्तीति। तत्रावन्तोस्थेति मन्त्रं पठित्वा तस्य तात्पर्य्यं दर्शयति। "अवन्तो स्थावन्तोस्त्वावन्तु। प्रियं त्वा प्रियाणां। वर्षिष्ठमाप्यानां।' निधीनां त्वा निधिपतिं हवा-महे वसो ममेत्याह। अपैवास्मै तह्नुवते॥१॥ अथो धुवन्त्ये-वैनं। अथोऽन्येवास्मै ह्नुवते" इति। हे राजपत्न्यः यूयम् 'अव-न्तो स्थ' अश्वं रक्षयन्त्य स्थ, हे अश्व 'त्वा', 'अवन्तोः' पालयित्र्यः पत्न्यः, 'अवन्तु', 'मम', 'वसो' वासयितः, तादृश हे अश्व 'प्रिया-णां', वस्तूनां मध्ये अत्यन्तं 'प्रियं त्वां', 'हवामहे' वयं पत्न्य आ-ह्वयामः। कीदृशं त्वां, 'आप्यानां' आप्तव्यानां वस्तूनां मध्ये,

'वर्षिष्ठं' अतिशयेन प्रवृद्धं, किञ्च 'निधिपतिं' शङ्खपद्मादि-निधिविशेषाणां पालकं। अथवा किमनेन विशेषणेन सर्व्व-निधीनां पालकं त्वामाह्वयाम इति मन्त्रार्थः। 'तत्' तेन मन्त्रेण, 'असौ' अश्वाय, 'अपह्नुवते एव' एनं अश्वम् अप-लपन्त्येव। नहि मृतोऽश्वः परमार्थत आह्वातुं शक्यते। किञ्च अनेन आह्वानेन अश्वम्, 'एनं', 'धुवन्ति' चालयन्त्युत्थापयन्ति, अपि च अनेन चालनेनाश्वमेनं 'निह्नुवते', एवमुत्थापनमपि मृतस्याश्वस्यापलाप एव। तस्मादप्युपचार इत्यभिप्रायः॥

(३) प्रदक्षिणत्रयं विधत्ते। "त्रिः परियन्ति। त्रय इमे लोकाः। एभ्य एवैनं लोकेभ्यो धुवते" इति॥ पत्न्यः प्रदक्षिण-त्रयेणैनमश्वं लोकत्रयव्यवहारार्थं 'धुवते' चालयन्त्युत्थापयन्ति॥

(४) त्रिवारं पुनरप्रदक्षिणावृत्तिं विधत्ते। "त्रिः पुनः परियन्ति। षट् सम्पद्यन्ते। षड् वा ऋतवः। ऋतुभिरेवैनं धुवते" इति। पूर्व्वेण प्रदक्षिणावृत्तित्रयेण सहितस्य विपरी-तावृत्तित्रयस्य षट्सङ्ख्योपपत्तिः॥

(५) पुनरपि त्रिः प्रदक्षिणावृत्तिमभिप्रेत्य मिलित्वा सङ्ख्यां विधत्ते। "अप वा एतेभ्यः प्राणाः क्रामन्ति॥२॥ ये यज्ञे धुवनं तन्वते। नवकृत्वः परियन्ति। नव वै पुरुषे प्राणाः। प्राणा-नेवात्मन्दधते। नैभ्यः प्राणा अपक्रामन्ति" इति। 'ये' पुरु-षाः, 'यज्ञे', 'धुवनं' कम्पनं, कुर्व्वते। 'एतेभ्यः प्राणाः', 'अप-क्रामन्ति', एव। अतस्तत्परिहाराय 'नवकृत्वः', परिभ्रमणं कुर्य्यात्। पुरुषशरीरे नवसु द्वारेषु नवसङ्ख्याकाः प्राणा

वर्त्तन्ते। तान् स्वात्मनि सम्पादयन्ति। ततश्च प्राणा एतेभ्यो नापक्रामन्ति ॥

(६) यथोक्तस्य मृतोपचारस्यानुष्ठानार्थं प्रतिप्रस्थातृकर्त्तृकं पत्न्यानयनं विधत्ते। "अम्बे अम्बाल्यम्बिक इति पत्नीमुदानयति। अह्वतैवैनाम्" इति। अम्बादिशब्दैः प्रतिप्रस्थाता महिषीं सम्बोधयति। तेन तामाह्वयत्येव। एतच्चान्यासामप्युपलक्षणं ॥

(७) यदुक्तं सूत्रकारेण, सुभगे काम्पीलवासिनीति क्षौमेण वाससाध्वर्युर्महिषीमश्वञ्च प्रच्छादयति। तस्मिन् मन्त्रे प्रथमभागस्य तात्पर्य्यं दर्शयति। "सुभगे काम्पीलवासिनीत्याह। तप एवैनामुपनयति" इति। अत्र प्रतिप्रस्थाता महिषीं सम्बोधयति, हे 'सुभगे' सौभाग्ययुक्ते, हे 'काम्पीलवासिनि' शृङ्गारार्थं विचित्रदुकूलवस्त्रोपेते। अनेन सम्बोधनेन महिषीं 'एनां', 'तप एव', प्रापयति, मृतेनाश्वेन सह भोगार्थमाक्रान्तं सन्तापहेतुत्वात्तपस्थानीयं ॥

(८) द्वितीयभागस्य तात्पर्य्यं दर्शयति। "सुवर्गे लोके सम्प्रोर्णुवाथामित्याह ॥ २ ॥ सुवर्गमेवैनां लोकं गमयति" इति। हे महिषि त्वमश्वश्चेत्येतौ युवां स्वर्गलोकसदृशसुखनिमित्तमिदं वस्त्रं सम्यगाच्छादयतं। अनेन मन्त्रभागेन महिषीं स्वर्गमेव प्रापयति ॥

(९) तृतीयभागस्य तात्पर्य्यं दर्शयति। "आहमजानि गर्भधमा त्वमजासि गर्भधमित्याह। प्रजा वै पशवो गर्भः।

प्रजामेव पशूनात्मन्धत्ते" इति। हे अश्व गर्भधारणहेतुं त्वां 'अहं' महिषी, 'अजानि' प्राप्नवानि, त्वञ्च 'गर्भधं' गर्भधारकं कलत्ररूपं महिषीशरीरं, 'अजासि' प्राप्नुहि। यद्यप्ययं भागो महिष्यैव पठितुं युक्तः। तथापि तदभिप्राया-नुवादरूपेणाध्वर्युः पठतीत्यविरोधः। गर्भस्य प्रजापशुरूप-त्वादेतस्मिन् मन्त्रे पठिते सति प्रजां पशुञ्चात्मनि स्थापयति॥

(१०) यदुक्तं सूत्रकारेण। गायत्री त्रिष्टुबिति द्वाभ्यां सौ-वर्णाभिः सूचीभिर्महिष्यश्वस्यासिपथान् कल्पयन्ति* प्राक्क्रो-डात्, एवमुत्तराभ्यां राजतीभिर्वावाता, प्रत्यक्क्रोडात् प्रा-ङ्नाभेः, एवमुत्तराभ्यां लौहीभिः सीसाभिर्वा परिवृक्ती शेष-मिति। तत्रासिपथान् विधत्ते। "देवा वा अश्वमेधे पवमाने। सुवर्गं लोकं न प्राजानन्। तमश्वः प्राजानात्। यत् सूचीभिरसिपथान् कल्पयन्ति। सुवर्गस्य लोकस्य प्रज्ञात्यै" इति। पुरा कदाचित् 'देवाः', हि पवमानस्तोत्रे प्रवृत्ते सति तत्र स्वर्गहेतुं अश्वं न ज्ञातवन्तः। 'तं', 'अश्वः', तु ज्ञातवान्। अतः स्वर्गज्ञानाय मृतस्याश्वस्य शरीरे सूचीभिः 'असिपथाः', कल्पनीयाः। यथा लोके सूकरः खड्गेन छि-द्यते। एवमश्वोऽपि छेदनीयः। अतः खड्गप्रहारस्थानलाञ्छ-नानि सूचीभिः कर्त्तव्यानि। त एतेऽसिपथा इत्युच्यन्ते॥

(११) तस्मिन्नसिपथकल्पने पञ्चमकाण्डोक्तेन गायत्री त्रिष्टुबित्यनुवाकेन मन्त्रा आम्नाताः, तेषां स्पष्टार्थतां दर्श-

* एकमहिषीकर्त्तृकं कल्पयन्तीत्यत्र बहुत्वं चिन्त्यम्।

यति। "गायत्री त्रिष्टुप् जगतीत्याह॥४॥ यथा यजुरेवैतत्" इति। तेषु मन्त्रेषु गायत्र्यादिदेवताः सूचीभिः शिम्यन्त्विति सूचीवेधनमाम्नातं। तत्तथैव क्रियते॥

(१२) सूचीनामवान्तरभेदं विधत्ते। "त्रय्यः सूच्यो भवन्ति। अयस्मय्यो रजता हरिण्यः। अस्य वै लोकस्य रूपमयस्मय्यः। अन्तरिक्षस्य रजताः। दिवो हरिण्यः। दिशो वा अयस्मय्यः। अवान्तरदिशा रजताः। ऊर्द्ध्वा हरिण्यः। दिश एवास्मै कल्पयति" इति। तत्र परिवृक्त्या लोहमय्यः 'सूच्यः', वावातायाः रजतमय्यः, महिष्याः सुवर्णमय्यः। तास्तु क्रमेण लोकत्रयरूपा दिगादिरूपास्तु अतः 'अस्य' यजमानस्य, 'दिशः' स्वव्यापारक्षमाः, करोति। एवं लोकत्रयमपीति द्रष्टव्यं॥

(१३) यदुक्तं सूत्रकारेण। कस्त्वाच्छ्यति कस्त्वा विशास्तीत्यश्वस्य त्वचमाच्छ्यति चन्द्रनाममेदस्तद्धरति नाश्वस्य वपा विद्यत इति। तत्र पञ्चमकाण्डोक्तमन्त्रस्य कस्त्वेत्यनुवाकोक्तस्य तात्पर्य्यं दर्शयति। "कस्त्वाच्छ्यति कस्त्वाविशास्तीत्याहाहिंसायै" इति। हे अश्व 'त्वां', 'कः' प्रजापतिः, 'आच्छ्यति' खड्गेन छिनत्ति, तथा 'कः' प्रजापतिरेव, 'त्वां' 'विशास्ति' विशसनं अवयवविभागेन छेदनं करोति। अत्र मन्त्रे प्रजापत्युक्तेरहिंसार्थः। स हि जगद्विधातृत्वाद्यथा हिंसा न भवति तथा छेत्तुं जानाति॥

इति षष्ठोऽनुवाकः।

---

अथ सप्तमोऽनुवाकः ।

(१) षष्ठे अश्वस्य मृतोपचारः मञ्ज्ञपनप्रकारश्चोक्तः। सप्तमे मृतोपचारविषया अवशिष्टा मन्त्रा व्याख्यायन्ते। अश्वेन सह वस्त्राच्छादिता महिषी यदा सोऽश्वो निद्रातीत्येवं श्लिश्नाति। तदा तदा पत्न्य इतराः तां महिषीं प्रोत्साहयन्ति। प्रोत्साहनमन्त्रास्तोर्द्धामेनामित्यादयः। तत्र प्रथममन्त्रे प्रथमपादस्य तात्पर्य्यं दर्शयति। "अप वा एतस्माच्छ्री राष्ट्रं क्रामति। योऽश्वमेधेन यजते। ऊर्द्धामेनामुच्छ्रयतादित्याह। श्रीर्वै राष्ट्रमश्वमेधः। श्रियमेवास्मै राष्ट्रमूर्ध्वमुच्छ्रयति" इति। अश्वमेधयाजिनः सकाशाच्छ्रियो राष्ट्रस्य चापगमो भवति। बहुधनव्ययेन श्रियोपगमः। अत एव राष्ट्रं पालयितुमशक्तत्वात् राष्ट्रस्याप्यपगमः। तत्परिहारार्थमितराः पत्न्यः ऊर्द्धामिति पादं पठन्ति। तस्यायमर्थः हे अश्व 'एनां' महिषीं प्रति, स्वकीयां पुंलिङ्गव्यक्तिं 'ऊर्द्धमुच्छ्रयतात्' यथोर्द्धा व्यवतिष्ठते तथोच्छ्रितां कुर्व्विति, एवं सत्यश्वमेधस्य श्रीरूपत्वात् राष्ट्ररूपत्वाच्च तदवयवस्योच्छ्रितत्वप्रार्थनया 'श्रियं राष्ट्रं', च 'ऊर्द्धं', यथा भवति तथैवोन्नतं करोति ॥

(२) द्वितीयपादस्य तात्पर्य्यं दर्शयति। "वेणुभारं गिराविवेत्याह। राष्ट्रं वै भारः। राष्ट्रमेवास्मै पर्य्यूहति" इति। व्यक्तेरौन्नत्ये दृष्टान्तोऽस्मिन् पादेऽभिधीयते। यथा वेणुभारवाही कस्मिंश्चिद्गिरौ वेणुं छित्वा भारं बध्वा स्वशिरस्यारोपयितुं सौकर्य्याय वृक्षाद्यवष्टम्भेन तं भारमूर्द्धाग्रमवस्थापयति तद्वत्।

अत्र राष्ट्रस्य भारस्थानीयत्वात्। यजमानार्थं 'राष्ट्रमेव', परितः समादधाति ॥

(३) तृतीयपादस्य तात्पर्य्यं दर्शयति। "अथास्यै मध्यमेधतामित्याह। श्रीर्वै राष्ट्रस्य मध्यम् ॥ १ ॥ श्रियमेवावरुन्धे" इति। अश्वस्य पुंलिङ्गव्यक्तावुच्छ्रितायां 'अथ' अनन्तरं, 'अस्याः' महिष्याः, शरीरमध्यं स्त्रीलिङ्गं। 'एधतां' उत्साहेन वर्धतां, अतो धनादिसमृद्धिरूपायाः श्रिय एव राष्ट्रमध्यरूपत्वात् 'श्रियमेव', प्राप्नोति।

(४) चतुर्थपादस्य तात्पर्य्यं दर्शयति। "शीते वाते पुनन्निवेत्याह। क्षेमो वै राष्ट्रस्य शीतो वातः। क्षेममेवावरुन्धे" इति। पक्वानां धान्यानां खले यदा शोधनं क्रियते। तदा प्रातःकाले 'शीते', प्रवृत्ते सति धान्यं 'पुनन्' शोधयन्, पुरुष उत्साहेन यथाभिवृद्धिं गच्छति तद्वत्। अत्र शीतवातस्य तापनिवारकत्वेन क्षेमरूपत्वाद्यजमानः 'क्षेममेव', प्राप्नोति ॥

(५) प्रोत्साहनमन्त्रेषु प्रथमं व्याख्याय द्वितीयमन्त्रे प्रथमपादस्य तात्पर्य्यं दर्शयति। "यद्धरिणी यवमत्तीत्याह। विड् वै हरिणी। राष्ट्रं यवः। विशञ्चैवास्मै राष्ट्रञ्च समीची दधाति" इति। अत्र महिषीं सान्त्वयितुमनेनोत्तरेण च पादद्वयेन दृष्टान्तोऽभिधीयते। यदा 'हरिणी', काचित् रात्रौ समागत्य क्षेत्रे फलितं 'यवं', भक्षयति। तत्र यथा स्वामी न जानाति तथा हे महिषि त्वमपि देवतारूपेण त्वामनुभूयान्तर्हितमश्वं न जानासीति पादद्वयस्याभिप्रायः। तत्र

हरिणीयवशब्दाभ्यां प्रजाराष्ट्रञ्चेत्युभयं सूच्यते। तत्प्रजा वलि-हरणात् हरिणीस्थानीया, यद्वा राजस्वामिकायां भूमावुत्पन्न-धान्यभक्षणात् हरिणीसादृश्यं, राष्ट्रस्य भोग्यत्वाद्यवसादृश्यं ॥

(६) अत एतत्पाठेन प्रजाया राष्ट्रस्य च सम्यक् समानुकूल्यं सम्पादयति। "न पुष्टं पशुमन्यत इत्याह। तस्माद्राजा पशून्न पुष्यति" ॥ २ ॥ इति। हरिण्या यवे भक्षितेऽपि हरिणी-रूपं पशुं 'पुष्टं', क्षेत्रिको 'न', जानाति। यस्मादेवं क्षेत्रस्वामी, 'तस्मात्', कृत्स्नभूमिस्वामी 'राजा', 'पशून् न पुष्यति' इति पशुपुष्टिं स्ववृत्तितया न गणयति। वैश्यस्य वृत्त्यन्तराभा-वात् पशुपुष्टिमसौ बहु मन्यते। राजा तु प्रभूतधनसमृद्धत्वात् न गणयति ॥

(७) द्वितीयतृतीयपादयोस्तात्पर्य्यं दर्शयति। "शूद्रा यदर्य्य-जारा न पोषाय धनायतीत्याह। तस्माद्वैशीपुत्रं नाभिषिञ्चन्ते" इति। 'यत्' यदा कदाचित्, दासी स्वकीयस्वामिना जारेण युक्ता भवति। तदा सा दासी स्वामिस्वीकारमात्रेणात्यन्तं हृष्यति न तु स्वकीयकुटुम्बपोषाय धनमात्मन इच्छति, न हि स्वामिस्वीकाराद्धनमधिकं मन्यते। तथा हे महिषि मनुष्य-शरीरा त्वमपि देवतारूपस्याश्वस्य स्वीकारादेव परितुष्टा भव। न तु तुच्छमिमं मानुषं भोगमपेक्षस्वेति मन्त्राभिप्रायः। यस्मादत्र दास्या धनराहित्यं सूचितं। 'तस्मात्', दासीवन्नीच-जातैर्वैश्यस्त्रियाः पुत्रं धनानर्हं राज्यार्थं 'नाभिषिञ्चन्ते' ॥

(८) तृतीयमन्त्रे प्रथमपादस्य तात्पर्य्यं दर्शयति। "इयं यका-

शकुन्तिकेत्याह। विड्वै शकुन्तिका। राष्ट्रमश्वमेधः। विशञ्चै-वास्मै राष्ट्रञ्च समीची दधाति” इति। ‘इयं’ प्रत्यक्षतो दृश्य-माना, ‘यकाशकुन्तिका’ या काचित्पक्षिस्त्री विद्यते, सा च पक्षिणं पृष्ठतो गच्छत्येव। न तु पृष्ठं कश्चिदवतिष्ठते। हे महिषि एवं त्वमपि न हृष्यसि तदेतदयुक्तमिति मन्त्राभि-प्रायः। अत्र शकुन्तिकाशब्देन पक्षिस्त्रीसदृशी प्रजा सूच्यते, अयमश्वमेधस्तु राष्ट्रसदृशः, तथा सति तत्पादपाठेन प्रजा-राष्ट्रयोर्यजमान आनुकूल्यं सम्पादयति॥

(९) द्वितीयपादस्य तात्पर्यं दर्शयति। “आहलमिति सर्पतीत्याह। तस्माद्राष्ट्राय विशः सर्पन्ति” इति। ‘आह-लमिति पक्षिशब्दानुकरणं, तथाविधं शब्दं कुर्वन्ती पक्षि-स्त्री पुमांसम्पक्षिणं ‘सर्पति’। यस्मात् मन्त्र एवमाह ‘तस्मात्’, लोकेऽपि राष्ट्रार्थं शकुन्तिकास्थानीयाः प्रजाः प्रवर्तन्ते॥

(१०) तृतीयपादस्य तात्पर्यं दर्शयति। “आहतं गभेपस इत्याह। विड् वै गभः। राष्ट्रं पसः। राष्ट्रमेव विश्यां हन्ति। तस्माद्राष्ट्रं विशं घातुकम्” इति। अत्र गभशब्दो वर्णविप-र्यासेन स्त्रीव्यञ्जनभगमाचष्टे। पसशब्दोऽपि वर्णव्यत्यासेन सप-सावापयोग्यं पुरुषव्यञ्जनमाचष्टे। स्त्रीव्यञ्जने पुंव्यञ्जनं ‘आह-तं’, इति मन्त्रार्थः। अत्र स्त्रीव्यञ्जनवाचिना गभशब्देन प्रजो-पलक्षिता। पुंव्यञ्जनवाचिना पसशब्देन राष्ट्रं सूचितं। ततः प्रजायां ‘राष्ट्रं’, ‘आहन्ति’ संयोजयति। यस्मादेवं ‘तस्मात्’, लोकेऽपि यत् ‘राष्ट्रं’ तत् ‘विशं’ ‘घातुकं’ प्रजां प्रति गमन-

शीलं उभयमपि परस्परं सम्बध्य वर्त्तेत इत्यर्थः। चतुर्थपादः स्पष्टत्वबुध्या ब्राह्मणेनोपेक्षितः॥

(११) चतुर्थमन्त्रे प्रथमपादस्य तात्पर्यं दर्शयति। "माता च ते पिता च त इत्याह। इयं वै माता। असौ पिता। आभ्यामेवैनं परिददाति" इति। हे महिषि तव या 'माता', यश्च तव 'पिता', तावुभौ सह गमनङ्कुरुत इति मन्त्रार्थः। अत्र पृथिवी द्यौश्च मातापितृशब्दाभ्यामुपलक्ष्येते, तथा सति द्यावा-पृथिवीभ्याम्, 'एव', 'एनं' यजमानं, रक्षार्थं 'परिददाति'॥

(१२) द्वितीयपादस्य तात्पर्यं दर्शयति। "अग्रं वृक्षस्य रोहत इत्याह। श्रीर्वै वृक्षस्याग्रं। श्रियमेवावरुन्धे" इति। 'वृक्षस्य', कस्यचित् 'अग्रं' शाखया निर्मितं तल्पं, माता पिता चारोहत इति मन्त्रार्थः। वृक्षाग्रशब्देनोत्कर्षसाम्यात् 'श्रीः', विवक्षिता। अतो यजमानः 'श्रियमेव', प्राप्नोति॥

(१३) उत्तरार्द्धस्य तात्पर्यं दर्शयति। "प्रसुलामीति ते पिता गभे मुष्टिमतंसयदित्याह। विड् वै गभः। राष्ट्रं मुष्टिः। राष्ट्रमेव विश्याहन्ति। तस्माद्राष्ट्रं विशं घातुकम्" इति। हे महिषि 'ते पिता', 'प्रसुलामि' प्रवेशयामीत्येवमुक्त्वा 'गभे' योनौ, 'मुष्टिं' मुष्टिसदृशं, 'मेढ्रं', 'अतंसयत्' प्रावेशयत्, एव-मयमश्वश्चकार। अतो हे महिषि त्वमुत्तिष्ठेति मन्त्राभिप्रायः। तत्र गभमुष्टिशब्दाभ्यां प्रजाराष्ट्रयोरुपलक्षितत्वात्तयोः सम्बन्धः पूर्ववदत्र सम्पादितो भवति, एवमत्र महिष्या आह्वानार्था इतरपत्नीवचनरूपा मन्त्रा व्याख्याताः॥

(१४) यदुक्तं सूत्रकारेण। 'दधिक्राव्णो अकारिषमिति सर्वाः सुरभिमतीमृचमन्ततो जपित्वेति'। तदिदं विधत्ते। "अप वा एतेभ्यः प्राणाः क्रामन्ति। ये यज्ञेऽपूतं वदन्ति। दधिक्राव्णो अकारिषमिति सुरभिमतीमृचं वदन्ति। प्राणा वै सुरभयः। प्राणानेवात्मन्दधते। नैभ्यः प्राणा अपक्रामन्ति" इति। 'यज्ञे' यागप्रयोगमध्ये, 'ये' मनुष्याः, 'अपूतं' अपवित्रं ग्राम्योक्तिरूपं, 'वदन्ति'। 'एतेभ्यः' जनेभ्यः, 'प्राणाः अपक्रामन्ति'। अतः तन्निवारणार्थं सर्वा अपि 'सुरभिमतीं', ब्रूयुः। सुरभि नो मुखाकरदित्येवं सुरभिशब्दो यस्यामृच्यस्ति सेयं सुरभिमती प्राणानां सुरभिगन्धवत् प्रियत्वात्तन्मन्त्रपाठेन 'प्राणान्', आत्मनि सम्पादयन्ति। तत 'एभ्यः' स्त्रीजनेभ्यः, 'प्राणा नापक्रामन्ति'॥

(१५) यदुक्तं सूत्रकारेण। 'आपोहिष्ठीयाभिर्मार्जयित्वेति'। तदिदं विधत्ते। "आपोहिष्ठामयाभुव इत्यद्भिर्मार्जयन्ते। आपो वै सर्वा देवताः। देवताभिरेवात्मानं पवयन्ते" इति। देवतादिजगदुत्पत्तेः प्राक् तत्कारणत्वेनापः समाम्नाताः। 'आपो वा इदमासंत्सलिलमेवेति'। अतः कारणत्वात् सर्वदेवतारूपाः 'आपः', ततः अब्रूपाभिर्देवताभिरेवात्मानं शोधयन्ति॥

इति सप्तमोऽनुवाकः।

---

अथ अष्टमोऽनुवाकः ।

(१) सप्तमे स्रुताश्वोपचारे येऽवशिष्टा मन्त्रास्ते व्याख्याताः । अष्टमेऽश्वमेधतदीयपशुविधयः प्रशंस्यन्ते । तत्रादावश्वमेधविधिप्रशंसां दर्शयति । "प्रजापतिः प्रजाः सृष्ट्वा प्रेणानुप्राविशत् । ताभ्यः पुनः सम्भवितुं नाशक्नोत् । सोऽब्रवीत् । ऋध्नवदित्सः । यो मेतः पुनः सम्भरदिति । तन्देवा अश्वमेधेनैव समभरन् । ततो वै त आर्ध्नुवन् । योऽश्वमेधेन यजते । प्रजापतिमेव सम्भरन् स्रुध्नोति" इति । पुरा 'प्रजापतिः', 'प्रजाः सृष्ट्वा', तासु प्रजासु 'प्रेणा' प्रेम्णा, अनुप्रविश्य 'पुनः', 'ताभ्यः' प्रजाभ्यः सकाशात्, 'सम्भवितुं' स्वेन रूपेणाविर्भवितुम्, अशक्तः सन्निदं 'अब्रवीत्', 'यः' कश्चित्, मां 'इतः' प्रजासमूहात्, 'पुनः', अपि 'सम्भरत्' स्वेन रूपेण सम्भृतं करोति । 'सऋध्नवदित्' समृद्धिं प्राप्नोत्येवेति । 'ततो देवाः', अश्वमेधानुष्ठानेनैव 'तं' प्रजापतिं, पुनः सम्भृतं कृत्वा स्वयमृद्धिं प्राप्ताः ततोऽन्योऽपि 'अश्वमेधेन', इष्ट्वा 'प्रजापतिमेव', सम्पाद्य समृद्धिं प्राप्नोति ॥

(२) अथ पशुविधिषु मनुष्यविधिं प्रशंसति । "पुरुषमालभते । वै राजो वै पुरुषः । विराजमेवालभते । अथो अन्नं वै विराट् अन्नमेवावरुन्धे" इति । सोमाय स्वराज्ञेऽनोवाहाविंत्यनुवाके वैराजो पुरुषोति विराड्देवताका मनुष्यस्त्री पशुत्वेनाम्नाता, तदत्र 'पुरुषमालभते' इत्युच्यते, मनुष्यजातिमालभत इत्युच्यते । मनुष्यजातिमालभत इत्यर्थः । मनुष्य-

शरीरस्य विराट्पुरुषशरीरसमानाकारत्वादयं 'वैराजः'। अतो 'विराजमेव', आलब्धवान् भवति। अपि चान्नस्यापि विराट्शब्दाभिधेयत्वात्, 'अन्नं', अपि प्राप्नोति ॥

(३) अश्वविधिं प्रशंसति। "अश्वमालभते। प्राजापत्यो वा अश्वः। प्रजापतिमेवालभते। अथो श्रीर्वा एकशफम्। श्रियमेवावरुन्धे" इति। प्रजापतिजन्यत्वात् 'अश्वः', 'प्राजापत्यः', तदालम्भेन 'प्रजापतिमेव', आलब्धवान भवति। अपि च 'एकशफं' अश्वाश्वतरगर्दभरूपं, श्रीस्वरूपं धनिकानां गृहेषु मनुष्यधनादिवहनायाश्वादीनां दर्शनात्। तस्मात् 'श्रियमेव', प्राप्नोति ॥

(४) गोविधिं प्रशंसति। "गामालभते। यज्ञो वै गौः। यज्ञमेवालभते। अथो अन्नं वै गौः। अन्नमेवावरुन्धे" इति। द्वे धेनू भौमी इत्यादौ पशुत्वेन गौर्विहिता, सा च यज्ञनिष्पादकत्वात् यज्ञस्वरूपा, अतो गवालम्भेन यज्ञ एवालब्धो भवति। अपि च क्षीरादिद्वारेणान्नत्वात् 'अन्नमेव', प्राप्नोति ॥

(५) अजविधिमविविधिञ्च प्रशंसति। "अजावी आलभते भूम्ने। अथो पुष्टिर्वै भूमा। पुष्टिमेवावरुन्धे" इति। अग्नयेऽनीकवत इत्यनुवाके आग्नेयः कृष्णाजः सारस्वती मेषाव्यजाव्योः पशुत्वमाम्नातं। तदालम्भो 'भूम्ने' बाहुल्याय, सम्पद्यते। तस्मात् द्वौ त्रीनजा जनयत्यथावयो भूयसो इति बाहुल्यसम्भावनायाः श्रुतत्वात्। अपि च बाहुल्यस्य पुष्टिरूपत्वात् 'पुष्टिमेव', प्राप्नोति ॥

(६) उत्सर्गविधिं प्रशंसति। "पर्यग्निकृतं पुरुषञ्चारण्यांश्चो-त्सृजन्त्यहिंसायै" इति। यद्यप्यारण्योत्सर्ग एवान्यत्राम्नातो न तु पुरुषोत्सर्गः। तथाप्यप्राप्तांशे विधित्वं प्राप्तांशस्य त्वनुवादेन प्रशंसेति सर्वत्र द्रष्टव्यं॥

(७) अथ मिलित्वा सङ्घस्य प्रशंसति। "उभौ वा एतौ पशू आलभ्येते। यश्चावमो यश्च परमः। तेऽस्योभये यज्ञे बद्धाः। अभीष्टा अभिप्रीताः। अभिजिता अभिहुता भवन्ति" इति। अत्रोक्तेषु पुरुषमालभत इत्यारभ्याजावी आलभत इत्यन्तेषु पशुषूत्तमाधमाभावो विद्यते। पुरुषः सर्वोत्तमः। तदपेक्षया-श्वोधमः। अश्वापेक्षया गौरधमा। गवापेक्षया अजावी अधमौ। एवं योऽधमो 'यश्च परमः', तौ 'उभौ पशू', 'आलभ्येते'। 'अस्य' यजमानस्य, 'यज्ञे', उभयविधाः ते सर्वे पशवः, 'बद्धाः' नियोजिताः। ते च देवतानां 'अभीष्टाः' अपेक्षिताः, अतएव 'अभिप्रीताः' अत्यन्तप्रीतिविषयाः। 'अभिजिताः' एव वशीकृताः। 'अभिहुताः' देवार्थमग्नौ प्रक्षिप्ता भवन्ति॥

(८) अश्वमेधानुष्ठानं तद्वेदनञ्च प्रशंसति। "नैनं दङ्क्ष्णवः पशवो यज्ञे बद्धाः। अभीष्टा अभिप्रीताः। अभिजिता अभिहुता हिंसन्ति। योऽश्वमेधेन यजते। य उ चैनमेवं वेद" इति। 'एनं' अश्वमेधयाजिनं, अश्वमेधवेदिनञ्च, 'दङ्क्ष्णवः' स्वभावतो दंशनशीला अपि, 'पशवः', नियोजनादिक्रियाविषयाः सन्तोऽपि 'न हिंसन्ति'॥

इति अष्टमोऽनुवाकः।

अथ नवमोऽनुवाकः।

(१) अष्टमेऽश्वमेधस्य तत्पशूनाञ्च प्रशंसाऽभिहिता। नवमे तु त्रिरात्रस्योत्तमेऽहनि पशवोऽभिधीयन्ते। तत्रादौ तावत् प्रथमद्वितीये अहनी प्रशंसति। "प्रथमेन वा एष स्तोमेन राध्वा। चतुष्टोमेन कृतेनायानामुत्तरेऽहन्। एकविंशे प्रतिष्ठायां प्रतितिष्ठति" इति। एषोऽश्वमेधयाजी 'प्रथमेन', अह्ना 'राध्वा' समृद्धिं प्राप्य, 'उत्तरेऽहन्' द्वितीयेऽहनि, 'प्रतितिष्ठति', इति। कीदृशेन प्रथमेन, 'स्तोमेन' स्तोत्रयुक्तेन, 'चतुष्टोमेन' त्रिवृत्पञ्चदशसप्तदशैकविंशाख्यैश्चतुर्भिस्तोमैर्युक्तेन। तत्र दृष्टान्तः। 'आयानां' कालानां मध्ये, 'कृतेन' कृतयुगेनेव, यथा कृतयुगञ्चतुर्भिर्धर्मपादैर्युक्तं। एवमिदं प्रथममहश्चतुर्भिस्तोमैर्युक्तमित्यर्थः। कीदृश उत्तरे, 'एकविंश' एकविंशस्तोमयुक्ते, अतएव 'प्रतिष्ठायां' प्रतिष्ठाहेतौ॥

(२) अथ तस्मिन् द्वितीयेऽहनि पृष्ठस्तोत्रे शाक्वरं साम विधत्ते। "एकविंशात् प्रतिष्ठाया ऋतूनन्वारोहति। ऋतवो वै पृष्ठानि। ऋतवः संवत्सरः। ऋतुष्वेव संवत्सरे प्रतिष्ठाय। देवता अभ्यारोहति। शक्वरयः पृष्ठं भवन्त्यन्यदन्यच्छन्दः। अन्येऽन्ये वा एते पशव आलभ्यन्ते। उतेव ग्राम्याः। उतेवारण्याः। अहरेव रूपेण समर्धयति। अथो अह्न एवैष बलिर्ह्रियते" इति। यदिदमेकविंशस्तोमयुक्तं प्रतिष्ठाकारणं द्वितीयमहः। तत्सकाशादयं ऋत्वभिमानिदेवान् प्राप्नोति। पृष्ठस्तोत्राण्यत्र ऋतुप्राप्तिहेतुत्वात् 'ऋतवः', इत्युच्यन्ते। तैर्ऋतुभिः

साध्यत्वात् 'संवत्सरः', ऋत्वात्मकः, अतोऽयं पृष्ठस्तोत्रबलादृत्वात्मके 'संवत्सरे', प्रतिष्ठां प्राप्य 'तद्देवताः', प्राप्नोति। तस्मिन् पृष्ठस्तोत्रे 'शक्वर्यः भवन्ति', शाक्वरं साम गातव्यं सामाधारभूतास्वृक्षु, 'अन्यदन्यत् छन्दो', भवति, न त्वेकच्छन्दस्काः सर्वा ऋचः, यस्मात् 'एते पशवः', नानाविधाः 'आलभ्यन्ते', केचित् 'ग्राम्याः', केचित् 'आरण्याः', चेति तस्मात् पशुवच्छन्दसां नानाविधत्वं युक्तं। तेन च नानाविधत्वेनेदं द्वितीयं 'अहरेव', स्वरूपेण समृद्धं कृतं भवति, अपि च तस्मादह्न एव सकाशात् 'एष बलिर्ह्रियते'। इयं लोकप्रसिद्धा पूजा यजमानस्य सम्पद्यते॥

(३) अथ तृतीयेऽहनि पशुविशेषान्विधत्ते। "तदाहुः। अपशवो वा एते। यदजावयश्चारण्याश्च। एते वै सर्वे पशवः। यद्गव्या इति। गव्यान् पशूनुत्तमेऽहन्यालभते। तेनैवोभयान् पशूनवरुन्धे" इति। तत्र पशुविषये रहस्याभिज्ञा एवं 'आहुः', अजजातीया अविजातीयाः 'आरण्याश्च', ये सन्ति, ते मुख्याः पशवो न भवन्ति। किन्तु ये गोजातीयाः 'एते', एव 'सर्वपशवः', सर्वपशुस्थाने प्रयोक्तव्या इति। तस्मात् 'उत्तमेऽहनि', गोजातीयान् 'पशून्,' 'आलभते', 'तेनैव' गवालम्भनेन, ग्राम्यानारण्यांश्च 'उभयान्', प्राप्नोति॥

(४) गव्यानां पशूनां देवतां विधत्ते। "प्राजापत्या भवन्ति। अनभिजितस्याभिजित्यै" इति। सर्वेषां प्राजापत्यत्वे सति प्रजापत्यनुग्रहात् पूर्वमवशीकृतमपि राष्ट्रं वशीकृतं भवति॥

(५) अथ चिराश्चयमाने पशून् विधत्ते। "सौरीर्नव श्वेता

वशा अनूबन्ध्या भवन्ति। अन्नत एव ब्रह्मवर्चसमवरुन्धे" इति। सूर्यदेवताका नवसङ्ख्याकाः श्वेतवर्णा बन्ध्या गावोऽनूबन्ध्याख्यपशवः। कर्त्तव्याः। तेनाश्वमेधस्य 'अन्नत एव', काले 'ब्रह्मवर्चसं', प्राप्नोति॥

(६) अनूबन्ध्यानन्तरं पश्वन्तराणि विधत्ते। "मासाय स्वराड्जोऽनोवाहावनड्वाहाविति द्वन्द्विनः पशूनालभते। अहोरात्राणामभिजित्यै" इति। मासायेत्यनुवाके द्विवचनान्तैः शब्दैरभिहिताः 'द्वन्द्विनः', तदालम्भेनाहोरात्राभिजयो भवति॥

(७) द्वन्द्विभ्य ऊर्ध्वं पश्वन्तराणि विधत्ते। "पशुभिर्वा एष व्यधत्ते। योऽश्वमेधेन यजते। छगलं कल्माषं किकिदीविं विदीगयमिति त्वाष्ट्रान् पशूनालभते। पशुभिरेवात्मानं समर्धयति" इति। अश्वमेधयाजी बहुपशुमारणात् 'पशुभिः', वियुक्तो भवति। अतः पशुसमृद्धये त्वष्टृदेवताकान् पशूनालभेत। त्वष्टा हि रूपनिर्माता पशून् सम्पादयति। 'छगलः' छागार्भकः, 'कल्माषः' कृष्णविन्दुमान्, 'किकिदीविः' तित्तिरिः, 'विदीगयः' श्वेतबकः, एते चैकादश प्रातर्गव्याः पशव आलभ्यन्त इत्यनुवाके समाम्नाताः॥

(८) पश्वन्तराणि विधत्ते। "ऋतुभिर्वा एष व्यृध्यते। योऽश्वमेधेन यजते। पिशङ्गास्त्रयो वासन्ता इत्यृतुपशूनालभते। ऋतुभिरेवात्मानꣳ समर्धयति" इति। अश्वमेधयाजिनः संवत्सरकालं नियमे वर्त्तमानस्य तत्तदृतुप्रयुक्तभोगाभावात् 'ऋतुभिः', वियोगो भवति तत्परिहाराय पिशङ्गा इत्याद्यनुवाको-

कानृतुदेवताकान् 'पशूनालभते'। ततस्तुष्टैः 'ऋतुभिरात्मानं', समृद्धं करोति ॥

(८) तेषामुत्सर्गं विधत्ते। "आ वा एष पशुभ्यो वृश्च्यते। योऽश्वमेधेन यजते। पर्य्यग्निकृतानुत्सृजन्त्यनाव्रस्काय" इति। अश्वमेधयाजी बहुपशुमारणात् 'पशुभ्यः', विच्छिद्यते। तत्परिहाराय पर्य्यग्निकरणानन्तरं उत्सृजेत्। 'अनाव्रस्काय' अविच्छेदाय, इत्यर्थः ॥

इति नवमोऽनुवाकः।

---

अथ दशमोऽनुवाकः।

(१) नवमे गव्यादयः पशवोऽभिहिताः। दशमे महिमानाख्यौ ग्रहावुच्येते। तावेतौ विधत्ते। "पशुभिर्वियुक्तो भवति। अतः पशुसमृद्धये त्वष्टृदेवताकान् पशूनालभेत। त्वष्टा हि रूपनिर्माता। प्रजापतिरकामयत महानन्नादः स्यामिति। स एतावश्वमेधे महिमानावपश्यत्। तावगृह्णीत। ततो वै स महानन्नादोऽभवत्। यः कामयेत महानन्नादः स्यामिति स एतावश्वमेधे महिमानौ गृह्णीत महानेवान्नादो भवति" इति। पुरा कदाचित् 'प्रजापतिः', ऐश्वर्यादिभिर्गुणैः 'महान्', रोगाभावेन यथेच्छं, 'अन्नादः', च 'स्यामिति', कामयित्वा तत्साधनं 'महिमानाख्यौ', ग्रहौ निश्चित्य 'तौ', गृहीत्वा 'महान्', 'अन्नादः', च 'अभवत्'। ततोऽन्योऽपि 'तौ', गृहीत्वा तथा भवति ॥

(२) तद्ग्रहणे प्रकारस्य सूत्रकारेण स्पष्टीकृतः। अन्तरेणा-ग्रयणोक्थ्यौ प्राकृतꣳसोमग्रहमभिपृत्य यः प्राणता य आत्मदा इति महिमानौ गृह्णाति राजतेन पूर्वमौवर्णेनोत्तरमिति। तयोर्ग्रहयोर्यागं विधत्ते। "यजमानदेवत्या वै वपा। राजा महिमा। यद्वपां महिम्नोभयतः परियजति। यजमानमेव राज्येनोभयतः परिगृह्णाति" इति। वपाया यजमानवन्मुख्य-त्वात् तद्देवत्यत्वं महिमाख्ययोर्ग्रहयोर्महत्त्वयोगाद्राजत्वं, तस्मात 'वपां', अभितः पुरस्तात् पश्चाच्च 'महिम्ना', ग्रहेण यजेत्। तेन 'यजमानमेव', 'उभयतः' इहलोके परलोके च, राज्ययुक्तं करोति॥

(३) तमेवं महिमयागं पुनः प्रशंसति। "पुरस्तात् स्वाहा-कारा वा अन्ये देवाः उपरिष्टात् स्वाहाकारा अन्ये। ते वा एते-ऽस्य एव मेध्य उभयेऽवरुध्यन्ते। यद्वपां महिम्नोभयतः परिय-जति। तानेवोभयान् प्रीणाति" इति। प्रकृतौ स्वाहा देवे-भ्यो देवेभ्यः स्वाहेत्यभितो वपां जुहोति इति 'पुरस्तात्स्वा-हाकारोपरिष्टात्स्वाहाकाराः', च द्विविधाः 'देवाः', उक्ताः, 'ते' द्विधा, अत्रापि यागयोगे 'अस्य', प्राप्यन्ते। अतएव सूत्रकारेणोक्तं, पूर्वाय चित्यावप्यमहिमानौ जुहोति। एवं सति वपायाः 'उभयतः', महिमायोगेन द्विविधानपि देवान् 'प्रीणयति'॥

इति दशमोऽनुवाकः।

अथ एकादशोऽनुवाकः ।

(१) दशमे महिमानाख्यौ ग्रहावुक्तौ। एकादशे शरीर-होमाः स्विष्टकृदाहुतयश्चोच्यन्ते। यदुक्तं सूत्रकारेण। हविषा प्रचर्याज्यमवदानं कृत्वा" स्तेगान्दंष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरि-त्येतैश्चतुर्दशभिरनुवाकैः प्रतिमन्त्रं शरीरहोमार्थं जुहोति। दिवाकीर्त्यं पञ्चदशमिति तत्र शरीरहोमान् विधत्ते। "वैश्वदेवो वा अश्वः। तं यत् प्राजापत्यङ्कुर्यात्। या देवता अपि भागास्ता भागधेयेन व्यर्धयेत्। देवताभ्यः समदं दध्यात्। स्तेगान्दंष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरिति। आज्यमवदानं कृत्वा प्रतिमख्यायमाहुतीर्जुहोति। या एव देवता अपि भागाः। ता भागधेयेन समर्धयति। न देवताभ्यः समदन्दधाति" इति। अयं 'अश्वः', 'वैश्वदेवः' सर्वदेवसाधारणः। अश्वे वै सर्वा देवता अन्वायत्ता इत्युक्तत्वात्। तादृशमश्वं यदि प्रजा-पतिदेवताकमेव 'कुर्यात्'। तदानीमस्मिन् 'या देवताः', 'अपि भागाः' सम्भावितभागार्थाः, 'ताः' सर्वाः, देवताहोम-रहितत्वात् स्वभागेन वियोजिताः स्युः। तदानीं प्रजापतेर-न्यासां देवतानाञ्च परस्परं 'समदं' कलहं, सम्पादयेत्, मदेन सह वर्तत इति समदः कलहः, अतस्तत्परिहारायाज्यद्रव्य-मवदाय विस्मृतीपरिहाराय प्रतिमन्त्रं गणयित्वा स्तेगानि-त्याद्यनुवाकोक्तमन्त्रैः 'आहुतीः', जुहुयात्। ततः सम्भावित-भागा देवताः तत्तद्भागेन समृद्धाः करोति। तेन च देव-तानां परस्परं कलहं 'सम्पादयति। स्तेगान्दंष्ट्राभ्यामित्यक्तो

मन्त्रः। मण्डूकाञ्जम्भ्येभिरिति द्वितीयो मन्त्रः। एवं प्रतिमन्त्रं हस्तेन गणयेत्॥

(२) अनुवाकसङ्ख्यां विधत्ते। "चतुर्दशैताननुवाकान् जुहोत्यनन्तरित्यै" इति। स्तेगानित्यारभ्य क्रमैरत्यक्रमीदित्यन्ताश्चतुर्दशानुवाकाः। अयञ्च होमः सर्वासां देवतानामन्तरायराहित्याय भवति॥

(३) आरण्यकाण्डोक्तमनुवाकान्तरं विधत्ते। "प्रयासाय स्वाहेति पञ्चदशं। पञ्चदश वा अर्धमासस्य रात्रयः। अर्धमासशः संवत्सर आप्यते" इति। पञ्चदशरात्रीणामर्द्धमासत्वाच्चतुर्विंशत्यर्द्धमासस्य संवत्सरत्वाच्च तदर्धमासद्वारा संवत्सरप्राप्तिः॥

(४) अथ स्विष्टकृदाहुतीर्विधत्ते। "देवासुराः संयत्ता आसन्। तेऽब्रुवन्नग्नयः स्विष्टकृतः। अश्वस्य मेधस्य वयमुद्धारमुद्धरामहै। अथैतानभिभवामेति। ते लोहितमुदहरन्त। ततो देवा अभवन्। पराऽसुराः। यत् स्विष्टकृद्भ्यो लोहितं जुहोति भ्रातृव्याभिभूत्यै। भवत्यात्मना। परास्य भ्रातृव्यो भवति" इति। देवेष्वसुरेषु च युद्धार्थमुद्युक्तेषु 'ते स्विष्टकृतः', 'अग्नयः', देवाः इतरदेवान् प्रत्येवं 'अब्रुवन्', यागयोग्यस्य 'अश्वस्य' सम्बन्धिनं 'उद्धारं' सर्वदेवसाधारणेभ्यो भागेभ्य उत्कर्षेण हरणीयं भागं, अश्वादुद्धृत्य 'वयं', सम्पादयामः, अनन्तरं 'एतान्' असुरान्, अभिभवितुं शक्नुमः। 'इति' तथोक्त्वा, 'ते' अग्नयः, अश्वस्य सकाशात् 'लोहितं' लोहितं, 'उदहरन्त'। 'ततो देवाः', विजयिनो 'अभवन्'। 'असुराः परा-

भूताः। एवमन्योपि यजमानः 'स्विष्टकृद्भ्यः' अग्निभ्यः, अश्वस्य 'लोहितं','जुहोति', चेत् स होमः शत्रूणामभिभवाय'भवति' ॥

(५) अत्र जुहूस्थाधितुं साधनान्तरं विधत्ते। "गोमृगकण्ठेन प्रथमामाहुतिं जुहोति। पशवो वै गोमृगः*। रुद्रोग्निः स्विष्टकृत्। रुद्रादेव पशूनन्तर्दधाति। अथो यत्रैषा हुतिर्हूयते। न तत्र रुद्रः पशूनभिमन्यते" इति। अश्वं तूवरं गोमृगमित्युक्तेषु मध्ये यो गोमृगः तस्य कण्ठप्रदेशः विशसनकाले पृथगवस्थापनीयः। अतएव सूत्रकारेणोक्तं। प्रजापतयेऽश्वस्य तूवरस्य गोमृगस्यास्थिलोमत्वचमसम्भिन्दतः सूकरविशसनं विशसतेति सम्प्रैषवत् कुर्वन्त्यश्वस्य लोहितं स्विष्टकृदर्थं निदधाति शफं गोमृगकण्ठञ्चेति। तेन 'गोमृगकण्ठेन', प्रथमा स्विष्टकृदाहुतिर्होतव्या। गोमृगस्य पशुरूपत्वात् स्विष्टकृदग्नेस्योग्रत्वेन रुद्ररूपत्वात् अनेन कण्ठहोमेन तस्मात् 'रुद्रात्', सर्वान् 'पशून्', अन्तर्हितान् करोति। अपि च यस्मिन् देशे 'एषा' स्विष्टकृदाहुतिः 'हूयते', तस्मिन् देशे पशून् रुद्रो न हिनस्ति ॥

(६) द्वितीयाहुतेः साधनान्तरं विधत्ते। "अश्वशफेन द्वितीयामाहुतिं जुहोति। पशवो वा एकशफं। रुद्रोग्निः स्विष्टकृत्। रुद्रादेव पशूनन्तर्दधाति। अथो यत्रैषाऽऽहुतिर्हूयते। न तत्र रुद्रः पशूनभिमन्यते" इति। 'एकशफं' अश्वशरीरं। अन्यत् पूर्ववद्व्याख्येयं ॥

* वै मृगः इति A पुस्तकपाठः।

(७) तृतीयाहुतेः साधनान्तरं विधत्ते। "अयस्मयेन कमण्डलुना तृतीयां। आहुतिं जुहोत्यायास्यो वै प्रजाः। रुद्रोऽग्निः स्विष्टकृत्। रुद्रादेव प्रजा अन्तर्दधाति। अथो यत्रैषाहुतिर्जुह्वते। न तत्र रुद्रः प्रजा अभिमन्यते" इति। 'अयस्मयेन' आयसलोहेन निर्मितः कमण्डलुरयस्मयः, अयास्यनामकेन महर्षिणा सृष्टत्वात् प्रजा 'आयास्य' आख्याः, अन्यत् पूर्ववद्व्याख्येयं॥

इति एकादशोऽनुवाकः।

---

अथ द्वादशोऽनुवाकः।

(१) एकादशे शरीरहोमाः स्विष्टकृद्धोमाश्चाभिहिताः। द्वादशे तदुभयहोममध्यवर्त्तिनोऽश्वस्तोमीयहोमा उच्यन्ते। तमिमं विधत्ते*। "अश्वस्य वा आलब्धस्य मेध उदक्रामत्। तदश्वस्तोमीयमभवत्। यदश्वस्तोमीयं जुहोति। समेधमेवैनमालभते" इति। योयमश्व आलब्धः तस्य सम्बन्धी 'मेधः' सारः, 'उदक्रामत्'। स च सारः 'अश्वस्तोमीयनामकं', मन्त्रजातं 'अभवत्'। अश्वस्य स्तुतिर्येषु-यदक्रन्द इत्यादिषु त्रिष्वनुवाकेषु श्रूयते। तेऽनुवाका अश्वस्तोमाः तेषु श्रूयमाणं मन्त्रजातं 'अश्वस्तोमीयं', तद्धोमेन सारसहितमेवाश्वमालब्धवान् भवति॥

(२) तत्र द्रव्यं विधत्ते। "आज्येन जुहोति। मेधा वा आज्यं मेधोऽश्वस्तोमीयं। मेधेनैवास्मिन् मेधं दधाति" इति। द्रव्यमन्त्रयोः सारत्वात् तेनैव सारेण यजमाने सारं सम्पादयति॥

---

* तानिमान् विधत्ते इत्युचितं।

(३) मन्त्रसङ्ख्यां विधत्ते। "षट्त्रिꣳशतं जुहोति। षट्त्रिꣳशतं जुहोति। षट्त्रिꣳशदक्षरा बृहती। बार्हताः पशवः। सा पशूनां मात्रा। पशूनेव मात्रया समर्धयति" इति। यद्यपि यदक्रन्द इत्याद्यनुवाकेषु ऋचः पञ्चत्रिंशद्देवताम्नाताः। तथापि क्रमैरत्यक्रमीदित्यनेन षट्त्रिंशत्सङ्ख्या पूरणीया। अत एव सूत्रकार आह। 'क्रमैरत्यक्रमीदित्येतां षट्त्रिंशमिति बृहतीच्छन्दसोऽक्षराणां षट्त्रिंशत्सङ्ख्या,पशवश्च तेन छन्दसा लभ्यत्वात् 'बार्हताः', अतः सा सङ्ख्या 'पशूनां', 'मात्रा' प्रमाणं, ततः षट्त्रिंशन्मन्त्रहोमेन 'पशून्', सर्वान् स्वयोग्येन प्रमाणेन,'समर्धयति' ॥

(४) तासामाहुतीनां न्यूनाधिकसङ्ख्यानिराकरणेन पूर्वोक्तां सङ्ख्यां प्रशंसति। "स यद्भूयसीर्वा कनीयसीर्वा जुहुयात्। पशून् मात्रया व्यर्धयेत्। षट्त्रिꣳशत् जुहोति। षट्त्रिꣳशदक्षरा बृहती। बार्हताः पशवः। सा पशूनां मात्रा। पशूनेव मात्रया समर्धयति" इति। पूर्ववद्व्याख्येयं ॥

(५) इमानुकमित्यादीनां द्विपदामृचां होमं विधत्ते। "अश्वस्तोमीयं हुत्वा द्विपदा जुहोति। द्विपाद्वै पुरुषो द्विप्रतिष्ठः। तदेनं प्रतिष्ठया समर्धयति" इति। द्वौ पादौ यस्या ऋचः सा 'द्विपदा'। तादृश्यस्तिस्र ऋचो जुहुयात्। ता ऋचः सूत्रकार उदाजहार। इमानुकं भुवनासीषधेमेति द्विपदा अन्ततो हुत्वेति। एतास्त्वारण्यकाण्डे समाम्नाताः। पुरुषस्य पादद्वयोपेतत्वात् द्वाभ्यामेव पादाभ्यां स्थैर्येण प्रतिष्ठातुं शक्यत्वात् च 'एनं' यजमानं, तेन होमेन प्रतिष्ठापयति ॥

(६) अत्र विचारेण होमयोः पौर्वापर्यं निश्चिनोति। "तदाहुः। अश्वस्तोमीयं पूर्वं होतव्यं द्विपदा इति। अश्वो वा अश्वस्तोमीयं। पुरुषो द्विपदा। अश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति। तस्मात् द्विपाच्चतुष्पादमत्ति। अथो द्विपद्येव चतुष्पदः प्रतिष्ठापयति" इति। तत्र होमपौर्वापर्यविषये विचारकाः कस्य होमस्य पूर्वत्वं युक्तमित्येवं विचार्याश्वस्तोमीयस्य पूर्वत्वं निश्चिन्वन्ति। तस्याश्वस्तोमीयमन्त्रस्याश्वरूपत्वात् द्विपदानाञ्च पुरुषसम्बन्धेन तद्रूपत्वादश्वस्तोमीयस्य पूर्वभावित्वे सति चतुष्पादमश्वभोग्यं प्रथमतः सम्पाद्य द्विपात् पुरुषो भुङ्क्ते। द्विपदानां पश्चाद्भावित्वेन द्विपदि पुरुषे चतुष्पदः पशून् प्रतिष्ठापयति॥

(७) यथाश्वस्तोमीयहोमादूर्ध्वं द्विपदाहोमः। तथा तद्धोमादप्यूर्ध्वं शरीरहोमादिशङ्कां वारयितुं निषेधति। "द्विपदा हुत्वा नान्यामुत्तरामाहुतिं* जुहुयात्। यदन्यामुत्तरामाहुतिं जुहुयात्। प्र प्रतिष्ठायाः च्यवेत। द्विपदा अन्ततो जुहोति प्रतिष्ठित्यै" इति। द्विपदाहोमादूर्ध्वं स्विष्टकृद्धोमात् पुरा नान्या काचिदाहुतिर्होतव्या, तस्मादुपहोमानामन्ते द्विपदाहुतय एव॥

इति द्वादशोऽनुवाकः।

---

* नान्यामुत्तराहुतिमिति A पुस्तकपाठः।

अथ त्रयोदशोऽनुवाकः ।

(१) द्वादशेऽश्वस्तोमीयहोमोऽभिहितः । त्रयोदशे तु सावित्रमष्टाकपालं प्रातर्निर्वपतीत्याद्यनुवाकोक्तास्विष्टिषु सम्वत्सरानुष्ठानरूपविशेषोऽभिधीयते । यदुक्तं सूत्रकारेण । एवमेतानि सावित्रादीनि सम्वत्सरकर्माणि क्रियन्त इति । तदिदं विधत्ते । "प्रजापतिरश्वमेधमसृजत । सोऽस्मात् सृष्टोऽपाक्रामत् । तं यज्ञक्रतुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविन्दत् । तमिष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत् । तदिष्टीनामिष्टित्वं । यत् संवत्सरमिष्टिभिर्यजते । अश्वमेव तदन्विच्छति" इति । पुरा प्रजापतिः', अश्वमेधसाधनमश्वम् 'असृजत' । 'सः' च 'सृष्टः', अश्वः 'मरणभीत्या प्रजापतेरपाक्रामत्' । 'तं' अपक्रान्तमश्वं, यूपवद्भिः 'यज्ञक्रतुभिः', प्राप्तुमन्वेषणं कृतवान् । बन्धनहेतोर्यूपाद्भीतं 'तं' अश्वं, यूपवद्भिः 'न', आलभत । ततः प्रजापतिर्विचार्य यूपरहिताभिः 'इष्टिभिः' । अन्विष्य लब्धवान् । इष्यते इच्छापूर्वकं लभ्यत आभिरितीष्टिनामसम्पन्नं । तस्माद्दीक्षायाः पूर्वमेकं 'संवत्सरं', निरन्तरं 'इष्टिभिर्यजते' । तेन 'अश्वं', अन्विष्य लभते ॥

(२) तास्विष्टिषु देवतां प्रशंसति । "सावित्रियो भवन्ति । इयं वै सविता । यो वा अस्यां नश्यति यो निलयते । अस्यां वाव तं विन्दन्ति । न वा इमां कश्चनेत्याहुः तिर्यङ्ङूर्ध्वोऽत्येतुमर्हतीति । यत् सावित्रियो भवन्ति । सवितृप्रसूत एवैनमिच्छति" इति । तिस्रोऽपीष्टयः सवितृदेवताकाः । तथा च

पूर्वप्रपाठके समाम्नातं। सावित्रमष्टाकपालं प्रातर्निर्वपति। सवितृप्रसवित्र एकादशकपालं मध्यन्दिने। सवित्र आसवित्रे द्वादशकपालमपराह्ने इति। तासु यः सविता देवः सोऽयं भूमिस्वरूपः। तत् कथमिति तद्देवोपपाद्यते। 'यः' कश्चित् पदार्थो भूम्यां 'नश्यति' पलाय्य दृष्टिगोचरतां न प्राप्नोति, 'यः', च 'निलयते' स्वदेश एव नोलोनो भवति। अतएव रथ्यादौ सुरक्षितस्तिष्ठति। तिर्यग्देहो गवादिर्वा ऊर्ध्वदेहो मनुष्यो वा तत् सर्वं नष्टं विलीनञ्च पुनरन्विष्य भूम्यामेवा-लभते। 'कश्चिदपि', 'तिर्यक्', 'इमां' भूमिं, 'अत्येतुं', 'नार्हति', कश्चिदप्यूर्ध्वदेहो मनुष्यः 'इमां' भूमिं, 'अत्येतुं', ना-र्हतीति', एवमभिज्ञाः 'आहुः'। तस्माद्भूमिस्वरूपः सवितृदेव-ताकास्विष्टिषु कृतासु तेन सवित्रानुज्ञात एव सन् 'एनं' अश्वं, भूम्यां 'इच्छति' प्राप्नोति॥

(३) पूर्वप्रपाठके विहितं सायन्धृतीर्होममनूद्य प्रशंस-ति। "ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः। यत् सायन्धृतीर्जुहोति। अश्वस्य 'यत्यै धृत्यै" इति। योऽयं मंत्-त्सरमात्रं स्वेच्छासञ्चारार्थमुत्सृष्टः 'अश्वः', सोऽयं 'परां परावतं' अत्यन्तं दूरं गन्तुं समर्थः। तस्मादिह धृतिः स्वाहेत्यादिभिः सायन्धृतिभिराहुतिभिरश्वः क्वचिन्नियतो धृतो भवति॥

(४) इष्टीर्धृतीश्च पुनः प्रशंसति। "यत् प्रातरिष्टिभिर्यज-ते। अश्वमेव तदन्विच्छति। यत् सायन्धृतीर्जुहोति। अश्वस्यैव यत्यै धृत्यै। तस्मात् सायं प्रजाः क्षेम्या भवन्ति" इति। याः

'प्रातरिष्टयः', ताभिः, अश्वो लभ्यते। याः 'सायन्धृतयः', ताभिः, अश्वः क्वचिद्रक्षकाणां निवासगृहे नियतो धृतो भवति। यस्मादेवं 'तस्मात्', लोकेपि 'प्रजाः', सायङ्काले गोमहिषादीन् स्वगृहेषु बध्वा 'क्षेम्याः' क्षेमयोग्याः, न क्वापि गवादयो गता इत्येवं निश्चिता भवन्ति॥

(५) इष्टिं पुनः प्रशंसति। "यत् प्रातरिष्टिभिर्यजते। अश्वमेव तदन्विच्छति। तस्माद्दिवा नष्टैष एति" इति। यस्मादश्वान्वेषणार्था इष्टयो दिवा प्रातःकाले क्रियन्ते। 'तस्मात्', लोकेपि 'नष्टैषः' नष्टस्य गवादेरन्वेष्टा पुरुषः, दिवैवान्वेषणार्थं सञ्चरति॥

(६) पुनरपि मिलित्वा प्रशंसति। "यत् प्रातरिष्टिभिर्यजते। सायन्धृतीर्जुहोति। अहोरात्राभ्यामेवैनमन्विच्छति। अथो अहोरात्राभ्यामेवास्मै योगक्षेमं कल्पयति" इति। कालद्वयेऽनुष्ठानादहोरात्रयोरन्वेषणसाधनत्वं। अत एव 'अस्मै' यजमानाय, 'अहोरात्राभ्यां', योगक्षेमकल्पनं अलब्धस्य लाभो योगः। लब्धस्य रक्षणं क्षेमः॥

इति त्रयोदशोऽनुवाकः।

---

अथ चतुर्दशोऽनुवाकः।

(१) त्रयोदशे संवत्सरगतानुष्ठानमिष्टीनां विहितं। तास्विष्टिषु गानं चतुर्दशेऽभिधीयते। तदेतद्विधत्ते। "अप वा एतस्माच्छ्री राष्ट्रं क्रामति। योऽश्वमेधेन यजते। ब्राह्मणौ वी-

णागाथिनौ गायतः। श्रिया वा एतद्रूपं। यद्वीणा। श्रिय-मेवास्मिन् तद्धत्तः। यदा खलु वै पुरुषः श्रियमश्नुते। वी-णास्मै वाद्यते" इति। नियमं स्वीकृतवतो राज्ञः चिरकालं राजोपचाराभावेन 'श्रीरस्मात्', अपगच्छति, क्रतुसमाप्तिपर्यन्तं अध्वर्योरेव राजत्वात्। 'राष्ट्रं', अपि 'अस्मात्', अपगच्छति। तदुभयपरिहारार्थं वीणया गातुं कुशलौ द्वौ ब्राह्मणौ गा-येतां। 'वीणा', हि 'श्रियाः', स्वरूपं तस्मादन्यस्मिन् राज्ञि तौ 'श्रियं', एव सम्पादयतः। वीणायाः श्रीरूपत्वं लोके प्रसिद्धं। दरिद्रोऽपि यदा श्रियं प्राप्नोति तदानीमस्य सुखार्थं गाय-कैर्वीणा वाद्यते॥

(२) अत्र ब्राह्मणद्वयपक्षं दूषयित्वा द्वितीयगायकं क्षत्रियं विधत्ते। "तदाहुः। यदुभौ ब्राह्मणौ गायताम्॥१॥ प्रभ्रंशुु-कास्माच्छ्रीः स्यात्। न वै ब्राह्मणे श्रीरमत इति। ब्राह्मणो-ऽन्यो गायत्। राजन्योऽन्यः। ब्रह्म वै ब्राह्मणः। क्षत्रं रा-जन्यः। तथा हास्य ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परि-गृहीता भवति" इति। ब्राह्मणयोरेव गाने 'श्रीः', भ्रष्टा स्यात्। ब्राह्मणो हि तपःस्वाध्यायादौ प्रवृत्तः श्रियं पालयितुं न क्षमते। तस्मादेको 'ब्राह्मणः', इतरो 'राजन्यः', च 'गायत्',। तत्र 'ब्राह्मणः', ब्रह्ममन्त्रात्मकः, 'राजन्यः', क्षत्रबलात्मकः, तथा सति ब्राह्मणो मन्त्रसामर्थ्येन क्षत्रियः शौर्य्येण चोभयेनापि प्रकारेण च 'श्रीः', स्वीकृता भवति॥

(३) अथ कालविशेषं विधत्ते। "तदाहुः। यदुभौ दिवा

गायेताम्। अपास्माद्राष्ट्रं क्रामेत्॥ २ ॥ न वै ब्राह्मणे राष्ट्रꣳ रमत इति। यदा खलु वै राजा कामयते। अथ ब्राह्मणं जिनाति। दिवा ब्राह्मणो गायेत्। नक्तꣳ राजन्यः। ब्रह्मणो वै रूपमहः। क्षत्रस्य रात्रिः। तथा ह्यस्य ब्रह्मणा च क्षत्रेण चोभयतो राष्ट्रं परिगृहीतं भवति" इति। तत्र गानविषये केचिदभिज्ञा एवं 'आहुः', ब्राह्मणराजन्यौ 'उभौ' अपि 'दिवा', यदि 'गायेतां', तदानीं रात्रौ रक्षकाभावात् राष्ट्रं 'अस्मात्' यजमानात्, भ्रश्येत। तत्रेयमुपपत्तिः। अह्नः प्रथमभावित्वात् तत्र गानकर्तृत्वं ब्राह्मणस्य मुख्यं नहि ब्राह्मणे राष्ट्रं क्रीडते कुत एतदिति चेत् उच्यते। ब्राह्मणे राष्ट्रं पालयति सति 'यदा', 'राजा', राष्ट्रं मे भूयादिति 'कामयते', तदानीमेव 'ब्राह्मणं', जित्वा तत् स्वाधीनं करोति। अतो ब्राह्मणस्य योग्य एक एव कालो गानस्य न पर्य्याप्त इति द्वयोः कालयोः द्वाभ्यां गातव्यं, तत्रोज्ज्वलत्वाच्च ब्राह्मणस्य 'रूपमहः', अन्धकारावृतत्वाच्चोरादिभययुक्तत्वाच्च रक्षायामधिकृतस्य 'क्षत्रस्य', स्वरूपं 'रात्रिः', तथा कालद्वये गाने सति मन्त्रेण बलेन चोभयविधेन कालद्वये 'राष्ट्रं परिगृहीतं', भवति॥

(४) तत्र दिवसे साविन्त्री सम्बन्धिनः स्विष्टकृतः पुरा ब्राह्मणेन गातव्यमर्थं दर्शयति। "इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेत्। इष्टापूर्त्तं वै ब्राह्मणस्य। इष्टापूर्त्तेनैवैनꣳ समर्द्धयति" इति। इतिशब्दाः प्रकारवाचिनः। हे राजन् त्वमनेन प्रकारेण ब्राह्मणेभ्यो गोभूहिरण्यादिकं दत्त-

वानसि। अनेन प्रकारेण वाजपेयराजसूयद्वादशाहादिभिरिष्टवानसि। अनेन प्रकारेण शाकसूपायसादीन्यनन्तानि ब्राह्मणार्थे पक्कवानसि। एतस्य गातव्यस्यार्थस्योपलक्षणं, ततः 'ब्राह्मणः,' स्वोचितार्थप्रतिपादकैर्गद्यैः पद्यैश्च 'गायेत्'। 'इष्टापूर्त्तं', श्रौतस्मार्त्तं दैवे पित्र्ये वा, 'ब्राह्मणस्य', उचितं। अत ईदृग्गानेन यजमानमिष्टापूर्त्ताभ्यां समृद्धं करोति॥

(५) अथ सायन्धृतिषु क्रियमाणासु राजन्येन गातव्यमर्थं दर्शयति। "इत्यजिना इत्ययुध्यथा इत्यमुꣳ सङ्ग्राममहन्निति राजन्यः। युद्धं वै राजन्यस्य। युद्धेनैवैनꣳ स समर्द्धयति" इति। अत्रापीतिशब्दाः प्रकारवाचिनः। अनेन प्रकारेण पृथुभरतभगीरथयुधिष्ठिरादिभिः सुकृतकर्मभिः समानस्त्वं शत्रून् जितवानसि। अनेन प्रकारेण। करितुरगरथपदातिसमेतशरचापतोमरकरवालादिधारिभिः शूरभटैः परिवृतस्त्वं शत्रुभिः सह युद्धं कृतवानसि। अनेन प्रकारेण युधिष्ठिरदुर्य्योधनादिवत महावीरपुरुषसहस्राधिष्ठितं 'सङ्ग्रामम्', प्राप्य काश्मीरं मागधं पौण्ड्रञ्च राजानं निशितासिमात्रसहायस्त्वं हतवानसि। तदेतद्युद्धविषयमेव गानं राजन्यस्योचितं। अत एव तद्विषयैर्गद्यैस्स राजन्यो गात्। यथा सत्येन राजानं 'युद्धेन', समृद्धं करोति॥

(६) एकैकस्य गीतित्रयं विधत्ते। "अक्लृप्ता वा एतस्यर्त्तव इत्याहुः। योऽश्वमेधेन यजत इति। तिस्रोऽन्यो गायति तिस्रोऽन्यः षट् सम्पद्यन्ते। षड् वा ऋतवः। ऋतूनेवास्मै कल्प-

यते" इति। अश्वमेधयाजिनो राज्ञस्तत्तदृतूचितराजोपचाराभावात् 'ऋतवः', 'अक्लृप्ताः' स्वोचितभोगसमर्था न भवन्ति, इत्यभिज्ञाः 'आहुः', अतस्तत्समाधानाय द्वयोरेकैकः 'तिस्रः', गाथा गायेत्, तथा सति गाथानां षट्सङ्ख्यासम्पत्त्या 'षट्', अपि 'ऋतून्', 'अस्मै' यजमानाय, समर्थान् कुरुते॥

(७) गायकाभ्यां दानं विधत्ते। "ताभ्यां संस्थायां। अनोयुक्ते च शते च ददाति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति" ॥ ४ ॥ इति। 'संस्थायां' यथोक्तगानयुक्तसंवत्सरानुष्ठानस्य समाप्तौ सत्यां, 'अनोयुक्ते' अनसि शकटे बद्धे द्वे गावौ, 'शते च' पुनरपि गवां शतद्वयञ्च। 'ताभ्यां' ब्राह्मणराजन्याभ्यां, दद्यात्। पुरुषस्य शतसंवत्सरपरिमितायुर्योगात् शतसङ्ख्याकनाडीसञ्चारिशतेन्द्रियवृत्तियोगाच्चानयोर्गोशतसङ्ख्या। यजमानः 'आयुष्येन्द्रिये च', 'प्रतितिष्ठति'॥

इति चतुर्दशोऽनुवाकः।

---

अथ पञ्चदशोऽनुवाकः।

(१) चतुर्दशे ब्राह्मणराजन्ययोर्गानमुक्तं। पञ्चदशे लवमृत्युविषया होमविशेषा उच्यन्ते। तं होमं* विधत्ते। "सर्व्वेषु वा एषु लोकेषु मृत्यवोन्वायत्ताः। तेभ्यो यदाहुतीर्न जुहुयात्। लोके लोक एनं मृत्युर्विन्देत्। मृत्यवे स्वाहा मृत्यवे स्वाहेत्यभिपूर्व्वमाहुतीर्जुहोति। लोकाल्लोकादेव मृत्युमवयजते। नैनं लोके लोके मृत्युर्विन्दति" इति। य एतल्लोकाः जना-

---

* तान् होमान् इत्युचितं।

नां निवासस्थानानि तेषु, 'सर्व्वेषु', अपि 'मृत्यवः' मरणहेतवः, व्याघ्रादयः, अपि 'अन्वायत्ताः' अनुप्रविश्य स्थिताः, 'तेभ्यः' मृत्युभ्यः, आहुत्यकरणेनाश्वमेधयाजिनं 'एनं', तत्तत्स्थाने 'मृत्युर्विन्देत्'। तस्मात् तत्परिहाराय सर्व्वान् मृत्युहेतूननु-द्दिश्य प्रत्येकं मृत्यवे स्वाहेत्यनुक्रमेण 'आहुतीर्जुहुयात्'। ताभिराहुतिभिस्तत्स्थानादेव 'मृत्युं', विनाशयति। ततः 'एनं' यजमानं, क्वापि स्थाने 'मृत्युः', न लभते॥

(२) इदानीं मृत्यवे स्वाहेति मन्त्रस्य वीप्सया पूर्व्वोक्तं बह्वाहुतिपक्षं निराकृत्याहुतिपक्षं विधत्ते। "यदमुष्मै स्वाहामुष्मै स्वाहेति जुहुत सञ्चचीत। बहुं मृत्युममित्रं कुर्वीत। मृत्यवे स्वाहेत्येकस्मा एकां जुहुयात्। एको वा अमुष्मिंल्लोके मृत्युः॥१॥ अशनया मृत्युरेव। तमेवामुष्मिंल्लोकेऽवयजते" इति। यदि प्रतिमृत्युहेतुमुद्दिश्य 'अमुष्मै' व्याधिरूपाय मृत्यवे, 'स्वाहा', 'अमुष्मै' दारिद्र्यरूपाय मृत्यवे, 'स्वाहा', 'इति', एवं होमं कुर्व्वाणः पुरुषमात्त्रद्विशयनामाचचीत। तदानीं 'अमित्रं' शत्रुरूपं बाधकं मृत्युं बहुविधं, सम्पादयेत्। ततो बह्वाहुतिपक्षं परित्यज्य मृत्यवे स्वाहेत्येकेनैव मन्त्रेण 'एकस्मै' एव देवाय मृत्युसामान्यरूपिणे, 'एकामेव', आहुतिं 'जुहुयात्'। स्वर्गलोके हि 'मृत्युः', 'एकः', एव कामाविति चेत् उच्यते। सोयं 'अशनया मृत्युः' क्षुधात्मको मृत्युः, स एवैकः नतु ज्वरादयस्तत्र सन्ति। अत एकयाहुत्या स्वर्गलोके 'तमेव' अशनयाक्षुधारूपं मृत्युं, विनाशयति॥

(३) आहुत्यन्तरं विधत्ते। "भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति। भ्रूणहत्यामेवावयजते" इति। त्रिवेदिब्राह्मणः कल्पसहितः स्वशाखाध्यायी वा गर्भो वा 'भ्रूणः'। तस्य हत्याभिमानिन्यै स्वाहुतमिदमस्तु। अनयाहुत्या दोषं विनाशयति॥

(४) इमामाहुतिमाक्षिपति। "तदाहुः। यद् भ्रूणहत्याऽपात्राथ। कस्माद्यज्ञेऽपि क्रियते" इति। तत्र भ्रूणहत्याविषये चोद्यवादिन एवं 'आहुः'। 'यत्' यस्मात् कारणात्, या 'भ्रूणहत्या', सेयं 'अपात्रा' पुरुषस्यापात्रीकरणमर्हति, कर्मानुष्ठानादिषु पात्रं योग्यं सन्तं पुरुषमयोग्यं करोति। 'अथ' एवं सति, 'कस्मात्' कारणात्, अस्मिन्यज्ञमध्ये 'अपि', तस्या भ्रूणहत्याया आहुतिः 'क्रियते'। नत्वियं कर्त्तुं युक्ता किन्त्वधिकारसिद्धये कुष्माण्डादिहोमवत् कर्म्मादावेवाहुतिः कर्त्तव्येति चोद्यं॥

(५) अत्रोत्तरं दर्शयति। "अमृत्युर्व्वा अन्यो भ्रूणहत्याया इत्याहुः। भ्रूणहत्या वाव मृत्युरिति। यद्भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति। मृत्युमेवाहुत्या तर्पयित्वा परिपाणं कृत्वा। भ्रूणघ्ने भेषजं करोति" इति। अत्र शास्त्रार्थरहस्याभिज्ञा एवं 'आहुः', 'भ्रूणहत्यायाः', इतरो यः पापविशेषः, एतामपेक्ष्य स सर्व्वोऽपि 'अमृत्युः', एव, पापान्तरेणेदृशबाधाभावात्। तस्मादतिबाधकत्वाभावात् 'भ्रूणहत्या', एव 'मृत्युः', 'इति', तेषां वचनं। एवं सत्यवभृथाहुतिव्यतिरेकेण

तस्य प्रतीकारो नास्ति। तस्मात् कर्म्ममध्येपि 'अवभृथे', यद्येतां 'आहुतिं', जुहुयात्। तदानीमनया 'आहुत्या', मृत्युदेवतामेव तृप्तां कृत्वा यजमानं च 'परिमाणं' सर्व्वतः पात्रं, 'कृत्वा', 'भ्रूणघ्नं' भ्रूणहत्यारूपाय पाप्मने, 'भेषजं' शमनं करोति॥

(६) इदानीं कैमुतिकन्यायेन तामाहुतिं प्रशंसति। "एताः ह वै मुण्डिभः औदन्यवः। भ्रूणहत्यायै प्रायश्चित्तिं विदाञ्चकार। यो हास्यापि प्रजायां ब्राह्मणꣳ हन्ति। तस्मै भेषजं करोति" इति। उदकमात्मन इच्छतीत्युदन्युः जलमात्राहारः कश्चित्तपस्वी मुनिः तस्य पुत्रः 'औदन्यवः'। तस्य च 'मुण्डिभः', इति नामधेयं। स चाश्वमेधावभृथमन्तरेण केवलामप्येतामाहुतिं भ्रूणहत्यायाः प्रायश्चित्तं मन्यते। तिष्ठतु मुण्डिभः वयं त्वेवं मन्यामहे। 'अस्य' अश्वमेधयाजिनः, 'प्रजायां' पुत्रभृत्यादिरूपायामपि, यः कश्चित् 'ब्राह्मणं', 'हन्ति', तस्मै 'सर्व्वस्मै' ब्रह्मवधदोषाय इमामाहुतिं 'भेषजं' करोति। किमु वक्तव्यमवभृथेनुष्ठीयमानेऽश्वमेधयाजिनो भ्रूणहत्यां नाशयतीति॥

(७) तृतीयामाहुतिं विधत्ते। "जम्बुकाय स्वाहेत्यवभृथ उत्तमामाहुतिं जुहोति। वरुणो वै जम्बुकः। अन्तत एव वरुणमवयजते" इति। जम्बुकशब्दस्य वरुणवाचित्वात् तदीयोत्तमाहुतिहोमेन कर्म्मान्तरे वरुणमेव विनाशयति। अतो बाधकविनाशेन सर्व्वोपद्रवपरिहारः॥

(८) होमाधारं विधत्ते। "खलतेर्विक्लिधस्य शुक्लस्य पिङ्गाक्षस्य मूर्द्धं जुहोति। एतद्वै वरुणस्य रूपम्। रूपेणैव वरु-

णमवयजते" ॥ २ ॥ इति । 'खलतिः' केशरहितमस्तकोपेतः, 'विक्लिधः' खेदनशीलशरीरः, विक्लिन्नदेहो वा, 'शुक्लः' चित्री, 'पिङ्गाक्षः' पिङ्गलवर्णाक्षियुक्तः। तस्य शिरस्येतामाहुतिं जुहुयात्। 'एतत्' खलत्यादियुक्तं शरीरं, 'वरुणस्य' वारकस्य पापस्य, 'रूपं', अतस्तदुचितेनैव 'रूपेण', 'वरुणं' पापरूपं, 'अवयजते' विनाशयति ॥

इति पञ्चदशोऽनुवाकः ।

---

अथ षोडशोऽनुवाकः ।

(१) पञ्चदशेऽश्वस्य होमविशेषा उक्ताः । षोडश उपाकरणमन्त्रव्याख्यानादयोऽभिधीयन्ते । यदुक्तं सूत्रकारेण । नमो राज्ञे नमो वरुणायेति वैतसशाखयाश्वत्थवरगामृगानग्निष्ठ उपाकरोति इति। तस्य मन्त्रस्य प्रथमभागं व्याचष्टे। "वारुणो वा अश्वः । तं देवतया व्यर्द्धयति। यत् प्राजापत्यं करोति। नमो राज्ञे नमो वरुणायेत्याह । वारुणो वा अश्वः । स्वयैवैनं देवताभिः समर्द्धयति" इति। अश्वस्य अब्योनित्वाद्वरुणस्य चापां पतित्वात् अयं 'अश्वः', 'वारुणः', । यदि 'एनं', 'प्राजापत्यं', कुर्यात् तदा 'तं' अश्वं, वरुणदेवतया वियोजयेत। तत्परिहारार्थमुपाकरणकाले वरुणस्य नमस्कारे कृते सति स्वयमेव वरुणदेवतया 'तं' अश्वं, समृद्धं करोति ॥

(२) द्वितीयभागस्य तात्पर्यं दर्शयति। "नमोऽश्वाय नमः

प्रजापतय इत्याह। प्राजापत्यो वा अश्वः। स्वयैवैनं देवतया समर्द्धयति" इति। अश्वस्य प्रजापत्यक्षिजन्यत्वेन प्राजापत्यत्वादश्वप्रजापत्योर्नमस्कारे कृते सति 'एनं' अश्वं, स्वकीयया एव 'देवतया', समृद्धं करोति॥

(३) तृतीयभागं व्याचष्टे। "नमोऽधिपतय इत्याह॥ १॥ धर्म्मो वा अधिपतिः। धर्म्ममेवावरुन्धे" इति। धर्म्माभिमानी देव एवानुष्ठानस्य 'अधिपतिः', इति कृत्वा तन्नमस्कारेण 'धर्म्ममेव', प्राप्नोति॥

(४) चतुर्थभागं व्याचष्टे। "अधिपतिरस्यधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासमित्याह। अधिपतिमेवैनꣳ समानां करोति" इति। हे अश्व त्वं अनुष्ठानस्य 'अधिपतिरसि', अतो मां 'अधिपतिं', 'कुरु', त्वत् प्रसादात् 'अहं', 'प्रजानां', 'अधिपति भूयासं', एतत् पाठेन 'समानां', मध्ये यजमानं 'अधिपतिं', 'करोति'॥

(५) पञ्चमभागं व्याचष्टे। "मां धेहि मयि धेहीत्याह। आशिषमेवैतामाशास्ते" इति।"मां', अस्मिन् कर्म्मणि स्थापय। 'मयि', चैतत् फलं वा हे अश्व स्थापय। अनेन मन्त्रभागपाठेन कर्म्मतत्फलसिद्धिरूपां 'आशिषमेव', प्रार्थयते॥

(६) नमो राज्ञ इत्यनुवाकस्य अंधे समाम्नातानां त्रयाणां मन्त्राणां विनियोगं दर्शयति। "उपाकृताय स्वाहेत्युपाकृते जुहोति। आलब्धाय स्वाहेति नियुक्ते जुहोति। हुताय स्वाहेति हुते जुहोति। एषां लोकानामभिजित्यै" ॥ २ ॥ इति।

'उपाकृते' देवतायै सङ्कल्पिते, 'नियुक्ते' यूपे बद्धे, 'हुते' वह्नौ प्रक्षिप्ते, मन्त्राणामपि सर्व्व एवार्थः । होमत्रयेण लोकत्रयजयो भवति ॥

(७) यदुक्तं सूत्रकारेण । आग्नेय ऐन्द्राग्न आश्विनस्ते विशालयूप आलभ्यन्त इति । तदेतद्विधत्ते । "प्र वा एष एभ्यो लोकेभ्यश्च्यवते । योऽश्वमेधेन यजते । आग्नेयमैन्द्राग्नमाश्विनम् । तान् पशूनालभते प्रतिष्ठित्यै" इति । अश्वमेधयाजिनो महापराधसम्भवात् लोकत्रयात् प्रच्युतिः स्यात् । तन्निवारणार्थमाग्नेयादिपशुत्रयालम्भे सति प्रतिष्ठितिर्भवति ॥

(८) आग्नेयं प्रशंसति । "यदाग्नेयो भवति । अग्निः सर्व्वा देवताः । देवता एवावरुन्धे" इति । ते देवा अग्नौ तनूः संन्यधत्तेत्युक्तत्वात् 'अग्निः', सर्व्वदेवतात्मकः । तस्मादाग्नेयेन सर्व्वं 'देवताः', प्राप्नोति ॥

(९) ऐन्द्राग्नं प्रशंसति । "ब्रह्म वा अग्निः । क्षत्रमिन्द्रः । यदैन्द्राग्नो भवति । ब्रह्मक्षत्रे एवावरुन्धे" इति । अग्नेर्ब्राह्मणजात्यभिमानित्वाद्ब्राह्मणरूपत्वं । इन्द्रस्य च क्षत्रियजात्यभिमानित्वात् क्षत्ररूपत्वं । तस्मादैन्द्राग्नेन जातिद्वयं स्वाधीनं करोति ॥

(१०) आश्विनं प्रशंसति । "यदाश्विनो भवति आशिषामवरुध्यै" इति । 'आशिषां' प्रार्थनीयानां ॥

(११) फलानां त्रित्वं प्रशंसति । "त्रयो भवन्ति । त्रय इमे लोकाः । एष्वेव लोकेषु प्रतितिष्ठति" इति ॥

(१२) यदुक्तं सूत्रकारेण । तेषां पशुपुरोडाशानाम-ग्नयेऽंहोमुचेऽष्टाकपाल इति दशहविषं मृगारिष्टिमनुनि-र्व्वपति समानन्तु स्विष्टकृदिडाऽग्नेर्मध्ये प्रथमस्य प्रचेतस इति यथालिङ्गं याज्यानुवाक्या भवतीति। तत्र सप्तमकाण्डोक्ता-मेकामिष्टिं विधत्ते। "अग्नयेऽंहोमुचेऽष्टाकपाल इत्यग्नयेऽंहो-मुचे" इति॥

(१३) अस्मिन्नेवानुवाके दशापि हवींष्याम्नातानि। चतुर्थका-ण्डस्यानुवाकोक्ता याज्यानुवाक्या विधत्ते। "अग्नेर्मन्वे प्रथमस्य प्रचेतस इति याज्यानुवाक्या भवन्ति सर्व्वत्वाय" ॥ ४ ॥ इति। 'सर्व्वत्वं' अपेक्षितफलं पौष्कल्यं॥

इति षोडशोऽनुवाकः।

---

अथ सप्तदशोऽनुवाकः।

(१) षोडशे नमो राज्ञ इत्यादिमन्त्रव्याख्यानं केचिद्धोम-पशुइष्टिविशेषाश्चाभिहिताः। सप्तदशेऽस्य रोगादिनिमित्तं प्रा-यश्चित्तमभिधीयते। तत्र रोगदोषपरिहारार्थमिष्टित्रयं विधत्ते। "यद्यश्रमुपतपद्विन्देत्। आग्नेयमष्टाकपालं निर्वपेत्। सौम्यं चरुम्। सावित्रमष्टाकपालम्" इति। 'उपतपत्' सन्तापकरो रोगविशेषः॥

(२) तास्विष्टिष्वाग्नेयं प्रशंसति। "यदाग्नेयो भवति। अग्निः सर्व्वा देवताः। देवताभिरेवैनं भिषज्यति" इति। 'एनं' अश्वं, 'भिषज्यति' अरोगिणं करोति॥

(३) सौम्यं प्रशंसति। "सौम्यो भवति। सोमो वा ओषधीनाꣳ राजा। याभ्य एवैनं विन्दति॥ १॥ ताभिरवैनं भिषज्यति" इति। 'याभ्य एव' ओषधीभ्यो भक्षिताभ्यो वैषम्यं प्राप्ताभ्यः, 'एनं' अश्वं, रोगो ह्युलभते। सोमाधीनत्वात् 'ओषधीनां', सौम्ययागेऽनुष्ठिते सति 'ताभिरेव' ओषधिभिः,'एनं' अश्वं, अरोगं करोति॥

(४) सावित्रं प्रशंसति। "यत् सावित्रो भवति। सवितृप्रसूत एवैनं भिषज्यति" इति। सवित्रानुज्ञातत्वात् चिकित्सा सम्यक् सम्पद्यते॥

(५) अग्निसोमसवितृदेवताः समूहाकारेण प्रशंसति। "एताभिरेवैनं देवताभिर्भिषज्यति। अगदो हैव भवति" इति। अग्न्यादिभिश्चिकित्सितोऽश्वः सर्व्वथा रोगरहितः 'एव भवति'॥

(६) अथाश्वस्य त्वग्दोषे प्रायश्चित्तं विधत्ते। "पौष्णं चरुं निर्वपेत्। यदि श्लोणः स्यात्। पूषा वै श्लोणस्य भिषक्। स एवैनं भिषज्यति। अश्लोणो हैव भवति" इति। 'श्लोणः' दुष्टत्वक्, 'श्लोणस्य' त्वग्दोषस्य, चिकित्सकः 'पूषा', अतः पौष्णचरुणा पूषैव चिकित्सां करोति॥

(७) उपद्रवकारिदेवताविशेषगृहीतत्वे सति प्रायश्चित्तं विधत्ते। "रौद्रं चरुं निर्वपेत्। यदि महती देवताभिमन्येत्। एतद्देवत्यो वा अश्वः। स्वयैवैनं देवतया भिषज्यति। अगदो हैव भवति" इति। 'महती देवता' रुद्रः पशूनामधिपतिः, तस्मिन् पशुष्वभिमन्यमाने सति ज्वरादिना पशुः पीड्यते।

अश्वस्य पशुत्वेन रुद्रदेवत्यत्वाद्रौद्रयागेऽनुष्ठिते सति स्वकीययैव 'देवतया', चिकित्सितत्वात् रोगरहितो भवति॥

(८) निवासस्थानप्राप्त्यभावे प्रायश्चित्तं विधत्ते। "वैश्वानरं द्वादशकपालं निर्व्वपेत् मृगाखरे, यदि नागच्छेत्। इयं वा अग्निर्वैश्वानरः। इयमेवैनमर्चिर्भ्यां परिरोधमानयति। आ हैव सुत्यमहर्गच्छति" इति। मृगस्याश्वस्याखरः सुत्येहनि निवासस्थानं तत्रागमनाभावे वैश्वानरेष्टिं कुर्य्यात्। 'इयं' एव पृथिवीविश्वमनुष्यहितकारी,'अग्निः',तस्मात् 'इयमेव', अग्निरूपा सती स्वकीयाभ्यां 'अर्चिर्भ्यां', परितो रुध्य निवासस्थानमानयति। ततो ऽश्वः 'सुत्यमहः', प्रति 'आगच्छत्येव'॥

(९) वडवादिध्यानेऽश्वेन कृते सति प्रायश्चित्तं विधत्ते। "यद्यधीयात्॥ २॥ अग्नयेऽंहोमुचेऽष्टाकपालः। सौर्य्यं पयः। वायव्य आज्यभागः" इति। आज्यमेव भागो भजनीयं॥

(१०) तत्र प्रथमहविः प्रशंसति। "यजमानो वा अश्वः। अंहसा वा एष गृहीतः। यस्याश्वो मेधाय प्रोक्षितोऽध्येति। यदंहोमुचे निर्वपति। अंहस एव तेन मुच्यते" इति। अयं 'अश्वः', प्राधान्याद्यजमानस्वरूपः। तथा सति 'यस्य' यजमानस्य, 'अश्वः', यज्ञार्थं 'प्रोक्षितः', सन् 'अध्येति' वडवां गर्द्दभीं वा स्मरत्। तच्च स्मरणं तृणखाद्यादिप्राप्त्यौदासीन्यादिनानुमातव्यं। तदानीमेषोऽश्वः पाप्मना 'गृहीतः', भवति। 'तेन' आंहोमुग्यागेन, अयमश्वः पापात् मुक्तो भवति॥

(११) द्वितीयं हविः प्रशंसति। "यजमानो वा अश्वः।

रेतसा वा एष व्यृध्यते। यस्याश्वो मेधाय प्रोक्षितोऽध्येति। सौर्य्यं रेतः। यत् सौर्य्यं पयो भवति। रेतसैवैनꣳ स समर्द्धयति" इति। सूर्य्यस्य रेतःस्वामित्वात्, सौर्य्ययागेन वडवादिध्यान-प्रयुक्तरेतोवियोगः समाहितो भवति॥

(१२) तृतीयं हविः प्रशंसति। "यजमानो वा अश्वः। गर्भैर्वा एष व्यृध्यते। यस्याश्वो मेधाय प्रोक्षितोऽध्येति। वायव्या गर्भाः। यद्वायव्य आज्यभागो भवति। गर्भैरेवैनꣳ स समर्द्धयति" इति। वायुप्रेरितस्य शरीरस्य रेतसो गर्भाशये पतने सति गर्भीभावात् 'गर्भा वायव्याः', अतो वायव्ययागेन वडवा-ध्यानप्रयुक्तो गर्भवियोगो न भविष्यति॥

(१३) एतदनुवाकोक्तां प्रायश्चित्तिं निगमयति। "अथो य-स्यैषाऽश्वमेधे प्रायश्चित्तिः क्रियते। इष्ट्वा वसीयान् भवति" ॥ ५॥ इति। 'यस्य' यजमानस्य, अश्वमेधयागे यथोक्तनिमित्तं प्रायश्चित्तमनुष्ठीयते। अयं यजमानोऽश्वमेधेन 'इष्ट्वा', अतिश-येनधनवान् भवति॥

इति सप्तदशोऽनुवाकः।

---

अथ अष्टादशोऽनुवाकः।

(१) सप्तदशे रोगादिप्रायश्चित्तमुक्तं। अष्टादशे ब्रह्मोदना उच्यन्ते। तत्र शाखान्तरगतं ब्रह्मौदनेष्टेर्विकल्पमनुवदति। "तदाहुः। द्वादशभिर्वेष्टिभिर्यजेतेति" इति। तत्राश्वमेधविषये शाखान्तरानुसारिण एवं 'आहुः', अश्वमेधे सꣳस्थिते समाप्ते सति

खण्डं गत्वा द्वादशब्रह्मौदनान् 'वा', निर्व्वपेत्। 'इष्टिभिः' 'वा', आग्नेयाष्टाकपालरूपाभिः, 'द्वादशभिर्यजेतेति'॥

(२) तत्रेष्टिपक्षं दूषयति। "यदीष्टिभिर्यजेत। उपनामुक एनं यज्ञः स्यात्। पापीयाꣳस्तु स्यात्। आप्तानि वा एतस्य छन्दाꣳसि। य ईजानः। तानि क एतावदाशु पुनः प्रयुञ्जीतेति। सर्व्वा वै सꣳस्थिते यज्ञे वागाप्यते॥ १॥ साप्ता भवति यातयाम्नी। क्रूरीकृतेव हि भवत्यरुष्कृता। सा न पुनः प्रयुज्येत्याहुः" इति। 'यदि', अयं 'इष्टिभिर्यजेत्', तदानीं सफलः 'यज्ञः', 'एनं' यजमानं प्रति, 'उपनामुकः', उपनमनशीलः, 'स्यात्', यज्ञफलमस्य सम्पद्यत एव किं त्वसौ पापतरो भवति। कुत इति चेत्, तदुच्यते। 'यः' यजमानः, इष्टवान् 'एतस्य', 'छन्दाꣳसि' मन्त्रगतानि, 'आप्तानि' उपयुक्तानि, एवं सति 'तानि' छन्दाꣳसि, 'पुनः', अपि 'एतावदाशु' अत्यन्तशीघ्रं,'कः', नाम प्रयोक्तुमर्हति। नह्युपकर्त्तृणि छन्दाꣳसि अत्यन्तप्रयासं प्रापयितुं योग्यानि, किञ्च न केवलं छन्दांस्येवोपयुक्तानि। किन्तु यज्ञे समाप्ते सति 'सर्व्वा', अपि 'वाक्','आप्यते'कृतप्रयोजना वर्त्तते। 'सा' च तथा कृतप्रयोजना सती,'यातयाम्नी' गतसारा भवति। एवं सति 'पुनः',प्रयुज्यमाना 'अरुष्कृता' पिष्टपेषणस्थानीयेन पुनःप्रयोगेन बाधिता, 'क्रूरीकृतेव' हि क्रूरस्वभावतां नीतेव, 'भवति', हि तस्मात् 'सा' वाक्, न पुनः प्रयोक्तव्येत्येवं रहस्याभिज्ञाः 'आहुः'॥

(३) शाखान्तरपक्षं दूषयित्वा स्वपक्षं विधत्ते। "द्वादशैव

ब्रह्मौदनान् सꣳस्थिते निर्व्वपेत्। प्रजापतिर्व्वा ओदनः। यज्ञः प्रजापतिः। उपनामुक एनं यज्ञो भवति। न पापीयान् भवति" इति। अश्वमेधे समाप्ते सति 'द्वादशब्रह्मौदनानेव','निर्व्वपेत्', न त्विष्टिभिर्यजेत्। ब्रह्मौदनविधिश्चाधानप्रकरणे प्रपञ्चितः। ओदनस्य यज्ञस्य च प्रजापतिकार्य्यत्वेन प्रजापतिरूपत्वादेकत्वे सति ओदननिर्व्वापेन 'एनं' यजमानं, प्रति 'यज्ञः', 'उपनामुकः',उपनमनशीलः, 'भवति'। छन्दसां वाचश्च पूर्व्वोक्त पुनःप्रयोगदोषाभावात् अयं यजमानः पापतरः 'न भवति' ॥

(४) सङ्ख्यां प्रशंसति। "द्वादश भवन्ति। द्वादश मासाः संवत्सर एव प्रतितिष्ठति" इति। स्पष्टोऽर्थः ॥

इति अष्टादशोऽनुवाकः।

---

अथैकोनविंशोऽनुवाकः।

(१) अष्टादशे ब्रह्मौदना अभिहिताः। एकोनविंशे विभुत्वादिभिः द्वादशभिर्गुणैरश्वमेधः प्रशंस्यते। अत्र प्रथमं गुणमाह। "एष वै विभूर्नाम यज्ञः। सर्व्वꣳह वै तत्र विभु भवति। यत्रैतेन यज्ञेन यजन्ते" इति। विविधानां श्रेयसां भावयिता विभुः। यस्मिन् देशे 'एतेन यज्ञेन यजन्ते', तस्मिन् देशे 'सर्व्वं' वा विभवादिकं, 'विभु' विविधश्रेयोभावयितृ, 'भवति' ॥

(२) द्वितीयं गुणमाह। "एष वै प्रभूर्नाम यज्ञः। सर्व्वꣳह वै तत्र प्रभु भवति। यत्रैतेन यज्ञेन यजन्ते" इति। प्रकर्षेण श्रेयोभावयिता 'प्रभूः'। अन्यत् पूर्व्ववत् ॥

(३) तृतीयं गुणमाह। "एष वा ऊर्जस्वान् नाम यज्ञः। सर्व्वꣳह वै तत्रोर्जस्वद् भवति। यत्रैतेन यज्ञेन यजन्ते" इति। 'ऊर्जस्वान्' अन्नवत्॥

(४) चतुर्थमाह। "एष वै पयस्वान् नाम यज्ञः। सर्व्वꣳह वै तत्र पयस्वद् भवति। यत्रैतेन यज्ञेन यजन्ते" इति। 'पयस्वान्' क्षीरादिरसवान्॥

(५) पञ्चममाह। "एष वै विधृतो नामयज्ञः। सर्व्वꣳ-ह वै तत्र विधृतं भवति। यत्रैतेन यज्ञेन यजन्ते इति। 'विधृतः' विशेषेण धृतो नियतफल इत्यर्थः॥

(६) षष्ठमाह। "एष वै व्यावृत्तो नाम यज्ञः। सर्व्वꣳह वै तत्र व्यावृत्तं भवति। यत्रैतेन यज्ञेन यजन्ते" इति। 'व्यावृत्तः' फलाधिक्येनेतरयज्ञविलक्षणः॥

(७) सप्तममाह। "एष वै प्रतिष्ठितो नाम यज्ञः। सर्व्वꣳह वै तत्र प्रतिष्ठितं भवति। यत्रैतेन यज्ञेन यजन्ते" इति। 'प्रति-ष्ठितः' तत्र चाञ्चल्यरहितः॥

(८) अष्टममाह। "एष वै तेजस्वी नाम यज्ञः। सर्व्वꣳह वै तत्र तेजस्वी भवति। यत्रैतेन यज्ञेन यजन्ते" इति। 'तेजस्वी' ख्यातिमान्॥

(९) नवममाह। "एष वै ब्रह्मवर्च्चसी नाम यज्ञः। आ ह वै तत्र ब्राह्मणो ब्रह्मवर्च्चसी जायते। यत्रैतेन यज्ञेन यजन्ते" इति। 'ब्रह्मवर्च्चसी' मन्त्रप्रयुक्ततेजोयुक्तो ब्राह्मणोपि तत्र देशे तथाविध एव 'आजायते', खलु॥

(१०) दशममाह। "एष वा अतिव्याधी नाम यज्ञः। आ ह वै तत्र राजन्योतिव्याधी जायते। यत्रैतेन यज्ञेन यजन्ते" इति। अतिशयेन पापं वेद्धुं शीलं यस्य सोऽयं 'अतिव्याधी', तस्मिन् देशे क्षत्रियोऽपि शत्रुः अतिशयेन वेद्धुं समर्थः, 'आजायते', खलु॥

(११) एकादशमाह। "एष वै दीर्घो नाम यज्ञः। दीर्घायुषो ह वै तत्र मनुष्या भवन्ति। यत्रैतेन यज्ञेन यजन्ते" इति। 'दीर्घः' दीर्घफलयुक्तः॥

(१२) द्वादशमाह। "एष वै क्लृप्तो नाम यज्ञः। कल्पते ह वै तत्र प्रजाभ्यो योगक्षेमः। यत्रैतेन यज्ञेन यजन्ते" इति। 'क्लृप्तः' सर्व्वसाधनसम्पन्नः, योगसहितः क्षेमः 'योगक्षेमः', स च 'कल्पते' सम्पद्यते। एतैर्द्वादशभिर्गुणैर्द्वादशब्रह्मोदनस्तुतिद्वाराश्वमेधः प्रशस्तः॥

इति ऊनविंशोऽनुवाकः।

---

अथ विंशोऽनुवाकः।

(१) एकोनविंशे विभुलादिगुणैर्यज्ञस्य प्रशंसाऽभिहिता। विंशेऽश्वस्य सञ्ज्ञपनप्रकारोऽभीधीयते। यदुक्तं सूत्रकारेण। वडवा पुरूषी चाजःपुरो नीयतेऽश्वस्य वेतसशाखायां तार्प्यं कृत्यधीवासं हिरण्यकशिपु चास्तीर्य्य सौवर्णं रुक्ममुपरिष्टात् कृत्वा सृगाश्निघ्नन्ति सुचशाखास्वितरानिति। तत्र तार्प्यं विधत्ते।

"तार्प्येणाश्वꣳ सञ्ज्ञपयन्ति। यज्ञो वैनꣳ समर्द्धयति" इति। 'तार्प्यं' इति घृताक्तस्य कम्बलस्य नामधेयं। तेन 'अश्वं', 'सञ्ज्ञपयन्ति' मारयन्ति। प्रधानसाधनत्वात्तार्प्यस्य यज्ञत्वं, अतो यज्ञेनैवाश्वं समृद्धं करोति॥

(२) पितृमेधे प्रयोज्यं साम विधत्ते। "याम्येन साम्ना प्रस्तोतानुपतिष्ठते। यमलोकमेवैनं गमयति" इति। यमसम्बन्धि 'साम', याम्यं सामगैः पितृमेधे प्रयोज्यते। तेनात्र 'प्रस्तोता', सञ्ज्ञप्यमानं पशुं 'अनु' समीपे स्थित्वा, उपस्थानं कुर्य्यात्। तेनाश्वस्य यमलोकप्राप्तिः॥

(३) चर्म्मपटं विधत्ते। "तार्प्ये च कृत्यधीवासे चाश्वꣳ सञ्ज्ञपयन्ति। एतद्वै पशूनाꣳ रूपं। रूपेणैव पशूनवरुन्धे" इति। 'तार्प्यं', प्रथममास्तीर्य्य तस्मिन् 'कृत्यधीवासं' चर्म्ममयमाच्छादनं, पटमास्तीर्य्य तस्मिन् सञ्ज्ञपयेत्। चर्म्मणः पशुकार्य्यत्वेन पशुरूपत्वात् पशुप्राप्तिः॥

(४) कृत्यधीवासस्योपरि सुवर्णखचितां शय्यां विधत्ते। "हिरण्यकशिपु भवति। तेजसावरुन्धे" इति। हिरण्मयस्य तेजस्वित्वात्तेन तेजःप्राप्तिः॥

(५) शय्याया उपरि सुवर्णफलकं विधत्ते। रुक्मो भवति। सुवर्गस्य 'लोकस्यानुख्यात्यै" इति। 'रुक्मः', दीप्यतिशयात् स्वर्गः प्रकाशितो भवति॥

(६) तार्प्यादीन् प्रशंसति। "अश्वो भवति। प्रजापतेराप्त्यै। अस्य वै लोकस्य रूपं तार्प्यं। अन्तरिक्षस्य कृत्यधीवासः।

दिवो हिरण्यकशिपु। आदित्यस्य रुक्मः। प्रजापतेरश्वः। इममेव लोकं तार्प्येणाप्नोति। अन्तरिक्षं कृत्यधीवासेन दिवꣳ हिरण्यकशिपुना। आदित्यꣳ रुक्मेण। अश्वेनैव मेध्येन प्रजापतेः सायुज्यꣳ सलोकतामाप्नोति" इति। तार्प्यादीनामश्वान्ताना-मुपर्यधोभावसाम्येन भूलोकादिरूपत्वे सति यजमानस्य तेन तेन तार्प्यादिना तत्तद्भूलोकादिप्राप्तिर्भवति। 'सायुज्यं' सहैकत्र वासः। 'सलोकतां' समानलोकस्वामित्वं॥

(७) कृत्वनुष्ठानवेदने प्रशंसति। "एतासामेव देवतानाꣳ सायुज्यं। सार्ष्टिताꣳ समानलोकतामाप्नोति योऽश्वमेधेन यज-ते। य उचैनमेवं वेद" इति। 'सार्ष्टितां' समानैश्वर्य्ययुक्तत्वं। स्पष्टमन्यत्॥

इति विंशोऽनुवाकः।

---

अथ एकविंशोऽनुवाकः।

(१) विंशेऽश्वस्य सञ्ज्ञपनमुक्तं। एकविंशे तूत्तरवेद्युपवापो-ऽभिधीयते। तत्रादौ तावदङ्गविधनामनिर्व्वचनेनाश्वः स्तूयते। प्रथमं सवर्येति नाम्नो निर्व्वचनं दर्शयति। "आदित्याश्चाङ्गि-रसश्च सुवर्गे लोके स्पर्धन्त। तेऽङ्गिरस आदित्येभ्यः। अमुमा-दित्यमश्वꣳ श्वेतं भूतं दक्षिणामनयत्। तेऽब्रुवन्। यं नोऽनेष्ट। स वर्योऽभूदिति। तस्मादश्वꣳ सवर्य्येत्याह्वयन्ति। तस्माद्यज्ञे वरो दीयते" इति। पुरा कदाचित् 'आदित्याः' गणदेवताः, 'अङ्गिरसः', महर्षयश्च, स्वर्गलोकं निमित्तीकृत्य स्पर्द्धां कृत-

वन्तः। तदानीं प्रथमत आदित्यैः स्वर्गे प्राप्ते सति ‘तेऽङ्गिरसः’, स्वर्गसिद्ध्यर्थं तेभ्यः ‘आदित्येभ्यः’, कञ्चित् ‘दक्षिणामनयन्’, कासौ दक्षिणेति सोच्यते, योयमादित्यो जगत् प्रकाशयन् अस्माभिर्दृश्यते। स एवाङ्गिरसां प्रार्थनया श्वेतोश्वोऽभवत्। तं ‘अश्वं’, इतरेभ्यः सर्व्वेभ्यो द्वादशेभ्यो दक्षिणात्वेन नीतवन्तः। तानङ्गिरसः प्रति ‘ते’ आदित्याः, ‘अब्रुवन्’, हे अङ्गिरसो यूयं अश्वं ‘नः’ ‘अस्मान्’ प्रति, ‘अनेष्ट’ अनीतवन्तः। ‘सः’ अश्वः, ‘वर्य्यः’ श्रेष्ठः, ‘अभूदिति’। यस्मादादित्यैरश्वो वर्य्यनाम्ना व्यवहृतः ‘तस्मात्’, लोकेपि सारथिनः समीचीनमश्वमुपलालनार्थं हस्तेन स्पृशन्तो हे ‘सवर्य्य’, ‘इति’ अनेन नाम्ना, व्यवहरन्ति। वर्य्यैः श्रेष्ठैर्गुणैः सहितः ‘सवर्य्यः’। यस्मादङ्गिरोभिर्दत्तः श्रेष्ठोभूत् ‘तस्मात्’ सर्व्वस्मिन्नपि ‘यज्ञे’, ‘वरः’ श्रेष्ठः पदार्थः, दक्षिणात्वेन ‘दीयते’॥

(२) अश्वनामनिर्व्वचनं दर्शयति। “यत् प्रजापतिरालब्धोऽश्वोऽभवत्। तस्मादश्वो नाम” इति। ‘प्रजापतिः’, स्वयमेव कदाचिदश्वजातिर्भूत्वा देवैः ‘आलब्धः’, सन् ‘अश्वः’ व्यापकः, ‘अभवत्’। यद्यस्मादेवं ‘तस्मात्’, अश्नुते प्राप्नोति इति व्युत्पत्त्या अश्वनाम सम्पन्नं॥

(३) अर्व्वनामनिर्व्वचनं दर्शयति। “यच्छ्वयदरुरासीत्। तस्मादर्व्वानाम” इति। प्रजापतेरक्षि केनापि रोगेणोच्छूनं यदाऽभूत्। तदानीं ‘श्वयत्’ उच्छूनं अभवत्, ‘अरुः’ व्यथाहेतुः, ‘आसीत्’। यस्मादरुः ‘तस्मात्’, ‘अर्व्वा’, इति ‘नाम’॥

(४) वाजिनाम्नो निर्व्वचनं दर्शयति। "यत् सद्यो वाजां-स्समयजत्। तस्माद्वाजी नाम" इति। 'यत्' यस्मात् कारणात्, 'सद्यः' जातमात्र एव,'वाजान्' अन्नानि, गमनवेगान् वा, सम्यग् जितवान्, 'तस्मात्' 'वाजिनाम' सम्पन्नं॥

(५) आदित्यनाम्नो निर्व्वचनं दर्शयति। "यदसुराणां लोकानादत्त। तस्मादादित्यो नाम" इति। 'यत्' यस्मात् कारणात्, अयमश्वो युद्धे जयं प्राप्य 'असुराणां', सम्बन्धिनः 'लोकान्' निवासस्थानानि,'आदत्त' स्वीकृतवान्, 'तस्मात्' आदानात्, 'आदित्यनाम', सम्पन्नं॥

(६) एवं नामनिर्व्वचनैरश्वं प्रशस्य अस्मिन् क्रतावुत्तरवेद्युपवापं विधत्ते। "अग्निर्वा अश्वमेधस्य योनिरायतनं। सूर्य्योऽग्नेर्योनिरायतनं। यदश्वमेधेऽग्नौ चित्य उत्तरवेदिमुपवपति। योनिमन्तमेवैनमायतनवन्तं करोति" इति। योऽयं 'अश्वमेधः' क्रतुः, तस्य, 'अग्निः','योनिः' कारणं, अग्नेः सकाशात् क्रत्वनुष्ठाननिष्पत्तेः। 'आयतनं' आश्रयश्च, अग्निरेव सति हि 'अग्नौ', समाप्तिपर्य्यन्तो ह्यश्वमेधः प्रतितिष्ठति। तस्य च 'अग्नेः', 'सूर्य्यः' एव कारणं 'आयतनं', च। अतएव परिधिप्रकरणे पश्चिमदक्षिणोत्तरपरिधानादूर्द्ध्वं सूर्य्यस्त्वापुरस्तात् पात्वित्येतेन मन्त्रेण सूर्य्यस्यैव रक्षाकारणत्वं। उद्यन्तं वावादित्यमग्निरनुसमारोहति इति दर्शनादायतनत्वमप्युपपन्नं। एवमग्न्यादित्ययोः साक्षात् परम्परया च योनित्वे आयतनत्वे सति यद्यश्वमेधक्रतौ 'चित्येऽग्नौ' चयनाग्निहोत्रे, उत्तरे 'वेदिमुपवपति'।

इष्टकाचयने नोत्तरवेदिं निष्पादयेत्। तदुपवापात् 'एनं' अश्वमेधं,अग्नियुक्तत्वेन 'योनिमन्तं' 'आयतनवन्तं', च 'करोति' ॥

(७) वेदनं प्रशंसति। "योनिमानायतनवान् भवति। य एवं वेद" इति॥

(८) अश्वमेधक्रतोः साक्षात् परम्परया च योन्यायतन-भूतावग्न्यादित्यौ प्रशंसति। "प्राणापानौ वा एतौ देवानां। यदर्काश्वमेधौ। प्राणापानावेवावरुन्धे" इति। अर्चनार्हत्वाद-ग्निरर्काश्वमेधफलरूपत्वादादित्योऽश्वमेधः। अत एवान्यत्राम्ना-यते। अर्को वा एष यदग्निरसावादित्योऽश्वमेध इति। 'यद-र्काश्वमेधौ'। यावग्न्यादित्यौ,'एतौ','देवानां',सर्व्वेषां'प्राणापा-नस्थानीयौ'। अत एव तदुभयसम्बन्ध्युत्तरवेद्युपवापेन 'प्राणा-पानावेव', प्राप्नोति॥

(६) प्रकारान्तरेण प्रशंसति। "ओजो बलम्वा एतौ देवा-नां। यदर्काश्वमेधौ। ओजो बलमेवावरुन्धे" इति। बलहेतु-र्नवमो धातुः 'ओजः', तत्कार्य्यं 'बलं', 'एतौ' अग्न्यादित्यौ, सर्व्वेषां 'देवानां',ओजोबलरूपौ। तस्मादग्न्यादित्यसम्बन्ध्युत्तर-वेद्युपवापेन 'ओजो बलं', च प्राप्नोति॥

(१०) उत्तरवेद्युपवापं निगमयति। "अग्निर्वा अश्वमेधस्य योनिरायतनं। सूर्य्योग्नेर्योनिरायतनं। यदश्वमेधेऽग्निं चित्य उत्तरवेदिं चिनोति। तावर्काश्वमेधौ। अर्काश्वमेधावेवाव-रुन्धे। अथो अर्काश्वमेधयोरेव प्रतितिष्ठति" इति। स्पष्टार्थः॥

इति एकविंशोऽनुवाकः।

अथ द्वाविंशोऽनुवाकः ।

(१) उत्तरवेद्युपवापो एकविंशेऽभिहितः । ऋषभालम्भो द्वाविंशेऽभिधीयते । तत्रादावश्वदीक्षादिका प्रधानयागात् पुरस्तात् संवत्सरमात्रे प्रोक्षणाद्यालम्भं विधत्ते । "प्रजापतिं वै देवाः पितरं पशुं भूतं मेधायालभन्त । तमालभ्योपावसन् । प्रातर्यष्टास्मह इति । एकम्वा एतद्देवानामहः । यत् संवत्सरः । तस्मादश्वः पुरस्तात् संवत्सर आलभ्यते" इति । पुरा कदाचिद्देवानां पिता प्रजापतिः देवैः प्रार्थितोऽश्वजातिः पशुरभूत् । 'तं' 'पशुं', 'देवाः', मेधाय यज्ञार्थं 'आलभन्त' स्पर्शनेन सङ्कल्पितवन्तः । तं सङ्कल्प्य परेद्युः 'प्रातर्यष्टास्महे' इति निश्चित्य 'उपावसन्' पशुसमीपे स्थितवन्तः । योयमस्माकं 'संवत्सरः', कालः । एवं 'देवानामेकं', एव 'अहः', यस्मादेवं देवैः कृतं 'तस्मात्', अयं 'अश्वः', दीक्षादियागप्रयोगात् 'पुरस्तात्',देवानामेकदिनरूपेऽस्मदीये 'संवत्सरे', स्पर्शप्रोक्षणादिना प्रारब्धव्यः ॥

(२) अश्वनिर्वचनेनाश्वमेधनिर्वचनेन चाश्वं प्रशंसति । "यत् प्रजापतिरालब्धोऽश्वोऽभवत् । तस्मादश्वः । यत् सद्यो मेधोऽभवत् तस्मादश्वमेधः" इति । 'यत्' यस्मात्,'प्रजापतिः', अयं पशुरूपेण 'आलब्धः', सन् 'अश्वः' व्यापकः, 'अभवत्', 'तस्मादश्वः',इति व्युत्पत्त्याऽश्वो नामाभवत् । 'यत्' यस्मात् कारणात्, 'सद्यः' एव तस्मिन्नेवाहनि, अश्वः 'मेधः' एकविंशाकृत्याकृपो यज्ञः 'अभवत्' । 'तस्मात्',अश्वेन निष्पाद्यो मेधो यज्ञः 'अश्वमेधः' ॥

(३) एतद्वेदनं प्रशंसति। "वेदुकोऽश्वमाशुं भवति। य एवं वेद" इति। 'आशुं' शीघ्रगामिनं, 'अश्वं', 'वेदुकः' लब्धा, 'भवति'॥

(४) पुनरप्यश्वं प्रशंसति। "यद्वैतत् प्रजापतिरालब्धोऽश्वो-ऽभवत्। तस्मादश्वः प्रजापतेः पशूनामनुरूपतमः" इति। यस्मात् 'अश्वः','प्रजापतिरालब्धोऽभवत्','तस्मात्', अयं 'अश्वः', 'पशूनां', मध्ये 'प्रजापतेः', अतिशयेनानुकूलः॥

(५) एतद्वेदनं प्रशंसति। "आस्य पुत्रः प्रतिरूपो जायते। य एवं वेद" इति। 'अस्य' अनुरूपत्ववेदितुः, 'पुत्रः', 'प्रति-रूपो जायते'॥

(६) अश्वमेधयागं तद्वेदनं प्रशंसति। "सर्वाणि भूतानि सम्भृत्यालभते। सम्नं देवास्तेजसे ब्रह्मवर्चसाय भरन्ति। यो-ऽश्वमेधेन यजते। य उचैनमेवेदं वेद" इति। 'यः' यष्टा, 'यः' च वेदिता, स सर्वाण्यश्वस्य प्रजापतिरूपत्वात् प्रजापतेश्च सर्वा-त्मकत्वात्, 'सर्वाणि', अपि 'भूतानि', अश्वरूपेण 'सम्भृत्य' एकीकृत्य, आलम्भं करोति। तेनालम्भेन 'देवाः', 'एनं' पुरुषं, 'तेजसे' शरीरकान्त्यै, 'ब्रह्मवर्चसाय' श्रुताध्ययनसम्पत्त्यै, च 'सम्भरन्ति' समर्थं कुर्व्वन्ति॥

(७) पुनरप्यश्वं प्रकारान्तरेण प्रशंसति। "एतद्वैतद्देवा एतां देवतां। पशुं भूतं मेधाय लभन्त। यज्ञमेव। यज्ञेन यज्ञमयजन्त देवाः। कामप्रं यज्ञमकुर्व्वत। तेऽमृतत्वमकाम-यन्त। तेऽमृतत्वमगच्छन्" इति। 'तत्' तदा पूर्व्वस्मिन् काले,

'देवाः', 'एतां' प्रजापतिदेवतां, 'पशुं भूतं' अश्वरूपेण निष्पन्नं, यज्ञार्थं 'आलभन्त', इति यत् तत् 'एतद्वै' वक्ष्यमाण मेवेति मन्तव्यं। तदेतत् स्पष्टीक्रियते, 'यज्ञमेव' यज्ञालभन्त इति तस्यार्थः। एवं सति प्राजापत्यात्मना 'यज्ञेन', अश्वमेधाख्यं 'यज्ञं', 'अयजन्त', तञ्च यज्ञं 'कामप्रं' सर्व्वेषां कामानां प्रातारं पूरयितारं, 'अकुर्व्वत', ततः 'ते' कर्त्तारः, 'अमृतत्वं', कामयित्वा तत् 'अमृतत्वमगच्छन्' ॥

(८) क्रत्वनुष्ठानं प्रशंसति। "योऽश्वमेधेन यजते। देवानामेवायनेनैति। प्राजापत्येनैव यज्ञेन यजते कामप्रेण। अपुनर्मारमेवगच्छति" इति। अश्वमेधयाजी 'देवानामेव', योग्येन मार्गेण गच्छति। किञ्च प्रजापतिसम्बन्धिनैव कामपूरकेण 'यज्ञेन', अयं 'यजते'। तेनायं पुनर्मरणरहितं प्राजापत्यमेव पदं प्राप्नोति ॥

(९) ऋषभं पशुं विधत्ते। "एतस्य वै रूपेण पुरस्तात् प्राजापत्यमृषभं तूपरं बहुरूपमालभते। सर्व्वेभ्यः कामेभ्यः। सर्व्वस्याप्त्यै। सर्व्वस्य जित्यै" इति। सर्व्वकामसिद्ध्यर्थं 'पुरस्तात्' अश्वमेधावारम्भ एव, साङ्ग्रहणीसञ्ज्ञान्योरनन्तरं वैशाख्यां पौर्णमास्यां कश्चित् 'ऋषभं', आलभेत। कीदृशं, 'एतस्य' एव प्रजापतेः, स्वरूपेणोपलक्षितत्वात् 'प्राजापत्यं', 'तूपरं' शृङ्गहीनं, 'बहुरूपं' नानावर्णं, सोयमृषभालम्भः 'सर्व्वस्य', कामस्य 'प्राप्त्यै', 'सर्व्वस्य', वशीकरणाय च सम्पद्यते ॥

(१०) यागवेदनं प्रशंसति। "सर्व्वमेव तेनाप्नोति। सर्व्वं

जयति। योश्वमेधेन यजते। य उचैनमेवं वेद" इति। 'तेन', यागेन वेदनेन च॥

इति द्वाविंशोऽनुवाकः।

---

अथ त्रयोविंशोऽनुवाकः।

(१) द्वाविंशे प्रथममनुष्ठेयं रूपमभिहितः। एतावता यद्यत् क्रतावनुष्ठेयं तत् सर्व्वमुक्तं। अथ त्रयोविंशेऽश्वावयवेषूपासनमभिधीयते। तत्रादावहोरात्ररूपेण लोमध्यानं विधत्ते। "यो वा अश्वस्य मेध्यस्य लोमनी वेद। अश्वस्यैव मेध्यस्य लोमं लोमं जुहोति। अहोरात्रे वा अश्वस्य मेध्यस्य लोमनी। यत्सायं प्रातर्जुहोति। अश्वस्यैव मेध्यस्य लोमं लोमं जुहोति। एतदनुकृति ह स्म वै पुरा। अश्वस्य मेध्यस्य लोमं लोमं जुह्वति" इति। 'यः' कश्चित् पुमान्, यागयोग्यस्य 'अश्वस्य', पार्श्वद्वयवर्त्ति लोमद्वयं 'वेद' उपास्ते निरन्तरं ध्यायति। सोयं 'अश्वस्य', एकैकस्मिन् 'लोमनी' हुतवान् भवति। कथं ध्यातव्यमिति तदुच्यते, ये 'अहोरात्रे', विद्येते ते एवं प्रजापतिरूपस्य 'अश्वस्य', 'लोमनी', इति ध्यायेत्। एवं ध्यानयुक्तः 'सायं प्रातः', च 'यत्' अग्निहोत्रं, 'जुहोति', तेन 'अश्वस्य', यावन्ति लोमानि तावन्त्य आहुतयः सम्पद्यन्ते। 'पुरा' कल्पादौ, देवाः 'एतदनुकृति' एतस्य ध्यानसम्पाद्यस्य फलस्यानुकरणं यथा भवति तथा, 'अश्वस्य', एकैकस्मिन् लोम्नि एकैकामाहुतिं 'जुह्वति'। अस्माकन्तु तथाविधसामर्थ्याभावादनेनोपासनेनैव तत्फलसिद्धिरित्यभिप्रायः॥

(२) अवयवान्तरध्यानं विधत्ते। "यो वा अश्वस्य मेध्यस्य पदे वेद। अश्वस्यैव मेध्यस्य पदे पदे जुहोति। दर्शपूर्णमासौ वा अश्वस्य मेध्यस्य पदे॥ १॥ यद्दर्शपूर्णमासौ यजते। अश्वस्यैव मेध्यस्य पदे पदे जुहोति। एतदनुकृति ह स्म वै पुरा। अश्वस्य मेध्यस्य पदे पदे जुह्वति" इति। पूर्ववद्व्याख्येयं॥

(३) अश्वो मार्गश्रमपरिहाराय भूमौ शरीरस्य यद्विपरिवर्त्तनं करोति, तस्य ध्यानं विधत्ते। "यो वा अश्वस्य मेध्यस्य विवर्त्तनं वेद। अश्वस्यैव मेध्यस्य विवर्त्तने विवर्त्तने जुहोति। असौ वा आदित्योऽश्वः। स आहवनीयमागच्छति। तद्विवर्त्तते। यदग्निहोत्रं जुहोति। अश्वस्यैव मेध्यस्य विवर्त्तने विवर्त्तने जुहोति। एतदनुकृति ह स्म वै पुरा। अश्वस्य मेध्यस्य विवर्त्तने विवर्त्तने जुह्वति" इति। 'यः' असावादित्यः, दृश्यते 'सः', एवाश्वरूपेण 'आहवनीयं', प्रति 'आगच्छति', अग्निं वा वादित्यः सायं प्रविशतीति श्रुत्यन्तरात्। तदेतदादित्यागमनं 'अश्वस्य', विवर्त्तनमिति ध्यायेत्। अन्यत् पूर्ववत् व्याख्येयं॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे तृतीयकाण्डे नवमप्रपाठके त्रयोविंशोऽनुवाकः॥

समाप्तश्च प्रपाठकः।

---

# तैत्तिरीय-ब्राह्मणभाष्ये

## तृतीयकाण्डे दशमप्रपाठके

### प्रथमोऽनुवाकः ।



यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
अश्वमेधस्य शेषो यो नवमेऽसौ समीरितः ।
सावित्रचयनं ब्रूते दशमेऽस्मिन् प्रपाठके ॥

(१) तस्य चयनस्यापेक्षितमिष्टकानां स्वरूपं सूत्रकारो दर्शयति । सावित्रꣳ स्वर्गकामश्चिन्वीत पशुबन्धे चीयते चेष्यमाण उपकल्पयते पञ्चाशीतिशतं हिरण्येष्टकाः, यावदुत्तममङ्गुलिपर्वैतावतीः शर्करापोभ्यकाश्चतस्रः स्वयमातृण्णा अपरिमिता लोकं पृण इति । तासामिष्टकानामुपधानस्थाने परिमण्डलाकारां रेखां कुर्य्यात् । तदपि सूत्र एवोक्तम् । उत्तरवेदिदेशस्य मध्ये शङ्कुं निहत्य सर्व्वतः परिमण्डलं रथचक्रमात्रं मात्रं परिलिख्य समूलं हरितं दर्भस्तम्बमाहृत्य मध्ये निखाय जुह्वां पञ्चगृहीतं गृहीत्वा सजूरब्दो यावभिरिति दर्भस्तम्बे पञ्चाहुतीर्हुत्वोद्धृत्यावोक्ष्य व्याहारणान्तामुत्तरवेदिं कृत्वा लेखाया अभ्यन्तरं नवपरिमण्डला लेखा लिखित्वेति । तासु नवसु लेखासु प्रपाठकस्याद्यानुवाके प्रोक्तैर्मन्त्रैरिष्टका उपदध्यात् ।

एतस्मिन्ननुवाकप्रसिद्धेऽनुवाकेऽर्थभेदादवान्तरानुवाका बहवो विद्यन्ते तत्र प्रथममनुवाकं सूत्रकारो विनियुङ्क्ते। नवम्यां वाह्यायां लेखायां पञ्चदश पूर्व्वपक्षस्याहान्युपदधाति सञ्ज्ञानं विज्ञानमिति। पाठस्तु। "सञ्ज्ञानं विज्ञानं प्रज्ञानं जानदभिजानत्। सङ्कल्पमानं प्रकल्पमानमुपकल्पमानमुपक्लृप्तं क्लृप्तम्। श्रेयो वसीय आयत्सम्भूतं भूतम्" इति। तत्र सञ्ज्ञानादीनि पञ्चदशपदानि शुक्लपक्षस्य प्रतिपदादिषु पौर्णमास्यन्तेषु दिनेष्वह्नां नामधेयानि। एतच्च सर्व्वमुत्तरब्राह्मणानुवाके स्पष्टीभविष्यति। तैरेतैर्नामधेयैः पञ्चदशेष्टका नवम्यां वाह्यरेखायामुपदध्यात्। हे प्रथमेष्टके त्वं 'सञ्ज्ञाननामकं', प्रथममहरसि। हे द्वितीयेष्टके त्वं 'विज्ञाननामकं', द्वितीयमहरसि। एवं सर्व्वत्र योज्यं। तया देवतया मन्त्रस्य सर्व्वशेषत्वात्, सर्व्वत्रायं पठनीयः। ततश्चैवं पाठः सम्पद्यते, सञ्ज्ञानं तया देवतयाङ्गिरस्वध्रुवासीदेति। एवं सर्व्वत्र द्रष्टव्यं। तत्तदहःपरत्वेन निर्वचनानि यथायोग्यमुन्नेयानि॥

(२) कल्पः। तेषामन्तरालेष्वेतेषामह्नां पञ्चदशमुहूर्त्तानुपदधाति। चित्रः केतुरिति। पाठस्तु। "चित्रः केतुः प्रभानाभान्त्सम्भान्। ज्योतिष्माꣳस्तेजस्वानापतꣳस्तपन्नभितपन्। रोचनो रोचमानः शोभनः शोभमानः कल्याणः" इति। एतस्मिन् द्वितीये चान्तरानुवाके प्रोक्ताश्चित्रः केतुरित्यादयः पञ्चदश ये शब्दाः ते शुक्लपक्षगत एकैकस्मिन्नहनि उदयास्तमयमध्यवर्त्तिनां नामधेयानि। शेषं पूर्व्ववत्॥

(३) कल्पः। अथानन्तरस्य पञ्चदशपूर्व्वपक्षस्य रात्रीनुपदधाति। दर्शादृष्टेति। पाठस्तु। "दर्शा दृष्टा दर्शता विश्वरूपा सुदर्शना। आप्यायमानाप्यायमानाप्याया सूनृतेरा। आपूर्य्यमाणा पूर्य्यमाणा पूरयन्ती पूर्णा पौर्णमासी" इति। अस्मिंस्तृतीयानुवाके प्रोक्ता दर्शादयः शब्दाः शुक्लपक्षस्य पञ्चदशानां रात्रीणां नामधेयानि॥

(४) कल्पः। तासामन्तरालेष्वेतासां रात्रीणां पञ्चदशमुहूर्त्तानुपदधाति। दाता प्रदातेति। पाठस्तु। "दाता प्रदाता नन्दो मोदः प्रमोदः॥ १॥ आवेशयन् निवेशयन्त्संवेशनः सꣳशान्तः शान्तः। आभवन् प्रभवन्त्सम्भवन्त्सम्भूतो भूतः" इति। अस्मिंश्चतुर्थानुवाके प्रोक्ता दात्रादयः पञ्चदश शब्दा एकैकरात्रिगतानां पञ्चदशानां मुहूर्त्तानां नामधेयानि। एता रात्रय एते च मुहूर्त्ता अस्यां लेखायामुपधेयाः॥

(५) कल्पः। अथानन्तरस्यां पञ्चदशस्यापरपक्षस्याहान्युपदधाति। प्रस्तुतं विष्टुतमिति। पाठस्तु। "प्रस्तुतं विष्टुतꣳसꣳस्तुतं कल्याणं विश्वरूपम्। शुक्रममृतं तेजस्वि तेजः समिद्धम्। अरुणं भानुमन्मरीचिमदभितपत्तपस्वत्" इति। एतस्मिन् पञ्चमानुवाके प्रोक्ताः प्रस्तुतादिशब्दाः कृष्णपक्षगतेषु प्रतिपदाद्यमावास्यान्तेषु दिनेष्वह्नां पञ्चदशानां नामधेयानि॥

(६) कल्पः। तेषामन्तरालेष्वेतेषामह्नां पञ्चदशमुहूर्त्तानुपदधाति। सविता प्रसवितेति। पाठस्तु। "सविता प्रसविता दीप्तो दीपयन् दीप्यमानः। ज्वलन्ज्वलिता तपन् वितपन्-

त्वन्तपन्। रोचनो रोचमानः शुम्भूः शुम्भमानो वामः” इति। अस्मिन् षष्ठानुवाके प्रोक्ताः सवित्रादयः पञ्चदश-शब्दाः कृष्णपक्षगत एकैकस्मिन्नहनि पञ्चदशमुहूर्त्तानां नामधेयानि। एतानि कृष्णपक्षगतान्यहानि, तन्मुहूर्त्ताश्च सप्तम्यां लेखायामुपधेयाः ॥

(७) कल्पः। अथान्तरस्य पञ्चदशपक्षस्य रात्रीरुपदधाति। सुता सुन्वतीति। पाठस्तु। “सुता सुन्वती प्रसुता सूयमानाभिषूयमाणा। पीति प्रपा सम्पा तृप्तिस्तर्पयन्ती ॥ २ ॥ कान्ता काम्या कामजाता युष्मती कामदुघा” इति। अस्मिन् सप्तमेऽनुवाके प्रोक्ताः सुतादयः शब्दाः पञ्चदशसङ्ख्याकाः कृष्णपक्षगतानां पञ्चदशानां रात्रीणां नामधेयानि॥

(८) कल्पः। तासामन्तरालेष्वेतासां रात्रीणां पञ्चदशमुहूर्त्तानुपदधाति। अभिशास्तानुमन्तेति। पाठस्तु। “अभिशास्तानुमन्ता नन्दो मोदः प्रमोदः। आसादयन्निषादयन्त्संसादनः संसन्नः सन्नः। आभूर्विभूः प्रभूः शम्भूर्भुवः” इति। एतस्मिन्नष्टमेनुवाके प्रोक्ता अभिशास्तेत्यादयः पञ्चदश शब्दा एकैकस्यां कृष्णपक्षरात्रौ विद्यमानानां पञ्चदशमुहूर्त्तानां नामधेयानि। कृष्णपक्षरात्रयः, तन्मुहूर्त्ताश्च षष्ठ्यां लेखायामुपधेयाः ॥

(९) कल्पः। अथानन्तरस्यां द्वादशपूर्व्वपक्षानुपदधाति। पवित्रं पवयिष्यन्निति। पाठस्तु। “पवित्रं पवयिष्यन् पूतो मेध्यः। यशो यशस्वानायुरमृतः। जीवो जीविष्यन्त्स्वर्गो लोकः”

इति। अस्मिन् नवमानुवाकेभिहिताः द्वादश पवित्रादिशब्दाः, चैत्रवैशाखादिमासेषु वर्त्तमानानां द्वादशानां शुक्लपक्षाणां नामधेयानि। एते च शुक्लपक्षाः पञ्चम्यां लेखायामुपधेया.॥

(१०) कल्पः। अथानन्तरस्यां द्वादशापरपक्षानुपदधाति। मह्स्वान् महीयानिति। पाठस्तु। "मह्स्वान्महीयानाजस्वान्सुह्मानः। जयन्नभिजयन्सुद्रविणा द्रविणोदाः। आर्द्रः पवित्रो हरिकेशो मोदः प्रमोदः" इति। अस्मिन् दशमानुवाकेऽभिहिताः मह्स्वानित्यादयो द्वादशशब्दाः, चैत्रवैशाखादिमासेषु कृष्णपक्षाणां नामधेयानि। एते कृष्णपक्षाश्चतुर्थ्यां लेखायामुपधेयाः॥

(११) कल्पः। अथान्तरस्यां त्रयोदशमासनामान्युपदधाति। अरुणोऽरुणरजा इति। पाठस्तु। "अरुणोऽरुणरजाः पुण्डरीको विश्वजिदभिजित्। आर्द्रः पिन्वमानोऽन्नवान् रसवानिरावान्। सर्वौषधः संभरो मह्स्वान्" इति। अस्मिन्नेकादशानुवाकेऽभिहिताः अरुणादयस्त्रयोदशशब्दाश्चैत्रादिमासानामधिकमाससहितानां नामधेयानि। एते मासास्तृतीयस्यां लेखायामुपधेयाः॥

(१२) कल्पः। सिकता उपदधाति। एजत्का जोवत्का इति। पाठस्तु। "एजत्काजोवत्काः। क्षुल्लकाः शिपिविष्टकाः। सारिसराः सुशेरवः। अजिरासो गमिष्णवः" इति। अस्मिन् द्वादशानुवाकेऽभिहिता एजत्कादयोऽष्टौ शब्दाः सिकताविशेषाणां

नामधेयानि। एताश्च सिकतास्तस्यामेव तृतीयस्यां लेखाया-मुपधेयाः॥

(१३) अथान्तरस्यां पञ्चदशमुहूर्त्तानुपदधाति। इदानीं तदानीमिति। पाठस्तु "इदानीं तदानीमेतर्हि क्षिप्रमजि-रम्। आशुर्निमेषः फणोद्रवन्नतिद्रवन्। त्वरंस्त्वरमाण आशुराशीयान्" इति। अस्मिन् त्रयोदशानुवाकेऽभिहिता इदानीमित्यादयः पञ्चदशशब्दाः पूर्वोक्तस्यैकैकमुहूर्त्तस्या-वयवभूतानां पञ्चदशानां क्षुद्रमुहूर्त्तानां नामधेयानि। एते च क्षुद्रमुहूर्त्ता द्वितीयस्यां लेखायामुपधेयाः॥

(१४) अथान्तरस्यां षड्यज्ञक्रतून् त्रीणि चतुर्नामान्युपद-धाति। अग्निष्टोम उक्थोऽग्निर्ऋतुरिति। पाठस्तु। "अग्निष्टोम उक्थोऽतिरात्रो द्विरात्रस्त्रिरात्रश्चतूरात्रः। अग्निर्ऋतुः सूर्य्य ऋतुश्चन्द्रमा ऋतुः" इति। अस्मिन् चतुर्दशानुवाकेऽभिहिता अग्निष्टोमादयः षट्छब्दाः षण्णां क्रतुविशेषाणां नामधेयानि। अस्मिन् पञ्चदशानुवाकेऽभिहिता अग्निसूर्यचन्द्रमःशब्दास्त्रय ऋतुविशेषाणां नामधेयानि। एते क्रतव ऋतवश्च प्रथमलेखा-यामुपधेयाः॥

(१५) कल्पः। अथान्तरस्यां चत्वारि संवत्सरनामान्युपद-धाति। प्रजापतिः संवत्सरो महान् कः इति। पाठोऽप्य-त्रायमेव। प्रजापत्यादयश्चत्वारः शब्दाः संवत्सरनामानि। ते च संवत्सरा नाभ्यामुपधेयाः॥

इति प्रथमोऽनुवाकः।

अथ द्वितीयोऽनुवाकः।

(१) प्रथमे नवसु लेखासु नाभ्यां चेष्टकोपधानमुक्तं। द्वितीये स्वयमातृणोपधानमुच्यते। कल्पः। चतस्रः स्वयमातृणा दिक्षूपदधाति॥ भूरग्निश्च पृथिवी च मां चेति। तत्र प्रथमं मन्त्रमाह। "भूरग्निश्च पृथिवी च मा च। त्रींश्च लोकान्संवत्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" इति। हे स्वयमातृण 'प्रजापतिः', देवः 'त्वां', प्राच्यां दिशि 'सादयतु'। तथा भूःशब्दाभिधेयां प्रथमव्याहृत्यभिमानिनीं देवतामग्निदेवं 'पृथिवीं', देवतां 'मां' यजमानञ्च, लोकत्रयाभिमानिनो देवान् संवत्सराभिमानिनं देवञ्च 'सादयतु'। यथा पुराङ्गिरोभिर्महर्षिभिरुपहिता त्वं ध्रुता स्थिता। तथैव 'तया' प्रजापतिदेवतया, उपहिता सती 'ध्रुवासीद'॥

(२) दक्षिणादिदिक्षु स्वयमातृणानामुपधानार्थं त्रीन्मन्त्रानाह। "भुवो वायुश्चान्तरिक्षञ्च मा च। त्रींश्च लोकान्संवत्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद। स्वरादित्यश्च दिवञ्च मा च। त्रींश्च लोकान्संवत्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद। भूर्भुवश्चन्द्रमाश्च दिशश्च मा च। त्रींश्च लोकान्संवत्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद"॥ १॥ इति। पूर्ववद्व्याख्येयं॥

इति द्वितीयोऽनुवाकः।

---

अथ तृतीयोऽनुवाकः ।

(१) द्वितीये स्वयमातृणोपधानमुक्तं । तृतीये निष्पन्नायाश्चितेरध्वर्य्योरुपस्थानमुच्यते। कल्पः। उपस्थानेनोपतिष्ठते। त्वमेव त्वां वेत्थ योऽसि सोऽसि इति। पाठस्तु। "त्वमेव त्वां वेत्थ योऽसि सोऽसि। त्वमेव त्वामचैषीः। चितश्चासि सञ्चितश्चास्यग्ने। एतावांश्चासि भूयांश्चास्यग्ने। यत्ते अग्ने न्यूनं यदुतातिरिक्तम्। आदित्यास्तदङ्गिरसश्चिन्वन्तु। विश्वे ते देवाश्चितिमापूरयन्तु। चितश्चासि सञ्चितश्चास्यग्ने। एतावांश्चासि भूयांश्चास्यग्ने। मा ते अग्ने चयेन मातिचयेनायुरावृक्षि॥ सर्व्वेषां ज्योतिषां ज्योतिर्यदादावुदेति। तपसो जातमनिभृष्टमोजः। तत्ते ज्योतिरिष्टके। तेन मे तप। तेन मे ज्वल। तेन मे दीदिहि। यावद्देवाः। यावदसाति सूर्य्यः। यावदुतापि ब्रह्म" इति। हे चितिरूप 'अग्ने', 'त्वमेव', 'त्वां वेत्थ' त्वदीयं निजस्वरूपं वेत्सि नत्वन्यः कश्चित् तत्र रहस्यं ज्ञातुं क्षमते। अतस्तव दृष्ट्या 'योऽसि' यादृशसामर्थ्यवानसि, 'सोऽसि' परमार्थतस्तथाविध एवासि वयन्तु स्वातन्त्र्येण त्वदीयं महिमानमियत्तया परिच्छेत्तुं न शक्नुमः। किञ्च 'त्वमेव त्वामचैषीः' त्वदीयं चयनमपि यथाशास्त्रं त्वमेव कृतवानसि न तु वयं शक्नुमः। अतस्त्वमिष्टकाभिः 'चितः', अपि 'असि', तासामिष्टकानां मन्त्रयुक्तत्वात् सम्यक् चितोऽपि 'असि', हे 'अग्ने', बाह्यदृष्ट्या 'एतावान्' रथचक्रमात्रपरिमितः 'असि', शास्त्रदृष्ट्या तु 'भूयान्' अत्यन्ताधिकोऽपि 'असि', हे 'अग्ने,'

अस्माभिश्चितस्य 'ते' तव, स्वरूपे 'यत्' अङ्गं, 'न्यूनं', आसीत्। यच्च 'अतिरिक्तं', आसीत्। तत् सर्व्वं 'आदित्याः', देवाः 'अङ्गिरसः' महर्षयश्च, 'चिन्वन्तु' वैकल्यं परित्यज्य चयनं साङ्गं कुर्व्वन्तु। ये 'विश्वे', 'देवाः', 'ते', 'चितिं', एतां सर्व्वतः 'पूरयन्तु'। अतो देवैर्महर्षिभिश्च सम्यगनुष्ठितत्वात् हे 'अग्ने', त्वं चितश्चासीदित्यादि पूर्व्ववत्। हे 'अग्ने', 'ते' त्वदीयेन, चयनेन, चयनमूलत्वेन 'आयुः', मदीयं 'आवृचि' छिन्नं, 'मा', भूत्। तथा अतिचयनेन चयनाङ्गाधिक्येन 'आयुर्मावृचि'। 'सर्व्वेषां', अपि चन्द्रनक्षत्रादिज्योतिषां मध्येऽधिकं त्वदीयं 'यज्ज्योतिः', अस्ति 'आदावुदेति', 'अहः' ज्योतिरुदयं गच्छति। अतस्त्वदीयं 'ओजः' सामर्थ्यं, 'तपसो जातं' अस्मदनुष्ठितात् तपसः त्वदीयसन्तापशक्तेर्वा निष्पन्नं,अतएव 'अनिभृष्टं', केनापि भर्जितुं निराकर्त्तुमशक्यं। हे 'इष्टक', 'तत्' उक्तमग्निसामर्थ्यं, 'ते' त्वदीयं, 'ज्योतिः', 'तेन' ज्योतिषा, 'मे' मदर्थं, 'तप'- विरोधिनः सन्तापं कुरु। तथा त्वं 'तेन' ज्योतिषा, 'मे' मदर्थं, 'ज्वल' प्रज्वलितो भव। तथा 'तेन' ज्योतिषा, 'मे' मदर्थं, 'दीदिहि' सर्वं प्रकाशय। कियन्तं कालमिति चेत् तदुच्यते। यावन्तं कालं 'देवाः', वर्त्तन्ते, 'सूर्य्यः', 'यावदसाति' यावन्तं कालमस्ति, 'उत' अपि च, 'अन्नुः' जगत्कारणमपि, 'यावत्', अस्ति तावत् प्रकाशः॥

इति तृतीयोऽनुवाकः।

अथ चतुर्थोऽनुवाकः ।

(१) तृतीयेऽध्वर्योरुपस्थानमुक्तं । चतुर्थे यजमानस्योपस्थानमुच्यते । कल्पः । यजमानसंहारविहाराभ्यामुपतिष्ठते संवत्सरोऽसि परिवत्सरोऽसीति । पाठस्तु । "संवत्सरोऽसि परिवत्सरोऽसि । इदावत्सरोऽसीदुवत्सरोऽसि । इद्वत्सरोऽसि वत्सरोऽसि । तस्य ते वसन्तः शिरः । ग्रीष्मो दक्षिणः पक्षः । वर्षाः पुच्छम् । शरदुत्तरः पक्षः । हेमन्तो मध्यम् । पूर्वपक्षाश्चितयः । अपरपक्षाः पुरीषम् ॥ १ ॥ अहोरात्राणीष्टकाः । ऋषभोऽसि स्वर्गो लोकः । यस्यां दिशि महीयसे । ततो नो मह आवह । वायुर्भूत्वा सर्व्वा दिश आवाहि । सर्व्वा दिशोऽनु विवाहि । सर्व्वा दिशोऽनुसंवाहि । चित्त्या चितिमापृण । अचित्त्या चितिमापृण । चिदसि समुद्रयोनिः ॥ २ ॥ इन्दुर्दक्षः श्येन ऋतावा । हिरण्यपक्षः शकुनो भुरण्युः । महान् सधस्थे ध्रुव आनिषत्तः । नमस्ते अस्तु मा मा हिꣳसीः । एति प्रेति वीति समित्युदिति । दिवं मे यच्छ । अन्तरिक्षं मे यच्छ । पृथिवीं मे यच्छ । पृथिवीं मे यच्छ । अन्तरिक्षं मे यच्छ । दिवं मे यच्छ । अह्ना प्रसारय । रात्र्या समच । रात्र्या प्रसारय । अह्ना समच । कामं प्रसारय । कामꣳ समच" ॥ ३ ॥ इति । अत्र संवत्सरोऽसीत्यारभ्य माहिꣳसीरित्यन्तः संहारमन्त्रः । एति प्रेतीत्यारभ्य अवशिष्टो विहारमन्त्रः । प्रभवविभवादिषु षष्टिसंवत्सरेषु एकैकस्मिंश्च क्रमेण संवत्सरादिशब्दा वर्त्तन्ते । हे 'अग्ने', त्वं 'संवत्सरोऽसि' प्रभवरूपोऽसि । 'परिवत्सरोऽसि' विभवरूपोऽसि ।

'इदावत्सरोऽसि' शुक्लरूपोऽसि। 'इद्वत्सरोऽसि' प्रमोदरूपोऽसि। 'इद्वत्सरोऽसि' प्रजापतिरूपोऽसि। पञ्चस्वप्येतेष्वनुगत आकारो वत्सरः। एतद्रूपोऽसि एवमाङ्गिरःश्रीमुखादिषु एकादशसु पञ्चकेषु योजयितव्यं। 'तस्य ते' तादृशस्य संवत्सरादिरूपस्य तव, पुनः पक्ष्याकारेण वर्त्तमानस्य, वसन्तादयः पञ्चर्त्तवोऽवस्थिता भवन्तीत्यवयवाः। 'मध्यं' मध्यमशरीरं। तथा चितिरूपेण वर्त्तमानस्य तव शुक्लपक्षाः सर्व्वे 'चितयः', कृष्णपक्षाः सर्व्वे 'पुरीषं' आच्छादनार्था मृत्तिका। तेषु द्विविधपक्षेषु यानि 'अहोरात्राणि', तानि 'इष्टकाः', अनेनोक्तरूपेण भावनायामयमग्निरूपस्थितो भवति। तथा त्वं 'ऋषभः' श्रेष्ठः, स्वर्गलोकहेतुरसि। तादृशस्त्वं प्राच्यां 'दिशि', 'महीयसे' पूज्यसे। 'ततः' दिशः सकाशात्, 'नः' अस्माकं, 'मह आवह' पूजामानय। तथा त्वं वायुरूपो भूत्वा 'सर्व्वा दिशः', 'आवाहि' समन्ताद्वातेन योजय। तथा 'सर्व्वा दिशोऽनु' सर्व्वासां दिशामानुकूल्येन, 'विवाहि' विविधं वायुना योजय, यत्र यावान् वायुरपेक्षितः, तत्र तावन्तमेव वायुं सम्पादय। तथा 'सर्व्वा दिशोनु', 'संवाहि' समीचीनं शैत्यसौरभ्यमान्द्ययुक्तं वायुं कुरु। 'चित्तिर्ज्ञानं तेनास्माभिर्येयं चित्तिः सम्पादिता तां 'चितिं', 'आपृण' सर्व्वतः पूरय। अचित्तिरज्ञानं तेन या चितिरस्माभिरनुष्ठिता। तामपि 'आपृण', तेन ज्ञानेन वा यदस्माभिस्स्खलितं तत् समाधेहीत्यर्थः। हे अग्ने त्वं चिदादिगुणयुक्तः 'अग्नि','चित्' चयनयोग्यः, 'समुद्रयोनिः' वडवारूपेण समुद्रादुत्पन्नः। 'इन्दुः' चन्द्रवदा-

ह्लादकारी, 'दक्षः' उत्साहयुक्तः, 'श्येनः' पक्ष्याकारः, 'ऋता वा' ऋतं यज्ञं तन्निष्पादकत्वेन तद्वान्, 'हिरण्यपक्षः' सुवर्णमयपक्षोपेतः, 'शकुनः' शक्तिमान्, 'भुरण्युः' भरणीयः, अत एव बहुगुणयुक्तत्वात् 'महान्', 'सधस्थे' देवैः सह सहावस्थानयोग्ये, अस्मिन् देवयजने 'ध्रुवः' स्थिरः सन्, 'आनिषत्तः' आगत्योपविष्ट। 'ते' तादृशाय तुभ्यं, 'नमः', अस्तु। 'मा मा हिंसीः' आप्रविसमुदित्येते पञ्चोपसर्गाः तेष्वितिशब्दाः पञ्च-योग्यक्रिया प्रदर्शनार्थाः। अत्रागच्छ अभीष्टं प्रापय अनिष्टं विलोपयास्माभिः संयुक्तो भव अस्माकमुत्कर्षं कुरु। एवं क्रियान्तराण्यपि यथायोगमनुनेयानि। ततो लोकत्रयं अवरोह। क्रमेणारोहक्रमेण च मदर्थं नियतं कुरु। आरोहावरोहयोर्मम स्वातन्त्र्यं देहीत्यर्थः। 'अह्ना' दिननिमित्तं, 'प्रसारय' सूर्य्यरूपस्य तव रश्मिप्रसृतं कुरु। 'रात्र्या' रात्रिनिमित्तं सम्यक् सौर्यं तेजः सङ्कुचितं कुरु। तथा 'रात्र्या प्रसारय' रात्रिनिमित्तमाग्नेयं तेजः प्रसृतं कुरु। 'अह्ना समच' अहर्निमित्तं सङ्कुचितं कुरु। अग्निं वावादित्यः सायं प्रविशतीत्युक्तत्वात्, रात्रौ सौर्यं तेजः सङ्कुच्यते। उद्यन्तं वावादित्यमग्निरनुसमारोहतीत्युक्तत्वादहन्याग्नेयं तेजः सङ्कुच्यते। तदेवमादित्यरूपेणाग्निरूपेण वा 'कामं' स्वेच्छया, तेजः प्रसारय स्वेच्छयैव 'कामं' स्वेच्छया, तेजः प्रसार स्वेच्छयैव सङ्कोचय॥

इति चतुर्थोऽनुवाकः।

अथ पञ्चमोऽनुवाकः।

(१) चतुर्थे यजमानस्योपस्थानमुक्तं। पञ्चमे होतुरनुशंसन-मुच्यते। कल्पः। जघनेनाग्निं प्राङ्मुख उपविश्य संस्थितोक्थेन होतानुशंसति भूर्भुवः स्वरित्यनुवाकेनेति। पाठस्तु। "भूर्भुवः स्वः। ओजो बलम्। ब्रह्म क्षत्रम्। यशो महत्। सत्यं तपो नाम। रूपममृतम्। चक्षुः श्रोत्रम्। मन आयुः। विश्वं यशो महः। समन्तपो हरो भाः। जातवेदा यदि वा पावकोऽसि। वैश्वानरो यदि वा वैद्युतोऽसि। शं प्रजाभ्यो यजमानाय लोकम्। ऊर्ज्जं पुष्टिं ददद्भ्यावृत्स्व"॥१॥ इति। भूरादयो भा इत्येवमन्ताः पदार्था हे अग्ने त्वदधीना इति वाक्यशेषः। 'भूर्भुवः स्वः', इत्येते त्रयो लोकाः। 'ओजः' बल-हेतुरष्टमो धातुः। 'बलं' शरीरशक्तिः। 'ब्रह्मक्षत्रे' जाति-विशेषौ। 'महद्यशः' महती कीर्त्तिः। 'सत्यं' यथार्थभाषणं, 'तपः' कृच्छ्रचान्द्रायणादि। 'नाम' आचार्योपाध्यायादि। 'रूपं' शरीरगतलावण्यं। 'अमृतं' देवत्वपदं। 'चक्षुश्श्रोत्रमनआयूंषि', प्रसिद्धानि। 'विश्वं यशः' सर्वा कीर्त्तिः। पूर्व्वमतल्लोकविषया धनविद्यादिकीर्त्तिरुक्ता, इदानीं तु परलोकविषयानुष्ठा-नकीर्त्तिरिति विशेषः। 'महः' पूजा। 'समं' सर्व्वत्र साम्य-बुद्धिः। 'तपः' सन्तापशक्तिः। 'हरः' शरीरगता दीप्तिः। 'भाः' रश्मिरूपं तेजः। एतत् सर्व्वं त्वदधीनं। तादृशस्त्वं 'यदि', 'जातवेदाः' उत्पन्नजगदभिज्ञः, 'पावकः' प्राणिनां शोधकः, 'असि'। 'यदि वा', 'वैश्वानरः' सर्व्वपुरुषहितः, 'वैद्युतः' विद्युत

प्रभावाग्निः, 'असि'। सर्व्वथापि 'प्रजाभ्यो यजमानाय', च 'शं' सुखं, 'लोकं' स्वर्गं, 'ऊर्जं' क्षीरादिरसं, 'पुष्टिं' धनादिसमृद्धिं, 'ददत्' प्रयच्छन्, 'अभ्यावर्त्तस्व' आभिमुख्येनावृत्तो भव॥

इति पञ्चमोऽनुवाकः।

---

अथ षष्ठोऽनुवाकः।

(१) पञ्चमे होतुरनुशंसनमुक्तं। षष्ठे बहूनामाहुतीनां शतरुद्रीयादिमन्त्रसाध्यानां संस्रावेणाज्येन मुखशोधनमुच्यते। तासां संस्रावेण यजमानो मुखं विमृष्टे, राज्ञी विराज्ञीत्यनुवाकेनेति। "राज्ञी विराज्ञी। सम्राज्ञी स्वराज्ञी। अर्चिः शोचिः। तपो हरो भाः। अग्निरिन्द्रो बृहस्पतिः। विश्वे देवा भुवनस्य गोपाः। ते मा सर्व्वे यशसा सꣳसृजन्तु" ॥१॥ इति। राज्ञ्यादयो देवताविशेषाः। 'राज्ञी' राजमाना, 'विराज्ञी' विविधं राजमाना। 'सम्राज्ञी' सम्यग्राजमाना, 'स्वराज्ञी' आभरणप्रदीपादिनैरपेक्ष्येण स्वयमेव राजमाना। 'अर्चिः' ज्वालाभिमानिनी, 'शोचिः' रश्म्यभिमानिनी। 'तपः' सन्तापशक्तिः, 'हरः' पापहरणशक्तिः, 'भाः' पदार्थावभासनशक्तिः। अग्न्यादयः प्रसिद्धाः। 'ते सर्व्वे', 'भुवनस्य', 'गोपाः' रक्षकाः सन्तः, स्वकीयेन 'यशसा', 'मा संसृजन्तु' तत्सम्बन्धिसामर्थ्यं ममास्तु॥

इति षष्ठोऽनुवाकः।

---

अथ सप्तमोऽनुवाकः।

(१) षष्ठे मुखविमार्जनमुक्तं। सप्तमे होमा उच्यन्ते। कल्पः। अथैकविंशतिमाहुतीर्जुहोति, असवे स्वाहा वसवे स्वाहे-त्यनुवाकेन प्रतिमन्त्रं। पाठस्तु। "असवे स्वाहा वसवे स्वाहा। विभुवे स्वाहा विवस्वते स्वाहा। अभिभुवे स्वाहाधिपतये स्वाहा। दिवाम्पतये स्वाहाऽंहस्पत्याय स्वाहा। चाक्षुष्मत्याय स्वाहा ज्योतिष्मत्याय स्वाहा। राज्ञे स्वाहा विराज्ञे स्वाहा। सम्राज्ञे स्वाहा स्वराज्ञे स्वाहा। शूषाय स्वाहा सूर्य्याय स्वाहा। चन्द्रमसे स्वाहा ज्योतिषे स्वाहा। संसर्पाय स्वाहा कल्याणाय स्वाहा। अर्जुनाय स्वाहा" ॥ १ ॥ इति। असुव-सुप्रभृतयश्चित्यस्याग्नेर्मूर्त्तिविशेषः ॥ 'असुः' प्राणः तद्रूपाया-ग्नये, स्वाहुतमिदमस्तु। 'वसुः' जगन्निवासहेतुः। 'विभुः' वैभवहेतुः। 'विवस्वान्' विशेषेण निवासहेतुः। 'अभिभूः' शत्रूणामभिभविता। 'अधिपतिः' अधिष्ठाय पालयिता। 'दि-वाम्पतिः' द्युलोकपालकः। 'अंहस्पत्यः' पापात् पालयिता। 'चाक्षुष्मत्यः' चक्षुष्मतां स्वामी। 'ज्योतिष्मत्यः' ज्योतिष्मतां नक्षत्रादीनां स्वामी। राज्ञे इत्यादिशब्दाश्चत्वारः पूर्व्ववत्। 'शूषः' बलं। 'सूर्य्यः', 'चन्द्रमाः', उभौ प्रसिद्धौ। 'ज्योतिः' प्रकाशः। 'संसर्पः' सम्यक् प्रापणीयः पदार्थः। 'कल्याणं' मङ्गलं। 'अर्जुनः' श्वेतवर्णः, एतेभ्यो मूर्तिविशेषेभ्यः स्वाहुतमिदमस्तु ॥

इति सप्तमोऽनुवाकः।

अथाष्टमोऽनुवाकः ।

(१) सप्तमे होमा उक्ताः । अष्टमे मृत्युग्रहोऽभिधीयते । कल्पः । औदुम्बरेण पात्रेण पूर्णो मृत्यवे ग्रहं गृह्णाति विपश्चिते पवमानायेति ग्रहणसादनाविति । पाठस्तु । "विपश्चिते पवमानाय गायत । मही न धारात्यन्धो अर्षति । अहिर्न जीर्णामतिसर्पति त्वचम् । अत्यो न क्रीडन्नसरद्वृषा हरिः । उपयामगृहीतोऽसि मृत्यवे त्वा जुष्टं गृह्णामि । एष ते योनिर्मृत्यवे त्वा" इति । हे ऋत्विग्यजमानाः 'विपश्चिते' अभिज्ञाय, 'पवमानाय' शोधकाय मृत्यवे, 'गायत' स्तोत्रैर्गानं कुरुत । अयं मृत्युर्देवः 'मही न धारा' महती वृष्टिधारेव, 'अन्धः' अन्नं, 'अत्यर्षति' अतिशयेन प्राप्नोति । यथा वृष्टिधारयान्नं समृद्धं भवति, एवमस्यानुग्रहेणाप्यन्नसमृद्धिर्भवति । तस्य देवस्य विनाशाभावे दृष्टान्तः । 'अहिर्न' सर्प इव, 'जीर्णां त्वचमतिसर्पति' । यथा सर्पो जीर्णां त्वचमतिमुच्य स्वयं जीवन्नेव परतः सर्पति, न तु त्वचा सह म्रियते । एवमयं मृत्युर्देवोऽपि न म्रियत इत्यर्थः । किञ्च 'अत्यो न' व्याप्त इव, 'क्रीडन्', स्वयं मृत्युः 'वृषा' कामाभिवर्षकः, 'हरिः' पापहर्त्ता च भूत्वा, 'असरत्' सर्व्वत्र प्रवृत्तः, हे पशुरस त्वं 'उपयामगृहीतोसि' पृथिवीकार्य्येणौदुम्बरपात्रेणोपयामाख्येन गृहीतोसि, तादृशं 'त्वां', 'मृत्यवे', 'जुष्टं' प्रियं, 'गृह्णामि', अनेन मन्त्रेण ग्रहणं, 'एषः' वेदिप्रदेशः, 'ते', 'योनिः' स्थानं, अतो मृत्युप्रीत्यर्थं त्वामत्र 'सादयामि' ॥

(२) कल्पः। अथ जुहोत्यपमृत्युमप क्षुधमिति। पाठस्तु। "अप मृत्युमप क्षुधम्। अपेतः शपथं जहि। अथा नो अग्न आवह। रायस्पोषꣳ सहस्रिणम्॥ १॥ ये ते सहस्रमयुतं पाशाः। मृत्यो मर्त्याय हन्तवे। तान् यज्ञस्य मायया। सर्वानवयजामहे" इति। हे अग्ने 'मृत्युं' मरणं, 'अपजहि'। 'इतः' अस्मत्सकाशात्, 'क्षुधं' क्षुद्बाधां, 'शपथं' परकीयं शापं, 'अपजहि' विनाशय। 'अथ' तद्विनाशानन्तरं, 'नः' अस्माकं, 'सहस्रिणं' सहस्रसङ्ख्यायुक्तं, 'रायस्पोषं' धनपुष्टिं, 'आवह' सम्पादय। हे 'मृत्यो', 'मर्त्याय हन्तवे' मनुष्यं हन्तुं, 'ते' तव, 'ये सहस्रमयुतञ्च पाशाः', सन्ति 'तान्', 'यज्ञस्य मायया'। यज्ञो वै विष्णुरिति श्रुतेः, परमेश्वरस्य मायया शक्त्या, 'अवयजामहे' विनाशयामः॥

(३) कल्पः। तस्येडानुभक्षो भक्षयति भक्षोस्य मृतभक्ष इति। तस्य पशोरिडाया अनन्तरं ग्रहभक्षो भवति तं च भक्षयेत्। पाठस्तु। "भक्षोऽस्यमृतभक्षः। तस्य ते मृत्युपीतस्यामृतवतः। स्वगाकृतस्य मधुमतः। उपहूतस्योपहूतो भक्षयामि" इति। हे ग्रह त्वं 'अमृतभक्षः' अमृतवत् प्रीत्या भक्षणार्हः, मम 'भक्षामि'। 'तस्य ते' तादृशस्य तव, अंशं 'उपहूतस्य', अनुज्ञातोऽहं 'भक्षयामि'। कीदृशस्य तव, 'मृत्युपीतस्य' मृत्युदेवेन प्रथमं पीतस्य, 'अमृतवतः' अमृतसमानेन स्वादुत्वेनोपेतस्य, 'स्वगाकृतस्य' स्वाधीनत्वेन सम्पादितस्य, 'मधुमतः' माधुर्ययुक्तस्य, 'उपहूतस्य' अनुज्ञातस्य॥

(४) कल्पः। भक्षयित्वा प्राणैर्निर्वाहनात्मन् प्रतिष्ठापयत

मन्द्राभिभूतिरित्यनुवाकशेषणेति। पाठस्तु। "मन्द्राभिभू-तिः केतुर्यज्ञानां वाक्। असावेहि॥ १॥ अन्धो जागृविः प्राणः। असावेहि। बधिर आक्रन्दयितरपान। असावेहि। अहस्तोस्त्वा चक्षुः। असावेहि। अपादाशो मनः। असावेहि। कवे विप्रचित्ते श्रोत्र। असावेहि॥ २॥ सुहस्तः सुवासाः। शूषो नामास्यमृतो मर्त्येषु। तं त्वाहन्तथा वेद। असावेहि। अग्निर्मे वाचि श्रितः। वाग्घृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। वायुर्मे प्राणे श्रितः॥ ४॥ प्राणो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। सूर्यो मे चक्षुषि श्रितः। चक्षुर्हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्म-णि। चन्द्रमा मे मनसि श्रितः॥ ५॥ मनो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। दिशो मे श्रोत्रे श्रिताः। श्रोत्रꣳ हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। आपो मे रेतसि श्रिताः॥ ६॥ रेतो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। पृथिवी मे शरीरे श्रिता। शरी-रꣳ हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। ओषधिवनस्पतयो मे लोमसु श्रिताः॥ ७॥ लोमानि हृद-ये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। इन्द्रो मे बले श्रितः। बलꣳ हृदये। हृदयं मयि। अहममृते। अमृतं ब्र-ह्मणि। पर्जन्यो मे मूर्द्धि श्रितः॥ ८॥ मूर्द्धा हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। ईशानो मे मन्यौ श्रितः। मन्युर्हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। आत्मा

म आत्मनि श्रितः। आत्मा हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। पुनर्म आत्मा पुनरायुरागात्। पुनः प्राणः पुनराकूतमागात्। वैश्वानरो रश्मिभिर्वावृधानः। अन्तस्तिष्ठत्वमृतस्य गोपाः" ॥ ८ ॥ इति। येयं 'वाक्' अस्माभिर्वक्ष्यमाणा मन्त्ररूपा, सेयं 'मन्द्रा' हर्षहेतुः, 'अभिभूतिः' विरोधिनामभिभवहेतुः, 'यज्ञानां', 'केतुः' ज्ञानहेतुः, हे वाग्देवि 'असौ' पूर्वोक्तमन्द्रादिगुणवती भूत्वा, 'एहि' समागच्छ। योयं प्राणवायुर्मुखनासिकावर्ती दर्शनशक्त्यभावात् 'अन्धः', उच्छ्वासक्रियायामप्रमत्तत्वात् 'जागृविः', हे प्राण 'असावेहि' तादृशो भूत्वा समागच्छ। एवं सर्व्वत्र द्रष्टव्यं। अपानवायुः श्रवणशक्त्यभावात् 'वधिरः'। उदरमध्ये क्रन्दनस्य ध्वनिविशेषस्य हेतुत्वात् 'आक्रन्दयितः'। हे 'अपान'वायो तादृशः सन्नागच्छ। यदिदं चक्षुरिन्द्रियं तत् 'अहस्तोः' आदानशक्तिराहित्यादहस्तं, हे चक्षुरिन्द्रिय तादृशं त्वामाह्वयामि, तथाविधः सन् 'एहि'। यदिदं 'मनः', अस्ति तत् 'अपादाशः' गमनशक्त्यभावात् पादरहितं, सर्व्वगोचरत्वाज्ज्ञापकं, हे मनः तथाविधं भूत्वा समागच्छ। श्रोत्रेन्द्रियं शब्दवेदनसद्भावात् कविरूपं, तांश्च शब्दान् विविच्य प्रकर्षेण विविच्य चेतयत इति 'विप्रचित्तिः', तादृश हे 'श्रोत्र', तथाविधं भूत्वा समागच्छ। योयं सर्व्वेन्द्रियस्वामी जीवात्मा सोयं हस्तस्वामित्वात् 'सुहस्तः', सुष्ठु देहावसनात् 'सुवासाः', 'मर्त्येषु' मरणयुक्तेषु देहेषु, 'अमृतः' मरणरहितः सन्, वर्त्तते, तादृशजीवत्वं 'सुरूपं नामासि'

सर्व्वव्यापारसमर्थत्वात् प्रबल इत्येतादृशनामधार्यसि, तादृशं 'त्वामहं', तथैव जानामि, त्वं तादृशो भूत्वास्मिन्नेव शरीरे समागच्छ। वागिन्द्रियस्याग्निरभिमानिदेवता, अत एव शाखान्तरे श्रूयते, अग्निर्वाग्भूत्वा मुखं प्राविशत् वायुः प्राणो भूत्वा नासिके प्राविशदित्यादि। सः 'अग्निः', मम वागिन्द्रिये 'श्रितः', भवतु। सा च 'वाग्', मदीये 'हृदये' अन्तःकरणे, श्रिता भवतु। तच्च 'हृदयं', 'मयि' अहङ्कर्त्तरि जीवात्मनि, श्रितं भवतु। 'अहं', च 'अमृते' विनाशरहिते जगत्कारणे मायाविद्याशक्त्या व्याकृतादिशब्दैर्वेदेषु श्रूयमाणे प्रधाने, श्रितो भवानि। तच्च 'अमृतं' अव्याकृतं, 'ब्रह्मणि' सत्यं ज्ञानमनन्तमित्यादिश्रुतिप्रतिपाद्ये वस्तुनि, श्रितं भवतु। एवं वायुर्मे प्राणे श्रित इत्यादिपर्याया व्याख्येयाः। अन्तिमे पर्याये प्रथम आत्मशब्दो ब्रह्माण्डरूपविराड्देहवर्त्तिनमिन्द्रवाय्वादिदेवतासमूहमाचष्टे। द्वितीय आत्मशब्दोऽनुष्ठानदेहवर्त्तिनं वाक्प्राणादिसङ्घातमाचष्टे। अन्यत् पूर्व्ववद्व्याख्येयं। योऽयं मृत्युग्रहभीत्या पलायितुमुद्युक्तो मदीयः 'आत्मा' देहः, 'पुनः', आगच्छतु। 'आयुः', अपि 'पुनः', आगच्छतु। 'प्राणः', अपि 'पुनः', आगच्छतु। 'आकूतं' मनसः सङ्कल्पः, सोऽपि 'पुनः', आगच्छतु। योऽयं 'वैश्वानरः' जाठराग्निः, सोऽयमपि 'रश्मिभिः', वर्धमानः 'अमृतस्य' अन्नस्य, 'गोपाः' रक्षकः सन्, मदीयशरीरस्य 'अन्तस्तिष्ठतु'॥

इति अष्टमोऽनुवाकः।

अथ नवमोऽनुवाकः।

(१) अष्टमे मृत्युग्रहोऽभिहितः। एतावता सावित्राग्निचयनाङ्गमन्त्रप्रतिपादका अनुवाकाः समाप्ताः। उत्तरेष्वनुवाकेषु ब्राह्मणमभिधीयते। तस्मिन्ननुवाके ध्यानरूपा सावित्राग्निविद्याभिधीयते। आदौ तावन् मृत्युग्रहशेषत्वेन मन्त्रद्वयं विधातुं प्रस्तौति। "प्रजापतिर्देवानसृजत। ते पाप्मना सन्दिता अजायन्त। तान्व्यद्यत्। यद्व्यद्यत्। तस्माद्विद्युत्। तमवृश्चत्। यदवृश्चत्। तस्माद्वृष्टिः। तस्माद्यत्रैते देवते अभिप्राप्नुतः। वि च हैवास्य तत्र पाप्मानन्द्यतः॥ १॥ वृश्चतश्च" इति। प्रजापतिसृष्टा ये देवाः 'पाप्मना', 'सन्दिताः' संयुक्ताः, एवोत्पन्नाः। स प्रजापतिः 'तान्' देवान्, पाप्मनः सकाशात् 'व्यद्यत्' वियोजितवान्। अतएव 'व्यद्यत्', इति व्युत्पत्त्या तस्या देवतायाः 'विद्युत्', नाम सम्पन्नं। 'तं' च पाप्मानं, 'अवृश्चत्' छिन्नवान्। 'अवृश्चत्', इत्यनयैव व्युत्पत्त्या वृष्टिनामसम्पन्नं। यस्मादेवं 'तस्मात्', 'यत्र' कर्म्मणि, 'एते' विद्युद्वृष्टिदेवते, आभिमुख्येन 'प्राप्नुतः', तत्र 'अस्य' यजमानस्य, पापं वियोजयतो विच्छिन्नञ्च कुरुतः॥

(२) विधित्सितयोर्मन्त्रयोर्विषयं निश्चिनोति। "सैषा मीमाꣳसाग्निहोत्र एव सम्पन्ना। अथो आहुः। सर्व्वेषु यज्ञक्रतुष्विति" इति। येयं मन्त्रद्वयानुष्ठानविषया 'मीमांसा', 'सा', इयं 'अग्निहोत्र एव', सम्प्राप्ता, न त्वन्यत्रेत्येकं मतं। एतदेवाश्रित्य बोधायनादयो वर्त्तन्ते। अपि चान्ये केचिदेवं

'आहुः'। 'सर्व्वेषु', अपि 'यज्ञक्रतुषु', मन्त्रद्वयमनुष्ठेयमिति तदिदं मतमाश्रित्यापस्तम्बादयो वर्त्तन्ते ॥

(३) यदुक्तं सूत्रकारेण। "होष्यन्नप उपस्पृशेत्। विद्युदसि विद्य मे पाप्मानमिति। अथ हुत्वोपस्पृशेत्। वृष्टिरसि वृश्च मे पाप्मानमिति। यक्ष्यमाणो वेष्ट्वा वा। वि च ह्वैवास्यैते देवते पाप्मानन्यतः ॥ १ ॥ वृश्चतश्च" इति। हे देवते त्वं 'विद्युत्' वियोगहेतुः, 'असि', अतो 'मे', 'पाप्मानं', 'विद्य' वियोजय। तथा हे देवते 'वृष्टिः' छेदनहेतुः, 'असि'। अतः 'मे', 'पाप्मानं', 'वृश्च' छिन्धि। एतयोर्मन्त्रयोर्मूत्युग्रहे होष्यन्नित्यादिविधिः सर्व्वयज्ञविषयो यक्ष्यमाण इत्यादिविधिः। विचहेत्यादि पूर्व्ववत् ॥

(४) तदेवं साविचाग्निविषयं चयनं परिसमाप्य तद्विषयां विद्यां वक्तुमाख्यायिकामाह। "अत्यंहो हारुणिः। ब्रह्मचारिणे प्रश्नान् प्रोच्य प्रजिघाय। परेहि। प्लक्षं दय्यां पातिं पृच्छ। वेत्थ साविचा३न्नवेत्था३ इति। तमागत्य पप्रच्छ। आचार्य्यो मा प्राहैषीत्। वेत्थ साविचा३न्नवेत्था३ इति। स होवाच वेदेति" ॥ २ ॥ इति। अंहः पाप्मानमतिक्रम्य वर्त्तत इति 'अत्यंहः' एतन्नामको मुनिररुणस्य पुत्रः, स च स्वशिष्याय कस्मैचित् 'ब्रह्मचारिणे', प्रष्टव्यानर्थानुक्त्वा तं ब्रह्मचारिणं अन्यस्य मुनेः समीपे प्रेषयामास। भो ब्रह्मचारिन् प्रजिघायनामकस्य मुनेः पुत्रं 'दय्यां', 'पातिं', प्लक्षनामकं मुनिं गत्वा साविचाग्निं 'वेत्थ', 'न वेत्थ', इत्येवं प्रश्नं कुर्विति। स च ब्रह्म-

चारी तं 'प्रश्नं', गत्वा स्वकीयस्याचार्य्यस्याज्ञां कथयित्वा तथैव सावित्रं जानासि न वेति एवं 'पप्रच्छ'। 'सः' च प्रश्नः, 'वेद', इत्युत्तरमुक्तवान् ॥

(५) अथ ब्रह्मचारिप्रश्नानां प्रैत्युत्तराणां च परम्परां दर्शयति। "स कस्मिन् प्रतिष्ठित इति। परोरजसीति। कस्तत्परोरजा इति। एष वाव स परोरजा इति होवाच। य एष तपति। एषोऽर्वाग्रजा इति। स कस्मिन्न्वेष इति। सत्य इति। किं तत्सत्यमिति। तप इति॥४॥ कस्मिन्नु तप इति। बल इति। किं तद्बलमिति। प्राण इति। मा स्म प्राणमतिपृच्छ इति माचार्य्योऽब्रवीदिति होवाच ब्रह्मचारी" इति। हे मुने यदि सावित्रमग्निं वेत्सि। तर्हि 'सः' अग्निः, 'कस्मिन्' आश्रये, 'प्रतिष्ठितः', 'इति' ब्रह्मचारिणः प्रश्नः। रजोगुणयुक्ताज्जन्ममरणप्रवाहरूपात् संसारात् परस्ताद्यो वर्त्तते सोऽयं 'परोरजाः', तस्मिन्नयं सावित्राग्निः प्रतिष्ठित 'इति'। 'यत्', लयोक्तं, 'तत्', विस्पष्टं वक्तव्यं। 'कः', अयं 'परोरजा इति', प्रश्नः। य एष मण्डलात्मा दृश्यते, 'स एषः', एव 'परोरजा इति', उत्तरं। सांसचक्षुषा दृश्यमानः 'एषः' मण्डलात्मा, संसारमध्यवर्त्तित्वात् सर्वोग्रजा एव न तु परोरजा इत्यतो नेतद्युक्तमुत्तरं। किन्तु 'एषः सः' अग्निः, 'कस्मिन्' संसारातीत आश्रये, प्रतिष्ठितः स वक्तव्यः 'इति', प्रश्नः। यत् 'सत्यं' पारमार्थिकं वस्तु, तस्मिन् प्रतिष्ठित इत्युत्तरं। 'तत्', च 'सत्यं', वस्तु, 'किं', 'इति', प्रश्नः, केन साधनेन लभ्यत इति अभिप्रायः। तपसा लभ्यत इत्यभि-

प्रेत्य 'तपः', एव सत्यं 'इति', उत्तरमुक्तं। तच्च साधनरूपं 'तपः', 'कस्मिन्', प्रतिष्ठितं 'इति', प्रश्नः। सति शरीरबले तपसः अनुष्ठातुं शक्यत्वात् 'बले', तपः प्रतिष्ठितमित्युक्तमुत्तरं। बललभ्यकारणं वस्तु विवक्षितत्वात् 'किं तद् बलमिति', प्रश्नः प्राणस्य बलकारणत्वमभिप्रेत्य 'प्राणाः', बलं 'इति'. उत्तरमुक्तं। अनया प्रश्नोत्तरपरम्परया सावित्रस्याग्नेः प्रतिष्ठारूपं यत् सत्यं वस्तु तत् प्राणदेवतारूपेण शरीरे प्रतिष्ठितं। तथैव ध्यातव्यमिति निर्णयः सम्पन्नः। प्राणादूर्ध्वं वस्त्वन्तरप्रश्नो न कर्त्तव्यः, इत्येतादृशीमाचार्याज्ञां 'ब्रह्मचारी', उक्तवान् ॥

(६) अथ प्रसङ्गात् सावित्राग्निदेवताविषये मात्सर्यपूर्व्वकं संवादं निषेधति। "स होवाच सुचो दर्य्यां पातिः। यद्वै ब्रह्मचारिन् प्राणमत्यप्रक्ष्यः। मूर्द्धा ते व्यपतिष्यत्। अहमुत आचार्याच्छ्रेयान् भविष्यामि। यो मा सावित्रे समवादिष्टेति ॥ ५ ॥ तस्मात् सावित्रे न संवदेत" इति। 'स सुचः', ब्रह्मचारिणं प्रत्येवमुक्तवान्। हे 'ब्रह्मचारिन्', त्वदीयेनाचार्येण तुभ्यमत्यन्तहितमेवोक्तं। यदि त्वं प्राणदेवतां सर्वोत्तमामतिक्रम्य तदाश्रयत्वेनान्यां देवतां पृच्छेत् तदा तव 'मूर्द्धा', विपतेत्। अतो नास्त्येव प्राणादुत्तमा देवता, किञ्च यस्त्वदीय आचार्यो मां प्रति सावित्राग्निदेवताविषये मात्सर्य्येण संवादं कृतवान्। 'तस्मात्', तव सम्बन्धिन 'आचार्यात्', 'अहं', एवातिशयेन प्रशस्तः 'भविष्यामि'। यस्मादस्मिन्नुपाख्याने सुच एव मुवाच। तस्माद्रहस्ये 'सावित्रे', विज्ञाने कश्चिदपि मात्सर्येण संवादं न

कुर्य्यात्। किं त्वाचार्य्योपदिष्टेनैव मार्गेण ध्यायेत्। अयं न्यायः सर्व्वेष्वप्युपदेशगम्येषु रहस्येषु समानः ॥

(७) विपक्षे बाधकोपन्यासमुखेन संवादनिषेधमेव प्रशंसति। "स यो ह वै सावित्रं विदुषा साविच संवदते। स ह्यास्मिञ्छ्रियं दधाति। अनु ह वा अस्मा असौ तपञ्छ्रियं मन्यते। अन्वस्मै श्रीस्तपो मन्यते। अन्वस्मै तपो बलं मन्यते। अन्वस्मै बलं प्राणं मन्यते" इति। 'स यो ह वै' यः कोऽपि विद्यागर्वपराधीनः पुमान्, 'सावित्रं' अग्निं, 'विदुषा' ध्यानेन साक्षात् कृतवता पुरुषेण सह, तस्मिन् सावित्राग्निविषये मात्सर्य्येण संवादं करोति। 'सः', खलु 'अस्मिन्' विदुषि, स्वकीयां 'श्रियं', प्रक्षिपति। तदेव स्पष्टीक्रियते। 'असौ' मात्सर्य्यग्रस्तः पुमान्, 'तपन्' सावित्राध्यानादिरूपं तपः कुर्व्वन्, 'श्रियं' तपःफलरूपं, 'अस्मै' विदुषे, 'अनुमन्यते'। 'अस्मै' विदुषे, 'अनुमन्यते' एव मदीया श्रीस्त-वगच्छेदिति फलमङ्गीकरोत्येव, सा च 'श्रीः', तदीयं 'तपः', अपि 'अस्मै', विदुषे, 'अनुमन्यते', तच्च 'तपः', तदीयं 'बलं', 'अस्मै' 'विदुषे' 'अनुमन्यते', तच्च 'बलं', तदीयं 'प्राणं' देवतारूपं, मात्सर्यग्रस्तः सर्व्वस्मादेतस्माद्भ्रश्यते। विद्वांस्तु सर्व्वैरप्येतैरभिवर्द्धते। तस्माद्विदुषा सह न संवदेत ॥

(८) अथ सञ्ज्ञानमित्यादिभिरष्टभिरनुवाकैर्योऽर्थः प्रतिपादितः स सर्व्वोऽपि सावित्राग्निदेवतास्वरूपत्वेन ज्ञातव्य इत्यभिप्रेत्य शुक्लपक्षस्याहोरात्रनामप्रतिपादकयोः प्रथमतृतीयानुवाकयोस्तात्पर्यं दर्शयति। "स यदाह। सञ्ज्ञानं

विज्ञानं दर्शादृष्टेति। एष एव तत्" ॥ ६ ॥ इति। 'सः' मन्त्रभागः, 'सञ्ज्ञानं' दर्शेत्याभ्यामनुवाकाभ्यां यद्वस्तु ब्रूते तद्वस्तु ध्यातव्यं, 'एषः' सावित्रोऽग्निः, 'एव' ॥

(९) कृष्णपक्षस्याहोरात्रयोः प्रतिपादकयोः पञ्चमसप्तमानुवाकयोस्तात्पर्यं दर्शयति। "अथ यदाह। प्रस्तुतं विष्टुतꣳ सुता सुन्वतीति। एष एव तत्" इति ॥

(१०) उक्तानुवाकचतुष्टयतात्पर्यं निगमयति। "एष ह्येव तान्यहानि। एष रात्रयः" इति। प्रथमपञ्चमयोरुक्तानि यानि शुक्लकृष्णपक्षगतानि 'अहानि'। 'तानि' सर्वाणि, 'एषः' सावित्राग्निः, 'एव'। तृतीयसप्तमयोरुक्ताः शुक्लकृष्णपक्षगताः 'रात्रयः', याः सन्ति ताः सर्वाः 'एषः' सावित्राग्निरेव ॥

(११) चित्र इत्यस्मिन् द्वितीयानुवाके प्रोक्ताः शुक्लपक्षाहर्गता ये मुहूर्त्ताः, दातेत्यस्मिंश्चतुर्थानुवाके प्रोक्तास्तद्रात्रिगता ये मुहूर्त्ताः, सवितेत्यस्मिन् षष्ठानुवाके प्रोक्ताः कृष्णपक्षाहर्गता ये मुहूर्त्ताः, अभिशास्तेत्यस्मिन्नष्टमानुवाके प्रोक्ताः, तद्रात्रिगता ये मुहूर्त्ताः, तेषां सर्वेषां सावित्राग्निस्वरूपत्वं दर्शयति। "अथ यदाह। चित्रः केतुर्दाता प्रदाता सविता प्रसविताभिशास्तानुमन्तेति। एष एव तत्। ह्येव तेऽह्नो मुहूर्त्ताः। एष रात्रेः" ॥ ७ ॥ इति ॥

(१२) पवित्रमित्यस्मिन्नवमानुवाके प्रोक्ताः ये द्वादश शुक्लपक्षाः, सहस्वानित्यस्मिन् दशमानुवाके प्रोक्ता ये द्वादश कृष्णपक्षाः अरुण इत्यस्मिन्नेकादशानुवाके प्रोक्ता अधिकमासेन

सह ये त्रयोदश मासाः, तेषां सर्व्वेषां सावित्राग्निरूपत्वं दर्शयति। "अथ यदाह। पवित्रं पवयिष्यन्त्सहस्वान्त्सहीयानरुणोऽरुणरजा इति। एष एव तत्। एष ह्येव तेऽर्द्धमासाः। एष मासाः" इति॥

(१३) एजत्का इत्यस्मिन् द्वादशानुवाके प्रोक्ता ये सिकताविशेषाः, तेषामपि सावित्राग्निरूपत्वं द्रष्टव्यं॥

(१४) अग्निष्टोम इत्यस्मिंश्चतुर्दशानुवाके प्रोक्ता ये यज्ञक्रतवः, अग्निरित्यस्मिन् पञ्चदशानुवाके प्रोक्ता ये ऋतवः, प्रजापतिरित्यस्मिन् षोडशानुवाके प्रोक्ता यः संवत्सरः, तेषां सर्व्वेषां सावित्राग्निरूपत्वं दर्शयति। "अथ यदाह। अग्निष्टोम उक्थ्योऽग्निः ऋतुः प्रजापतिः संवत्सर इति। एष एव तत्। एष ह्येव ते यज्ञक्रतवः। एष ऋतवः॥ ८॥ एष संवत्सरः" इति॥

(१५) इदानीमित्यस्मिन् त्रयोदशानुवाके प्रोक्ताः ये मुहूर्त्तानां सम्बन्धिनोऽवान्तरमुहूर्त्ताः; तेषां सर्व्वेषां सावित्राग्निस्वरूपत्वं दर्शयति। "अथ यदाह। इदानीं तदानीमिति। एष एव तत्। एष ह्येव ते मुहूर्त्तानां मुहूर्त्ताः" इति॥

(१६) सावित्राग्निवेदनस्य फलं वक्तुमुपाख्यानमाह। "जनको ह वैदेहः। अहोरात्रैः समाजगाम। तꣳ होचुः। यो वा अस्मान् वेद। विजहत् पाप्मानमेति॥ ९॥ सर्व्वमायुरेति। अभि स्वर्गं लोकं जयति। नास्याममुष्मिँल्लोकेऽन्नं क्षीयते" इति। विदेह देशाधिपतिः 'जनकः', राजा तत्फलजि-

ज्ञासुरहोरात्राभिमानिभिः देवैः सह सङ्गतिं कृतवान्। 'तं' जनकं प्रति, ते देवाः स्वतत्फलमेवं 'ऊचुः', 'यः' कश्चित्, अस्मान् अहोरात्रदेवान्, 'वेद' सावित्राग्निरूपत्वेनोपास्ते। सोयं पुमान् स्वकीयं 'पाप्मानं', 'विजहत्' परित्यजन्, 'एति' सञ्चरति। अपमृत्युराहित्यात् 'सर्व्वं', अपि 'आयुः,' प्राप्नोति। अन्ते च 'स्वर्गं लोकमभिजयति'। 'अस्य,' स्वर्गलोके कदाचिदपि 'अन्नं', 'न चीयते', 'इति' एवमुपाख्यानेन फलं प्रशस्य श्रुतिः॥

(१७) स्वयमेव वेदितुस्तत् फलमाह। "विजहद्ध वै पाप्मानमेति। सर्व्वमायुरेति। अभि स्वर्गं लोकं जयति। नास्यामुष्मिँल्लोकेऽन्नं चीयते। य एवं वेद" इति॥

(१८) पुनरपि फलं विशदीकर्त्तुं कस्यचिदृषेर्वृत्तान्तमुदाहरति। "अहीनो हाश्वत्थ्यः। सावित्रं विदाञ्चकार॥ १०॥ स ह हꣳसो हिरण्मयो भूत्वा। स्वर्गं लोकमियाय। आदित्यस्य सायुज्यम्" इति। अहीननामकः कश्चिदृषिः अश्वत्थनामकस्य मुनेः पुत्रः। 'ह' शब्दस्तत्प्रसिद्ध्यर्थः। स मुनिः एतं सावित्राग्निं स्वस्वरूपत्वेन ध्यात्वा 'विदाञ्चकार' साक्षात् कृतवान्। 'सः', खलु देहान्ते सुवर्णदेहः 'हंसः', 'भूत्वा', 'स्वर्गं', प्राप्य 'आदित्यस्य', 'सायुज्यं' तादात्म्यं प्राप्तवान्॥

(१९) वृत्तान्तमुदाहृत्योपासकस्य फलं विशदयति। "हꣳसो ह वै हिरण्मयो भूत्वा। स्वर्गं लोकमेति। आदित्यस्य सायुज्यम्। य एवं वेद" इति॥

(२०) उक्तं फलमुपाख्यानमन्तरेण दृढयति। "देवभागो ह श्रौतर्षः। सावित्रं विदाञ्चकार। तꣳ ह वागदृश्यमानाभ्युवाच॥ ११॥ सर्व्वं वत गौतमो वेद। यः सावित्रं वेदेति। सहोवाच। कैषा वागसीति। अयमहꣳ सावित्रः। देवानामुत्तमो लोकः। गुह्यं महो बिभ्रदिति। एतावति ह गौतमः। यज्ञोपवीतं कृत्वाऽधो निपपात। नमो नम इति। स होवाच। मा भैषीर्गौतम। जितो वै ते लोकः" इति। देवान् भजतीति 'देवभागः' एतन्नामकः कश्चित् मुनिः 'श्रौतर्षः' श्रौतानुष्ठानाभिज्ञः। स च मुनिः सावित्रमग्निं ध्यानेन साक्षात् कृतवान्। 'तं' सावित्राग्निस्वरूपं आत्मानं पश्यन्तं देवभागं, काचित् 'वाक् अदृश्यमाना', सती आभिमुख्येनैवं 'उवाच'। 'यः' देवभागः, सावित्रमग्निं 'वेद' साक्षात् करोति, सोऽयं 'गौतमः' गौतमगोत्रोत्पन्नो मुनिः, 'सर्व्वं' अपि जगत्, 'वेद', 'वत' आश्चर्यमेतत् तस्य सर्व्वज्ञत्वमिति, तदेतद्वचनं श्रुत्वा केयं 'वाक्', इत्येवं स मुनिः पप्रच्छ। सा च वागेवमुत्तरमुवाच, 'अहं' सावित्राग्निरूपः सन्, 'अयं' अत्र वर्त्ते। कीदृशोऽहं, सर्व्वेषां 'देवानां', उत्तमलोकरूपः, सर्व्वेऽपि देवा मय्येव निवसन्ति। किञ्च 'गुह्यं महो बिभ्रत्' सर्व्ववेदान्तेषु गोप्यन्तेजो धारयन्, इहास्मि 'इति'। 'एतावति' सावित्राग्निदेवस्य वचने श्रुते सति, तदानीमेव सः 'गौतमः', मुनिः स्वकीयेन वस्त्रेण 'यज्ञोपवीतं कृत्वा', महत्या भक्त्या 'नमो नमः','इति' उच्चारयन् भूमौ दण्डवत् 'निपपात'। तदानीं तदीयभक्त्या तुष्टः 'सः' खलु सावित्रोऽग्निः, तमनुग्र-

स्नेवं 'उवाच'। हे 'गौतम', 'मा भैषीः' इदं सावित्राग्निज्ञानं सफलं जातं न वेति भयं मा कार्षीः, सर्व्वथा 'ते' तव, उपेचितः 'लोकः' फलविशेषः, 'जितः' त्वया लब्ध इति ॥

(२१) उपाख्यानेन दृढीकृतं फलमुपसंहरति। "तस्माद्ये के च सावित्रं विदुः। सर्व्वे ते जितलोकाः। स यो ह वै सावित्रस्याष्टाचरं पदꣳ श्रियाभिषिक्तं वेद। श्रिया हैवाभिषिच्यते। घृणिरिति द्वे अचरे। सूर्य्य इति चीणि। आदित्य इति चीणि॥१३॥ एतद्वै सावित्रस्याष्टाचरं पदꣳ श्रियाभिषिक्तम्। य एवं वेद। श्रिया हैवाभिषिच्यते" इति। 'यः' कश्चित् पुमान्, 'सावित्रस्य' अग्नेः, 'पदं' गमकं अष्टभिरचरैरुपेतं मन्त्रं श्रीबीजेनोभयतः सम्बद्धं, 'वेद' उपास्ते, मन्त्रमुच्चारयंस्तदर्थं स्वस्वरूपत्वेनानुसन्दधाति। 'सः' पुमान्, आदित्यप्राप्तिरूपया 'श्रिया', अभिषिक्तो भवति। तस्मिन् मन्त्रे 'घृणिः', इत्यचरद्वयं। तस्य शब्दस्य दीप्यमान इति वाक्यार्थः। सूर्य्यपदे यकारात् प्राचीनो रेफइकारेण लुप्तेन सह सध्याचरत्वेन गणनीयं, ततः 'चीणि', अचराणि सम्पद्यन्ते। सुष्ठु ईरणं गतिर्यस्यासौ 'सूर्य्यः'। अदितेः पुत्रः 'आदित्यः', सोयमष्टाचरो मन्त्र आदावन्ते च श्रीबीजन युक्तोनुसन्धातव्यः। उपसंहारार्थं पुनर्वचनमुक्तं ॥

(२२) सावित्रवेदनमृगुदाहरणेन प्रशंसति। "तदेतदृचाभ्युक्तम्। ऋचो अचरे परमे व्योमन्। यस्मिन्देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति। य इत्तद्विदुस्त इमे

समासते" इति । तदेतत् सावित्राग्निमाहात्म्यं कयाचित् 'ऋचा', विस्पष्टं 'उक्तं'। विविधं रक्षकं 'व्योम', यद्वा निर्लेपत्वेन सर्व्वगतत्वेन चाकाशसदृशत्वात् 'व्योम' जगत्कारणं वस्तु, तच्च भूताकाशवत् जडत्वाभावाच्चेतनत्वेन 'परमं' उत्कृष्टं, तदेव सावित्रस्याग्नेर्वास्तवं रूपं तच्च 'अक्षरं' विनाशरहितं, तस्मिन् वस्तुनि 'ऋचः' ऋगुपलक्षिताः सर्व्वे वेदोक्ता मन्त्राः, आश्रिताः। आश्रितत्वं च द्विविधं, तत्रोत्पन्नत्वं, तत्प्रतिपादने पर्य्यवसानञ्च। तस्माद्यज्ञात् सर्व्वहुत ऋचः सामानि जज्ञिरे इति श्रुत्या सर्व्वैर्हूयमानाद्यज्ञरूपात् परमेश्वरादृगादीनामुत्पत्तिराम्नाता। सर्व्वे वेदा यत् पदमामनन्तीति श्रुत्या तत्प्रतिपादनपर्य्यवसानमुक्तम्। तस्मादृगादयः तस्मिन् 'अक्षरे', अवस्थिताः। किञ्च न केवलं मन्त्राणां तत्रावस्थानं किन्तु मन्त्रप्रतिपाद्याः सर्व्वे 'देवाः', अपि जगत्कारणे 'अधिनिषेदुः' अवस्थिताः, 'यस्मिन्' सावित्राग्नितत्त्वे परवस्तुनि, सर्व्वे समाश्रिताः, 'तं' सावित्राग्निं, 'यो न वेद', असावविद्वान् पठ्यमानयापि 'ऋचा', 'किं' नाम प्रयोजनं,'करिष्यति', सर्व्वोऽपि वेदस्तद्वेदनायैव प्रवृत्तः। विद्यते ज्ञायतेऽनेनेति वेदत्वनिरुक्तिः। वेदनाभावे सत्यात्यन्तिकपुरुषार्थाभावात् तत्पाठो नात्यन्तं सप्रयोजकः। 'ये' एव पुरुषार्थिनः, 'तत्' सावित्राग्नितत्त्वं,'विदुः', 'ते' सर्व्वेऽपि, 'इमे' अस्माभिर्दृश्यमाना देवभागादिमुनयः, 'समासते' सम्यञ्चः कृतकृत्या उपविशन्तीति ॥

(२३) इत्थमृचा सावित्रवेदनमाहात्म्यं प्रकटीकृतं। तस्या

उदाहृताया ऋचस्तात्पर्यं सङ्क्षेपेण दर्शयति। "न ह वा एतस्यर्चा न यजुषा न साम्नार्थोऽस्ति। यः सावित्रं वेद" इति। ऋगादीनां त्रयाणां वेदानामुक्तरीत्या परतत्त्व वेदनपर्यवसायित्वात् विदिते तत्त्वे तत्पाठेन तदर्थानुष्ठानेन वा न किञ्चित् प्रयोजनमस्ति। न हि नद्यामुत्तीर्णायां नावा प्रयोजनं पश्यामः॥

(२४) वेदनीयं स्वरूपं निष्कृष्य दर्शयति। "तदेतत् परियद्देवचक्रम्। आर्द्रं पिन्वमानꣳ स्वर्गे लोक एति। विजहद्विश्वा भूतानि सम्पश्यत्" इति। 'तदेतत्' आदित्यमण्डलरूपं, 'देवचक्रं' देवतारूपं चक्रं सत्, 'स्वर्गलोके', 'एति' सञ्चरति। कीदृशं, 'परियत्' अहोरात्रनिष्पादनाय परितो भ्रमणयुक्तं, 'आर्द्रं' आदित्याज्जायते वृष्टिरिति न्यायेन वृष्टिहेतुत्वाद्द्रवीभूतं, अतएव 'पिन्वमानं' सर्व्वेषां प्रीणयितृ, 'विश्वाभूतानि' स्थावरजङ्गमरूपान् सर्व्वान् प्राणिनः, 'विजहत्' परित्यजन् वर्त्तते, तदीयगुणदोषैर्नलिप्यत इत्यर्थः। 'सम्पश्यत्' साचित्वेन सर्व्वान् प्राणिनोऽवलोकयन् वर्त्तते॥

(२५) इत्थं वेद्यं स्वस्वरूपमभिधाय तद्वेदितुस्तत्प्राप्तिरूपं फलं दर्शयति। "आर्द्रो ह वै पिन्वमानः स्वर्गे लोक एति। विजहन्विश्वा भूतानि सम्पश्यन्। य एवं वेद। गूषा ह वै वार्ष्णेयः। आदित्येन समाजगाम। तꣳ होवाच। एहि सावित्रं विद्धि। अयं वै स्वर्ग्योऽग्निः पारयिष्णुरमृतात् सम्भूत इति। एष वाव सावित्रः। य एष तपति। एहि मां

विद्धि। इति हैवैनं तदुवाच" ॥ १५ ॥ इति। तृष्णिनामकस्य मुनेः पुत्रः 'प्लूषः' नामको मुनिः स्वस्य हितोपदेशार्थं 'आदित्येन', सङ्गतोऽभूत्। 'तं' प्लूषं, स आदित्यः 'उवाच', हे प्लूष अत्रागच्छ, इमं 'सावित्रं' अग्निं, जानीहि। 'अयं' एवाग्निः, स्वर्गस्य हेतुः संसारस्य पारं नेतुं समर्थः, 'अमृतात्' परमात्मनः, समुत्पन्न इत्युक्त्वा पुनरप्यन्यदुवाच। 'य एषः' पुरुषः, आदित्यमण्डले 'तपति', 'एष एव' स पूर्वोक्तगुणकः, 'सावित्रः' अग्निः, तस्मादत्रागच्छ। 'मां' आदित्यं, सावित्राग्निरूपं, 'विद्धि'। 'तत्' तदानीं, 'एनं' प्लूषं प्रति, एवेतत् सर्व्वमादित्यः 'उवाच' ॥

इति नवमोऽनुवाकः।

अथ दशमोऽनुवाकः।

(१) नवमे सावित्राग्निविद्योक्ता। दशमे तदवयवविशेषवेदनान्युच्यन्ते। आदौ तावत् मधुत्वसम्पादनेन किञ्चिद्वेदनं दर्शयति। "इयं वाव सरघा। तस्या अग्निरेव सारघं मधु। या एताः पूर्व्वपक्षापरपक्षयो रात्रयः। ता मधुकृतः। यान्यहानि। ते मधुवृषाः। स यो ह वा एता मधुकृतश्च मधुवृषाꣳश्च वेद। कुर्व्वन्ति हास्यैता अग्नौ मधु। नास्येष्टापूर्त्तं धयन्ति" इति। येयं पृथिवी, सेयमेव 'सरघा' मधुमक्षिका, तथा ध्यायेदित्यर्थः। 'तस्याः' पृथिव्याः, सम्बन्धी सावित्रः 'अग्नि-

मेव', 'सारघं' सरघाभिर्निष्पादितं 'मधु', तथा भावयेत्। 'या एताः' शुक्लपक्षे कृष्णपक्षे च 'रात्रयः', विद्यन्ते, 'ताः' उभयविधा अपि, 'मधुकृतः' मधुनिष्पादिका मक्षिकास्थानीयाः स्त्रियः, 'यानि', तु 'अहानि' पक्षद्वये विद्यन्ते 'ते', सर्व्वेऽपि, 'मधुवृषाः' मधुनिष्पादका मक्षिकाजातीया पुरुषाः। 'यः' कोऽपि पुमान्, 'एता मधुकृतः', स्त्रियः 'मधुवृषांश्च', पुरुषानुपास्ते, 'अस्य' उपासकस्य, 'एताः' अहोरात्रयो देवताः, अस्मिन् ध्यातव्ये सावित्रे 'अग्नौ', 'मधु कुर्व्वन्ति' उत्तमं फलं सम्पादयन्ति, 'अस्य' उपासकस्य, इष्टापूर्तश्रौतस्मार्त्तकर्मफलं यन्मधुरूपं तत् स्वयं न पिबन्ति किं त्वजमेव पाययन्ति॥

(२) वेदनस्य फलमुक्त्वा वेदनाभावे तत्फलाभावं दर्शयति। "अथ यो न वेद॥१॥ न हास्यैता अग्नौ मधु कुर्व्वन्ति। धयन्त्यस्येष्टापूर्त्तम्" इति। 'अथ'शब्दः पूर्व्वोक्तवैलक्षण्यार्थः। 'यः' पुमान्, अहोरात्रदेवता मधुनिष्पादकस्त्रीपुरुषरूपेण नोपास्ते 'अस्य' अनुपासकस्य, ध्यातव्ये 'अग्नौ', यत् मधुसदृशं फलं देवताः तत् न सम्पादयन्ति किञ्च इष्टापूर्त्तजन्यं यन्मधुस्थानीयं सारं तत् देवताः स्वयमेव पिबन्ति, छजीषस्थानीयं निःसारमेवांशमस्मै प्रयच्छन्ति॥

(३) अनुवाकचतुष्टयोक्तानामहोरात्रनामधेयानां वेदनं विधत्ते। "यो ह वा अहोरात्राणां नामधेयानि वेद। नाहोरात्रेष्वार्त्तिमार्च्छति। सञ्ज्ञानं विज्ञानं दर्शा दृष्टेति" इति। एतावनुवाकौ पूर्व्वपक्षस्य 'अहोरात्राणां नामधेयानि' प्र-

स्रुतं निष्ठुतश्च सतासन्तीति एतावनुवाकावपरपक्षस्याहो-रात्राणां नामधेयानि। 'नाहोरात्रेष्वार्त्तिमार्च्छति', य एवं 'वेद' इति 'यः' पुमान्, सञ्ज्ञानमित्यादीनि शुक्लपक्षस्याह-र्नामानि दर्शेत्यादीनि शुक्लपक्षस्य रात्रिनामानि प्रस्तुतमि-त्यादीनि कृष्णपक्षस्याहर्नामानि सुतेत्यादीनि कृष्णपक्षस्य रा-त्रिनामानि च प्रथमतृतीयपञ्चमसप्तमानुवाकोक्तान्युपास्ते सो-ऽयमहोरात्रेषु 'आर्तिं' व्याध्यादिदुःखं, न प्राप्नोति। ना-होरात्रेष्विति पुनरभिधानमुपसंहारार्थं॥

(४) द्वितीयचतुर्थषष्ठाष्टमानुवाकोक्तानां मुहूर्तानां ना-मधेयानां वेदनं विधत्ते। "यो ह वै मुहूर्तानां नामधे-यानि वेद। न मुहूर्तेष्वार्त्तिमार्च्छति। चित्रः केतुर्दाता प्रदाता सविता प्रसवितामिशास्तानुमन्ता" इति। एतेऽनुवाकाः 'मुहूर्तानां नामधेयानि'।'न मुहूर्तेष्वार्त्तिमार्च्छति'। य एवं 'वेद', इति॥

(५) नवमदशमैकादशोक्तानां शुक्लकृष्णपक्षद्विविधार्द्धमा-सानां चैत्रादिमासानाञ्च नामधेयं सञ्ज्ञानं विधत्ते। "यो ह वा अर्द्धमासानाञ्च मासानाञ्च नामधेयानि वेद। नार्द्ध-मासेषु न मासेष्वार्त्तिमार्च्छति। पवित्रं पवयिष्यन्त्सहस्वान्त्स-हीयानरुणोऽरुणरजाः" इति। एतेऽनुवाकाः 'अर्द्धमासानाञ्च मासानाञ्च नामधेयानि'॥ ३॥ 'नार्द्धमासेषु न मासेष्वार्त्ति-मार्च्छति', य एवं 'वेद', इति॥

(६) चतुर्दशपञ्चदशषोडशानुवाकोक्तानां यज्ञतुसंवत्स-

राणां नामवेदनं विधत्ते। "यो ह वै यज्ञक्रतूनाञ्च संवत्स-रस्य च नामधेयानि वेद। न यज्ञक्रतुषु नर्त्तुषु न संवत्सर आर्त्तिमार्च्छति। अग्निष्टोम उक्थ्योऽग्निर्ऋतुः प्रजापतिः संव-त्सरः" इति। एतेऽनुवाकाः 'यज्ञक्रतूनामृतूनाञ्च संवत्सरस्य च नामधेयानि'। 'न यज्ञक्रतुषु नर्त्तुषु न संवत्सर आर्त्तिमार्च्छति', य एवं 'वेद', इति॥

(७) चयोदशानुवाकोक्तानां प्रौढमुहूर्त्तैकदेशानां चुद्रमु-हूर्त्तानां नामवेदनं विधत्ते। "यो ह वै मुहूर्त्तानां मुहूर्त्ता-न्वेद। न मुहूर्त्तानां मुहूर्त्तेष्वार्त्तिमार्च्छति। इदानीं तदा-नीमिति। एते वै मुहूर्त्तानां मुहूर्त्ताः। न मुहूर्त्तानां मुहू-र्त्तेष्वार्त्तिमार्च्छति। य एवं वेद" इति॥

(८) अत्रानुक्रमपि द्वादशानुवाकोक्तमिक्तानामवेदनमुक्त-रीत्या द्रष्टव्यं। दृष्टान्तपूर्व्वकं कृत्स्नवेदनं प्रशंसति। "अथो यथा चेत्रज्ञो भूत्वानुप्रविश्यान्नमत्ति। एवमेवैतान् चेत्रज्ञो भूत्वानुप्रविश्यान्नमत्ति। स एतेषामेव सलोकताꣳ सायुज्यमश्नुते। अप पुनर्मृत्युं जयति। य एवं 'वेद" ॥ ४ ॥ इति। तत्-तत्कालेष्वार्त्तिभावो वेदनफलत्वेन पूर्व्वमुक्तः। अपि च 'यथा', लोके मार्गे गन्ता कश्चित् एमाभ् अयं ब्राह्मणसमृद्धो ग्रामः, एते च वेदविदां गृहाः, तत्राप्येते मदीया बन्धवः,' इत्येवं केना-प्युपायेन तस्य चेत्रस्य मर्मज्ञः 'भूत्वा', तस्मिन् तस्मिन् ग्रामे तेषु तेषु वेदविद्गृहेषु तेषु बन्धुगृहेषु च 'अनुप्रविश्य', गृहस्वामिवत् 'अन्नं', भुङ्क्ते 'एवमेव', अयमुपासक एतेषां देवताविशेषाणां

'क्षेत्रज्ञः' ध्यानेन स्थानाभिज्ञः,'भूत्वा',देहपातादूर्ध्वं 'एतानेव' देवान्, 'प्रविश्य', देवत्वत्तदीयं 'अन्नं', भुङ्क्ते। 'एवं' सर्व्वमप्यग्निस्वरूपं, 'यो वेद', स पुमान् 'तेषामेव' देवानां, 'सलोकतां' एकलोकनिवासं, 'सायुज्यं' एकत्र सहावस्थानञ्च, प्राप्नोति प्राप्य च पुनर्मृत्युरहितो भवति॥

इति दशमोऽनुवाकः।

अथ एकादशोऽनुवाकः।

(१) दशमे सावित्राग्न्यवयवानां नामवेदनमुक्तं। एकादशेऽन्वयव्यतिरेकाभ्यां विद्या प्रशस्यते। तत्रादावन्वयव्यतिरेकोपयुक्तं पुरुषद्वयमुपन्यस्यति। "कश्चिद्ध वा अस्माल्लोकात्प्रेत्य। आत्मानं वेद। अयमहमस्मीति। कश्चित् स्वं लोकं न प्रतिप्रजानाति" इति। लोके विवेकी विवेकरहितश्चेति द्वौ पुरुषौ। तत्र 'कश्चित्' विवेकी पुमान्, 'अस्माल्लोकात्' प्रत्यक्षतो दृश्यमानात् देहादिसङ्घातात्, 'प्रेत्य' विवेकेन स्वयं पृथग् भूत्वा, 'आत्मानं' स्वस्वरूपं, 'वेद', केन प्रकारेण वेत्तीति तदुच्यते, 'अयं' सावित्राऽग्निरादित्यरूपः सर्व्वात्मकः सः 'अहमस्मीति', वेत्ति। अन्यस्तु 'कश्चित्' अविवेकी, 'स्वं लोकं' इहेन्द्रियादिव्यतिरिक्तं विवेकदृष्ट्यालोकयितुं शक्यं॥

(२) स्वमात्मानं न वेद तावुभौ पुरुषौ पुनर्विविच्य दर्शयति। "अग्निमुग्धो हैव धूमतान्तः। स्वं लोकं न प्रतिप्रजानाति।

अथ यो हैवैतमग्निꣳ सावित्रं वेद। स एवास्माल्लोकात् प्रेत्य। आत्मानं वेद। अयमहमस्मीति॥ १॥ स स्वं लोकं प्रतिप्रजानाति" इति। यः पुमान् 'अग्निमुग्धः' विद्यारहितः केवल एवाग्निः क्रतुनिष्पत्तिद्वारा पुरुषार्थं प्रयच्छतीत्येवं मूढः, 'धूमतान्तः' पुनः पुनः कर्मस्वेव प्रवृत्तो धूमोपलक्षितकर्मव्यापारेण ग्लानिं प्राप्तः, भवति स पुमान् वर्णाश्रमाधारमानुषदेहरहितं देवतारूपं 'स्वं' आत्मानं, 'न जानाति'। 'अथ' तस्माद्विलक्षणः, 'यः' पुमान्, एवं ध्यातव्यं 'सावित्रं', अग्निं वेद 'सः', 'एव', पुमान्, 'अस्मात्' वर्णाश्रमाधारत्वेनावलोक्यमानाद्देहात्, विवेकेन पृथग् भूत्वा 'स्वात्मानं' 'अयं' सावित्रोऽग्निः, 'अहमस्मि', इत्येवं 'वेद'। स एव 'स्वं', 'लोकं' विवेकिभिरवलोकयितुं योग्यं, निजस्वरूपं, प्रति विविच्य सम्यक् 'जानाति'॥

(३) उभयोर्मध्ये विवेकिन एव पुरुषार्थं दर्शयति। "एष उ चैवैनं तत्सावित्रः। स्वर्गं लोकमभिवहति" इति। 'तत्' तदा, देहपातादूर्ध्वं, 'एषः' एवोपासितः 'सावित्रः' अग्निः, 'एनं' उपासकं, आदित्यसायुज्यरूपं, स्वर्गलोकं प्रापयति॥

(४) अथ विद्यारहितस्य समृद्धफलाभावलक्षणं व्यतिरेकं दर्शयति। "अहोरात्रैर्वा इदꣳ सयुग्भिः क्रियते। इति राजाया दीक्षिषत। गति राजाय व्रतमुपागुर्रति। तानिहानेवंविदुषः। अमुष्मिंल्लोके शेवधिं धयन्ति। धीतꣳ हैव स शेवधिमनुपरैति" इति। 'सयुग्भिः' यजमानेन सहावस्थितैः, अहोरात्रदेवैरेव 'इदं' कर्म, 'क्रियते'। नह्यहोरात्राभिमानि-

नो देवान् वञ्चयित्वा किञ्चिदपि कर्म कर्त्तुं शक्यं। अहोरात्र-व्यतिरिक्तस्य कालविशेषस्याभावात्। 'इति रात्राय' इत्येतादृशी विद्यासंयुक्ता रात्रिर्यस्मिन् कर्मणि तदर्थं, एते यजमानाः 'दीक्षिषत' नियमं स्वीकृतवन्तः, 'इति रात्राय' इति एतादृशी विद्यारहिता रात्रिर्यस्मिन् कर्मणि तदर्थं, एते यजमानाः 'व्रतमुपागुः' नियमविशेषं प्राप्ताः, 'इति' एवं, ये यजमाना विद्यासंयुक्ताः, ये च विद्यारहिताः 'तान्' सर्व्वान्, अहोरात्रदेवता जानन्तीति शेषः। इहैव तेषु द्विविधेषु मध्ये यः पुमानेवं पूर्वोक्तरूपं सावित्रमग्निं न वेत्ति तस्य 'अनेवंविदुषः', यजमानस्य, 'शेवधिं' निधिसमानं फलं, स्वर्गलोके 'धयन्ति' अहोरात्रदेवताः प्रथमं तत्सारं पिबन्ति, 'सः' विद्यारहितो यजमानः, 'धीतं' अहोरात्रैः पीतं, 'शेवधिं' कर्मफलं, 'अनु' पश्चात्, निष्पीडितरसेक्षुवन्निःसारं, 'परैति' प्राप्नोति॥

(५) विद्यारहितस्य सम्पूर्णफलाभावं व्यतिरेकमुक्त्वा विद्यासंयुक्तस्य तत्सद्भावरूपमन्वयं दर्शयति। "अथ यो ह वा एतमग्निꣳ सावित्रं वेद ॥ २ ॥ तस्य हैवाहोरात्राणि। अमुष्मिꣳल्लोके शेवधिं न धयन्ति। अधीतꣳ हैव स शेवधिमनु परैति" इति। विद्याहीनाद्वैलक्षण्यार्थोऽथशब्दः। 'यः' पुमान्, 'एतं सावित्रमग्निं' यथोक्तप्रकारेण 'वेद'। 'तस्यैव', 'शेवधिं' निधिसमानं फलं, अहोरात्रदेवताः स्वर्गलोके, 'न धयन्ति' स्वयं न पिबन्ति। किन्तु तस्यैव सर्व्वं प्रयच्छन्ति। 'अधीतं' तैर्देवैरपीतं, 'शेवधिं' निधिसदृशं सम्पूर्णं कर्मफलं, 'सः' विद्वान्, अनुक्रमेण प्राप्नोति॥

(६) इत्थमन्वयव्यतिरेकाभ्यां विदुषः फलबाहुल्यं दर्शितं। अथ तां विद्यां प्रशंसितुमुपाख्यानं दर्शयति। "भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्य्यमुवास। तꣳ ह जीर्णꣳ स्थविरꣳ शयानम्। इन्द्र उपव्रज्योवाच। भरद्वाज। यत्ते चतुर्थमायुर्दद्याम्। किमेतेन कुर्य्या इति। ब्रह्मचर्य्यमेवैतेन चरेयमिति होवाच॥ ३॥ तꣳ ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार। तेषाꣳ हैकैकस्मान्मुष्टिमाददे। स होवाच। भरद्वाजेत्यामन्त्र्य। वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननूक्तमेव। एहीमं विद्धि। अयं वै सर्व्वविद्येति॥ ४॥ तस्मै हैतमग्निꣳ सावित्रमुवाच। तꣳ स विदित्वा। अमृतो भूत्वा। स्वर्गं लोकमियाय। आदित्यस्य सायुज्यम्" इति। पुरा कदाचित् 'भरद्वाजाख्यः' महर्षिः सर्व्वेषां वेदानामध्ययने कृतप्रयत्न इन्द्रं प्रसाद्य तत्प्रसादात् शतसंवत्सरं परिमितानि त्रीण्यायूंषि लब्ध्वा तैः 'आयुर्भिः', 'ब्रह्मचर्यमुवास' वेदाध्ययनमुद्दिश्य गुरुकुले वासं कृतवान्। शतत्रयस्यान्ते 'जीर्णं', शरीरं 'वृद्धं' अशक्तत्वेन शयानं, 'तं' भरद्वाजं प्रति, 'इन्द्रः', 'उपेत्य उवाच'। 'यच्चतुर्थमायुः', तुभ्यं 'दद्यां', 'एतेन' आयुषा, 'किं कुर्याः' 'कं पुरुषार्थं साधयसि'; 'इति', स च वेदाध्ययनमेव करिष्यामि 'इत्युवाच'। ततः सर्वे वेदाध्ययने कृतास्थं तं भरद्वाजमुद्दिश्य सर्वाध्ययनस्याशक्यत्वं बोधयितुमृग्यजुःसामवेदानां त्रयाणां स्वकीययोगसामर्थ्येन पर्वताकारत्वं सम्पाद्य गिरित्रयरूपान्

पूर्व्वमविज्ञातानेव वेदानस्मै दर्शयामास। ततः 'तेषां' पर्व्वतानां, मध्ये 'एकैकस्मात्', पर्व्वतात्, मुष्टिना पांशून् आददे आदायैवं 'उवाच' हे 'भरद्वाज', 'एते' त्रयः पर्व्वताः, 'वेदाः', एव तत्रैकैकः पांशुरेको वेदः, तस्मात 'अनन्ताः, 'वेदाः', तेषां मध्ये त्वं 'एतैस्त्रिभिरायुर्भिः', 'एतत्' मुष्टित्रयपरिमितं वेदजातं, गुरूपदेशमन्वधीतवानसि। 'अथ' अनन्तं, तत्र 'इतरत्' वेदजातं, अनधीत 'एव', तस्मात् सर्व्ववेदाध्ययनमशक्यमेव। यदि सर्व्वाध्ययनफलमपेक्षितं तर्ह्यागच्छ, 'इमं, सावित्रमग्निं, 'विद्धि' ध्यानेन साक्षात्कुरु। 'अयं', एव सावित्रोऽग्निः, सर्व्ववेदविषया 'विद्या', 'इति' एवं बोधयित्वा, 'तस्मै' भरद्वाजाय, 'एत' 'सावित्रं अग्निं', पूर्व्वोक्तप्रकारेण 'उवाच'। ततः 'सः' भरद्वाज', 'तं' सावित्रमग्निं, ध्यानेन स्वात्मतया साक्षात्कृत्य तदग्निरूपः स्वयं 'अमृतः' देवः, 'भूत्वा', वर्त्तमानदेहादूर्ध्वं 'स्वर्गं', प्राप्य तत्र 'आदित्यसायुज्यं', प्राप्तवान्॥

(७) इत्थमुपाख्यानेन विद्यामहिमानं दर्शयित्वा भरद्वाजवदन्यस्यापि वेदितुः तत्फलं दर्शयति। "अमृतो हैव भूत्वा। स्वर्गं लोकमेति। आदित्यस्य सायुज्यम्। य एवं वेद" इति॥

(८) इतोऽधिकस्य फलस्य शङ्कां वेदत्रयेऽपि वारयितुमाह। "एषो एव त्रयी विद्या॥ ५॥ यावन्तꣳ ह वै त्रय्या विद्यया लोकं जयति। तावन्तं लोकं जयति। य एवं वेद" इति। येयं सावित्राग्निविद्या 'एषैव', वेदत्रयीविद्यासमाना वेदत्रयोक्तसर्व्वकर्मानुष्ठानेन यावत् फलं तावदनेन सावित्रज्ञानेनैव

प्राप्यते। नह्यादित्योपाधिकहिरण्यगर्भप्राप्तेरधिकं फलं कर्मकाण्डे किञ्चित् सम्भवति॥

(८) अथ सावित्रस्याग्नेः सर्व्वदेवतात्मकत्वेन सर्व्वदेवप्राप्तिलक्षणं फलं प्रत्येकमुदाहृत्य प्रदर्शयति। "अग्नेर्वा एतानि नामधेयानि। अग्नेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। वायोर्वा एतानि नामधेयानि। वायोरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। इन्द्रस्य वा एतानि नामधेयानि॥ ६॥ इन्द्रस्यैव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। बृहस्पतेर्वा एतानि नामधेयानि। बृहस्पतेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। प्रजापतेर्वा एतानि नामधेयानि। प्रजापतेरेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद। ब्रह्मणो वा एतानि नामधेयानि। ब्रह्मण एव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद" इति। ये एते अग्निवायुरिन्द्रबृहस्पतिप्रजापतिब्रह्माणो देवाः। 'प्रजापतिः' सत्यलोकवासी चतुर्मुखब्रह्माण्डदेहाभिमानी विराट्पुरुषो ब्रह्मा, सावित्राग्नेः सर्व्वदेवतात्मकत्वात् अग्न्यादीनां देवानां मध्ये यो यो देवः स्वस्यापेक्षितः तस्य तस्यैव देवस्य 'एतानि' सञ्ज्ञानादीनि 'नामधेयानि', अतस्तत्तद्देवनामत्वेन ध्याने सति तत्तद्देवानां सायुज्यप्राप्तिर्भवति। तस्माद्वेदत्रये यत् फलं तत् सर्व्वमत्र लभ्यत इत्युपपन्नम्॥

(१०) अथ सावित्रनामव्युत्पादनेन प्रशंसति। "स वा एषोऽग्निरपक्षपुच्छो वायुरेव। तस्याग्निर्मुखम्। असावादित्यः

शिरः । स यदेते देवते अन्तरेण । तत्सर्वं सीव्यति । तस्मात् सावित्रः" इति । योऽयमग्निर्भूमौ चीयते । तस्येष्टकानिर्मितं पक्षपुच्छादिकं विद्यते । यस्तु मनसैव ज्ञायमानोऽग्निः स तु वायुस्वरूप एव । न तस्य पक्षपुच्छादिकमस्ति, किन्तु 'तस्य' वायुरूपस्य, प्रसिद्धः 'अग्निः', मुखत्वेन ध्येयः । 'असावादित्यः' शिरोरूपेण ध्येयः । 'यत्' अन्यद्देवताजातं, अस्ति 'तत् सर्वमेते देवते', 'अन्तरेण' एतयोरग्न्यादित्ययोर्मध्ये, 'सः' वायुः, 'सीव्यति' सूच्या वस्त्रमिव संयोजयति, विच्छिन्नमेकीकरोति । यस्मात् सीव्यति तस्मादयं वायुरूपोऽग्निः 'सावित्रः', इत्युच्यते । तदेवं सावित्राग्निविद्या समापिता ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुर्ब्राह्मणे तृतीयकाण्डे दशमप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

समाप्तश्च प्रपाठकः ॥

# तैत्तिरीय-ब्राह्मणभाष्ये

## तृतीयकाण्डे एकादशप्रपाठके

### प्रथमोऽनुवाकः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
सावित्रचयनं प्रोक्तं दशमे हि प्रपाठके ।
नाचिकेताख्यचयनमेकादश उदीर्यते ॥

(१) तत्र प्रथमानुवाके इष्टकोपाधानमन्त्रास्तदुपाधानप्रकारः सूत्रकारेणैवं सङ्गृहीतः । एतेन नाचिकेतो व्याख्यातः, नात्र लेखा भवन्ति, एकविंशतिर्हिरण्येष्टकाः शर्करावभ्यक्ता उपधानकाले नाभ्यामेवोपधीयन्ते चतुरस्रं परिमण्डलं वा लोकोऽसि स्वर्गोऽसीत्यनुवाकेन प्रतिमन्त्रमिति । तत्र प्रथममन्त्रमाह । "लोकोऽसि स्वर्गोऽसि । अनन्तोऽस्यपारोऽसि । अक्षितोस्यक्षय्योऽसि । तपसः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतं । विश्वस्य भर्ता विश्वस्य जनयिता । तन्त्वोपदधे कामदुघमक्षितं । प्रजापतिस्त्वासादयतु । तया देवतयाङ्गिरस्वद्ध्रुवासीद" इति । हे प्रथमेष्टकारूपाग्ने त्वं सामान्याकारेण सर्वोऽपि 'लोकोऽसि', विशेषाकारेण 'स्वर्गोऽसि' तथाविधलोकरूपः, त्वं दीर्घपरिमाणेनान्तरहितः 'असि' । तिर्यक्प्रमाणेनापि

पाररहितः, 'असि'। इतः पूर्व्वं 'अचितः', केनाप्यविनाशितः 'असि'। इतः परं 'अप्रतव्यः' विनाशयितुमशक्यः, 'असि'। तादृशस्त्वं 'तपसः', सर्व्वैरनुष्ठीयमानस्य 'प्रतिष्ठा', फलभूमिः, अत एवाश्रयः। तादृशे 'त्वयि', 'इदं' सर्व्वं जगत् 'अन्तः', वर्त्तते। तत् किं किमिति तदुच्यते। 'विश्वं यक्षं' सर्व्वं पूज्यं यद्यदिन्द्रवादिकं पूज्यमस्ति तत् सर्व्वं, 'त्वयि', वर्त्तते। 'विश्वं भूतं' यद्यत् पृथिव्यादिभूतजातमस्ति तत् सर्व्वं, 'त्वयि', वर्त्तते। 'विश्वं सुभूतं' यद्यत् सष्टु पृथिव्यादिभूतकार्य्यं प्राणिशरीरजातं तत् सर्व्वं, 'त्वयि' वर्त्तते। अतस्त्वं 'विश्वस्य' पूर्व्वमुत्पन्नस्य जगतः, 'भर्त्ता' पालकः, 'विश्वस्य' पूर्व्वमुत्पन्नस्य, 'जनयिता' उत्पादकः, 'कामदुघं' अपचितकामानां दोग्धारं। 'अचितं' चयरहितं। तादृशं 'त्वां' इह भूमावहं 'उपदधे', 'प्रजापतिः', एव त्वामत्र 'सादयतु', हे इष्टके 'अङ्गिरस्वत्' यथाऽङ्गिरोभिर्महर्षिभिरुपहिता सती त्वं, 'ध्रुवा' स्थिरा जाता, तथा 'तया' प्रजापतिदेवतया, उपहिता सती 'ध्रुवा' 'सीद'॥

(२) अथ द्वितीयमन्त्रमाह। "तपोऽसि लोके श्रितम्। तेजसः प्रतिष्ठा। त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्त विश्वस्य जनयितृ। तत्त्वोपदधे कामदुघमचितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवासीद"॥ २॥ इति। हे द्वितीयेष्टके त्वं 'तपोऽसि', तच्च तपः प्रथमेष्टकारूपे 'लोके', समाश्रितं। तृतीयेष्टकारूपस्य तेजसः 'प्रतिष्ठा' आश्रयः। एवमुत्तरत्रापि योज-

नीयम्। विश्वं यच्चमित्यादि पूर्ववत्। पूर्वच लोकस्य पुंलिङ्गत्वात् 'भर्त्ता' जनयिता, त्वं लेति पुंलिङ्गशब्दैर्निर्देशः। इह तु तपसो नपुंसकत्वात् भर्तृजनयितृत्वेतिनपुंसकशब्दैर्निर्देशः। एवमुत्तरत्राप्युन्नेयं॥

(३) अथ तृतीयं मन्त्रमाह। "तेजोऽसि तपसि श्रितम्। समुद्रस्य प्रतिष्ठा। त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्तृ विश्वस्य जनयितृ। तत्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद॥ ३॥ इति। तृतीयेष्टकारूपं 'तेजः', द्वितीयेष्टकारूपे 'तपसि', आश्रितं। चतुर्थेष्टकारूपस्य 'समुद्रस्य', स्वयमाश्रयः। अत्रेष्टकानां लोकतपस्तेजःसमुद्रादिरूपत्वं भावनया द्रष्टव्यं। परस्परसंश्लेषणेनात्यन्तदृढत्वादेकैकस्या इतराश्रयत्वं च द्रष्टव्यं। अन्यत् पूर्ववत्॥

(४) अथ चतुर्थमाह। "समुद्रोऽसि तेजसि श्रितः। अपां प्रतिष्ठा। त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्ता विश्वस्य जनयिता। तं त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद"॥ ४॥ इति॥

(५) अथ पञ्चममाह। "आपः स्थ समुद्रे श्रिताः। पृथिव्याः प्रतिष्ठा युष्मासु। इदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्र्यो विश्वस्य जनयित्र्यः। ता व उपदधे कामदुघा अक्षिताः। प्रजापतिस्त्वा सादयतु। तया देवत-

याङ्गिरस्वद्ध्रुवासीद" ॥ ५ ॥ इति । आप इत्यस्य विशेष्यत्वात् तदनुसारेण भर्त्री इति स्त्रीलिङ्गनिर्देशः ॥

(६) अथ षष्ठमाह । "पृथिव्यस्यप्सु श्रिता । अग्नेः प्रतिष्ठा त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्री विश्वस्य जनयित्री । तां त्वोपदधे कामदुघामक्षिताम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ ६ ॥ इति ॥

(७) अथ सप्तममाह । "अग्निरसि पृथिव्याꣳ श्रितः । अन्तरिक्षस्य प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ ७ ॥ इति ॥

(८) अथाष्टममाह । "अन्तरिक्षमस्यग्नौ श्रितम् । वायोः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्तृ विश्वस्य जनयितृ । तत्त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ ८ ॥ इति ॥

(९) अथ नवममाह । "वायुरस्यन्तरिक्षे श्रितः । दिवः प्रतिष्ठा त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ ९ ॥ इति ॥

(१०) अथ दशममाह। "द्यौरसि वायौ श्रिता। आदित्यस्य प्रतिष्ठा। त्वयीदमन्तः। विश्वं यत्तं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्री विश्वस्य जनयित्री। तां त्वोपदधे कामदुघामक्षिताम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ १० ॥ इति ॥

(११) अथैकादशमाह। "आदित्योऽसि दिवि श्रितः। चन्द्रमसः प्रतिष्ठा। त्वयीदमन्तः। विश्वं यत्तं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्ता विश्वस्य जनयिता। तं त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ ११ ॥ इति ॥

(१२) अथ द्वादशमाह। "चन्द्रमा अस्यादित्ये श्रितः। नक्षत्राणां प्रतिष्ठा। त्वयीदमन्तः। विश्वं यत्तं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्ता विश्वस्य जनयिता। तं त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ १२ ॥ इति ॥

(१३) अथ त्रयोदशमाह। "नक्षत्राणि स्थ चन्द्रमसि श्रितानि। संवत्सरस्य प्रतिष्ठा युष्मासु। इदमन्तः। विश्वं यत्तं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्तॄणि विश्वस्य जनयितॄणि। तानि व उपदधे कामदुघान्यक्षितानि। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ १३ ॥ इति ॥

(१४) अथ चतुर्दशमाह। "संवत्सरोऽसि नक्षत्रेषु श्रितः। ऋतूनां प्रतिष्ठा। त्वयीदमन्तः। विश्वं यत्तं विश्वं भूतं विश्वꣳ

सुभृतम्। विश्वस्य भर्त्ता विश्वस्य जनयिता। तं त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ १४ ॥ इति ॥

(१५) अथ पञ्चदशमाह। "ऋतवः स्थ संवत्सरे श्रिताः। मासानां प्रतिष्ठा युष्मासु। इदमन्तः। विश्वं यच्च विश्वं भूतं विश्वꣳ सुभृतम्। विश्वस्य भर्त्तारो विश्वस्य जनयितारः। तान्व उपदधे कामदुघानक्षितान्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ १५ ॥ इति ॥

(१६) अथ षोडशमाह। "मासाः स्थर्तुषु श्रिताः। अर्द्धमासानां प्रतिष्ठा युष्मासु। इदमन्तः। विश्वं यच्च विश्वं भूतं विश्वꣳ सुभृतम्। विश्वस्य भर्त्तारो विश्वस्य जनयितारः। तान्व उपदधे कामदुघानक्षितान्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ १६ ॥ इति ॥

(१७) अथ सप्तदशमाह। "अर्द्धमासाः स्थ मास्सु श्रिताः। अहोरात्रयोः प्रतिष्ठा युष्मासु। इदमन्तः। विश्वं यच्च विश्वं भूतं विश्वꣳ सुभृतम्। विश्वस्य भर्त्तारो विश्वस्य जनयितारः। तान्व उपदधे कामदुघानक्षितान्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ १७ ॥ इति ॥

(१८) अथाष्टादशमाह। "अहोरात्रे स्थोऽर्द्धमासेषु श्रिते। भूतस्य प्रतिष्ठे भव्यस्य प्रतिष्ठे। युवयोरिदमन्तः। विश्वं यच्च विश्वं भूतं विश्वꣳ सुभृतम्। विश्वस्य भर्त्त्री विश्वस्य जनयित्र्यौ। ते वामुपदधे कामदुघे अक्षिते। प्रजापतिस्त्वा सादयतु। तया

देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ १८ ॥ इति। 'भूतस्य', च भविष्यतश्च जगतोऽहोरात्रार्धमासव्यवहारत्वात् अहोरात्रयोस्तत्प्रतिष्ठात्वं ॥

(१९) अथैकोनविंशमाह। "पौर्णमास्यष्टकामावास्या। अन्नादाः स्थान्नदुघो युष्मासु। इदमन्तः। विश्वं यच्चं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्रो विश्वस्य जनयित्र्यः। ता व उपदधे कामदुघा अक्षिताः। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ १९ ॥ इति। या च 'पौर्णमासी', या च माघकृष्णाष्टमीदेवता। यापि 'अमावास्या' देवता। ताः सर्व्वा एकोनविंशेष्टकारूपाः तथाविधास्तिस्रो देवताः यूयं 'अन्नादाः स्थ' बह्वन्नभक्षणशक्तियुक्ताः स्थ, तथा 'अन्नदुघः' अस्माकमन्नसम्पादकाः स्थ ॥

(२०) अथ विंशमाह। "राडसि बृहती श्रीरसीन्द्रपत्नी धर्म्मपत्नी। विश्वं भूतमनुप्रभूता। त्वयोदमन्तः। विश्वं यच्चं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्री विश्वस्य जनयित्री। तां त्वोपदधे कामदुघामक्षिताम्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ २० ॥ इति। हे विंशेष्टके त्वं 'राडसि' राजमानासि। तथा 'बृहती' गुणैर्महत्यसि। 'श्रीः' सम्पत्प्रदासि। 'इन्द्रपत्नी' इन्द्रस्य पालयित्र्यसि। 'धर्मपत्नी' धर्म्मस्य पालयित्र्यसि। तथाविधा त्वं 'भूतं 'विश्वं' पूर्व्वमुत्पन्नं सर्व्वं जगत् अनुसृत्य 'प्रभूता' बहुलासि ॥

(२१) अथैकविंशमाह। "ओजोऽसि सहोऽसि। बलमसि

भ्राजोऽसि। देवानां धामामृतम्। अमर्त्यस्तपोजाः। त्वयो-दमन्तः। विश्वं यच्च विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्ता विश्वस्य जनयिता। तं त्वोपदधे कामदुघमक्षितम्। प्र-जापतिस्त्वा सादयतु। तया देवतयाङ्गिरस्वद्ध्रुवासीद" ॥ २१॥ इति। 'ओजः', बलहेतुरष्टमो धातुः। 'सहः' शत्रूणामभि-भवनं। 'बलं' शरीरशक्तिः। 'भ्राजः' कान्तिः। हे एकविंशष्टके त्वं ओजःप्रभृतीनां स्वरूपभूतासि। तथा 'देवानाममृतं धाम' विनाशरहितं स्थानमसि, 'अमर्त्यः' मरणरहितो देवः। स च 'तपोजाः', तपसा हि देवत्वं लभ्यते। तादृशो देवस्त्वमसि। यद्य-प्योजःप्रभृतीनि नपुंसकानि, तथाप्यमर्त्य इत्येतस्य पुंलिङ्गत्वात् तदनुसारेण भर्त्तेत्यादिपुंलिङ्गव्यवहारः॥

इति प्रथमोऽनुवाकः।

---

अथ द्वितीयोऽनुवाकः।

(१) इष्टकोपधानमन्त्राः प्रथमेऽभिहिताः। द्वितीयतृती-यचतुर्थपञ्चमेष्वनुवाकेषु होममन्त्रा उच्यन्ते। यदुक्तं सूत्र-कारेण। 'चतुर्गृहीतं जुहोति त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपमपरं चतुर्गृहीतमग्नाविष्णू इति वसोर्धाराया अपरं चतुर्गृहीतमन्नपत इत्यन्नहोमस्यापरं चतुर्गृहीतं सप्त ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीः' इति। तत्रास्मिन् द्वितीये शतरुद्रीयस्य प्रतिनिधिरूपं मन्त्रमाह। "त्वमग्ने रुद्रो असुरो

महो दिवः। त्वꣳ शर्द्धो मारुतं पृच ईशिषे। त्वं वातैररुणै र्यासि शङ्गयः। त्वं पूषा विधतः पासि नुत्मना। देवा देवेषु श्रयध्वम्। प्रथमा द्वितीयेषु श्रयध्वम्। द्वितीयास्तृतीयेषु श्रयध्वम्। तृतीयाश्चतुर्थेषु श्रयध्वम्। चतुर्थाः पञ्चमेषु श्रयध्वम्। पञ्चमाः षष्ठेषु श्रयध्वम् ॥ १ ॥ षष्ठाः सप्तमेषु श्रयध्वम्। सप्तमा अष्टमेषु श्रयध्वम्। अष्टमा नवमेषु श्रयध्वम्। नवमा दशमेषु श्रयध्वम्। दशमा एकादशेषु श्रयध्वम्। एकादशा द्वादशेषु श्रयध्वम्। द्वादशास्त्रयोदशेषु श्रयध्वम्। त्रयोदशाश्चतुर्दशेषु श्रयध्वम्। चतुर्दशाः पञ्चदशेषु श्रयध्वम्। पञ्चदशाः षोडशेषु श्रयध्वम् ॥ २ ॥ षोडशाः सप्तदशेषु श्रयध्वम्। सप्तदशा अष्टादशेषु श्रयध्वम्। अष्टादशा एकान्नविꣳशेषु श्रयध्वम्। एकान्नविꣳशा विꣳशेषु श्रयध्वम्। विꣳशा एकविꣳशेषु श्रयध्वम्। एकविꣳशा द्वाविꣳशेषु श्रयध्वम्। द्वाविꣳशास्त्रयोविꣳशेषु श्रयध्वम्। त्रयोविꣳशाश्चतुर्विꣳशेषु श्रयध्वम्। चतुर्विंशाः पञ्चविꣳशेषु श्रयध्वम्। पञ्चविꣳशाः षड्विꣳशेषु श्रयध्वम् ॥ ३ ॥ षड्विꣳशाः सप्तविꣳशेषु श्रयध्वम्। सप्तविꣳशा अष्टाविꣳशेषु श्रयध्वम्। अष्टाविꣳशा एकान्नत्रिꣳशेषु श्रयध्वम्। एकान्नत्रिꣳशास्त्रिꣳशेषु श्रयध्वम्। त्रिꣳशा एकत्रिꣳशेषु श्रयध्वम्। एकत्रिꣳशा द्वात्रिꣳशेषु श्रयध्वम्। द्वात्रिꣳशास्त्रयस्त्रिꣳशेषु श्रयध्वम्। देवास्त्रिरेकादशास्त्रिस्त्रयस्त्रिꣳशाः उत्तरे भवत। उत्तरवर्त्मान उत्तरसत्वानः। यत्काम इदं जुहोमि। तन्मे समृध्यतां। वयꣳ स्याम पतयो रयीणां। भूर्भुवःस्वः स्वाहा" ॥४॥

इति। हे 'अग्ने' त्वं 'रुद्रः', घोरातनुयुक्तः, 'असुरः' शत्रूणां निरसिता। 'दिवः' द्युलोकस्य, 'महः' उत्सवरूपः। हविर्द्दवनेनोत्सवकारित्वात्। त्वं 'मारुतं शर्द्धः' मरुतां सम्बन्धि बलं, बलत्वेन प्रसिद्धानां मरुद्गणानामपि त्वदनुग्रहेण बलं भवति। अतः 'पृच ईशिषे' मरुद्भिः सम्पृक्तस्तदीयं मैन्यं नियमयसि। किञ्च त्वं 'शग्मयः' सुखं प्राप्तः, वायुवेगैररुणवर्णैरश्वैः 'यासि'। किञ्च पोषकस्त्वं 'नुत्मना' स्वयमेव, 'पासि'। कान्, 'विधत्तः' हविषा परिचर्यान् विधत्ते यजमानान्। अस्याग्निस्वरूपस्य रुद्रस्य मूर्तिविशेषा देवास्त्रयस्त्रिंशत्सङ्ख्याकाः। तथा च मन्त्रान्तरमाम्नायते। त्रिंश त्रयश्च गणिनो रुजन्त इति। तथाविधाः हे 'देवाः', 'देवेषु', 'श्रयध्वं' अन्योऽन्यमाश्रयध्वं, मदनुग्रहाय परस्परं प्रीतियुक्ता भवन्त्वित्यर्थः। सामान्याकारेण सङ्क्षिप्योक्तं पुनर्विशेषाकारेण प्रपञ्च्यते। त्रयस्त्रिंशत्सङ्ख्याकानां देवानां मध्ये एकैकस्य त्रयो मूर्त्तिविशेषाः। तत्र प्रथमस्य देवस्य मूर्त्तिविशेषाः 'प्रथमाः', इत्युच्यन्ते। द्वितीयस्य देवस्य मूर्त्तिविशेषाः 'द्वितीयाः', हे प्रथमदेव 'द्वितीयेषु' देवेषु, 'श्रयध्वं' द्वितीयैर्देवैः सह प्रीतियुक्ता भवन्तु। एवं द्वितीयादिषु त्रयस्त्रिंशान्तेषु योजनीयं। ते एते मुख्यदेवाः 'त्रिरेकादशाः' त्रिगुणिता एकादशसङ्ख्याकाः लोकत्रयवर्त्तिनः। तथा च मन्त्रान्तरमाम्नातं। ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाप्सुषदो महिनैकादश स्थेति। ते च त्रिविधा अपि पुनः 'त्रिस्त्रयस्त्रिंशाः' अवान्तरमूर्त्तिभेदादेकैकस्य 'मूर्त्तित्रयमित्येवं त्रिग-

णितास्त्रयस्त्रिंशत्सङ्ख्याकाः भवन्ति। तावन्तो हे देवाः 'उत्तरे भवत' उत्कृष्टा भवत। तद्देवोत्तरत्वं स्पष्टीक्रियते। उत्तरमुत्कृष्टं वर्त्म मार्गो येषान्ते 'उत्तरवर्त्मानः' स्वर्गमार्गप्रापका इत्यर्थः। उत्तरे उत्कृष्टाः सत्त्वानः सात्विकमूर्त्तिविशेषा येषान्ते 'उरवर्त्मानः', अतएव रुद्रस्य मूर्त्तिविशेषानभिप्रेत्य रुद्राध्याये समाम्नातं। अथो ये अस्य सत्त्वानोहं तेभ्योकरं नम इति। अस्मदनुग्रहपरा इत्यर्थः। तथाविधा हे देवाः 'यत्कामः' यद्विषयकामनायुक्तः सन्नहं 'इदं' द्रव्यं, 'जुहोमि', तत्फलं 'मे' मदर्थं, 'समृद्ध्यतां' समृद्धं भवतु। युष्मत्प्रसादाद्वयं 'भूर्भुवःस्वर्लोकत्रये 'रयीणां पतयः' धनस्वामिनः, 'स्याम', स्वाहुतमिदमस्तु॥

इति द्वितीयोऽनुवाकः।

---

अथ तृतीयोऽनुवाकः।

द्वितीये शतरुद्रीयस्य प्रतिनिधिरूपो मन्त्र उक्तः। तृतीये वसोर्धारायाः प्रतिनिधिरूपो मन्त्र उच्यते। "अग्नाविष्णू सजोषसा। इमा वर्द्धन्तु वाङ्गिरः। द्युम्नैर्वाजेभिरागतम्। राज्ञी विराज्ञी। सम्राज्ञी स्वराज्ञी। अर्चिः शोचिः। तपोहरो भाः। अग्निः सोमो बृहस्पतिः। विश्वे देवा भुवनस्य गोपाः। ते सर्वे सङ्गत्य। इदं मे प्रावता वचः। वयꣳ स्याम पतयो रयीणाम्। भूर्भुवः स्वः स्वाहा" ॥ १ ॥ इति।

हे 'अग्नाविष्णू', 'सजोषसा' परस्परं मयापि सह समानप्रीतौ, 'वां' युवां, 'इमा गिरः' मदीयास्तुतिरूपा वाचः, वर्द्धयन्तु' परितोषयन्तु। युवामपि 'द्युम्नैः', धनैः, 'वाजेभिः' अन्नैश्च सह, 'आगतं' इह कर्म्मणि समागतं। राज्ञादयो देवताविशेषाः। 'राज्ञी' राजमाना। 'विराज्ञी' विशेषण राजमाना। 'सम्राज्ञी' सम्यग्राजमाना। 'स्वराज्ञी' आभरणदीपादिनैरपेक्ष्येण स्वयमेव राजमाना। 'अर्चिः' ज्वालाभिमानिनी, 'शोचिः' कान्त्यभिमानिनी देवता। 'तपः' सन्तापशक्तिः। 'हरः' पापहरणशक्तिः। 'भाः' पदार्थावभासनशक्तिः। अग्न्यादयः प्रसिद्धाः। ते सर्वे 'भुवनस्य', 'गोपाः' रक्षकाः सन्तः, 'सङ्गत्य' मया सम्बध्य, 'मे' मदीयं, 'इदं' प्रार्थनारूपं, 'वचः', 'प्रावत' प्रकर्षेण रक्षत। वयमित्यादि पूर्व्ववत्॥

इति तृतीयोऽनुवाकः।

---

अथ चतुर्थोऽनुवाकः।

(१) तृतीये वसोर्धारायाः प्रतिनिधिरूपो मन्त्र उक्तः। यथा महाचयने शतरुद्रीयं वसोर्धारा चेत्युभयमस्ति। तद्वदन्नस्यान्नस्य जुहोतीत्येवमन्नहोमाप्यस्ति। तद्वदत्राप्यन्नहोमार्थो मन्त्रश्चतुर्थेऽभिधीयते। "अन्नपतेऽन्नस्य नो देहि। अनमीवस्य शुष्मिणः। प्र प्रदातारं तारिषः। ऊर्ज्जं नो धेहि द्विपदे चतुष्पदे। अग्ने पृथिवीपते। सोम वीरुधां पते।

त्वष्टः समिधां पते। विष्णवाशानां पते। मित्र सत्यानां पते। वरुण धर्म्मणां पते॥ १॥ मरुतो गणानां पतयः। रुद्र पशूनां पते। इन्द्रौजसां पते। बृहस्पते ब्रह्मणस्पते। आरुचा रोचेहꣳ स्वयम्। रुचा रुरुचे रोचमानः। अतीत्यादः स्वराभरेह। तस्मिन् योनौ प्रजनौ प्रजायेय। वयꣳ स्याम पतयो रयीणां। भूर्भुवः स्वः स्वाहा" ॥ २ ॥ इति। हे 'अन्नपते' अन्नस्य पालकाग्ने, 'नः' अस्मभ्यं, 'अन्नस्य', सारं 'देहि'। कीदृशस्य। 'अनमीवस्य' आरोग्यहेतोः, 'शुष्मिणः' बलहेतोः, 'प्रदातारं' प्रकर्षेण तुभ्यं हविषो दातारं, मां 'प्रतारिषः' प्रकर्षेण तारय, दारिद्र्यादुत्तीर्णं कुरु। 'नः' अस्मदीयं, 'द्विपदे' मनुष्याय, 'चतुष्पदे' पशवे च, 'ऊर्जं धेहि' चीरादिरसं सम्पादय। अग्न्यादयो बृहस्पत्यन्ता देवाः पृथिव्यादीनां पालकाः। तादृशा हे देवाः भवदनुग्रहात् 'अहं', 'स्वयं' एव परनैरपेक्ष्येण, 'रुचा' दीप्त्या, 'रोचे' सर्व्वतो दीप्ये। तथा स्वयं 'रोचमानः' दीप्यमानः, 'रुचा' स्वकीयया दीप्त्या, 'रुरुचे' परानपि प्रकाशयामि। हे अग्ने 'अदः' मानुषसुखं 'अतीत्य', 'इह' अस्मिन् कर्म्मणि, 'स्वराभर' स्वर्गसुखमानय। 'तस्मिन्योनौ' तथाविधे स्वर्गसमानसुखयुक्ते स्थाने, 'प्रजनौ' प्रजोत्पत्तिहेतौ, 'प्रजायेय' पुत्रादीनुत्पादयेय। वयमित्यादि पूर्व्ववत्॥

इति चतुर्थोऽनुवाकः।

अथ पञ्चमोऽनुवाकः।

(१) चतुर्थेऽन्नहोममन्त्र उक्तः। पञ्चमे विश्वप्रीनामको होममन्त्र उच्यते। "सप्त ते अग्ने समिधः सप्त जिह्वाः। सप्त ऋषयः सप्त धाम प्रियाणि। सप्त होत्रा अनुविद्वान्। सप्त योनीरापृणस्वा घृतेन। प्राची दिक्। अग्निर्देवता। अग्निꣳ स दिशां देवं देवतानामृच्छतु। यो मैतस्यै दिशोऽभिदासति। दक्षिणा दिक्। इन्द्रो देवता ॥ १ ॥ इन्द्रꣳ स दिशां देवं देवतानामृच्छतु। यो मैतस्यै दिशोऽभिदासति। प्रतीची दिक्। सोमो देवता। सोमꣳ स दिशां देवं देवतानामृच्छतु। यो मैतस्यै दिशोऽभिदासति ॥ २ ॥ उदीची दिक्। मित्रावरुणौ देवता। मित्रावरुणौ स दिशां देवौ देवतानामृच्छतु। यो मैतस्यै दिशोऽभिदासति। ऊर्ध्वा दिक्। बृहस्पतिर्देवता। बृहस्पतिꣳ स दिशां देवं देवतानामृच्छतु। यो मैतस्यै दिशोऽभिदासति। इयं दिक्। अदितिर्देवता। अदितिꣳ स दिशां देवीं देवतानामृच्छतु। यो मैतस्यै दिशोऽभिदासति। पुरुषा दिक्। पुरुषो मे कामान् समर्द्धयतु। अन्धो जागृविः प्राण। असावेहि। बधिर आक्रन्दय तरपान। असावेहि। उपसंसृशीय। अहमसो ज्योतिरशीय। अहमसो पाशीय वयꣳ स्याम पतयो रयीणाम्। भूर्भुवः स्वः स्वाहा" ॥ ३ ॥ इति। हे 'अग्ने', तव 'समिधः', सप्तसङ्ख्याकाः, अश्वत्थोदुम्बरपलाशशमीविकङ्कताशनिहतवृक्षपुष्करपर्णरूपाः। अतएव सूत्रकार आधानप्रकरणे यथोक्तसम्भारान् सप्तमन्त्रकाननुक्रान्ति। तानसप्त्या

इत्युपसञ्जहार। ज्वालारूपाः 'जिह्वाः', 'सप्त'। तथा चाथर्वणिका आमनन्ति। काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इति सप्तजिह्वा॥ 'इति पुरुषयो मन्त्राः, ते च यथोक्तमभित्सम्पादनार्थाः सप्तसङ्ख्याकाः अग्ने रूपं कृत्वा यदश्वत्थे तिष्ठ इत्यादयः समाम्नाताः। 'प्रियाणि', 'धाम' स्थानानि, आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजाहिताग्नीध्राख्यानि सोमयागेन बह्निधारकाणि सप्तसङ्ख्याकानि। 'होत्रा' होतृप्रमुखा वषट्कर्त्तारः। होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाच्छावाक आग्नीध्रश्चेति सप्तसङ्ख्याकाः तादृशाः। सप्तमिधादियुक्तस्त्वं 'अनुविद्वान्' आहवनीयस्थानान्यनुक्रमेण जानन्, 'सप्त', 'योनीः' आहवनीयादिस्थानानि, 'घृतेन', सर्व्वतः पूरय। इयं प्राची दिग् दृश्यते, तस्या दिशः 'अग्निर्देवता', अग्निर्हि तां दिशं पालयति। एवं सति 'यः' शत्रुः, मां 'एतस्याः', दिशः सकाशात्, 'अभिदासति' हिनस्ति, 'सः', शत्रुः, 'दिशां', देवानां च मध्ये प्राक्दिक्पालकं 'अग्निं', 'ऋच्छतु' प्राप्नोतु, सोऽग्निरेव तं शत्रुं निवारयिष्यतीत्यभिप्रायः। एवं दक्षिणादिषु योज्यं। इयं दिगित्यनेनाधरा दिक् प्रदर्श्यते। 'अदितिः' भूमिः, तस्या दिशः 'देवता'। पुरुषो दिगित्यनेन सर्व्वत्र परिपूर्णः परमात्मा सर्व्वदिक्समष्टिरूप इत्युच्यते। सच 'पुरुषः' मदीयान् 'कामान्', समृद्धान् करोतु। योऽयंप्राणवायुर्मुखनासिकावर्त्ती सोऽयं दर्शनशक्त्यभावादन्धः।

उच्छ्वासक्रियायामप्रमत्तत्वात् 'जागृविः', हे 'प्राण', 'अमावेहि' तादृशो भूत्वा ममागच्छ। अपानवायुः श्रवणशक्त्यभावात् 'वधिरः'। उदरमध्ये क्रन्दनस्य ध्वनिविशेषस्य हेतुत्वात् 'क्रन्दयितः' हे अपानवायो तादृशः सन् आगच्छ। तयोः प्राणापानदेवयोः प्रसादात् 'अहं', 'उषसं' उषसन्देर्नन्दिनवर्त्तिनं उषःकालं, 'अशीय' प्राप्नुयां। स एवार्थः स्पष्टीक्रियते। हे 'असौ' प्राण, 'अहं' 'ज्योतिरशीय' प्रकाशं प्राप्नुयां, न कदाचिदप्यन्धकारं। किञ्च हे 'असौ' प्राण, 'अहं' त्वत्प्रसादात् 'अपः' वृष्टिजलादिकं 'अशीय' प्राप्नुयां। वयमित्यादि पूर्व्ववत्॥

इति पञ्चमोऽनुवाकः।

अथ षष्ठोऽनुवाकः।

(१) पञ्चमे विश्वप्रीनामको होममन्त्रोऽभिहितः। षष्ठे तूपस्पर्शनादिमन्त्रा अभिधीयन्ते। तत्र बौधायनः। अथाग्निमभिमृशति। यत्तेऽचितमिति। पाठस्तु। "यत्तेऽचितं यदु चितं ते अग्ने। यत्त ऊनं यदु तेऽतिरिक्तम्। आदित्यास्तदङ्गिरसश्चिन्वन्तु। विश्वे ते देवाश्चितिमापूरयन्तु। चितश्चासि सञ्चितश्चास्यग्ने। एतावांश्चासि भूयांश्चास्यग्ने" इति। हे 'अग्ने', 'ते' तव सम्बन्धि, 'यत्' अङ्गं, 'अचितं' चयनकाले विस्मृतं। 'ते' तव सम्बन्धि, 'यदु' यदपि अङ्गं, 'चितं' अविस्मरणेन चयनं कृतं। किञ्च 'ते' तव सम्बन्धि, 'यत्' अङ्गं, 'ऊनं' मन्त्रादि-

विकलं, 'ते' तव, 'यद्' यदप्यङ्गं, 'अतिरिक्तं', 'तत्' सर्व्वमङ्गं, 'आदित्याः', देवाः 'अङ्गिरसः', महर्षयश्च, 'चिन्वन्तु' यथा-शास्त्रञ्चयनं कुर्वन्तु। 'विश्वे' सर्व्वे, 'देवाः', 'ते' त्वदीयां, 'चितिमापूरयन्तु'। हे 'अग्ने', त्वमनेन प्रकारेण 'चितश्चासि' अस्माभिरादौ चितोऽसि, पश्चाद्देवैः 'सञ्चितश्चासि' सम्यक् चितोऽसि, एकविंशतिभिरिष्टकाभिर्यावान् मस्यसे, हे 'अग्ने', त्वं 'एतावान्' अपि 'असि', फलतः 'भूयान्', अपि 'असि'॥

(२) कल्पः। लोकं पृणेति लोकं पृणा उपदधातीति। ते एते द्वे ऋचौ। तत्र प्रथममाह। "लोकं पृण छिद्रं पृण। अथो सीद शिवा त्वम्। इन्द्राग्नी त्वा बृहस्पतिः। अस्मिन् योनावसीषदन्॥ १॥ तया देवतयाङ्गिरस्वद्ध्रुवासीद" इति। हे इष्टके 'लोकं' चयनार्थे प्रदेशे पूर्व्वोक्ताभिरिष्टकाभिरनाक्रान्तमवशिष्टं स्थानं, 'पृण' पूरय। तथा 'छिद्रं पृण' द्वयोरिष्टकयोर्मध्ये किञ्चिदपि छिद्रं यथा न दृश्यते तथा पूरय, अत्यन्तं संश्लिष्टा भवेत्यर्थः। 'अथो' अपि च, 'त्वं', 'शिवा' शान्ता सती, 'सीद' अवतिष्ठस्व। 'इन्द्राग्नी', 'बृहस्पतिः', चेत्येते देवाः 'अस्मिन् योनौ' स्थाने, त्वां 'असीषदन्' सादितवन्तः। तथेन्द्रादिदेवतया अङ्गिरोभिरिवोपहितासतो 'ध्रुवासीद' स्थिरा भूत्वेह तिष्ठ॥

(२) अथ द्वितीयमाह। "ता अस्य सूददोहसः। सोमꣳ श्रीणन्ति पृश्नयः। जन्मन्देवानां विशः। त्रिष्वारोचने दिवः तया देवतयाङ्गिरस्वद्ध्रुवासीद" इति। दिवो रोचने स्वर्गस्य

प्रकाशके, 'अस्य जन्मन्' यजमानस्य जन्मनि निमित्तभूते सति, 'देवानां', सम्बन्धिन्यः 'विशः' प्रजारूपाः, 'पृश्नयः' अल्पगो-सदृशाः, 'सूददोहसः' अन्नस्य दोग्धयित्र्यः, 'ताः' इष्टकाः, 'सोमं', 'श्रीणन्ति' पक्वं कुर्व्वन्ति, कदा 'त्रिषु' सवनेषु, आ समन्तात्त्र्याणि प्रातःसवनादीनि तेषु निरन्तरं सोमपाके हेतव एता इष्टका इत्यर्थः। एता इष्टका यद्देवतासम्बन्धिन्यः तया देवतयेत्यादि पूर्व्ववत्॥

(४) अथ महाग्निचयने आग्नेय्या गायत्रिया प्रथमां चिति-मभिमृशेदित्यादिना पञ्चभिर्ऋग्भिः पञ्चानां चितीनां स्पर्शन-मुक्तं। इह तु चितेरेकत्वात् पञ्चभिरप्येकमेवाभिमृशेत्। तत्र प्रथमामाह। "अग्ने देवाꣳ इहावह। जज्ञानो वृक्तबर्हिषे। असि होता न ईड्यः" इति। हे 'अग्ने', त्वं 'इह' कर्म्मणि, 'देवानावह'। 'जज्ञानः' उत्पन्न एव सन्, 'नः' अस्माकं, 'वृक्त-बर्हिषे' अनिष्पन्नयज्ञनिष्पत्त्यर्थं, 'होता', होमनिष्पादकः। 'ईड्यः' स्तुत्यस्त्व, 'असि'॥

(५) अथ द्वितीयामाह। "अगन्म महा मनसा यविष्ठम्॥ १॥ यो दीदाय समिद्धः स्वे दुरोणे। चित्रभानू रोदसी अन्तरुर्वी। स्वाहुतं विश्वतः प्रत्यञ्चम्" इति। 'यः' अग्निः, 'स्वे दुरोणे' स्वकीये गृहे, 'समिद्धः' सम्यक् प्रज्वलितः, 'दीदाय' दीप्तवान्। तमग्निं 'मनसा', 'अगन्म' वयं प्राप्तवन्तः। कीदृशं, 'महा' गुणैर्महान्तं पूज्यं वा, 'यविष्ठं' युवतमं, 'स्वाहुतं' सुष्ठु होमेन तर्पितं, 'विश्वतः प्रत्यञ्चं' सर्व्वतोऽभिमुखं, 'उर्वी',

'रोदसी', 'अन्तः' विस्तीर्णयोर्द्यावापृथिव्योर्मध्ये, 'चित्रभानुः' विचित्ररश्मिः, 'यः', 'दीदाय', इत्यन्वयः। यद्वा चित्रभानुमिति द्वितीयार्थत्वेन व्याख्येयं॥

(६) अथ तृतीयामाह। "मेधाकारं विदथस्य प्रसाधनम्। अग्निꣳ होतारं परिभूतमं मतिम्। त्वामर्भस्य हविषः समानमित्। त्वां महो वृणते नरो नान्यं त्वत्" इति। हे चितिरूप त्वां 'अग्निं', स्पृशामीति शेषः। कीदृशं, 'मेधाकारं' ग्रन्थतदर्थधारणशक्तिर्मेधा तां करोतीति मेधाकारः तं, 'विदथस्य' यज्ञस्य, 'प्रसाधनं' प्रकर्षेण साधनभूतं, 'होतारं' देवानामाह्वयितारं, 'परिभूतमं' शत्रूणामतिशयेन तिरस्कर्त्तारं, 'मतिं' मननीयं, 'अर्भस्य' अल्पस्य, अपि 'हविषः', 'समानमित्' सदृशमेव, स ह्येतावद्भविः स्वीकरोति न त्वल्पमित्येवं वैषम्यं, 'नरः' मनुष्या यजमानाः, सर्व्वत्र 'महः' महनीयं, 'त्वां', 'वृणते' सम्भजन्ते, 'त्वदन्यं', कञ्चिदपि यज्ञनिर्वाहार्थं 'न वृणते'॥

(७) अथ चतुर्थीमाह। "मनुष्वं त्वा निधीमहि। मनुष्वत्समिधीमहि। अग्ने मनुष्वदङ्गिरः॥ ३॥ देवान् देवायते यज" इति। हे 'अग्ने', त्वां 'मनुष्वं निधीमहि', यथा कथञ्चिन्मनुष्यं बन्धुं सखायं वा क्वचिद्विस्रम्भेण स्थापयामः तथा त्वामप्यस्मिन् कर्म्मणि विस्रम्भेण स्थापयामः। तथा 'मनुष्वत्' कस्मिंश्चिन्मनुष्य इव, त्वयि विस्रब्धाः सन्तः त्वां 'समिधीमहि' सम्यक् प्रज्वालयामः। हे 'अङ्गिरः' अङ्गसौष्ठवयुक्ताग्ने, 'मनुष्वत्' मनुष्य ऋत्विगिव, 'देवायते' देवानात्मन इच्छते यजमानाय, 'देवान्', 'यज' पूजय॥

(८) अथ पञ्चमीमाह। "अग्निर्हि वाजिनं विशे। ददाति विश्वचर्षणिः। अग्नी राये स्वाभुवम्। स प्रीतो याति वार्य्यम्। इषꣳ स्तोतृभ्य आभर" इति। विश्वचर्षणयो मनुष्या यस्यासौ 'विश्वचर्षणिः' सर्व्वमनुष्योपकारकः। 'अग्निर्हि' अयमग्निः खलु, 'विशे' प्रजायै, 'वाजिनं' अन्नं, 'ददाति'। अयं 'अग्निः', 'राये' धनार्थं, यजमानानां धनदानाय, 'स्वाभुवं' सुष्ठु सर्व्वतो भूमिं, प्राप्नवानिति शेषः। 'सः' अग्निः, 'प्रीतः', सन् 'वार्य्यं' वरणीयं यजमानं, 'याति' प्राप्नोति। हे अग्ने 'स्तोतृभ्यः' यजमानेभ्यः, 'इषं' अन्नं, 'आभर' सम्पादय॥

(९) कल्पः। चात्वालात् पुरीषमाहृत्य पृष्टो दिवीति वैश्वानर्य्यर्चाचितावध्यूहति साचितिर्भवतीति। पाठस्तु। "पृष्टो दिवि पृष्टो अग्निः पृथिव्यां। पृष्टो विश्वा ओषधीराविवेश। वैश्वानरः सहसा पृष्टो अग्निः। स नो दिवा स रिषः पातु नक्तम्" ॥ ४ ॥ इति। पृष्ट इत्यत्र सकारलोपः छान्दसः। अयमग्निर्दिवः 'पृष्टः' आदित्यरूपेणावस्थितः। 'पृथिव्यां' इह, पाकप्रकाशकारित्वेनावस्थितः। तथा फलपाककारी सन् 'पृष्टः' सम्बन्धः। सर्व्वा अपि 'ओषधीः' 'आविवेश'। 'वैश्वानरोऽग्निः', 'सहसा' बलेन, 'पृष्टः' सम्बन्धः, 'सः' तादृशः, 'नः' अस्मान्, 'दिवारिषः' हिंसकान्, 'पातु'। 'नक्तं' रात्रावपि, 'सः', अस्मान् 'पातु' ॥

इति षष्ठोऽनुवाकः।

---

अथ सप्तमोऽनुवाकः ।

(१) षष्ठे स्पर्शनाद्यर्था मन्त्रा उक्ताः । एतावता नाचिकेतचयनस्यापेक्षिता मन्त्रा उक्ताः । अथानुवाकचतुष्टयेन ब्राह्मणमभिधीयते । तत्रास्मिन् सप्तमानुवाके नाचिकेताग्निदेवतोपासनमभिधीयते । "अयं वाव यः पवते । सोऽग्निर्नाचिकेतः । स यत्प्राङ् पवते । तदस्य शिरः । अथ यद्दक्षिणा । स दक्षिणः पक्षः । अथ यत्प्रत्यक् । तत्पुच्छम् । यदुदङ् । स उत्तरः पक्षः ॥ १ ॥ अथ यत्संवाति । तदस्य समञ्चनञ्च प्रसारणञ्च । अथो सम्पदेवास्य सा" इति । 'अयं वाव', प्रत्यक्षतो दृश्यमान एव, 'यः' वायुः, 'पवते' सञ्चरति । 'सः' अयं पूर्व्वोक्तनाचिकेताग्निदेवस्वरूपः । 'सः' वायुः, प्राग्दिगभिमुखः सञ्चरतीति 'यत्', 'तदस्य' नाचिकेताग्नेः, शिरःस्थानीयं, अनन्तरं दक्षिणस्यां दिशि सञ्चरतीति 'यत्', सोऽयं पक्षाकारस्य नाचिकेताग्नेः 'दक्षिणपक्षः' । 'अथ', प्रत्यङ्मुखः सञ्चरतीति 'यत्', 'तत्', पुच्छस्थानीयं । अनन्तरं उत्तराभिमुखं सञ्चरतीति 'यत्', 'सः', अयं 'उत्तरः पक्षः' । 'अथ', 'संवाति' सम्भूय सर्व्वत्र प्रसरतीति, 'यत्', 'तत्', 'अस्य' अग्नेः, सङ्कोचो विकाशश्च । अपिच येयं शिरआदिकल्पना 'सा' इयं, 'अस्य' अग्नेः, 'सम्पदेव' ध्यानार्थं सम्पादनमेव । एवं सम्पाद्य ध्यायेदित्यर्थः ॥

(२) अथ पूर्व्वोक्तस्य चयनस्येदानीमुक्तस्य ध्यानस्य समानं फलं दर्शयति । "सर्व्वं ह वा अस्मै स कामः पद्यते । यत्कामो यजते । योऽग्निं नाचिकेतं चिनुते । य उचैनमेवं वेद" इति ।

नाचिकेतो नाम कश्चित् उद्दालकस्य पुत्रः उत्तरानुवाके वक्ष्यते तन्नाम्ना प्रसिद्धो 'नाचिकेतः' लोकोऽसीत्यादिमन्त्रसाध्योऽग्निः तं, पूर्व्वोक्तप्रकारेण 'यश्चिनुते'। 'यः' अप्यन्यः, कश्चिदयं वाव यः पचत इत्याद्युक्तप्रकारेणोपास्ते। उभयविधः स पुरुषो यद्विषयकामनायुक्तोऽनुतिष्ठति 'स कामोऽस्मै', 'सम्पद्यते' सम्यक् प्राप्यते॥

(३) तस्याग्नेराधारत्वेन हिरण्यध्यानं विधत्ते। "यो ह वा अग्नेर्नाचिकेतस्यायतनं प्रतिष्ठां वेद। आयतनवान् भवति। गच्छति प्रतिष्ठाम्॥ २॥ हिरण्यं वा अग्नेर्नाचिकेतस्यायतनं प्रतिष्ठा। य एवं वेद। आयतनवान् भवति। गच्छति प्रतिष्ठाम्" इति। 'आयतनं' आधारः, 'प्रतिष्ठा' चिरमवस्थानं, हिरण्येष्टकानां नाचिकेताग्नावुपहितत्वात् 'हिरण्यं', अस्य आधारः। तत्रैवास्य चिरकालावस्थितिः। हिरण्यस्याकारद्वयध्यानेनासौ गृहवान् भूत्वा चिरकालस्थितिं लभते फलस्य पुनर्वचनमुपसंहारार्थं॥

(४) अथ हिरण्यशरीरत्वेन ध्यानं विधत्ते। "यो ह वा अग्नेर्नाचिकेतस्य शरीरं वेद। सशरीर एव स्वर्गं लोकमेति। हिरण्यं वा अग्नेर्नाचिकेतस्य शरीरम्। य एवं वेद। सशरीर एव स्वर्गं लोकमेति" इति। हिरण्यस्य शरीरत्वध्यानेन मनुष्यशरीरसहितस्यैव स्वर्गप्राप्तिः॥

(५) फलान्तरं दर्शयति। "अथो यथा रुक्म उत्तप्तो भायात्॥ ३॥ एवमेव स तेजसा यशसा। अस्मिꣳश्च लोकेऽमुष्मि-

ऽश्च भाति" इति। अपि च 'यथा', लोके 'रुक्मः' सौवर्णाभरणविशेषः। उत्कर्षेणाग्नौ 'तप्तः', सन् स्वनिष्ठां कालिकां परित्यज्य विस्पष्टं भासेत्। 'एवमेव', 'सः' हिरण्यभाता, शरीरकान्त्या कीर्त्त्या च लोकद्वये प्रकाशते॥

(६) अथाग्निचिता तदुपासकेन च प्राप्यानां लोकानामत्युत्तमत्वं वक्तुं लोकविभागं दर्शयति। "उरवो ह वै नामैते लोकाः। येऽवरेणादित्यम्। अथ हैते वरीयाꣳसो लोकाः। ये परेणादित्यम्। अन्तवन्तꣳ ह वा एष क्षय्यं लोकं जयति। योऽवरेणादित्यम्। अथ हैषोऽनन्तमपारमक्षय्यं लोकं जयति। यः परेणादित्यम्" इति। द्विविधाः स्वर्गलोकाः आदित्यलोकादर्वाञ्च उपरितनाश्च। तत्र 'आदित्यमवरेण' आदित्यादर्वाञ्चः,'ये लोकाः' स्वर्गविशेषाः। ते सर्व्वेऽपि 'उरवः' विस्तीर्णाः, इति 'नाम' प्रसिद्धं। अथ 'ये' स्वर्गलोकाः,'आदित्यं परेण' आदित्यलोकात् पुरस्तात्, वर्त्तन्ते। 'एते', 'वरीयांसः' अतिशयेन विस्तीर्णाः। एवं सति 'यः' पुमान्, आदित्यादर्वाञ्चं लोकं प्राप्नोति। 'एषः' पुमान्, 'अन्तवन्तं' विनाशयुक्तं, 'क्षय्यं' परस्परमेकैकापेक्षया क्षयार्हं, तादृशं 'लोकं', प्राप्नोति। यस्त्वादित्यात् पराञ्चं प्राप्नोति। 'एषः' पुमान्, 'अन्तमपारं' आतानवितानाभ्यामवसानरहितं, 'अक्षय्यं' भोग्यवस्तुक्षयरहितं, 'लोकं' प्राप्नोति॥

(७) एवं विभागे व्यवस्थिते सति नाचिकेताग्निं चिन्वतस्तस्योपासकस्य चोपरितनलोकप्राप्तिफलं दर्शयति। "अनन्तꣳ

ह वा अपारमक्षय्यं लोकं जयति। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद" इति॥

(८) आदित्यमण्डलादूर्ध्ववर्त्तिनं ब्रह्मलोकं प्राप्तस्यायुःक्षयहेतुभूतकालपारतन्त्र्याभावं दृष्टान्तेन दर्शयति। "अथो यथा रथे तिष्ठन् पक्षसी पर्य्यावर्त्तमाने प्रत्यपेक्षते। एवमहोरात्रे प्रत्यपेक्षते। नास्याहोरात्रे लोकमाप्नुतः। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद"॥ ४॥ इति। अत्युन्नतस्य रथस्योपरिवर्त्तमानः पुरुषो रथस्य पार्श्वयोरधोभागे पुनः पर्यावर्त्तमाने 'पक्षसी' उभे चक्रे, स्वस्मादत्यन्तमधस्तनत्वेन प्रतिक्षणं पश्यति। एवममी ब्रह्मलोके वर्त्तमानः पुरुषोऽधस्तनेषु मनुष्यादिलोकेषु प्राणिनामायुःक्षपणाय पुनः पुनः पर्यायवर्त्तमाने 'अहोरात्रे', स्वस्मादत्यन्तनीचत्वेन प्रतिक्षणं पश्यति। 'यो नाचिकेतमग्निं चिनुते', यश्चोपास्ते उभयविधस्य 'अस्य', 'लोकं', 'अहोरात्रे', 'न', प्राप्नुतः। ब्रह्मलोके हि नैते अहोरात्रे अत्यन्तं प्रसरतः किन्तु कल्पमात्रमेकमहः तस्मादितरलोकेष्विव 'नास्य', आयुः क्षीयते॥

इति सप्तमोऽनुवाकः।

---

अथ अष्टमोऽनुवाकः।

(१) सप्तमे नाचिकेताग्न्युपासनं पञ्चाकारवायुदेवताविषयमुक्तं। अष्टमे ब्रह्मलोकप्राप्तिलक्षणस्य तत्फलस्य सत्यत्वाद्यपुनरावृत्तिरूपं माहात्म्यमुपाख्यानेन दर्शयति। तत्रादौ नाचिकेतसः प्रश्नं दर्श-

यति। "उशन् ह वै वाजश्रवसः सर्व्ववेदसन्ददौ। तस्य ह नाचिकेता नाम पुत्र आस। तꣳ ह कुमारꣳ सन्तम्। दक्षिणासु नीयमानासु श्रद्धा विवेश। स होवाच। तात कस्मै मां दास्यसीति द्वितीयं तृतीयम्" इति। वाजोऽन्नं तद्दान-निमित्तं श्रवः कीर्त्तिर्यस्यासौ वाजश्रवाः, कश्चिन्मुनिर्गौतम-गोत्रोत्पन्नः तस्य पुत्र उद्दालकाख्यो मुनिः 'वाजश्रवसः', स च कदाचित् सर्व्वस्वदक्षिणाकेन विश्वजिदादियागेन 'उशन्' तत्फलं कामयमानः, यागमध्ये 'सर्व्ववेदसं' सर्वस्वं, ऋत्विग्भ्यः 'ददौ'। तस्मिन् काले 'तस्य' उद्दालकस्य, कश्चित् 'पुत्रः 'ना-चिकेतः', नामक आसीत्, स चोपनयनयोग्यवयस्कः कुमारो भूत्वा तदा वर्त्तते। 'तं कुमारं सन्तं' नाचिकेतसं, ऋत्विजः प्रति 'दक्षिणासु', पित्रा 'नीयमानासु', अतिशयेन 'श्रद्धा', 'प्राविवेश', यथाशास्त्रं दक्षिणा दातव्येत्येषा बुद्धिः 'श्रद्धा', अतिशयः श्रद्धाविशिष्टः 'सः' कुमारः, मनस्येवं विचारयामास, कर्मषाड्गुण्यार्थं पित्रा सर्व्वस्वं दातव्यं, अहञ्च पितुः स्वं, तस्माद्दातव्योऽहमिति विचार्य पितरं प्रत्येवं 'उवाच', हे 'तात' हे पितः 'कस्मै' ऋत्विजे, 'मां दास्यसीति'। तदानीं बालो-ऽयं मुग्ध इति तद्वचनमुपेक्ष्य तूष्णीं स्थितं पितरं प्रति 'द्वि-तीयं' वारं, 'तृतीयं' वारं, च तथैवोवाच॥

(२) पुत्रस्य प्रश्नं दर्शयति। "तꣳ ह परीत उवाच। मृत्यवे त्वा ददामि" इति। अयं तावन् मुग्धो न भवति। किन्तु धूर्त्त इत्येवं कुपितः सन् तदाभिमुख्येन पर्यावृत्तः कोपावेशान्

'मृत्यवे त्वा ददामीति' तं कुमारं 'उवाच'। अस्मिन्नवसरे काचिददृश्यमानशरीरा दैवी वाक्। तं नचिकेतसं समनुजग्राह॥

(३) तदनुग्रहप्रकारं दर्शयति। "तꣳ ह प्रोत्थितं वागभिवदति॥ १॥ गौतम कुमारमिति। स होवाच। परेहि मृत्यार्गृहान्। मृत्यवे वै त्वा ददामीति" इति। कोपयुक्तं पितुस्तद्वचनं श्रुत्वा पितुः सकाशात् परतो गन्तुं सह 'उत्थितं', कुमारं अभिमुखीकृत्यानुग्रहपरा दैवी 'वाक्', 'इति' एवं, 'वदति स्म'। किमिति तदुच्यते। हे गौतमगोत्रोत्पन्न नचिकेतः 'सः' खलु तव पिता, एवं 'उवाच'। तद्वचनस्यायमभिप्रायः, हे पुत्र 'मृत्योर्गृहान्', 'प्रतिपरेहि' गच्छ। 'मृत्यवे', त्वामहं दत्तवानस्मीति॥

(४) इत्थं तत्पितुरभिप्रायं विशदीकृत्य सा वाग्देवता, कुमारमनुग्रहीतुं बुद्धिप्रदानं करोति। "तं वै प्रवसन्तं गन्तासीति होवाच। तस्य स्म तिस्रो रात्रीरनाश्वान् गृहे वसतात्। स यदि त्वा पृच्छेत्। कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रतिब्रूयात्। किं प्रथमाꣳ रात्रिमाश्ना इति॥ २॥ प्रजान्त इति। किं द्वितीयामिति। पशूꣳस्त इति। किं तृतीयामिति। साधुकृत्यान्त" इति। हे नचिकेतः यमो यदा गृहान्निर्गत्य यत्र क्वापि प्रवसति। 'तं प्रवसन्तं', निश्चित्य तद्गृहं 'गन्तासि' गमिष्यसि, गच्छेत्यर्थः। एवमुक्त्वा पुनरप्येवं 'उवाच', 'तस्य' यमस्य, 'गृहे', गत्वा यमस्य दर्शनाभावे तदीयपुत्र-

भार्यादिभिः प्रार्थितोऽपि त्वं दिनत्रयं 'अनाश्वान्' भोजनरहितः, निवासं कुरु। तावता समागत्य 'सः' यमः, 'यदि', 'त्वां', प्रति हे 'कुमार कति रात्रीः', इहोषितवानिति 'पृच्छेत्'। तदानीं 'तिस्रः', इति' एवं, सत्यमेव प्रत्युत्तरं ब्रूहि। ततः प्रथमदिने 'किं', भुक्तवानसि इत्येवं पृष्टः सन् त्वदीयां 'प्रजां', भक्षितवानस्मि 'इति' एवं प्रत्युत्तरं ब्रूहि। अतिथिर्गृहे समागत्य भोजनरहितो वसति चेत्। तस्य गृहस्वामिन एकदिनभोजनराहित्यमात्रेण तस्य प्रजाक्षयो भवतीत्येतच्छास्त्ररहस्यं तेन वाक्येन सूचितं भवति। एवं द्वितीयतृतीयदिवसयोरुपवासेन पशुक्षयं सुकृतक्षयञ्चासूचयत्॥

(५) तदेवं वाग्देवतया शिक्षितो नचिकेतास्तथैव चकारेत्येतद्दर्शयति। "तं वै प्रवसन्तं जगाम। तस्य तिस्रो रात्रीरनाश्वान् गृह उवास। तमागत्य पप्रच्छ। कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रत्युवाच॥ २॥ किं प्रथमाꣳ रात्रिमाश्ना इति। प्रजान्त इति। किं द्वितीयामिति। पशूꣳस्त इति। किं तृतीयामिति। साधुकृत्यान्त" इति। पूर्ववद्व्याख्येयं॥

(६) एतावता शास्त्रार्थरहस्याभिज्ञोऽयं कुमारो न तु मूर्खः। तस्मात् सत्कारार्हो न मारणीय इत्येवं निश्चित्य यं सत्कारञ्चकार तं दर्शयति। "नमस्ते अस्तु भगव इति होवाच। वरं वृणीष्वेति" इति। उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिं। वेत्ति विद्यामविद्यां च स वाच्यो भगवानि-

तीत्येतच्छास्त्रानुसारेण नचिकेतसमभिज्ञं मत्वा भगवच्छ-ब्देन सम्बोध्य दिनत्रयोपवासकृतं स्वापराधं परिहर्तुं वरत्रयं दत्तवान्। सोऽयमर्थः कठवल्लीष्वस्मिन्नेव नाचिकेतोपाख्याने विस्पष्टमाम्नातः। तिस्रो रात्रीर्यदवात्सीः गृहे मेऽनश्नन् ब्रह्म-न्नतिथिर्नमस्यः नमस्ते अस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात् प्रति त्रीन् वरान् वृणीष्वेति। प्रतिशब्देन प्रतिदिनोपवा-सनिमित्तापराधपरिहारायेत्ययमर्थ उच्यते॥

(७) नचिकेतसा वृतं प्रथमं वरं दर्शयति। "पितरमेव जीवन्नयानीति" इति। हे यम त्वयाहममारितो जीवन्नेव मदीयं 'पितरं', प्राप्नवानि सोऽयं प्रथमो वरः॥

(८) अथ प्रश्नोत्तराभ्यां द्वितीयं वरं दर्शयति। "द्विती-यं वृणीष्वेति॥ ४॥ इष्टापूर्त्तयोर्मे क्षितिं ब्रूहीति होवाच। तस्मै हैतमग्निं नाचिकेतमुवाच। ततो वै तस्येष्टापूर्त्ते नाक्षीयेते" इति। द्वितीयवरार्थं प्रार्थितः कुमारोऽयं मदीययोः श्रौत-स्मार्त्तसुकृतयोरक्षयहेतुं 'ब्रूहि', 'इति' एतादृशं वरं, वृतवान्। ततो यमः 'तस्मै' नचिकेतसे, 'एतं' पूर्व्वानुवाकेष्वभिहितं, चयनमुपास्तिञ्च द्विविधं नाचिकेतनामाङ्कितं, 'अग्निं', 'उवाच'। तन्नामाङ्कितत्वं कठवल्लीषु स्पष्टीकृतं। एष ते अग्निर्नाचिकेतः स्वर्ग्योऽयमवृणीथा द्वितीयेन वरेणैतमग्निं तवैव प्रवक्ष्यन्ति जनास इति। 'ततः' नाचिकेताग्निचयनाच्च, 'तस्य' नचिके-तसः, श्रौतस्मार्त्तसुकृते न 'क्षीयेते' अल्पफले न भवतः॥

(९) नचिकेतस इवान्यस्यापि श्रौतस्मार्त्तसुकृतयोरक्षयं

दर्शयति। "नास्येष्टापूर्त्तं क्षीयते। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद" इति ॥

(१०) पुनरपि प्रश्नोत्तराभ्यां वरान्तरं दर्शयति। "तृतीयं वृणीष्वेति। पुनर्मृत्योर्मेऽपचितिं ब्रूहीति होवाच। तस्मै हैतमग्निं नाचिकेतमुवाच। ततो वै सोऽप पुनर्मृत्युमजयत् ॥५॥ अप पुनर्मृत्युञ्जयति। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद" इति। वर्त्तमानस्य मनुष्यशरीरस्य सकृन्मृत्युरवश्यम्भावी, तदूर्ध्वं पुनरप्यर्वाचीनजन्मस्वीकारे सति पुनर्मृत्युर्भवति, जन्मस्वीकारं विना मुक्तौ सत्यां सोऽयं पुनर्मृत्युरपक्षीयते। मृत्योरपजयः पुरुषस्यैव जयः। तादृशं ,पुनर्मृत्योः', अपजयहेतुं 'ब्रूहि', 'इति' एषः, तृतीयो वरः। एवं वृणानाय 'तस्मै' नचिकेतसे, पुनर्मृत्युजयहेतुत्वेन तमेव द्विविधं 'नाचिकेताग्निं', उक्तवान्। चयनोपासनयोर्मध्ये चयनस्य प्राधान्यमुपासनस्योपसर्जनत्वं यस्य पुंसः सम्पद्यते, तस्येष्टापूर्त्तयोरक्षयत्वमात्रं चिरं पुण्यलोकमनुभूय पुनर्जन्मस्वीकारः। यस्य तु उपासनं प्रधानं चयनमुपसर्जनं तस्य ब्रह्मलोकप्राप्तिद्वारा मुक्तिरेव। न तु जन्मान्तरं तस्मात् मृत्युञ्जयेत्येवं वरयोर्विभागः। 'ततो वै' तस्मादेव प्रधानभूतादुपासनात्, 'सः' नचिकेताः, 'पुनर्मृत्युं', जितवान्। अन्योऽपि विद्याप्राधान्ये सति तद्वन्मृत्युञ्जयति ॥

(११) अथ प्रजापतिवृत्तान्तकथनमुखेन दक्षिणां प्रशंसति। "प्रजापतिर्वै प्रजाकामः. तपोऽतप्यत। स हिरण्यमुपास्यत्। त-

दग्नौ प्राश्यत्। तदस्मै नाच्छदयत्। तद्द्वितीयं प्राश्यत्। तदस्मै नैवच्छदयत्। तत्तृतीयं प्राश्यत् ॥ ६ ॥ तदस्मै नैवाच्छदयत्। तदात्मन्नेव हृदय्येऽग्नौ वैश्वानरे प्राश्यत्। तदस्मा अच्छदयत्। तस्माद्धिरण्यं कनिष्ठं धनानां। भुञ्जत्प्रियतमं। हृदयजꣳ हि। स वै तमेव नाविन्दत्। यस्मै तान्दक्षिणामनेष्यत। ताꣳ स्वायैव हस्तादक्षिणायानयत्। तां प्रत्यगृह्णात् ॥ ७ ॥ दक्षाय त्वा दक्षिणां प्रतिगृह्णामीति। सोऽदक्षत दक्षिणां प्रतिगृह्य। दक्षते ह वै दक्षिणां प्रतिगृह्य। य एवं वेद" इति। पुराकदाचित 'प्रजापतिः', प्रजा उत्पादयिष्यामीति कामयित्वा 'तपः', कृतवान्, तदा 'सः' प्रजापतिः, स्वाभीष्टफलत्वेन किञ्चित् 'हिरण्यं', 'उदास्यत्' उत्पादितवान्। 'तत्' च हिरण्यं, स्वकार्यसिध्यर्थं 'अग्नौ', प्रक्षिप्तवान्। 'तत्' च अग्नौ प्रक्षिप्तं हिरण्यं, 'अस्मै' प्रजापत्यर्थं, 'नाच्छदयत्' कार्यप्रतिबन्धस्यापवारणं नाकरोत्। एवं द्वितीयतृतीययोरपि पर्याययोर्द्रष्टव्यं। ततः सः प्रजापतिर्हिरण्यस्य बाह्यवह्नौ प्रक्षेपं परित्यज्य 'आत्मन्नेव' स्वशरीरमध्य एव, 'हृदय्ये' हृदयपुण्डरीकसमीपवर्त्तिनि, 'वैश्वानरे' सर्वपुरुषहिते जाठराग्नौ, 'प्राश्यत्' प्रक्षिप्तवान्। 'तत्' च जाठराग्नौ प्रक्षिप्तं हिरण्यं, 'अस्मै' प्रजापत्यर्थं, 'अच्छदयत्' कार्य्यप्रतिबन्धस्यापवारणमकरोत्। यस्माद्बाह्येऽग्नौ प्रक्षिप्तमकिञ्चित्करं जाठराग्नौ प्रक्षिप्तं कार्य्यकरमासीत्, 'तस्मात्', लोकेऽपि 'हिरण्यं', बाह्यदेशे भूमिमञ्जूषादौ प्रक्षिप्तं सत् भोगानुपयुक्तत्वात् 'धनानां', मध्ये 'कनिष्ठं', उच्यते। यत्तद्धनं 'भुञ्जत्' भोगोपयुक्तं सत्,

आभरणरूपेणान्नादिरूपेण वा तदेव सर्वेषां प्राणिनां 'प्रियतमं', यस्मात् 'हृदयजं' प्रजापतेरिव भोक्तॄणां हृदयममन्धं, तस्मात्प्रियतमत्वं, युक्तं। उक्तरीत्या चेतने प्रक्षिप्तस्य हिरण्यस्य प्रियतमत्वे पर्यालोच्य 'यस्मै' चेतनाय पुरुषाय, 'तां' हिरण्यरूपां, 'दक्षिणां', स्वयं 'अनेष्यत्', तमेव चेतनं पुरुषं प्रतिग्रहीतारमन्विष्य तदानीं नालभत पुरुषान्तरमलब्ध्वा स्वकीयायैव दक्षिणहस्ताय 'तां' हिरण्यरूपां दक्षिणां, नीतवान्। नीत्वा च हे हिरण्य त्वद्रूपां, 'दक्षिणां', 'दक्षाय' कार्य्यसमर्थाय, 'प्रतिग्रह्णामीति', एवं वदन् स्वयमेव 'तां' दक्षिणां, 'प्रत्यग्रह्णात्', ततः प्रजापतिः, 'दक्षिणां प्रतिगृह्य', 'अदक्षत' कार्य्यसमर्थो अभूत्। अन्योऽपि 'यः' पुमान् एवं, हिरण्यवृत्तान्तं 'वेद' स एव 'दक्षिणां प्रतिगृह्य', 'दक्षते' कार्य्यसमर्थो भवति ॥

(१२) प्रजापतिवृत्तान्तेनास्य दक्षिणां प्रशस्य महर्षिवृत्तान्तेनापि प्रशंसति। "एतद्ध स्म वै तद्विद्वाꣳसो वाजश्रवसा गोतमाः। अप्यनूद्देश्यां दक्षिणां प्रतिगृह्णन्ति। उभयेन वयं दक्षिष्यामह एव दक्षिणां प्रतिगृह्णाति। तेऽदक्षन्त दक्षिणां प्रतिगृह्य। दक्षते ह वै दक्षिणां प्रतिगृह्य। य एवं वेद। प्र हान्यं लीनाति च" इति। अन्नदाननिमित्तकीर्त्तियुक्तो महर्षिर्वाजश्रवाः, तस्य पुत्राः 'वाजश्रवसः'। ते च 'गोतमाः' तद्वंशेत्पन्नत्वात्तादृशा महर्षयः। तत् 'एतत्' दक्षिणामाहात्म्यं, विजानन्त 'अनूद्देश्यां अपि', 'दक्षिणां प्रतिगृह्णन्ति'। द्विविधा दक्षिणा, प्रत्यक्षमेव दत्ता अनुद्दिष्टा चेति। अन्वाहार्य्यं दक्षिणा ददाति हिरण्यं ददाती-

त्येवन्दानार्थत्वात्तुनैव विहिता प्रत्यक्षदत्ता। देवताभ्यः समर्पिता अनुद्दिष्टा। अत एवान्यत्राम्नातं। यदेवमेता अनुद्दिशति यथा देवत्तमेव दक्षिणा गमयति इति। तथा सति देवतार्थमनुद्देश्यामसुख्यामपि दक्षिणां प्रतिगृह्णाति किं वक्तव्यं प्रत्यक्षदत्तां मुख्यां प्रतिगृह्णातीति। तथा प्रतिग्रहीतॄणां तथामयमभिप्रायः। मुख्याममुख्यां च दक्षिणां प्रतिगृह्य 'उभयेन', 'दक्षिष्यामहे' कार्य्यसमर्था भविष्याम इति। 'ते' महर्षयः, तथैव 'दक्षिणां प्रतिगृह्य', स्वकार्य्येषु 'अदक्षन्त' समर्था अभवन्। 'यः' अप्यन्यः, 'एवं' महर्षिवृत्तान्तं, 'वेद'। सोऽपि 'दक्षिणां प्रतिगृह्य', स्वकार्य्यसमर्थो भवत्येव। 'अन्नं,' द्रव्यरहितं स्वविरोधिनं प्रकर्षेण 'स्रीणाति' हविः शीर्णं करोत्येव॥

इति अष्टमोऽनुवाकः।

---

अथ नवमोऽनुवाकः।

(१) अष्टमे नाचिकेताग्निचयनतद्वेदने उपाख्यानेन प्रशस्ते। नवमे चयनप्रयोगोऽभिधीयते। तत्रादौ पूर्व्वोत्तरपक्षाभ्यां चयनस्य देशविशेषं निश्चिनोति। "तं हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्वते। उत्तरवेदिसम्मित एषोऽग्निरिति वदन्तः। तन्न तथा कुर्य्यात्। एतमग्निं कामेन व्यर्द्धयेत्। स एनं कामेन व्यृद्धः। कामेन व्यर्द्धयेत्। सौम्य वावैनमध्वरे चिन्वीत। यत्र वा भूयिष्ठा आहुतयो हूयेरन्। एतमग्निं कामेन समर्द्धयति। स एनं कामेन समृद्धः॥१॥ कामेन

समर्द्धयति" इति। 'एके' महर्षयः, 'एष' नाचिकेतः, 'अग्निः', उत्तरवेदितुल्य 'इति' एवं, 'वदन्तः', निरूढादि 'पशुबन्ध एव' कर्मणि, 'उत्तरवेदि'देशे 'तं', एतं नाचिकेताग्निं, 'चिन्वते'। सोऽयं पूर्व्वः पक्षो न तु सिद्धान्तः। 'तत्' तस्मात्, तथा न कुर्य्यात्'। यदि कुर्य्यात् तदानीं 'एतमग्निं', 'कामेन', 'व्यर्धयेत' सोमयागादिफलेन वियोजयेत्। 'सः' 'अग्निः' 'कामेन', वियोजितः सन् 'एनं' यजमानं, फलेन वियोजयति। तस्मात् पशुबन्ध एवेति नियमं परित्यज्य सोमयागे 'एवैनं चिन्वीत'। अथवा सोमयागेष्वपि 'यत्र' गवामयनादौ, अतिबहवः 'आहुतयोराह्वयेरन्', तत्र 'एतमग्निं', चिन्वीत। एवं सन्नतमग्निं तत्तत्फलेन समृद्धं करोति। 'सः' च समृद्धः, 'एनं' यजमानमपि, फलेन 'समर्द्धयति'॥

(२) सैव फलसमृद्धिरुदाहरणबाहुल्येन प्रपञ्च्यते। तत्र प्रजालाभः स्वर्गप्राप्तिरूपं फलं दर्शयति। "अथ हैनं पुरर्षयः। उत्तरवेद्यामेव सचियमचिन्वत। ततो वै तेऽविन्दत प्रजाम्। अभि स्वर्गं लोकमजयन्। विन्दत एव प्रजाम्। अभि स्वर्गं लोकं जयति। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद" इति। 'पुरा', केचित् 'ऋषयः', 'एनं' नाचिकेताग्निं 'सचियं' सत्रसम्बन्धिनं कृत्वा, उत्तरवेदिदेश एव 'अचिन्वत'। 'ततः', तेषां फलसिद्धिर्जाता। एवमन्यस्यापि भवति॥

(३) द्रव्यादिसमृद्धिलक्षणं फलं दर्शयति। "अथ हैनं वायुर्ऋद्धिकामः॥ १॥ यथान्युप्तमेवोपदधे। ततो वै स

एतामृद्धिमार्ध्नोत्। यामिदं वायुर्ऋद्धः। एतामृद्धिमृध्नोति यामिदं वायुर्ऋद्धः। योऽग्निं नाचिकेतं चिनुते। य उ चैन-मेवं वेद" इति। वायुर्देवः समृद्धिं कामयमानः 'एनं' नाचिकेताग्निं, 'यथान्युप्तमेवोपदधे' पशुबन्धसोमादावुत्तरवेदि-र्न्युप्ता भवति, तामेतां न्युप्तामनभिक्रम्य यथान्युप्तं उत्तर-वेदिमिवोपस्थान एवेत्यर्थः। तत्रोपधाय 'सः' वायुः, पुरातनीं 'एतां' वक्ष्यमाणसदृशीं, धनादि'समृद्धिं' प्राप्तवान्। कासौ व-क्ष्यमाणेति सोच्यते। 'ऋद्धः' सर्वभोगसमृद्धः,'वायुः' स्वेच्छास-ञ्चाररूपां 'यां' समृद्धिं,'इदं' अस्मात् प्रत्यक्षं यथा भवति तथा, प्राप्नोति, तामेवं स्वेच्छासञ्चाररूपां समृद्धिं प्राप्तवानित्यर्थः। अन्योपि यजमानश्चिन्वान उपासीनो वायुं समृद्धिं स्वातन्त्र्य-लक्षणां 'इदं' अस्मात्प्रत्यक्षं यथा भवति तथा प्राप्तवान्। एता-मेव समृद्धिं प्राप्नोति। सर्वत्र स्वतन्त्रो भवति। न तु पर-तन्त्र इत्यर्थः॥

(४) पशुफलार्थं कञ्चित् प्रकारविशेषं विधत्ते। "अथ हैनं गोबलो वार्ष्णः पशुकामः। पाङ्क्तमेव चिक्ये। पञ्च पु-रस्तात्॥ ३॥ पञ्च दक्षिणतः। पञ्च पश्चात्। पञ्चोत्तरतः। एकां मध्ये। ततो वै स सहस्रं पशून् प्राप्नोत्। प्र सहस्रं पशूनाप्नोति। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद" इति। वृष्णेः पुत्रो 'वार्ष्णः', 'गोबलः' नामतः, स च पशून् कामयमानः 'एनं' नाचिकेताग्निं, 'पाङ्क्तमेव चिक्ये' पञ्चसङ्ख्या-पेतमेव यथा भवति तथा चितवान्। तत् कथमिति तदुच्यते।

प्राच्यादीनां चतुर्णां दिशां मध्ये एकैकस्यां 'पञ्च', इष्टकाः 'मध्ये चैका', एवं सति पञ्चसु स्थानेषूपहितत्वादेकैकस्यां दिशीष्टकानां पञ्चत्वात् पाङ्क्तत्वं। 'ततः' चयनाद् गोबलस्य सहस्रपशुप्राप्तिः। एवमन्यस्यापि भवति ॥

(५) ज्यैष्ठ्यादिकफलार्थं प्रकारान्तरं विधत्ते। "अथ हैनं प्रजापतिर्ज्यैष्ठ्यकामो यशस्कामः प्रजननकामः। त्रिवृतमेव चिक्ये ॥ ४ ॥ सप्त पुरस्तात्। तिस्रो दक्षिणतः। सप्त पश्चात्। तिस्र उत्तरतः। एकां मध्ये। ततो वै स प्र यशो ज्यैष्ठ्यमाप्नोत्। एतां प्रजापतिं प्राजायत। यामिदं प्रजाः प्रजायन्ते। त्रिवृद्वै ज्यैष्ठ्यम्। माता पिता पुत्रः ॥ ५ ॥ त्रिवृत् प्रजननम्। उपस्थो योनिर्मध्यमा। प्र यशो ज्यैष्ठ्यमाप्नोति। एतां प्रजापतिं प्रजायते। यामिदं प्रजाः प्रजायन्ते। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद" इति। वयसो गुणैश्चाधिक्यं 'ज्यैष्ठ्यं'। 'यशः' कीर्त्तिः, 'प्रजननं' पुत्राद्युत्पादनं, त्रीणि फलानि कामयमानः 'प्रजापतिः', 'एनं' नाचिकेताग्निं, 'त्रिवृतमेव' त्रिगुणमेव यथा भवति तथा, चितवान्। प्राक्प्रत्यग्दिशोरिष्टकानां सप्तसङ्ख्या, दक्षिणोत्तरदिशोस्त्रित्वसङ्ख्या, मध्ये त्वेकसङ्ख्येति त्रिविधसङ्ख्योपेतत्वात् त्रैगुण्यं। तथाविधेन चयनेन 'सः' प्रजापतिः, 'कीर्तिं ज्यैष्ठ्यं', च प्राप्तवान् तथा 'प्रजाः' इदानीं वर्त्तमानायां' पुत्रपौत्रदुहितृदौहित्ररूपायां प्रजोत्पत्तिं, 'इदं' अस्मत्प्रत्यक्षं यथा भवति तथा, 'प्रजायन्ते' सम्पादयन्ति। तां 'एतां', 'प्रजापतिं' पुत्राद्युत्पत्तिं, 'प्राजायत'। स प्रजापतिः सम्पा-

दितवान्। यत् तु 'ज्यैष्ठ्यं' प्राशस्त्यं फलमुक्तं, तत् त्रिविधं। कुलाचारसम्पन्ना 'माता', तादृशः 'पिता', 'पुत्रः', च इति। तथा प्रजोत्पादनसामर्थ्यं लक्षणमपि प्रजननं त्रिगुणं। 'उपस्थः' इन्द्रियशक्तिः। 'योनिः' स्त्रीलिङ्गं, ''मध्यमा' गर्भधारणस्थानं अतः फलरूपयोर्ज्यैष्ठ्यप्रजननयोस्त्रिगुणत्वात् त्रिगुणचयनसाध्यत्वं युक्तं। प्रजापतिवदन्योपि तत्फलं प्राप्नोति॥

(६) केवलस्य ज्यैष्ठ्यफलस्य प्रकारान्तरं विधत्ते। "अथ हैनमिन्द्रो ज्यैष्ठ्यकामः। ऊर्द्ध्वा एवोपदधे। ततो वै स ज्यैष्ठ्यमगच्छत्॥ ६॥ ज्यैष्ठ्यं गच्छति। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद" इति। 'ज्यैष्ठ्यं' वयसा गुणैश्च प्रवृद्धत्वं' कामयमानः'इन्द्रः','एनं' नाचिकेताग्निं, चिन्वन् प्रथमामिष्टकामुपधाय तत ऊर्ध्वं द्वितीयां ततोप्यूर्ध्वं तृतीयां इत्येवं 'ऊर्ध्वाः' एव इष्टका उपधाय तेन 'ज्यैष्ठ्यं' श्रेष्ठत्वं, प्राप्तवान् एवमन्योपि प्राप्नोति॥

(७) स्वर्गार्थं प्रकारान्तरं विधत्ते। "अथ हैनमसावादित्यः स्वर्गकामः। प्राचीरेवोपदधे। ततो वै सोऽभि स्वर्गं लोकमजयत्। अभिस्वर्गं लोकं जयति। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद" इति। स्वर्गं कामयमानः 'आदित्यः', प्रथमामिष्टकामुपधाय ततः प्राच्यां द्वितीयां ततोपि प्राच्यां तृतीयामित्येवमिष्टका उपधाय 'एनं नाचिकेताग्निं' चितवान्। 'ततः', 'सः' आदित्यः,'स्वर्गं', लोकं, आभिमुख्येन प्राप्नोत्। एवमन्योऽपि प्राप्नोति। तदेतदूर्ध्वोपधानं प्राच्युपधानं च बोधायनेन स्वीकृतं। अथ यदूर्ध्वा पश्चात् कीर्त्याः प्रस्तूर्ध्वा

आस्वयमातृणावकाशादथ यदि प्राचीः स्वयमातृणावकाशात् प्रभृति प्राचीरिति ॥

(८) अथ तेजआदित्यप्राप्त्यर्थं प्रयोगे किञ्चिद्विशेषं विधत्ते। "स यदीच्छेत्॥ ७॥ तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति। प्राङ्होतुर्धिष्ण्यादुत्सर्पेत्। येयं प्रागाद्यशस्वती। सा मा प्रोर्णोतु। तेजसा यशसा ब्रह्मवर्चसेनेति। तेजस्व्येव यशस्वी ब्रह्मवर्चसी भवति" इति। यो नाचिकेतमग्निं चिनुते। 'स यदि', तेजोयशोब्रह्मवर्चसानि कामयेत। तदानीं यजमानः 'होतुः', धिष्ण्या समीपे समागत्य प्राङ्मुखस्तस्मात् 'धिष्ण्यात्', आरभ्याहवनीयपर्य्यन्तं येयमित्यादिमन्त्रं पठन् 'सर्पेत्' उत्कर्षेण गच्छेत्। मन्त्रस्यायमर्थः। 'येयं' देवता 'यशस्वती' यशोयुक्ता सती, 'प्राक्' प्राङ्मुखोपगच्छति 'सा' देवता, 'मां', तेजोयशोब्रह्मवर्चसैः 'प्रोर्णोतु' आच्छादयतु, इति। तथा सत्येतैर्युक्त एव 'भवति' ॥

(९) विश्वासबाहुल्यं दक्षिणाबाहुल्यं च कामयमानस्य किञ्चिद्विशेषं विधत्ते। "अथ यदीच्छेत्। भूयिष्ठं मे श्रद्दधीरन्। भूयिष्ठा दक्षिणा नयेयुरिति। दक्षिणासु नीयमानासु प्राच्येहि प्राच्येहीति प्राची जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याहवनीये जुहुयात्॥ ८॥ भूयिष्ठमेवास्मै श्रद्दधते। भूयिष्ठा दक्षिणा नयन्ति" इति। सर्व्वे प्राणिनः 'मे' मदर्थं, 'भूयिष्ठं' अत्यधिकं, 'श्रद्दधीरन्' विश्वासं प्राप्नुयुः। ऋत्विजश्च 'भूयिष्ठाः' अतिबहुलाः, 'दक्षिणाः' 'नयेयुरिति', यः कामयते स पुमान् दक्षिणानयनकाले स्रुवेणाज्यं स्वीकृत्य प्राच्येहीत्या-

दिमन्त्रेण 'आहवनीये जुहुयात्'। मन्त्रस्यायमर्थः। हे श्रद्धाद-क्षिणाभिमानी देवते 'प्राच्यै हि' प्राङ्मुखा सती, समागच्छतं। द्विरुक्तिः श्रद्धादेवताया दक्षिणादेवतायाश्चाभिमुख्यार्थं। 'इति' शब्दो हेत्वर्थे। यस्मादागता तस्मात्प्राङ्मुखी भूत्वा प्रीतियुक्ता सती सा द्विविधा देवता 'आज्यस्य वेतु' इदमाज्यं पिबतु। तदर्थ-मिदं स्वाहुतमिति अनेन होमेनास्मिन् यजमाने सर्व्वेऽप्यत्यधिकं विश्वासङ्कुर्वन्ति 'दक्षिणाः', अतिबहुलाः ऋत्विजः 'नयन्ति'॥

(१०) अथ सर्व्वप्रयोगसाधारणमनुष्ठानविशेषं विधत्ते। "पु-रीषमुपधाय। चितिक्लृप्तिभिरभिमृश्य। अग्निं प्रणीयोपसमाधा-य। चतस्र एता आहुतीर्जुहोति। त्वमग्ने रुद्र इति। शतरुद्री-यस्य रूपम्। अग्नाविष्णू इति वसोर्धारायाः। अन्नपत इत्यन्न-होमः। सप्त ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीः" ॥ ९॥ इति। उपहितानामिष्टकानां सर्व्वासामुपरिष्टात् दिवीत्यनया वैश्वानर्य्यर्चा 'पुरीषं' पांशुं, 'उपधाय', यत्ते चितं अग्ने देवाः इहावहेत्यादिभिः 'चितिक्लृप्तिभिः', नामभिर्ऋग्भिस्तां चितिं, हस्तेन 'अभिमृश्य', तस्यां चितौ 'अग्निं प्रणीय', समिद्भिः 'उपसमा-धाय', त्वमग्ने रुद्रेत्यादिभिश्चतुर्भिरनुवाकैः 'चतस्र आहुतीः', जुहुयात्। महाग्नौ यः शतरुद्रीयमन्त्रः यश्च वसोर्धारामन्त्रः तयोरुभयोः प्रतिनिधिरूपं त्वमग्ने रुद्राग्नाविष्णू इत्यनुवाकद्वयं अन्नपत इत्यनेनानुवाकेन 'अन्नहोमः', कार्यः। सप्त ते अग्न इत्ययमनुवाको विश्वप्रीसंज्ञकः'विश्वं प्रीणयतीति 'विश्वप्रीः'॥

इति नवमोऽनुवाकः।

अथ दशमोऽनुवाकः ।

(१) नवमे नाचिकेतचयनस्य प्रयोगोऽभिहितः । दशमे तत्प्रशंसाभिधीयते । तत्रादाविष्टकाः प्रशंसति । "यां प्रथमामिष्टकामुपदधाति । इमं तया लोकमभिजयति । अथो या अस्मिंल्लोके देवताः । तासाꣳ सायुज्यꣳ सलोकतामाप्नोति । यां द्वितीयामुपदधाति । अन्तरिक्षलोकं तयाभिजयति । अथो या अन्तरिक्षलोके देवताः । तासाꣳ सायुज्यꣳ सलोकतामाप्नोति । यां तृतीयामुपदधाति । अमुं तया लोकमभिजयति ॥ १ ॥ अथो या अमुष्मिंल्लोके देवताः । तासाꣳ सायुज्यꣳ सलोकतामाप्नोति । अथो या अमूरितरा अष्टादश । य एवामी उरवश्च वरीयाꣳसश्च लोकाः । तानेव ताभिरभिजयति" इति । लोकोऽसीति मन्त्रेणोपहितया प्रथमेष्टकया भूलोकं जित्वा तत्रावस्थितानां देवानां सहवासं समानलोकस्वामित्वं च प्राप्नोति। तथा तपोऽसि तेजोऽसीत्याभ्यां द्वितीयतृतीयामन्त्राभ्यां उपधेयेनेष्टकाद्वयेनान्तरिक्षद्युलोकौ जयादिकमवमन्तव्यं । तथा समुद्रोऽसीत्यादिभिरवशिष्टैर्मन्त्रैरुपधेया 'अमूः इष्टकाः' अष्टादशसङ्ख्याकाः । अस्माभिः सर्व्वाभिरादित्यमण्डलादर्वाञ्चः उरून् ,लोकान् पराञ्चः 'वरीयांसश्च', लोकानभिजयति ॥

(२) इष्टकाः प्रशस्य तच्चयनतद्वेदनश्च प्रशंसति । "कामचारो ह वा अस्मेषु च वरीयःसु च लोकेषु भवति । योऽग्निं नाचिकेतं चिनुते । य उचैनमेवं वेद" इति । नाचिके-

ताग्निं चिन्वानस्तदभिज्ञश्च यो विद्यते। तस्योभयविधस्य पुरुषस्यादित्यलोकार्वाचु 'उरुषु', लोकेषु पराचु 'वरीयःसु', च 'लोकेषु', स्वेच्छया सञ्चारो भवति॥

(३) अथ सर्व्वकामसम्पूर्त्यर्थं नाचिकेताग्नेः प्रकारान्तरेण ध्यानं विधत्ते। "संवत्सरो वा अग्निर्नाचिकेतः। तस्य वसन्तः शिरः॥ १॥ ग्रीष्मो दक्षिणः पक्षः। वर्षा उत्तरः। शरत् पुच्छम्। मासाः कर्म्मकाराः। अहोरात्रे शतरुद्रीयम्। पर्जन्यो वसोर्धारा। यथा वै पर्जन्यः सुवृष्टं वृष्ट्वा। प्रजाभ्यः सर्व्वान् कामान्त्सम्पूरयति। एवमेव स तस्य सर्व्वान् कामान्त्सम्पूरयति। योऽग्निं नाचिकेतं चिनुते॥ २॥ य उ चैनमेवं वेद" इति। योऽयं नाचिकेताग्निरुक्तः सोऽयं संवत्सरात्मकत्वेन ध्यातव्यः। 'तस्य' नाचिकेताग्नेः संवत्सररूपस्य पक्ष्याकारस्य वसन्तर्त्तुः शिरःस्थानीयः। ग्रीष्मवर्षर्त्तू दक्षिणोत्तरपक्षस्थानीयौ। शरदृतुः पुच्छस्थानीयः। चैत्रादयः 'मासाः', 'कर्म्मकाराः' ऋत्विक्स्थानीयाः। 'अहोरात्रे', तु त्वमग्ने रुद्र इत्यस्य शतरुद्रीयमन्त्रस्य स्थाने वर्त्तते। योऽयं 'पर्जन्यः', सायमग्नाविष्णू इत्यस्य वसोर्धारामन्त्रस्य स्थाने वर्त्तते। तदेवमुक्तावयवैर्विशिष्टं नाचिकेताग्निरूपञ्च वत्सरं 'यः', उपास्ते। 'यः', च तमग्निं चिनोति। 'तस्य' उभयविधस्य पुरुषस्य, 'सः' नाचिकेताग्निः, 'सर्व्वान्' कामान् सम्यक् 'पूरयति'। तत्र दृष्टान्तः। यथा लोके 'पर्जन्यः' सम्यग्वृष्टं यथा भवति तथा, वृष्टिं सम्पाद्य प्रजार्थं 'सर्व्वान् कामान्' व्रीह्यादिरूपान्, 'सम्पूरयति'। एवमेवायं नाचिकेताग्निरिति द्रष्टव्यं॥

(४) पुनरपि प्रकारान्तरेण संवत्सररूपतया तदग्निध्यानं विधत्ते। "संवत्सरो अग्निर्नाचिकेतः। तस्य वसन्तः शिरः। ग्रीष्मो दक्षिणः पक्षः। वर्षाः पुच्छम्। शरदुत्तरः पक्षः। हेमन्तो मध्यम्। पूर्व्वपक्षाश्चितयः। अपरपक्षाः पुरीषम्। अहोरात्राणीष्टकाः। एष वाव सोऽग्निरग्निमयः पुनर्णवः। अग्निमयो ह वै पुनर्णवो भूत्वा। स्वर्गं लोकमेति। आदित्यस्य सायुज्यम्। योऽग्निं नाचिकेतं चिनुते। य उचैनमेवं वेद" इति। इदानीं 'तस्य' ध्यानस्य, वर्षाः पुच्छमित्यादिर्विशेषः। 'पूर्व्वपक्षाः' शुक्लपक्षाः, 'अपरपक्षाः' कृष्णपक्षाः, संवत्सरो वा अग्निरित्यादिरहोरात्राणि इष्टका इत्यन्तो यो निरूपितः, 'एषः' एव 'सोऽग्निः' नाचिकेताख्यः, स च 'अग्निमयः' ज्योतिर्मयः, 'पुनर्नवः' सर्व्वदा नूतन एव न तु कदाचित् अपि जरो भवति। एवंरूपमग्निं यदुपास्ते योऽपि चिनोति। सोयमुभयविधोपि पुरुषः सर्व्वनूतनः 'भूत्वा', स्वर्गं प्राप्यादित्यस्य सहावस्थानं गच्छति॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुर्ब्राह्मणे तृतीयकाण्डे एकादशप्रपाठके दशमोऽनुवाकः॥ १०॥

समाप्तश्च प्रपाठकः।

---

हरिः ॐ॥

# तैत्तिरीय-ब्राह्मणभाष्ये

तृतीयकाण्डे द्वादशप्रपाठके

प्रथमोऽनुवाकः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
नाचिकेताग्निचयनमेकादश उदीरितं।
चातुर्होत्रं वैश्वसृजं द्वयं द्वादश दृश्यते॥

(१) तत्र ब्रह्म वै चतुर्होतार इत्यस्मिन् प्रथमानुवाके चातुर्होत्रचयनस्य विधिर्भविष्यति। तत्र द्विविधं व्यस्तं समस्तं च। अनुवाकमात्रप्रतिपादितं व्यस्तं। सावित्रादिभिः संयुक्तं समस्तं। तत्र समस्ते वैश्वसृजचयनाऽङ्गभूता दिवःश्येन्याख्याः पाद्याख्याः सेष्टयः। तत्र दिवःश्येनय इष्टयो द्वितीयानुवाके विधास्यन्ते। तास्विष्टिषु क्रमेण याज्यानुवाक्यानां प्रतीकानि प्रथमानुवाके दर्शयति। "तुभ्यं ता अङ्गिरस्तमाऽश्याम तं काममग्ने। आशानां त्वा विश्वा आशाः। अनुनोऽद्यानुमतिरन्विदनुमते त्वम्। कामो भूतस्य कामस्तदग्रे। ब्रह्म जज्ञानं पिता विराजाम्। यज्ञो रायोऽयं यज्ञः।. आपो भद्रा आदित्

पश्यामि। तुभ्यं भरन्ति यो देह्यः। पूर्वं देवा अपरेण प्राणापानौ। हव्यवाहꣳ स्विष्टम्" ॥ १ ॥ इति। अग्नये कामाय पुरोडाशमष्टाकपालमित्यस्य हविषस्तुभ्यन्ता इति पुरोनुवाक्या, अग्नाम तमिति याज्या। एतच्चोभयं संहितायां त्वमग्ने रुद्र इत्यत्र व्याख्यातं। आशायै चरुमित्यस्य हविषः आशानां त्वाशापालेभ्य इति पुरोनुवाक्या, विश्वा आशा मधुना सꣳसृजामीति याज्या। एतच्चोभयं पुनर्न इन्द्रमघवेत्यनुवाके व्याख्यातं। अनुमत्यै चरुमित्यस्य हविषः अनुनोद्यानुमतिरिति पुरोनुवाक्या, अन्विदनुमते इति याज्या। एतच्चोभयमिदं वामास्ये इत्यनुवाके व्याख्यातं। कामाय चरुमित्यस्य हविषः कामो भूतस्य भव्यस्येति पुरोनुवाक्या, कामस्तदग्रे समवर्त्तता इति याज्या। एतच्चोभयं जुष्टोदमूना इत्यनुवाके व्याख्यातं। ब्रह्मणे चरुमित्यस्य हविषो ब्रह्मजज्ञानं प्रथमं पुरस्तादिति पुरोनुवाक्या, पिता विराजामृषभो रयीणामिति याज्या। एतच्चोभयमहमस्मि प्रथमजा ऋतस्येत्यत्र व्याख्यातं। यज्ञाय चरुमित्यस्य हविषो यज्ञो रायो यज्ञ ईशे वसूनामिति पुरोनुवाक्या, अयं यज्ञो वर्धतां गोभिरश्वैरिति याज्या। एतच्चोभयं यज्ञो राय इत्यनुवाके व्याख्यातं। अद्भ्यश्चरुमित्यस्य हविषो आपो भद्रा घृतमिदाप आसुरिति पुरोनुवाक्या, आदित्पश्याम्युत वा शृणोमीति याज्या। एतच्चोभयं हिरण्यवर्णा इत्यनुवाके व्याख्यातं। अग्नये बलिमते चरुमित्यस्य हविषः, तुभ्यं भरन्ति चितयो यविष्ठेति पुरोनुवाक्या, यो देह्यो अनमयद्-

धर्त्तेतिरिति याज्या। एतच्चोभयं वृषास्यंशुरित्यनुवाके व्याख्यातं। अनुवित्यै चरुमित्यस्य हविषः। पूर्वं देवा अपरेणानुपश्यं जन्मभिरिति पुरोनुवाक्या, प्राणापानौ चक्षुश्श्रोत्रमिति याज्या। एतच्चोभयं वार्त्रघ्नत्याद्येत्यनुवाके व्याख्यातं। स्विष्टकृद्धविषो हव्यवाहमभिमातिषाहमिति पुरोनुवाक्या। स्विष्टमग्ने अभि तत् पृणाहीति याज्या। एतच्चोभयं जुष्टोदमूना इत्यनुवाके व्याख्यातं॥

इति प्रथमोऽनुवाकः।

---

अथ द्वितीयोऽनुवाकः।

(१) प्रथमेऽनुवाके दिवःश्येनीनामिष्टीनां याज्यानुवाक्याप्रतीकान्याम्नातानि। द्वितीये ता इष्टयो विधीयन्ते। तत्र बोधायनोऽथ ममस्तस्येत्युपक्रम्य माविचनाचिकेतचातुर्होत्रममष्टिरूपं प्रतिपाद्येदमाह, तं चेत् सौम्येऽध्वर उत्तम एव चक्रं। चिन्वीत प्रागुदीचणीयायै दिवःश्येनीभिर्यजेतादवसापाद्याभिरिति। तत्र दिवःश्येनीर्विधातुं प्रस्तौति। "देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत्। ते प्रजापतिमब्रुवन्। प्रजापते स्वर्गो वै नो लोकस्तिरोऽभूत्। तमन्विच्छेति। तं यज्ञक्रतुभिरन्वैच्छत्। तं यज्ञक्रतुभिर्नान्वविन्दत्। तमिष्टिभिरन्वैच्छत्। तमिष्टिभिरन्वविन्दत्। तदिष्टीनामिष्टित्वम्। एष्टयो ह वै नाम। ता इष्टय इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः"

॥ ९ ॥ इति। पुरा कदाचिद्देवानामर्थे स्वर्गलोकः प्रादुर्भूतो नाभूत्। किन्तु 'तिरोऽभवत्'। 'ते' च देवाः, स्वर्गलोकान्वेषणार्थं 'प्रजापतिं', प्रार्थितवन्तः। स च प्रजापतिः 'यज्ञक्रतुभिः', अन्विष्य तल्लोकं नालभत। 'यूपवन्तो यज्ञक्रतवः तैरलब्ध्वा पुनस्तल्लोकं यूपरहिताभिरिष्टिभिरन्विष्य लब्धवान्। यूपो वै यज्ञस्य दुरिष्टमामुञ्चत इत्येवं यूपस्य निन्दितत्वात्, तद्युक्तैः क्रतुभिरलाभः, इष्टिभिस्तु दुरिष्टाभावात् लाभो युक्तः। अन्वेषणसाधनत्वादिष्टिनाम सम्पन्नं। अत्र होष्टीनामिच्छामात्रसाधनत्वं कृत्वा विवक्षितं किं लिप्स्यमाणं वस्तु आगमनाभिरित्येतावानर्थो विवक्षितः। तथा सत्यागमनार्थवाचकमाकारमन्तर्भाव्य 'ताः', सामेष्टयः, इत्येतादृशं नाम वक्तव्यं। तथापि तन्नामरहस्यत्वेन गोपयित्वा परोक्षममुख्यामाकाररहितामिष्टय इत्येवं नाम प्रकटीकृत्य तेन 'परोक्षेण', नाम्ना सर्वे 'देवाः', व्यवहरन्ति। लोकेपि 'देवाः', पूज्याः पुरुषाः 'परोक्षनामप्रिया इव', दृश्यन्ते। देवदत्तो यज्ञदत्त इत्यादिभिः प्रत्यक्षनामभिर्न तुष्यन्ति। किन्तु हे मातः, हे पितः, इत्यादिरमुख्यनामभिः तुष्टा भवन्ति॥

(१) एवमिष्टीः प्रस्तुत्य प्रथमामिष्टिं विधत्ते। "तमाशाऽब्रवीत् प्रजापत आशया वै आम्यसि। अहमु वा आशाऽस्मि। मां नु यजस्व। अथ ते सत्याशा भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। आशायै चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्या-

शाभवत्। अनु स्वर्गं लोकमविन्दत्। सत्या हवा अस्याशा भवति। अनु सर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद" इति। कश्चिद्द्रव्यादिलाभः सर्वथा भविष्यतीत्येवं निश्चित्याद्य वा श्वो वेत्येवं कालमाचिप्रतीचणरूपस्तृष्णाविशेषः 'आशा', तदभिमानिनी देवताप्यपि 'आशा' शब्देनैवाभिधीयते। सेयमाशाख्या देवता 'तं' प्रजापतिं, इदं 'अब्रवीत्', हे 'प्रजापते', त्वं 'आशया', एव आस्तो वर्त्तसे। सा द्विविधा ह्याशा, अनृता सत्या च। फलरहिता आशा अनृता। तथा सत्यत्र फलरहितया स्वर्गो भविष्यतीत्याशया तत्र श्रम एव जायते, न तु स्वर्गो लभ्यते। अहमेव तु 'आशाख्या', देवता 'अस्मि', अतो 'मां', तु, चिप्रमेव 'यजस्व', अनन्तरमेव तव स्वर्गविषया 'आशा सत्या भविष्यति'। त्वं 'अनु स्वर्गं लोकं वेत्स्यस इति', तद्वचनं श्रुत्वा 'सः' प्रजापतिः, चिहविष्कामिष्टिं कृतवान्, 'कामगुणकाय', 'अग्नये','पुरोडाशं' एकं हविः, आशादेवतायै 'चरुः' द्वितीयं हविः, अनुमतिदेवतायै 'चरुः' तृतीयं हविः। एते प्रथमतृतीये हविषी वच्यमाणास्वपोष्टिषु अनुसञ्चारिणी। 'ततः' त्रिहविष्केष्ट्यनुष्ठानात्, 'अस्य' प्रजापतेः, स्वर्गलाभाशा 'सत्याऽभवत्'। तामाशां 'अनु स्वर्गं', अलभत। एवमन्योपि 'यः' पुमान्, 'एतेन' उभयतोनुसञ्चारिद्वयसहितेन मध्यमेन, 'हविषा यजते',। 'यः', अपि "एनत्" हविः, यथावज्जानाति। तस्योभयविधस्य पुरुषस्य स्वर्गलाभाशा सत्या भवति॥

(३) तामाशामनुस्वर्गमलभते, अस्यामिष्टावुपहोमान् विधत्ते। "सोऽत्र जुहोति। अग्नये कामाय स्वाहाशायै स्वाहा। अनुमत्यै स्वाहाप्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति"॥ २॥ इति। यो यजते 'सोत्र', षडुपहोमान् जुहुयात्॥

(४) अथ द्वितीयामिष्टिं विधत्ते। "तं कामोऽब्रवीत्। प्रजापते कामेन वै आप्स्यसि। अहमु वै कामोऽस्मि। मां नु यजस्व। अथ ते सत्यः कामो भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। कामाय चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यः कामोऽभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यो हवा अस्य कामो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहा कामाय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहा"॥ ३॥ इति। निश्चितस्य लाभस्य प्रतीक्षणं, आशा। अनिश्चितस्यापेक्षा कामः। तस्य कामस्य प्रजापतिना सह यः संवादः तमारभ्य स्वर्गं लोकमविन्ददित्यन्तो ग्रन्थो विधेयस्यार्थस्य प्रस्तावः। तत ऊर्ध्वं य एवं वेदेत्यन्तो विधिः। ततोऽप्यूर्ध्वमुपहोमाः। एवं सर्वं द्रष्टव्यं॥

(५) अथ तृतीयामिष्टिं विधत्ते। "तं ब्रह्माऽब्रवीत्। प्रजापते ब्रह्मणा वै आप्स्यसि। अहमु वै ब्रह्मास्मि। मां नु यजस्व। अथ ते ब्रह्मण्वान् यज्ञो भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति।

स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। ब्रह्मणे चरुम्। अनुमत्यै चरुम्। ततो वै तस्य ब्रह्मण्वान् यज्ञो भवत्। अनु स्वर्गं लोकमविन्दत्। ब्रह्मण्वान् हवा अस्य यज्ञो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहा ब्रह्मणे स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहा" ॥ ४ ॥ इति। ब्रह्म मन्त्रजातं। तदभिमानिदेवोऽपि ब्रह्मशब्दाभिज्ञेयः। तदनुग्रहरहितं मन्त्रजातं निष्फलं। यथा पूर्व्वं अनृतया आशया अनृतेन च कामेन वृथा श्रमः। एवमत्रापि निष्फलेन मन्त्रजातेन वृथा श्रमः। 'ब्रह्मण्वान्' सफलमन्त्रयुक्तः, सति देवतानुग्रहे तथा भवति। अन्यत् पूर्व्ववत्॥

(६) अथ चतुर्थीमिष्टिं विधत्ते। "तं यज्ञोऽब्रवीत्। प्रजापते यज्ञेन वै आर्घ्यसि। अहमु वै यज्ञोऽस्मि। मां नु यजस्व। अथ ते सत्यो यज्ञो भविष्यति। अनु स्वर्गं लोकं वत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। यज्ञाय चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यो यज्ञोऽभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यो हवा अस्य यज्ञो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहा यज्ञाय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति" ॥ ५ ॥ इति।

देवतामुद्दिश्य द्रव्यत्यागो यज्ञः। तदभिमानीदेवोपि 'यज्ञ' शब्दाभिधेयः। तदनुग्रहरहितो यज्ञोऽनृतः। तत्सहितः सत्यः। अन्यत् पूर्व्ववत्॥

(७) अथ पञ्चमीमिष्टिं विधत्ते। "तमापोऽब्रवीत्। प्रजापतऽप्सु वै सर्व्वे कामाः श्रिताः। वयन्तु वा आपः स्मः। अस्मान्नु यजस्व। अथ त्वयि सर्व्वे कामाः श्रयिष्यन्ते। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। अद्भ्यश्चरुम्। अनुमत्यै चरुम्। ततो वै तस्मिन् सर्व्वे कामा अश्रयन्त। अनु स्वर्गं लोकमविन्दत्। सर्व्वे ह वा अस्मिन् कामाः श्रयन्ते। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहाद्भ्यः स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहा"॥ ६॥ इति। 'आपः' जलाभिमानिन्यो देवताः। आपोऽब्रुवन् इत्येतदेव वाक्यमुदाहृत्य सर्व्वेष्वपि वस्तुष्वभिमानिदेवताः सन्तीति भगवान् बादरायण उत्तरमीमांसायां सूचयामास। अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामिति। ताश्चाब्देवताः 'तं' प्रजापतिं इदमब्रुवन्। हे 'प्रजापते', 'सर्व्वे', अपि भोगाः 'अप्सु', 'आश्रिताः'। ओषधिवनस्पत्यादिफलस्य जलाधीनत्वात् सर्व्वभोगानां च तत्फलाधीनत्वात्। तासामपामप्स्वाभिभूता देवता वयमेव, अतोऽस्मत्परितोषमन्तरेण भोगाभावात् 'अस्मान्', एव त्वं यज 'त्वयि सर्व्वेकामाः', आश्रिता भविष्यन्ति।

'स्वर्गं', चान्विष्य लप्स्य इति तद्वाक्यं श्रुत्वा ता अन्देवता इष्टवति प्रजापतौ 'सर्व्वे कामाः', आश्रिताः। एवमन्यस्मिन्नप्याश्रयन्ते ॥

(८) अथ षष्ठीमिष्टिं विधत्ते। "तमग्निर्बलिमानब्रवीत्। प्रजापतेऽग्नये वै बलिमते सर्व्वाणि भूतानि बलिꣳ हरन्ति। अहम् वा अग्निर्बलिमानस्मि। मां नु यजस्व। अथ ते सर्व्वाणि भूतानि बलिꣳ हरिष्यन्ति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। अग्नये बलिमते चरुम्। अनुमत्यै चरुम्। ततो वै तस्मै सर्व्वाणि भूतानि बलिमहरन्। अनु स्वर्गं लोकमविन्दत्। सर्व्वाणि ह वा अस्मै भूतानि बलिꣳ हरन्ति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उचैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहाग्नये बलिमते स्वाहा। अनुमत्यै स्वाहा। प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति" ॥ ७ ॥ इति। 'बलिमान्' पूजावान्, तस्मै 'बलिमतेऽग्नये', सर्व्वे प्राणिनः पूजां सम्पादयन्ति ॥

(९) सप्तमीमिष्टिं विधत्ते। "तमनुवित्तिरब्रवीत्। प्रजापते स्वर्गं वै लोकमनुविवित्ससि। अहम् वा अनुवित्तिरस्मि। मां नु यजस्व। अथ ते सत्यानुवित्तिर्भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। अनुवित्त्यै चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यानुवित्तिरभवत्। अनु स्वर्गं लोकमविन्दत्। सत्या ह वा अस्यानु-

वित्तिर्भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहानुवित्त्यै स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति" ॥ ८ ॥ इति। अन्विष्य विद्यते लभ्यतेऽपेक्षितः पदार्थो यया क्रियया सेयं क्रिया अनुवित्तिः, तदभिमानिनी देवतापि 'अनुवित्तिः', इत्युच्यते। सा देवता प्रजापतिं 'अब्रवीत्', हे 'प्रजापते', त्वं 'स्वर्गं लोकं', 'अनुविवित्ससि' अन्विष्य वेत्तुं लब्धुमिच्छसि, तदभिमानिन्यः मम यागेन त्वदीयानुवित्तिक्रिया 'सत्या' फलपर्यवसायिनी, 'भविष्यति'। एतेषूक्तेषु पर्यायेष्विष्टिप्रस्ताव इति विधिरूपहोमाश्च प्रथमपर्यायवत् व्याख्येयाः ॥

(१०) तदेवं कर्मावयवभूता इष्टयः पृथग् विहिताः। अथेष्टिसङ्घातरूपं कर्म विधत्ते। "ता वा एताः सप्त स्वर्गस्य लोकस्य द्वारः। दिवः श्येनयोऽनुवित्तयो नाम। आशा प्रथमाꣳ रक्षति। कामो द्वितीयाम्। ब्रह्म तृतीयाम्। यज्ञश्चतुर्थीम्। आपः पञ्चमीम्। अग्निर्बलिमान् षष्ठीम्। अनुवित्तिः सप्तमीम्। अनु ह वै स्वर्गं लोकं विन्दति। कामचारोऽस्य स्वर्गे लोके भवति। य एताभिरिष्टिभिर्यजते। य उ चैना एवं वेद। तास्वन्विष्टि। पष्ठौहीवरां दद्यात्। कꣳसञ्च। स्त्रियं चाभारꣳ सम्रद्धौ" ॥ ९ ॥ इति। या इष्टयः पूर्व्वमभिहिताः 'ता एताः', सप्तसङ्ख्याकाः स्वर्गलोकस्य 'द्वारः' इव प्राप्तिसाधनभूताः तासाञ्च दिवःश्येन य इत्येतन्नाम-

गन्याः। लोके श्येन उत्प्लुत्याकाशे स्वेच्छया सञ्चरति, एवमेता अपि यजमानस्य द्युलोके स्वेच्छया सञ्चारं प्राप्नुवन्ति। तस्माद्युसम्पादात् श्येनाख्यपक्षिसदृशत्वाच्च दिवःश्येनयः सम्पन्नाः। अन्वेषणपूर्व्वकलाभ साधनत्वादन्वित्तय इत्युच्यन्ते। तासामिष्टीनां मध्ये 'प्रथमा' मुख्यदेवता रक्षति तत्स्वामित्वात्तयेष्ट्या तुष्टा सतीति तत्फलं प्रयच्छति। एवं कामाख्या देवताः तां तामिष्टिं रक्षन्ति। 'एताभिः' मन्त्रभिः, 'इष्टिभिः' 'यः', 'यजते', 'यः', अपि च 'एनाः', यथोक्तप्रकारेण 'वेद'। सोयमुभयविधः पुमान् स्वर्गमन्विष्य लभते। तस्य तस्मिन् स्वर्गे 'कामचारः' स्वेच्छया सञ्चारो यथेष्टभोगप्राप्तिः, भवति। 'तासु' सप्तस्वपीष्टिषु, मध्ये 'अन्विष्टि' एकैकमिष्टिमनुष्ठायानन्तरमेव दक्षिणार्थं 'पष्ठौहीवरां दद्यात्' चतुःसम्वत्सरवयस्का गौः पष्ठौही पष्ठौहीनां मध्ये या श्रेष्ठा तां दद्यात्। तथा 'कंसं' भोजनार्थं कांस्यपात्रं च, 'दद्यात्'। तथा 'स्त्रियै', योग्यं, 'आभरं' आभरणञ्च 'दद्यात्'। तत् सर्व्वं दक्षिणादानं फल'समृद्ध्यै' सम्पद्यते॥

इति द्वितीयोऽनुवाकः।

अथ तृतीयोऽनुवाकः।

(१) द्वितीये दिवःश्येनाख्या इष्टयोभिहिताः। अथापाद्याख्यानामिष्टीनां चतुर्थानुवाके विधास्यमानानां याज्यानुवाक्यास्तृतीयानुवाकेऽभिधीयन्ते। 'तत्र तपसे·चरुमित्यस्य हविषः पु-

रोऽनुवाक्यामाह। "तपसा देवा देवतामग्र आयन्। तपसर्षयः स्वरन्वविन्दन्। तपसा सपत्नान् प्रणुदामारातीः। येनेदं विश्वं परिभूतं यदस्ति" इति। यज्जगद्देवर्षिमनुष्यादिरूपमस्ति तदिदं 'विश्वं'; 'येन" तपसा, 'परिभूतं' सर्व्वतो व्याप्तं, तेन 'तपसा', 'देवाः' इन्द्रादयः सर्वे, देवत्वं 'अग्रे' सृष्ट्यादौ, प्राप्ताः, पूर्व्वसृष्टौ तपस्तप्त्वा देवजन्म लब्धवन्तः। तथा 'ऋषयः' वसिष्ठनारदाद्याः, पूर्व्वानुष्ठितेन 'तपसा', स्वर्गमन्विष्य लब्धवन्तः। वयमपीदानीमनुष्ठितेन 'तपसा' यागादिरूपेण, 'सपत्नान्' शत्रून्, 'प्रणुदाम', प्रकर्षेणापसारयामः। कीदृशान् सपत्नान्, 'अरातीः' अस्मभ्यं दातव्यस्य धनस्यादातॄन्॥

(२) तत्रैव याज्यामाह। "प्रथमजं देवꣳ हविषा विधेम। स्वयम्भु ब्रह्म परमं तपो यत्। स एव पुत्रः स पिता स माता। तपो ह यक्षं प्रथमꣳ सम्बभूव" इति। योऽयं तपोभिमानी देवः स 'प्रथमजः'। तथा चोपनिषदि सृष्टिप्रकरणे तपसः प्रथमजत्वमाम्नायते। सोऽकामयत बहुस्यां प्रजायेयेति। स तपो तप्यतेति। तादृशं तपोदेवं 'यक्ष', 'हविषा', 'विधेम' परिचरेम। यत् 'स्वयम्भु' स्वतःसिद्धं सत्यज्ञानादिरूपं, 'ब्रह्म', 'परमं' सृष्टिकारणरूपं, 'तपः', सम्पन्नं 'स एव' तपोदेवः, पुत्रपितृमात्रादिरूपेणाविर्बभूव। किञ्च 'तपो ह' तप एव, 'प्रथमं', 'यक्षं' पूज्यं, 'सम्बभूव'। सर्व्वोपि हि पुरुषः प्रथमं फलसाधनं तपोनुष्ठाय पश्चात् फलं लभते। तस्मात् प्रशस्तमिदं तपः॥

(३) अथ श्रद्धायै स्वाहेत्यस्य हविषः पुरोनुवाक्यामाह।

"श्रद्धया देवो देवत्वमश्नुते। श्रद्धा प्रतिष्ठा लोकस्य देवी ॥ १ ॥ सा नो जुषाणोपयज्ञमागात्। कामवत्सामृतं दुहाना" इति। येयमास्तिक्यरूपा 'श्रद्धा', तयैव 'देवः' सर्व्वोपीन्द्रादिदेवः, 'देवत्वं', प्राप्नोति। श्रद्धारहितस्य तपआदेर्निरर्थकत्वात्। तथा च स्मर्यते,

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत्।
असदित्युच्यते पार्थ नच तत् प्रेत्य नो इहेति ॥

अतः श्रद्धादेवी 'लोकस्य' सर्व्वस्य, 'प्रतिष्ठा' आश्रयः। 'सा' देवी, 'जुषाणा' प्रीयमाणा, 'नः' अस्मदीयं, 'यज्ञं', 'उपागात्' प्राप्नोतु। कीदृशी श्रद्धा, 'कामवत्सा' फलकामनैव वत्सस्थानीया यस्याः सा कामवत्सा, अत एव 'अमृतं', फलं, 'दुहाना' दोग्ध्री,। श्रद्धालुर्हि यत् फलं कामयते तत् सिद्ध्यत्येव ॥

(४) तत्रैव याज्यामाह। "श्रद्धा देवी प्रथमजा ऋतस्य। विश्वस्य भर्त्री जगतः प्रतिष्ठा। ताꣳ श्रद्धाꣳ हविषा यजामहे। सा नो लोकममृतं दधातु। ईशाना देवी भुवनस्याधिपत्नी" इति। 'श्रद्धाख्या' देवी 'ऋतस्य' सत्यस्य परमार्थस्य ब्रह्मणः,सकाशात्। 'प्रथमजा' आदावेवोत्पन्ना। अत एव 'विश्वस्य भर्त्री' सर्व्वस्य प्राणिजातस्य पोषयित्री। 'जगतः', 'प्रतिष्ठा' आश्रयः,श्रद्धाहीनस्य वैदिकस्य लौकिकस्य वाव्यवहारस्य फलपर्यवसायित्वाभावात्, 'तां' एतां, 'श्रद्धां' देवीं, वयं 'हविषा', 'यजाम' पूजयामः। 'सा' श्रद्धा देवी, 'नः' अस्माकं, 'अमृतं' अ-

विनाशं, 'लोकं', सम्पादयतु। सा हि 'देवी', यस्मात् 'भुवनस्य', 'पत्नी' पालयित्री, तस्मात् 'ईशाना' अस्माकं लोकं सम्पादयितुं समर्था॥

(५) अथ सत्याय चरुमित्यस्य हविषः पुरोनुवाक्यामाह। "आगात्सत्यꣳ हविरिदं जुषाणम्। यस्माद्देवा जज्ञिरे भुवनञ्च विश्वे। तस्मै विधेम हविषा घृतेन॥ २॥ यथा देवैः सधमादं मदेम" इति। यत् 'सत्यं' सत्यवदनाभिमानिदेवतास्वरूपमस्ति, तत् 'जुषाणं' प्रीतियुक्तं सत्, 'इदं' अस्माभिर्दीयमानं, 'हविः', प्रति 'आगात्' आगच्छतु। अस्मात् सत्याख्यादेवस्वरूपात् 'विश्वे' सर्व्वे, 'देवाः', 'भुवनञ्च', 'जज्ञिरे'। सत्यं हि परब्रह्मस्वरूपत्वात् सर्व्वस्य जनकं। 'तस्मै' सत्याय देवाय, घृतयुक्तेन 'हविषा', 'विधेम' परिचरेम। 'अथ' अनन्तरं, वयं 'देवैः', युक्ताः 'सधमादं मदेम' एकत्र हर्षं प्राप्नुयामः॥

(६) तत्रैव याज्यामाह। "यस्य प्रतिष्ठोर्वन्तरिक्षम्। यस्माद्देवा जज्ञिरे भुवनञ्च सर्व्वे। तत्सत्यमर्चदुपयज्ञं न आगात्। ब्रह्माहुतीरुपमोदमानम्" इति। 'यस्य' सत्यस्य ब्रह्मणः, 'उरु' विस्तीर्णं, 'अन्तरिक्षं', 'प्रतिष्ठा' आश्रयः, सर्व्वगतत्वादन्तरिक्षव्यापित्वं युक्तं। 'यस्मात्' सत्याद्ब्रह्मणः, 'सर्व्वे देवा भुवनञ्च जज्ञिरे', 'तत्', सत्याख्यं 'अर्चत्' पूजायुक्तं परं ब्रह्म, अस्मदीयाः 'आहुतीः', उपेत्य 'मोदमानं', सत् मदीयं 'यज्ञं', 'उपागात्', उपागच्छतु॥

(७) अथ मनसे चरुमित्यस्य हविषः पुरोनुवाक्यामाह।

"मनसो वशे सर्व्वमिदं बभूव। नान्यस्य मनो वशमन्वियाय भीष्मो हि देवः सहसः सहीयान्। स नो जुषाण उपयज्ञमागात्" इति। 'सर्व्वमिदं' जगत्। 'मनसो वशे बभूव', 'न', त्वेतत् 'मनः', 'अन्यस्य' कस्यचित्, वशमनुगच्छति सर्व्वस्यं मनोऽधीनत्वं श्रुत्यन्तरे दर्शितं,

मन एव मनुष्याणां कारणं बन्धमोक्षयोरिति। मनस इतराधीनत्वाभावश्च स्मर्यते।

असंशयं महाबाहो मनोदुर्निग्रहं चलमिति।

तादृशमनोभिमानी 'देवः', 'भीष्मो हि' भयहेतुत्वेन प्रसिद्धः, मनसः सर्व्वदुःखापादकत्वं सर्व्वेरप्यनुभूते सुप्ते मनसि दुःखमात्रस्याभावात्, तस्मादयं मनोदेवः 'सहसः सहीयान्' बलवतोप्यत्यन्तं बलीयान्, अत एव स्मर्यते।

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढमिति।

'सः' तादृशो मनोदेवः, 'जुषाणः' प्रीतियुक्तः सन्, 'नः' अस्मदीयं 'यज्ञं', 'उपागात्' प्राप्नोतु॥

(८) तत्रैव याज्यामाह। "आकूतीनामधिपतिं चेतसाञ्च। ॥१॥ सङ्कल्पजूतिं देवं विपश्चितम्। मनो राजानमिह वर्द्धयन्तः। उपहवेऽस्य सुमतौ स्याम" इति। 'इह' कर्म्मणि, वयं मनोनामकं चक्षुरादीन्द्रियाणां 'राजानं', 'वर्धयन्तः' परितोषयन्तः, 'उपहवे' अनुज्ञाने सति, 'अस्य' देवस्य, 'सुमतौ' अनुग्रहबुद्धौ, 'स्याम' भवेम। यदा ह्ययं सुखिनो भवतेत्यस्माननुजानाति तदानीमेव सुखिनो भवेम। कीदृशं राजानं, 'आकूती-

नां' इदमेव करिष्यामेत्येवंविधानां सङ्कल्पानां, 'चेतसाञ्च' इदं वस्त्वेतादृशमिति ज्ञानानाञ्च, 'अधिपतिं',कर्त्तव्यसङ्कल्पानां वस्तुज्ञानानाञ्च मनोधीनत्वं प्रसिद्धं। 'सङ्कल्पजूतिं' सहस्र-सङ्ख्याकर्त्तव्यविषयेषु सङ्कल्पेषु जूतिर्वेगो यस्यासौ सङ्कल्पजूतिस्तादृशं, 'देवं' सर्व्वस्य द्योतकं, अत एव 'विपश्चिं' सर्व्वज्ञं,॥

(९) अथ चरणाय चरुमित्यस्य हविषः पुरोनुवाक्यामाह। "चरणं पवित्रं विततं पुराणम्। येन पूतस्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पूताः। अति पाप्मानमरातिं तरेम" इति। चरत्यनेनेति पादेन्द्रियं 'चरणं', शास्त्रीयाचरणं वा तेनोच्यते। तच्च 'पवित्रं' शुद्धिकारणं,'विततं' सर्व्व-प्राणिविषयत्वेन विस्तीर्णं, 'पुराणं' सृष्ट्यादिमारभ्य प्रवृत्तत्वाच्चिरन्तनं,'येन' चरणेन देवेन,'पूतः' शोधितः,पुरुषः'दुष्कृतानि 'तरति' पापानि विनाशयति, 'पवित्रेण' अन्यस्य शोधकेन, स्वयमपि 'शुद्धेन', 'तेन' चरणदेवेन, 'पूताः', वयं 'पाप्मानमरातिं' पापरूपं शत्रुं, 'अतितरेम' अतिशयेन लङ्घयामः॥

(१०) तत्रैव याज्यामाह। "लोकस्य द्वारमर्चिमत्पवित्रम्। ज्योतिष्मद्भ्राजमानं महस्वत्। अमृतस्य धारा बहुधा दोहमानम्। चरणं नो लोके सुधितां दधातु" इति। यदेतच्चरणाख्यं देवतास्वरूपं तदेतत् 'नः' अस्माकं स्वर्गलोके 'सुधितां' सुखयुक्तामवस्थितिं, 'दधातु' सम्पादयतु। कीदृशं चरणं,'लोकस्य द्वारं' स्वर्गस्य द्वारवत् प्रवेशसाधनं, 'अर्चिमत्' अर्चनायुक्तं, सर्व्वैः पूज्यं, 'पवित्रं' शोधकं 'ज्योतिष्मत्' त्विषा

प्रकाशनसामर्थ्योपेतं, 'भ्राजमानं' स्वयमपि दीप्यमानं, 'महस्वत्' माहात्म्ययुक्तं। 'अमृतस्य' पीयूषस्य, 'धाराः', 'बहुधा दोहमानं' अनेकप्रकारेण सम्पादनशीलं॥

(११) अथाग्नेयमष्टाकपालमित्यस्य हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति। "अग्निर्मूर्धा भुवः" इति। अग्निर्मूर्धा दिवः ककुदिति पुरोनुवाक्या। भुवो यज्ञस्येति याज्या। एतच्चोभयमग्निर्मूर्धेत्यनुवाके व्याख्यातं॥

(१२) अथानुमत्यै चरुमित्यस्य हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति। "अनु नोद्यानुमतिरन्विदनुमते त्वम्" इति। अनु नोद्यानुमतिर्यज्ञं देवेष्विति पुरोनुवाक्या। अन्विदनुमते त्वमिति याज्या। एतच्चोभयमिदं वामास्ये हविरित्यनुवाके व्याख्यातं॥

(१३) अथ स्विष्टकृतो याज्यानुवाक्ययोः प्रतीके दर्शयति। "हव्यवाहꣳ स्विष्टम्" इति। हव्यवाहमभिमातिषाहमिति पुरोनुवाक्या। स्विष्टमग्ने अभि तत् पृणाहीति याज्या। एतच्चोभयं जुष्टोदमूना इत्यत्र व्याख्यातं॥

इति तृतीयोऽनुवाकः।

---

अथ चतुर्थोऽनुवाकः।

(१) अपाद्याख्यानामिष्टीनां याज्यानुवाक्यास्तृतीयेऽभिहिताः। चतुर्थे ता इष्टयोऽभिधीयन्ते। प्रथमं तावदिष्टीनां प्र-

स्तावं दर्शयति। "देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत्। ते प्रजापतिमब्रुवन्। प्रजापते स्वर्गो वै नो लोकस्तिरोऽभूत्। तमन्विच्छेति। तं यज्ञक्रतुभिरन्वैच्छत्। तं यज्ञक्रतुभिर्नान्वविन्दत्। तमिष्टिभिरन्वैच्छत्। तमिष्टिभिरन्वविन्दत्। तदिष्टीनामिष्टित्वम्। एष्टयो ह वै नाम। ता इष्टय इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः" ॥ १ ॥ इति। द्वितीयानुवाकवत् व्याख्येयं ॥

(२) सामान्येन सर्वासामिष्टीनां प्रस्तावमुक्त्वा विशेषाकारेण प्रथमाया इष्टेः प्रस्तावं हविष्केष्टिविधानं उपहोमविधानञ्च दर्शयति। "तं तपोऽब्रवीत्। प्रजापते तपसा वै त्वा स्यसि। अहमु वै तपोऽस्मि। मां नु यजस्व। अथ ते सत्यं तपो भविष्यति। अनु स्वर्गं लोकं वत्स्यसीति। स एतमाग्नेयमष्टाकपालं निरवपत्। तपसे चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यं तपोऽभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यꣳ ह वा अस्य तपो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये स्वाहा तपसे स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति" ॥ २ ॥ इति। अत्रेष्टय स्तपोऽसाधारणदेवत्य अग्निरनुमतिश्च पुरस्तात्रोपरिष्टाच्च सर्वेष्टिसाधारणदेवते। वाक्यं तु सर्वं द्वितीयानुवाके श्रद्धावाक्यवद् व्याख्येयं॥

(३) अथ द्वितीयामिष्टिं विधत्ते। "तꣳ श्रद्धाब्रवीत्। प्र-

जापते श्रद्धया वै आम्यसि। अहमु वै श्रद्धास्मि। मां नु यजस्व। अथ ते मत्या श्रद्धा भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमाग्नेयमष्टाकपालं निरवपत्। श्रद्धायै चरुम्। अनुमत्यै चरुम्। ततो वै तस्य मत्या श्रद्धाऽभवत्। अनु स्वर्गं लोकमविन्दत्। मत्या ह वा अस्य श्रद्धा भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये स्वाहा श्रद्धायै स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति" ॥ ३ ॥ इति ॥

(४) अथ तृतीयामिष्टिं विधत्ते। "तꣳ सत्यमब्रवीत्। प्रजापते सत्येन वै आम्यसि। अहमु वै सत्यमस्मि। मां नु यजस्व। अथ ते सत्यꣳ सत्यं भविष्यति। अनु स्वर्गं लोकं वत्स्यसीति। स एतमाग्नेयमष्टाकपालं निरवपत्। सत्याय चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यꣳ सत्यमभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यꣳ ह वा अस्य सत्यं भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये स्वाहा सत्याय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति" ॥ ४ ॥ इति ॥

(५) अथ चतुर्थीमिष्टिं विधत्ते। "तं मनोऽब्रवीत्। प्रजापते मनसा वै आम्यसि। अहमु वै मनोऽस्मि। मां नु यजस्व। अथ ते सत्यं मनो भविष्यति। अनु स्वर्गं लोकं वत्स्यसीति।

स एतमाग्नेयमष्टाकपालं निरवपत्। मनसे चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यं मनोऽभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यꣳ ह्वा अस्य मनो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये स्वाहा मनसे स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति" ॥५॥ इति ॥

(६) अथ पञ्चमीमिष्टिं विधत्ते। "तं चरणमब्रवीत्। प्रजापते चरणेन वै आम्यसि। अहमु वै चरणमस्मि। मां नु यजस्व। अथ ते सत्यं चरणं भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमाग्नेयमष्टाकपालं निरवपत्। चरणाय चरुम्। अनुमत्यै चरुम्। ततो वै अस्य सत्यं चरणमभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यꣳ ह्वा अस्य चरणं भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये स्वाहा चरणाय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति" ॥ ६ ॥ इति ॥

(७) प्रत्येकमिष्टीर्विधाय तत्सङ्घातरूपं कर्म विधत्ते। "ता वा एताः पञ्च स्वर्गस्य लोकस्य द्वारः। अपक्त्या अनुवित्तयो नाम। तपः प्रथमाꣳ रचति। श्रद्धा द्वितीयाम्। सत्यं तृतीयाम्। मनश्चतुर्थीम्। चरणं पञ्चमीम्। अनु ह वै स्वर्गं लोकं विन्दति। कामचारोऽस्य स्वर्गे लोके भवति। य एता-

भिरिष्टिभिर्यजते। य उ चैना एवं वेद। तास्वन्विष्टि। पष्ठौहीवरां दद्यात् कꣳसञ्च। स्त्रियै चाभारꣳ समृद्ध्यै"॥ ७॥ इति। अपह्नुयन्ते स्वर्गप्रतिबन्धाः सर्व्वेऽपि याभिरिष्टिभिः ताः 'अपाद्याः'। अन्यत् सर्व्वमप्यस्मिन्ननुवाके द्वितीयानुवाकवद्व्याख्येयं। 'ता वा एताः' उक्ता दिवःश्येनयोऽपाद्यास्च द्विविधाः, अन्तःप्रयोज्या वहिःप्रयोज्यास्चेति। समस्तस्य चातुर्होत्रचयनस्य मध्ये प्रयोगो बोधायनवाक्येन पूर्व्वमुदाहृतः। बहिस्तु स्वर्गकामेन चातुर्होत्रात् पृथगेव प्रयोक्तव्यः॥

इति चतुर्थोऽनुवाकः।

---

अथ पञ्चमोऽनुवाकः।

(१) चतुर्थेऽपाद्या इष्टयोऽभिहिताः। पञ्चमे चातुर्होत्र चयनमभिधीयते। तत्रादौ चातुर्होतृमन्त्रान् प्रशंसति। "ब्रह्म वै चतुर्होतारः। चतुर्होतृभ्योऽधियज्ञो निर्मितः। नैनꣳ शप्तम्। नाभिचरितमागच्छति। य एवं वेद" इति। ये एते 'चतुर्होतृ'संज्ञका मन्त्राः ते 'ब्रह्म वै' परब्रह्मस्वरूपा एव, सर्व्वजगत्सृष्टिहेतुत्वात्। दशहोतृचतुर्होतृपञ्चहोतृषड्ढोतृसप्तहोतृमन्त्राः सर्व्वेऽपि चतुर्होतृशब्देनोच्यन्ते। एतेषां मन्त्राणां जगत्सृष्टिहेतुत्वं चतुर्होतृशब्दवाच्यत्वं च द्वितीयकाण्डस्य द्वितीयतृतीयप्रपाठकरूपे होतृमन्त्रब्राह्मणे बहुधा प्रपञ्चितं। एतेभ्यः 'चतुर्होतृभ्यः', सर्व्वोऽपि 'यज्ञोऽधिनिर्मितः', एतदपि तत्रैवोक्तं।

'यः' पुमान्, 'एवं', चतुर्होतृमन्त्राणां ब्रह्मत्वं यज्ञनिर्वाहकत्वं च 'वेद', तं 'एनं' पुरुषं, 'शप्तं' परकीयः शापः, 'न', आगच्छति। 'अभिचरितं' परकृतमाभिचारोऽपि, 'न', आगच्छति॥

(२) प्रकारान्तरेण पुनः प्रशंसति। "यो ह वै चतुर्होतॄणां चतुर्होतृत्वं वेद। अथो पञ्चहोतृत्वम्। सर्व्वा ह्यस्मै दिशः कल्पन्ते। वाचस्पतिर्होता दशहोतॄणाम्। पृथिवी होता चतुर्होतॄणाम्॥१॥ अग्निर्होता पञ्चहोतॄणाम्। वाग्घोता षड्ढोतॄणाम्। महाहविर्होता सप्तहोतॄणाम्। एतद्वै चतुर्होतॄणां चतुर्होतृत्वम्। अथो पञ्चहोतृत्वम्। सर्व्वा ह्यस्मै दिशः कल्पन्ते। य एवं वेद" इति। 'यः' पुमान्, चतुर्होतृमन्त्रकानामेतेषां मन्त्राणां बहूनामेकेनैव चतुर्होतृशब्देनाभिधेयत्वं 'वेद'। अपि च पञ्चस्वनुवाकेषु होतृप्रतिपादनात् पञ्चहोतृशब्द वाच्यत्वं च 'वेद'। 'अस्मै' पुरुषाय, 'सर्व्वाः', अपि 'दिशः कल्पन्ते' स्वस्वप्रयोजनसमर्था भवन्ति। आरण्यकेषु चित्तिस्रुगित्याद्यनुवाके आम्नाता ये होतृमन्त्राः, तेषु मध्ये पृथिवी होतेत्यस्य चतुर्होतृमन्त्रस्याधिष्ठात्रिदेवता, चतुर्वारमाक्रानेन श्रुत्वा प्रत्युत्तरं दत्तवती। 'अग्निर्होता' इत्यस्य पञ्चहोतृमन्त्रस्याधिष्ठात्रिदेवता पञ्चवारमाक्रानेन। 'वाग्घोता' इत्यस्य षड्ढोतृमन्त्रस्याधिष्ठाता षड्वारमाक्रानेन। 'महाहविर्होता' इत्यस्य सप्तहोतृमन्त्रस्याधिष्ठाता सप्तवारमाक्रानेन। चित्तिस्रुगित्यस्य दशहोतृमन्त्रस्याधिष्ठाता दशवारमाक्रानेन। चतुर्होतृमन्त्रदेवस्य

शीघ्रप्रत्युत्तरेण परितुष्टः प्रजापतिस्तन्नाम्नैव सर्व्वेषां व्यवहारोऽस्त्विति वरन्ददौ। तथा च तत्राम्नातं। त्वं वै मे नेदिष्ठं हुतः प्रत्यश्रौषीः। त्वयैनानाख्यातार इति। तस्मान्नु हैनाꣳश्चतुर्होतार इत्याचक्षत इति। तदेतत् 'चतुर्होतृत्वं', तच्च प्रपञ्चितत्वादत्र सङ्गृहीतं। यत् तु पञ्चस्वनुवाकेषु होतुः सद्भावात् 'पञ्चहोतृत्वं', तदत्र प्रपञ्च्यते। चित्तिस्रुगित्यादिमन्त्राणां दशहोतॄणां मध्ये वाचस्पतिर्होतृत्वेनाम्नातः। वाक्पतिर्होतेति तस्मिन्ननुवाके समाम्नानात्। तथा चतुर्होतृमन्त्रावयवानां मध्ये पृथिवीर्होतेत्याम्नातः। पञ्चहोतृमन्त्रावयवानां मध्ये अग्निर्होतेत्याम्नातः। षड्ढोतृमन्त्रावयवानां मध्ये वाग्घोतेत्याम्नातः। सप्तहोतृमन्त्रावयवानां मध्ये महाहविर्होतेत्याम्नातः। चतुर्होतृसञ्ज्ञकानां सर्व्वेषां मन्त्राणामेतदेव पूर्व्वकाण्डोक्तवरप्रदाने चतुर्होतृत्वं। अत्रोक्तपञ्चविधहोतृसद्भावेन पञ्चहोतृत्वं च। 'सर्व्वाहास्मै' इत्यादि पुनर्वचनमुपसंहारार्थं॥

(३) पुनरपि प्रकारान्तरेण मन्त्रान् प्रशंसति। "एषा वै सर्व्वा विद्या। एतद्भेषजम्। एषा पङ्क्तिः स्वर्गस्य लोकस्याञ्जसायनिः स्रुतिः॥ २॥ एतान्याधीत्य च्छदिर्दर्भे यावत्तरसम्। स्वरेति। अनपब्रवः सर्व्वमायुरेति। विन्दते प्रजाम्। रायस्पोषं गौपत्यम्। ब्रह्मवर्चसी भवति" इति। इयं होतृमन्त्रविद्या 'एषा', एव 'सर्व्वविद्या', अनयैवापेक्षितस्य फलस्य लभ्यत्वात्। 'एतत्' एव मन्त्रजातं, 'भेषजं' सर्व्वानिष्टनिवारकं। 'एषा' विद्या, पञ्चानुवाकरूपत्वात् 'पङ्क्तिः'। सा च 'स्वर्गस्य

लोकस्य', 'अञ्जसायनिः' अनायासेन प्राप्तिहेतुः, श्रुतिमार्गः। 'एतान्' पञ्चानुवाकरूपान् मन्त्रान्, यः पुमान् 'अच्छदिर्दर्शे' गृहस्याच्छादकानि कटरूपाणि च्छदींष्यपि यावति दूरे न दृश्यन्ते तावति दूरे, अरण्ये गत्वा 'यावत् तरसं' यावद्बलमुच्चध्वनिना, 'अधीते' अधिकत्वेन प्राप्नोति, गुरुमुखादधीते जपति वेत्यर्थः। स पुमान् 'स्वरेति' स्वर्गं प्राप्नोति। 'अनपब्रवः' अपकीर्त्तिरहितः, 'सर्व्वमायुरेति' प्रजादिकञ्च लभते, ब्रह्मवर्चसयुक्तश्च 'भवति'। तत्र स्तुतिप्रसङ्गादयं पुरुषार्थो जपविधिर्द्रष्टव्यः॥

(४) पुनरपि तं विधिमनूद्य प्रशंसति। "एतान्योऽधीते। स्पृणोत्यात्मानम्। प्रजां पितॄन्" इति। 'यः' अयं पुमान् 'एतान्' मन्त्रान्, पूर्व्वोक्तरीत्या अधीते, सः स्वात्मानं स्वकीयां पुत्रादिप्रजां स्वकीयान् पितृपितामहादींश्च 'स्पृणाति' तत्तदपेक्षितफलसम्प्रदानेन प्रीणयति॥

(५) पुनरप्येतन्मन्त्रवेदितृपुरुषमुदाहृत्य प्रशंसति। "एतान्वा अरुण औपवेशिर्विदाञ्चकार॥ ३॥ एतैरधिवादमपाजयत्। अथो विश्वं पाप्मानम्। स्वर्य्ययौ। एतान् योऽधीते। अधिवादं जयति। अथो विश्वं पाप्मानम्। स्वरेति" इति। उपवेशपुत्रः कश्चिन् मुनिः अरुणाख्यः एतान् मन्त्रान्, 'विदाञ्चकार' अरण्ये गत्वा ध्यानं कृतवान्। स मुनिः 'अधिवादं' स्वस्मादधिकेन पुरुषेण सह विद्याविषये वादं, कृत्वा स्वयं जितवान्। अपि च सर्व्वमपि 'पाप्मानं', 'अपाजयत्' वि-

नाशितवान् स्वर्ययौ च स्वर्गं च प्राप्तवान्, एवमन्योऽपि यथोक्तं फलं सर्व्वं प्राप्नोति ॥

(६) एवं बहुधा मन्त्रान् प्रशंस्य तैर्मन्त्रैश्चयनं विधत्ते। "एतैरग्निं चिन्वीत स्वर्गकामः। एतैरायुष्कामः। प्रजापशु-कामो वा" ॥ ४ ॥ इति । आयुरादिकामोऽस्मिंश्चयनेऽधि-कारी ॥

(७) कर्मविधाय तदंगरूपानुपधानविशेषान् विधत्ते। "पु-रस्ताद्दशहोतारमुदञ्चमुपदधाति यावत्पदं। हृदयं यजुषी पत्न्यौ च। दक्षिणतः प्राञ्चं चतुर्होतारम्। पश्चाद्दञ्चं पञ्चहोतारम्। उत्तरतः प्राञ्चꣳ षड्ढोतारम्। उपरिष्टात् प्राञ्चꣳ सप्तहोतारम्। हृदयं यजूꣳषि पत्न्यश्च। यथावकाशं ग्रहान्। यथावकाशं प्रतिग्रहाँल्लोकं पृणाश्च। सर्व्वाह्यस्यैता देवताः प्रीता अभीष्टा भवन्ति॥ ५॥ स देवमग्निं चिनुते". इति। चितिः स्रुगित्यादिमन्त्रसंज्ञा दशहोता, तन्मन्त्रोपधया-पीष्टका दशहोतेत्युच्यते। दशहोतृरूपामिष्टकां पूर्व्वस्यां दिश्यु-दगपवर्गमुपदध्यात्। सुवर्णं घर्ममित्याद्यनुवाको हृदयसञ्ज्ञकः। तेनोपधेयमपीष्टकारूपं हृदयमित्युपदध्यात्। अग्निर्यजुर्भिः स-वितास्तोमैः इन्द्र उक्थामदैरित्याद्यनुवाकोक्तानि मन्त्राणि यजुर्नामकानि, तैरुपधेयमपि यजुरित्युच्यते। ते 'यजुषी' द्वे उपदध्यात्॥ सेनेन्द्रस्येत्याद्यनुवाकोक्ताः पत्नीसंज्ञकाः, तन्म-न्त्रैरुपधेया अपि 'पत्न्यः'। ते अपि द्वे उपदध्यात्॥ तदेवं दश-होतृमन्त्रैर्दशेष्टकाः, हृदयमन्त्रेणैका, यजुर्मन्त्राभ्यां देवपत्नी-

मन्त्राभ्यां द्वे, इत्येतावतीः पूर्व्वस्यां दिशि 'यावत्पदं' उपदध्यात्। 'पदं' उपधानस्थानं, तद्यावत्स्वीकृतं तावत्येव सर्व्वोपधानमन्त्रैर्भा-वयेत्। एतच्च सर्व्वं बोधायनः स्पष्टमुदाजहार। ब्रह्मचित्तस्य प्रसिद्धं चेत्रकरणं यथा सावित्रस्यैतावदेव नानात्रलेखा भवन्ति, अथ पुरस्तादुदीचोर्दशेष्टका उपदधाति, चित्तिः स्रुक्तया देव-तयाङ्गिरस्वध्रुवासीद। चित्तमाज्यतया देवतयाङ्गिरस्व-ध्रुवासीदेति दशहृदयेष्टकामुपदधाति। सुवर्णं घर्मं परि-वेदनमित्यनुद्रुत्य दवैः समानसोन आत्मा जनानामित्यन्तो यजुरिष्टके उपदधात्यग्निर्यजुर्भिस्तया देवतयाङ्गिरस्वध्रुवासीद। सविता स्तोमैस्तया देवतयाङ्गिरस्वध्रुवासीदेत्यथ पत्नीष्टके उप-दधाति। मेनेन्द्रस्य तया देवतयाङ्गिरस्वध्रुवासीद। सेना बृहस्पतेस्तया देवतयाङ्गिरस्वध्रुवासीदेत्येवं पुरस्तादुपधाय दक्षिणस्यां दिशि पृथिवी होतेत्यादिभिश्चतुर्होतृमन्त्रैश्चतस्र इष्टकानन्तरभाविना हृदयमन्त्रेणैका अनन्तराभ्यां यजुर्भ्यां पत्नीभ्यां च द्वे द्वे इत्येवं प्रागपवर्गमुपदध्यात्। प्रतीच्यां दि-श्यग्निर्होतेत्यादि चतुर्भिर्मन्त्रैः पञ्चहोतृमन्त्रकैः चतस्र इष्टकाः पूर्व्ववत्तदनन्तरभाविभिः हृदययजुःपत्नीमन्त्रैरिष्टकाः उदगप-वर्गमुपदध्यात्। तदुत्तरस्यां दिशि वाग्घोतेत्यादिभिः षड्ढोतृम-न्त्रैः षडिष्टकाः पूर्व्ववत्तदनन्तरभाविभिर्हृदययजुःपत्नीमन्त्रैस्त-त्तदिष्टकाश्च प्रागपवर्गमुपदध्यात्। उपरिष्टादित्यनेन मध्य-देश उपलक्ष्यते। अन्तरिक्षस्योपधानयोग्यताभावात्। अत-दूर्द्ध्वदिग्रूपा मध्यदेशे महाहविर्होतेत्यादिभिः सप्तहोतृमन्त्रकैः

सप्तेष्टकाः पूर्व्ववत् तदनन्तरभाविभिर्मन्त्रैः हृदययजुःपत्नी-ष्टकाश्च प्रागपवर्गमुपदध्यात्। एतदेव विवक्षित्वा दक्षिणादि-चतुर्दिक्त्वेन, हृदयं यजूꣳषि पत्न्यश्चेत्याम्नातं। सर्व्वेष्वेतेषु होतृमन्त्रानुवाकेषु अन्तिमभागाः वाचस्पते विधेनामन्नित्या-दयोग्रहमन्त्रास्तैरुपधेयाः, इष्टकाविशेषा अपि ग्रहमन्त्रोक्ताः। तान् सर्व्वान् यथावकाशमुपदध्यात्। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामित्यनुवाकोक्ताः प्रतिग्रह-मन्त्राः तैरुपधेया, इष्टकाविशेषा अपि प्रतिग्रहाः। लोकं पृणेति मन्त्रोपधेया इष्टका अपि लोक 'पृणाः', प्रतिग्रहांल्लोकं पृणाश्च यथावकाशमुपदध्यात्। एवमुपधाने सत्यस्य यजमानस्य सर्व्वा अपि तत्तन्मन्त्रोक्ता देवतास्तुष्टा अभीष्टफलप्रदाश्च भवन्ति। ततोऽयं देवैश्च सहितमग्निं चितवान् भवति॥

(८) अस्य चयनदेशस्येयत्तां विधत्ते। "रथसम्मितश्चेतव्यः। वज्रो वै रथः। वज्रेणैव पाप्मानं भ्रातृव्यꣳ स्तृणुते। पक्षः सम्मितश्चेतव्यः। एतावान्वै रथः। यावत्पक्षः। रथसम्मितमेव चिनुते" इति। रथस्य यावद्देशापेक्षितः, तावति देशे चय-ने सति 'रथसम्मितो' रथतुल्यः, अग्निर्भवति, रथो हि वज्रस्य तृ-तीयांशत्वात्। वज्ररूपरथः तृतीयमिति श्रुतः। अतः पापरूपं शत्रुं 'वज्रेणैव' छिनत्ति। 'पक्षः' शब्देन रथस्यैकभागवर्त्ति चक्रमु-च्यते। चक्रपरिमिते देशे 'चेतव्यः'। स चैवं सति रथसम्मितत्वं वि-रुध्यते। चक्रं यावदस्ति तावानेव रथस्य मुख्योऽंशः। अतश्चक्र-सम्मितत्वेन रथसम्मित एव भवति॥

(९) एतस्य चयनस्य कर्मविशेषयोगेन फलविशेषं दर्शयति। "इममेव लोकं पशुबन्धेनाभिजयति। अथो अग्निष्टोमेन ॥ ६ ॥ अन्तरिक्षमुक्थ्येन। स्वरतिरात्रेण। सर्व्वान् लोकानहीनेन। अथो सत्रेण" इति। एतच्चयनयुक्तेन पशुबन्धाग्निष्टोमयोरन्यतरेण भूलोकजयः। भूमौ विद्यमाना भोगाः प्राप्यन्ते। चयनयुक्तेनोक्थ्येनान्तरिक्षलोकभोगप्राप्तिः। चयनयुक्तेनातिरात्रेण स्वर्गभोगप्राप्तिः। अहीनसत्रयोरन्यतरेण चयनयुक्तेन सर्व्वकामप्राप्तिः ॥

(१०) चयनस्य दक्षिणां विधत्ते। "वरो दक्षिणा। वरेणैव वरꣳ स्पृणोति। आत्मा हि वर" इति। 'वरः'शब्देन गौरभिधीयते। गौर्वै वर इत्यापस्तम्बेनाभिधानात्। सा हि वर इति श्रुतेश्च। एवं सति श्रेष्ठेनैव दक्षिणाद्रव्येण श्रेष्ठं प्रीणयति। श्रेष्ठ 'आत्मा', सर्वस्य भोग्यस्य तच्छेषत्वात्। ततः स्वात्मानमेव प्रीणयतीत्युक्तं भवति ॥

(११) पक्षान्तरमाह। "एकविꣳशतिर्दक्षिणा ददाति। एकविꣳशो वा इतः स्वर्गो लोकः। प्र स्वर्गं लोकमाप्नोति ॥ ७ ॥ असावादित्य एकविꣳशः। अमुमेवादित्यमाप्नोति" इति ॥ भूलोकमारभ्य सत्यलोकान्ताः सप्तलोकाः। ते प्रत्येकमुत्तमाधममध्यमभोगेन त्रिविधः। तथा सति सत्यलोके योऽयमुत्तमभोगयुक्तश्चरमः स्वर्गः। सोयमधमभूलोकमपेक्ष्यैकविंशतिसङ्ख्यापूरको भवति। अतः सङ्ख्यासाम्यात् प्रकृष्टं स्वर्गमाप्नोति। द्वादशमासाः पञ्चर्तवस्त्रय इमे लोकाः असावा-

दित्य एकविंश इति श्रुतेः। आदित्यस्यैकविंशत्वात् सङ्ख्यासाम्येन तं प्राप्नोति॥

(१२) पक्षान्तरं विधत्ते। "शतं ददाति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति" इति। यथा गवामेकविंशत्या स्वर्गादित्यप्राप्तिः। तथा गवां शतेनायुरिन्द्रिययोः प्रतिष्ठितत्वं भवति॥

(१३) पक्षान्तरं विधत्ते। "सहस्रं ददाति। सहस्रसम्मितः स्वर्गो लोकः। स्वर्गस्य लोकस्याभिजित्यै" इति। स्वर्गभोग्यद्रव्याणां बहुमूल्यत्वात् 'स्वर्गस्य' सहस्रसम्मितत्वं। अतः सहस्रदानेन स्वर्गाभिजयः। त एते पक्षाः शक्त्यनुसारेण विकल्पिताः॥

(१४) एवं पक्षान्तरं विधत्ते। "अन्विष्टकं दक्षिणा ददाति। सर्वाणि वयाꣳसि॥ ८॥ सर्वस्याप्त्यै। सर्वस्यावरुध्यै" इति। एकैकामिष्टकामन्वित्यर्थे 'अन्विष्टकं' इति शब्दः, प्रतीष्टकमेकैका गौर्देया। तासु गोषु 'सर्वाणि वयाꣳसि' सम्पादनीयानि। वयोविशेषाश्चापस्तम्बेन दर्शिताः। एकहायनप्रभृत्या पञ्चहायनेभ्यो वयाꣳसीति। तच्च सर्वभोगप्राप्त्यै तद्वशीकाराय च भवति॥

(१५) इष्टका सङ्ख्यया सङ्ख्येयानां गवामलाभे पक्षान्तरद्वयं विधत्ते। "यदि न विन्देत। सन्यानेतावता दद्यादोदनान्वा। अश्नुते तं कामम्। यस्मै कामायाग्निश्चीयते" इति। यदि दरिद्रो गास्तावतीर्न लभेत। तदा यावत्य इष्टकाः 'एताव-

तः' 'मन्थान्' 'ओदनान्वा' 'दद्यात्'। क्षीरादौ द्रवद्रव्ये सक्तुपिष्टमिश्रेण निष्पन्नो 'मन्थः' एतद्दानेनापेक्षितं 'कामं' प्राप्नोति ॥

(१६) वैकल्पिकीं दक्षिणां विधाय नियतां विधत्ते। "पष्ठौहीमन्तर्वतीं दद्यात्। सा हि सर्व्वाणि वयाᳪसि। सर्व्वस्याप्त्यै। सर्व्वस्यावरुध्यै" ॥ ९ ॥ इति। 'तु'शब्दो विकल्पनिवृत्त्यर्थः। चतुर्वर्षा गौः 'पष्ठौही', सा च 'अन्तर्वती' गर्भिणी। तस्यां दत्तायां 'सर्व्वाणि वयाᳪसि' दत्तानि भवन्ति। एकहायनादीनां तत्र सम्भवात्। तच्च सर्व्वस्य भोगस्य प्राप्त्यै वशीकाराय च भवति ॥

(१७) द्रव्यान्तरं विधत्ते। "हिरण्यं ददाति। हिरण्यज्योतिरेव स्वर्गं लोकमेति" इति। हिरण्यसदृशं ज्योतिर्यस्यासौ 'हिरण्यज्योतिः'। तादृशो भूत्वा 'स्वर्गं' प्राप्नोति ॥

(१८) द्रव्यान्तरं विधत्ते। "वासो ददाति। तेनायुः प्रतिरते" इति। वाससो दीर्घत्वादायुर्वृद्धिहेतुत्वं, यदुक्तं बोधायनेन वेदिं विविमीते वेदि तृतीये यजेतेति विज्ञायते। तस्यासौमिकं मानमेतावदेव नानासौमिकात् प्रक्रमात् तृतीयांशः, स प्रक्रमः स्यात्तेन वेदिं विविमीत इति ॥

(१९) तदेतद्विधत्ते। "वेदि तृतीये यजेत। त्रिषत्या हि देवाः। स सत्यमग्निश्चिनुते" इति। सौमिकवेद्यास्तृतीयेऽंशे चयनं कृत्वा तत्र 'यजेत', अंशत्रये त्रिसङ्ख्या विद्यते। तया च सङ्ख्यया सत्यमेतदिति देवा विश्वसन्ति। अत एव तत्र तत्रा-

न्नायते। त्रिराह। त्रिषत्या हि देवाः इति। त्रिर्जयति।
त्रिषत्या हि देवा इति। तस्मात् तृतीयभागेन सत्या सहितोऽग्निस्थितो भवति। अग्नौ न किञ्चिदप्यनृतं वैकल्यं भवतीत्यर्थः। पूर्व्वत्रेममेव लोकं पशुबन्धेनेत्यादिना पशुबन्धाग्निष्टोमादावेतच्चयनमभ्युपगतं, तत्र पशुबन्धपच एव वेदिहतीयत्वविधानं व्यवस्थापयन्ति। तदेतत्पशुबन्ध ब्राह्मणं ब्रूयात्। नेतरेषु यज्ञेष्विति। 'तदेतत्' ब्राह्मणं वेदिहतीयत्वविधिवाक्यं पशुबन्धादितरेष्वग्निष्टोमादिषु न ब्रूयात्॥

(२०) यज्ञसभायामागतेभ्यो विद्वद्भ्यो दक्षिणां विधत्ते। "यो ह वै चतुर्होतृननुसवनं तर्पयितव्यान् वेद॥ १०॥ तृप्यति प्रजया पशुभिः। उपैनꣳ सोमपीथो नमति। एते वै चतुर्होतारोऽनुसवनं तर्पयितव्याः। ये ब्राह्मणा बहुविदः। तेभ्यो यद्दक्षिणा न नयेत्। दुरिष्टꣳ स्यात्। अग्निमस्य वृञ्जीरन्। तेभ्यो यथाश्रद्धं दद्यात्। स्विष्टमेवैतत् क्रियते। नास्याग्निं वृञ्जते"॥ ११॥ इति। चतुर्होतृमन्त्राणामभिमानिनो देवाः प्रातःसवनादिषु प्रतिसवनं तृप्तिं प्रापणीया इति 'यो वेद'। स 'प्रजया पशुभिः' च तृप्यति सोमपानफलमपि 'एनं' 'उपनमति'। के चतुर्होतृदेवा इति तदुच्यते। सभायामुपविष्टा, 'बहुविदः' वेदशास्त्राभिज्ञाः, 'ब्राह्मणाः' एव ते चतुर्होतृदेवाः। 'तेभ्यो' दक्षिणाया अदाने अनुष्ठितं पशुबन्धाग्निष्टोमादिकर्म 'दुरिष्टं स्यात्'।

'अस्य' यजमानस्य, एतं चितमग्निमपि ते विनाशयेयुः। तस्मात् स्वकीयश्रद्धानुसारेण दक्षिणायां दत्तायां दोषद्वये न भवतः॥

(२१) इष्टकानामुपादानद्रव्यं विधत्ते। "हिरण्येष्टको भवति। यावदुत्तममङ्गुलिकाण्डं यज्ञपुरुषा सम्मितम्। तेजो हिरण्यम्" इति। हिरण्येन निर्मिता इष्टका यस्याग्नेः सोयं 'हिरण्येष्टकः'। त्रिष्वङ्गुलिपर्वसूत्तममग्रमङ्गुलिपर्वयावद्भवति तावदिष्टकायाः परिमाणं। तच्च यज्ञपुरुषस्य पर्वणा सदृशं भवति। 'हिरण्यं' च तेजोरूपत्वात् प्रशस्तं॥

(२२) तस्य हिरण्यस्यालाभे घृतेनाक्ताः शर्करा विधत्ते। "यदि हिरण्यं न विन्देत्। शर्करा अक्ता उपदध्यात्। तेजो घृतम्। स तेजसमेवाग्निं चिनुते" इति। घृतस्य तेजोरूपत्वात् तेनाक्तानां शर्कराणामुपधाने चितोऽग्निः स 'तेजो' भवति॥

(२३) अथ विकल्पितं चयनाङ्गं विधत्ते। "अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्या वा। वीर्येण वा एष व्यृध्यते। योऽग्निं चिनुते॥ यावदेव वीर्यम्। तदस्मिन् दधाति" इति। सौत्रामणीसंहितायां स्वाद्वीं त्वेत्यनुवाकेन ब्राह्मणे लिन्द्रस्य सुषुवाणस्य यत्त्रिषु यूपेष्वित्यनुवाकाभ्यां च विहिता। सेयमत्र चयनादूर्ध्वमङ्गत्वेनानुष्ठेया. यद्वा मैत्रावरुण्या मित्रा तदङ्गत्वेनानुष्ठेया तदनुष्ठानेन यद्वीर्यं चयनेन विनष्टं तत् पुनः सम्पादितं भवति॥

(२४) चातुर्होत्रचयन तद्वेदनयोः फलं दर्शयति। "ब्रह्म-णः सायुज्यꣳ सलोकतामाप्नोति। एतासामेव देवतानाꣳ सायुज्यम्। सार्ष्टिताꣳ समानलोकतामाप्नोति। य एतमग्निं चिनुते। य उ चैनमेवं वेद" इति। ब्रह्म वै चतुर्होतार इति चतुर्होतृमन्त्राणां ब्रह्मत्वाभिधानात्। तदीयचयनेन 'ब्रह्मणः' चतुर्मुखस्य, 'सायुज्यं' तादात्म्यं, 'सलोकतां' एकलोकनिवासं, वा प्राप्नोति। तथा 'एतासां' तत्तल्लोकानां तत्तदभिमानिनां 'देवतानां' तादात्म्यं, समानैश्वर्य्यं, 'समानलोकतां', वा 'प्राप्नोति'। अत्र श्रद्धादितारतम्येन फलस्य विविधत्वं॥

(२५) चतुर्होत्रचयनस्याङ्गविधायकं ब्राह्मणं सावित्र-नाचिकेतयोरतिदिशति। "एतदेव सावित्रे ब्राह्मणम्। अथो नाचिकेत" इति॥ १२॥ अत्र मीमांसाप्रथमाध्यायस्य चतुर्थपादे चिन्तितम्।

शर्करा उपधत्तेऽक्तास्तेजो वै घृतमत्र किम्।
तैलादिनाञ्जितां अक्ताघृतेनैवाथ वाञ्जनम्॥
तैलादिनापि मुख्यत्वादसञ्जातविरोधनात्।
अप्राप्तार्थत्वतश्चास्य विधेर्वादाद्बलित्वतः॥
सामान्यमननुष्ठेयं विशेषस्तु विधानहि।
घृतेनैवाञ्जनं वाक्यशेषात् सन्दिग्धनिर्णयात्॥
अर्थवादगता चेयं स्तुतिर्घृतमुपेयुषी।
बोधयन्ती विधेयत्वं घृतस्य गमयद्विधिम्॥

अक्ताः शर्करा उपदधाति। तेजो वै घृतं इति श्रूयते।

मृत्तिकामिश्राः क्षुद्रपाषाणाः 'शर्कराः'। तास्तु घृततैल-वसादीनामन्यतमेन द्रव्येणाञ्जनीयाः। कुतः अञ्जनसाधन-सामान्यबोधकस्य विधिवाक्यस्य घृतविशेषस्य बोधकादर्थवादात् प्रबलत्वात्। तत् प्राबल्ये च मुख्यत्वादयस्त्रयो हेतवः, स्वार्थ-तयाविधेर्मुख्यत्वं, प्रथमश्रुतत्वाच्चामञ्जातविरोधित्वं, अनधिग-तार्थबोधकत्वादप्राप्तार्थत्वं। अर्थवादस्तु विधिस्तावकत्वादमुख्यः, चरमश्रुतत्वात् सञ्जातविरोधीज्ञानार्थानुवादित्वात् प्राप्ता-र्थात् तस्माद्येनकेनाप्यञ्जनमिति प्राप्ते ब्रूमः विधिवाक्येन कि-मञ्जनसाधनसामान्यं विधीयते। तद्विशेषो वा नाद्यः सामान्य-स्याननुष्ठेयत्वात्। न द्वितीयः अक्ताः शर्करा इत्यत्र घृततै-लादिविशेषवाचकशब्दाभावात्। ततः, उक्तरीत्या प्रबलमपि विधिवाक्यमनुष्ठानयोग्यविशेषसन्देहजनकतया निर्णयहेतुमर्थ-वादमपेक्षते। ननु तेन सह विरुध्यते। अर्थवादेऽपि घृतस्य विधिर्नास्ति, इति चेत् न विधेरुन्नेयत्वात्। तेजो वै घृतमित्येवं तेजस्त्वेन स्तूयमानत्वाद्विधेयत्वं गम्यते। यत् स्तूयते तद्विधीयते इतिन्यायात् तेन च विधेयत्वेन विधायकः शब्दः कल्प्यते। घृतेनाक्ता इति तस्माद्घृतेनैवाञ्जनं॥

इति पञ्चमोऽनुवाकः।

---

अथ षष्ठोऽनुवाकः।

(१) पञ्चमे चातुर्होत्रचयनमभिहितं। उत्तरेषु चतुर्ष्वनुवाकेषु विश्वसृक्चयनमभिधीयते। तच्च बौधायनेन स्पष्टमभिहितं। अथ वैश्वसृजस्तय प्रसिद्धं चैवैकारणं यया मावित्रस्येतावद्देवानाना तिस्रो लेखा भवन्ति। अथान्तिमायां लेखायामुपदधाति, यच्चामृतं यच्च मर्त्यमित्यष्टादशेति। त एते मन्त्राः षष्ठानुवाकेऽभिधीयन्ते। तत्र प्रथमं मन्त्रमाह। "यच्चामृतं यच्च मर्त्यम्। यच्च प्राणिति यच्च न। सर्वास्ता इष्टकाः कृत्वा। उप कामदुघा दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाङ्गिरस्वद्ध्रुवासीद" इति। लोके यदमृतं विनाशरहितं वस्तु 'यच्चामृतं', 'यच्च मर्त्यं' विनश्वरं, 'यच्च' प्राणितं, जङ्गमं, यदपि प्राणरहितं स्थावरं, ता, अमृतादिरूपाः, 'सर्वाः' अपि 'कामदुघाः' स्वापेक्षितफलस्य दोग्ध्रीः,'इष्टकाः कृत्वा' इह चयेऽहमुपदधे। हे इष्टके त्वं, तेन ऋषिणा, मन्त्रदर्शिना, तेन च ब्रह्मणा, मन्त्रेण 'तया' त्वदभिमानिन्या 'देवतया अङ्गिरस्वत्' अङ्गिरोभिरिवोपहितासती, स्थिरोपविश॥

(२) अथ द्वितीयमन्त्रमाह। "सर्वाः स्त्रियः सर्वान् पुंसः। सर्वं न स्त्रीपुमञ्च यत्। सर्वास्ताः" इति। न 'स्त्रीपुमं' स्त्रीपुरुषविलक्षणं नपुंसकं व्यक्तित्रयरूपास्ताः सर्वा इष्टकाः कृत्वेत्यादिकमनुषज्यते। एवमुत्तरत्रापि द्रष्टव्यं॥

(३) अथ तृतीयमाह। "यावन्तः पांसवो भूमेः॥ १॥

सञ्ज्ञाता देवमायया। सर्व्वास्ताः" इति। 'पांसवः' परमाणवः। ते च मनुष्यादिभिः सञ्ज्ञातुमशक्यत्वात् 'देवमायया' परमेश्वरशक्त्या दुर्घटकारिण्या, 'संज्ञाता' यावन्तो भवन्ति, ताः सर्व्वा इत्यादि पूर्व्ववत्॥

(४) अथ चतुर्थमाह। "यावन्त ऊषाः पशूनाम्। पृथिव्यां पुष्टिर्हिताः। सर्व्वास्ताः" इति। 'पशूनां' गवादीनां पुष्टिकारित्वेन पुष्टिरूपाः। 'पृथिव्यां हिताः' अवस्थिताः। 'ऊषाः' क्षारमृद्विशेषा, 'यावन्तः' सन्ति ताः सर्व्वा इत्यादि॥

(५) अथ पञ्चममाह। "यावतीः सिकताः सर्व्वाः। अप्स्वन्तस्य या श्रिताः। सर्व्वास्ताः" इति। जलमध्ये भूम्यां वा अवस्थिताः 'सिकताः'॥

(६) अथ षष्ठमाह। "यावतीः शर्कराः धृत्यै। अस्यां पृथिव्यामधि॥ २॥ सर्व्वास्ताः" इति। दार्ढ्यार्थं 'पृथिव्यां' उपर्यवस्थिताः क्षुद्रपाषाणाः॥

(७) अथ सप्तममाह। "यावन्तोऽश्मानोऽस्यां पृथिव्याम्। प्रतिष्ठासु प्रतिष्ठिताः। सर्व्वास्ताः" इति। भूमेरुपरि 'प्रतिष्ठासु' दृढस्थलीषु अवस्थिताः 'अश्मानः' प्रौढाः पाषाणाः॥

(८) अथाष्टममाह। "यावतीर्वीरुधः सर्व्वाः। विष्ठिताः पृथिवीमनु। सर्व्वास्ताः" इति। 'पृथिवीमनु'प्राप्य तत्र तत्र विशेषेणावस्थिता 'वीरुधः' वल्ल्यः॥

(९) अथ नवममाह। "यावतीरोषधीः सर्व्वाः। विष्ठिताः पृथिवीमनु। सर्व्वास्ताः" इति ॥३॥ 'ओषधीः' व्रीह्यादयः॥

(१०) अथ दशममाह। "यावन्तो वनस्पतयः। अस्यां पृथिव्यामधि। सर्व्वास्ताः" इति। 'वनस्पतयः' अश्वत्थपनसा-दयः॥

(११) अथैकादशमाह। "यावन्तो ग्राम्याः पशवः सर्व्वे। आरण्याश्च ये। सर्वास्ता" इति। गवाश्वादयः 'ग्राम्याः' उष्ट्रा-दयः 'आरण्याः'॥

(१२) अथ द्वादशमाह। "ये द्विपादश्चतुष्पादः। अपाद उदरसर्पिणः। सर्वास्ताः" इति। 'द्विपादः' मनुष्याः पक्षिणश्च। 'चतुष्पादः' गवादयः। पादरहिता उदरेणैव गच्छन्तः। सर्प-जलूकादयः॥

(१३) अथ त्रयोदशमाह। "यावदाञ्जनमुच्यते॥ ४॥ दे-वत्रा यच्च मानुषम्। सर्वास्ता" इति। 'देवत्रा' देवेषु चक्षुषि प्रक्षेपणीयं 'आञ्जनं' यावत्, 'उच्यते'। यदपि 'मानुषं' मनु-ष्यैः प्रक्षेपणीयं, त्रिककुत् पर्वतादिजन्यं 'आञ्जनं'॥

(१४) अथ चतुर्दशमाह। "यावत् कृष्णायसꣳ सर्वम्। देवत्रा यच्च मानुषम्। सर्वास्ता" इति। 'देवत्रा' देवलोक कृष्णवर्णेनायसा निर्मितमायुधादि 'मानुषं' च, कुठा-रादि॥

(१५) अथ पञ्चदशमाह। "यावल्लोहायसꣳसर्व्वम्। दे-वत्रा यच्च मानुषम्। सर्वास्ताः" इति। 'लोहायसं' ताम्रजन्यं पात्रं॥

(१६) अथ षोडशमाह। "सर्व्वꣳसीसꣳ सर्व्वं त्रपु। देवत्रा

यच्च मानुषम् ॥ ५ ॥ सर्वास्ताः" इति । 'सीसं' 'त्रपु', च, तार-तम्येन चैकवर्णं लोहद्वयं ॥

(१७) अथ सप्तदशमाह । "सर्व्वं हिरण्यं रजतम् । देवत्रा यच्च मानुषम् । सर्वास्ताः" इति । हिरण्यं द्विविधं श्वेतं पीतञ्च । तत्र श्वेतं 'रजतं' पीतं 'सुवर्णं' ॥

(१८) अथाष्टादशमाह । "सर्व्वं सुवर्णं हरितम् । देवत्रा यच्च मानुषम् । सर्व्वास्ता इष्टकाः कृत्वा । उप कामदुघा दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवतयाङ्गिरस्वद्ध्रुवासीद" इति ॥ ६ ॥ 'हरितं' पीतं । पीतं हिरण्यं अत एव मनोहरत्वात् 'सुवर्णं' । तच्च देवलोकगतं । मनुष्यलोकगतं च यद्यदस्ति । ताः सर्व्वाः 'कामदुघाः' कृत्वा, उपदधे । सर्व्वत्रानुषङ्गद्योतनार्थं पुनः पाठः ॥

इति षष्ठोऽनुवाकः ।

---

अथ सप्तमोऽनुवाकः ।

(१) षष्ठे तिसृषु लेखासूत्तमलेखायामुपधानार्था मन्त्रा उक्ताः । मध्यमलेखायामुपधानार्था मन्त्राः सप्तमेऽभिधीयन्ते । यदुक्तं बोधायनेन । अथाभ्यन्तरायां लेखायामुपदधाति । सर्व्वा दिशो दिक्ष्विति पञ्चदशेति । तत्र प्रथममन्त्रमाह । "सर्व्वा दिशो दिक्षु । यच्चान्तर्भूतं प्रतिष्ठितम् । सर्व्वास्ता इष्टकाः कृत्वा । उप कामदुघा दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवतयाङ्गिरस्वद्ध्रुवासीद" इति । या प्राच्यादिदिशः

सन्ति। यच्च तासु दिक्ष्वन्तर्भूतं पर्व्वतादिकं स्थैर्य्येणावस्थितं। सर्व्वास्ता इष्टकाः, इत्यादि पूर्व्ववत्॥

(२) अथ द्वितीयमाह। "अन्तरिक्षञ्च केवलम्। यच्चास्मिन्नन्तराहितम्। सर्व्वास्ता" इति। यत् 'अन्तरिक्ष', केवलं, अवकाशरूपं 'यच्चास्मिन्नन्तरिक्षे' मध्ये स्थितं विमानादिकं, सर्व्वास्ता इत्यादि॥

(३) अथ तृतीयमाह। "आन्तरिक्ष्याश्च याः प्रजाः॥१॥ गन्धर्व्वाप्सरसश्च ये। सर्व्वास्ताः" इति। अन्तरिक्षेऽवस्थिता 'आन्तरिक्ष्याः', तासु प्रजासु मुख्या 'गन्धर्व्वाप्सरसः'॥

(४) अथ चतुर्थमाह। "सर्व्वानुदारान्सलिलान्। अन्तरिक्षे प्रतिष्ठितान्। सर्व्वास्ताः" इति। 'उदारान्' अतिबहुलान् 'सलिलान्' जलभेदान्। 'अन्तरिक्षे प्रतिष्ठितान्' मेघमध्येऽवस्थितान्॥

(५) अथ पञ्चममाह। "सर्व्वानुदारान्सलिलान्। स्थावराः प्रोष्याश्च ये। सर्व्वास्ताः" इति। वृष्टिरूपा बहुला जलविशेषाः अत्रोच्यन्ते। 'स्थावराः' स्थिरत्वेन वृक्षाग्रबिन्द्वादिरूपेणावस्थिताः आपः। 'प्रोष्याः' वायुना चलन्त्य आपः॥

(६) अथ षष्ठमाह। "सर्व्वान् धुनिं सर्व्वान् ध्वंसमान्। हिमो यत्र शीयते॥२॥ सर्व्वास्ताः" इति। 'धुनिः' अत्राकाशगङ्गा, 'ध्वंसा' वाय्वादिकृता जलशोषः, हिमवत्पर्व्वतादिषु हिमशब्दवाच्यो जलंघनः, 'शीयत' अधःपतति॥

(७) अथ सप्तममाह। "सर्व्वान्मरीचीन्विततान्। नीहा-

रो यच्च शीयते। सर्व्वास्ताः” इति। अन्तरिक्षसञ्चारिणः सूर्य-रश्मयः 'मरीचयः', घनीभावरहितो जलपरमाणुसमूहोऽधः-पतः 'नीहारः' ॥

(८) अथाष्टममाह। “सर्व्वा विद्युतः सर्व्वान्स्तनयित्नून्। ह्रादिनीर्यच्च शीयते। सर्व्वास्ताः” इति। 'विद्युतः' चञ्चलप्रभाः, 'स्तनयित्नवः' मेघाः, 'ह्रादिन्यः' गर्जनानि, यदपि 'शीयते' अशन्यादिरूपेणाधःपतति ॥

(९) अथ नवममाह। “सर्व्वाः स्रवन्तीः सरितः। सर्व्व-मप्सु चरञ्च यत्। सर्व्वास्ताः” इति ॥ ३ ॥ 'स्रवन्तीः' 'सरि-तः' गोदावर्य्यादयः। 'अप्सु चरं' मत्स्यादिकं ॥

(१०) अथ दशममाह। “याश्च कूप्या याश्च नाद्याः स-मुद्रियाः। याश्च वैशन्तीरुतप्रासचीर्याः। सर्व्वास्ताः” इति। कूपे नद्यां समुद्रे वैशन्ते चावस्थिता आपः। कूप्याद्याः 'प्रास-चीः' प्रकर्षेण समन्तादन्योन्यं समवेता आपः ॥

(११) अथैकादशमाह। “ये चोत्तिष्ठन्ति जीमूताः। याश्च वर्षन्ति वृष्टयः। सर्व्वास्ताः” इति। 'जीमूता' मेघाः, 'उत्ति-ष्ठन्ति' ऊर्द्ध्वं घनीभूतास्तिष्ठन्ति, 'वृष्टयो वर्षन्ति' भूमौपतन्ति ॥

(१२) अथ द्वादशमाह। “तपस्तेज आकाशम्। यच्चा-काशे प्रतिष्ठितम्। सर्व्वास्ताः” इति। 'तपः' सन्तापः, 'तेजः' प्रकाशः, 'आकाशं' अवकाशः, यदप्यन्यदन्धकारादिकं, 'आकाशे प्रतिष्ठितं' ॥

(१३) अथ त्रयोदशमाह। “वायुं वयाꣳसि सर्व्वाणि ॥ ४ ॥

अन्तरिक्षचरञ्च यत्। सर्व्वास्ताः" इति। यो 'वायुः' ये च सर्व्वे पक्षिणः। 'यच्च' अन्यद्यक्षराक्षसादिकं 'अन्तरिक्षचरं'॥

(१४) अथ चतुर्दशमाह। "अग्निᳲ सूर्यं चन्द्रम्। मित्रं वरुणं भगम्। सर्व्वास्ताः" इति। अग्न्यादयः देवताविशेषाः॥

(१५) अथ पञ्चदशमाह। "सत्यᳲ श्रद्धां तपो दमम्। नाम रूपञ्च भूतानाम्। सर्व्वास्ता इष्टकाः कृत्वा। उप कामदुघा दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाङ्गिरस्वद्ध्रुवासीद" इति॥ ५॥ 'भूतानां' प्राणिनां सम्बन्धीनि सत्यवचनादीनि॥

इति सप्तमोऽनुवाकः।

---

अथ अष्टमोऽनुवाकः।

(१) सप्तमे द्वितीयलेखायामुपधानमन्त्रा उक्ताः। तदन्तरालेखायां उपधानमन्त्रा अष्टमेऽभिधीयन्ते। यदुक्तं बौधायनेन। अथास्यन्तरलेखायामुपदधाति, सर्व्वान दिवᳲ सर्व्वान् देवान् दिवि इति। तत्र प्रथमं मन्त्रमाह। "सर्व्वान् दिवᳲ सर्व्वान् देवान् दिवि। यच्चान्तर्भूतं प्रतिष्ठितम्। सर्व्वास्ता इष्टकाः कृत्वा। उप कामदुघा दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाङ्गिरस्वद्ध्रुवासीद" इति। कृत्स्नस्वर्गविद्युल्लोकं तस्मिन्नवस्थितान् 'सर्व्वान्' अपि 'देवान्' अन्यदपि तस्य लोकस्यान्तर्विद्यमानं स्थिरत्वेन 'स्थितं, 'सर्व्वास्ता इष्टकाः कृत्वा' इति पूर्व्ववत्॥

(२) अथ द्वितीयमाह। "यावतीस्तारकाः सर्व्वाः। वितता रोचने दिवि। सर्व्वास्ताः" इति। 'दिवि' द्युलोके 'रोचने' प्रकाशमाने, तत्तन्मण्डले यावंत्यः 'तारकाः' 'विततः' सन्ति॥

(३) अथ तृतीयमाह। "ऋचो यजूꣳषि सामानि॥१॥ अथर्वाङ्गिरसश्च ये। सर्व्वास्ताः" इति। अथर्वणा अङ्गिरसा च महर्षिणा दृष्टाः मन्त्राः चतुर्थवेदे समाम्नाताः 'अथर्वाङ्गिरसः'॥

(४) चतुर्थमाह। "इतिहासपुराणञ्च। सर्व्वदेवजनाश्च ये। सर्व्वास्ताः" इति। 'इतिहासः' भारतादिः। 'पुराणं' ब्राह्म्येत्यादि। सर्व्वेष्वेव देवाकारा मनुष्याकाराश्च 'सर्व्वदेवजनाः'॥

(५) अथ पञ्चममाह। "ये च लोका ये चालोकाः। अन्तर्भूतं प्रतिष्ठितम्। सर्व्वास्ताः" इति। 'लोकाः' प्राणिनिवासस्थानविशेषाः भूरादयोलोकाः। 'अलोकाः' प्राणिनिवासरहिताः लोकालोकपर्वताद्बहिर्द्देशाः। यदपि लोकेष्वन्तर्विद्यमानस्थैर्येणावस्थितं॥

(६) अथ षष्ठमाह। "यच्च ब्रह्म यच्चाब्रह्म। अन्तर्ब्रह्मन् प्रतिष्ठितम्॥२॥ सर्व्वास्ताः" इति। 'ब्रह्म' वेदः। 'अब्रह्म' पौरुषेयग्रन्थाः। 'अन्तर्ब्रह्मन्' च इदं मध्ये 'प्रतिष्ठितं' कर्म्मज्ञानञ्च॥

(७) अथ सप्तममाह। "अहोरात्राणि सर्व्वाणि। अर्द्धमासाꣳश्च केवलान। सर्व्वास्ताः" इति। मासरूपेण सङ्गीभू-

ता न भवन्ति। किन्तु शुक्ल कृष्णपक्षरूपेण विशेषाकारा ये ते 'केवलाः' 'अर्द्धमासाः'॥

(८) अथाष्टममाह। "सर्व्वानृतूनृतून्सर्व्वान्मासान्। संवत्सरञ्च केवलम्। सर्व्वास्ताः" इति। युगरूपेण स्थूलोभावं अप्राप्य प्रभवविभवादि विशिष्टाकारेणैव विवर्त्तितः। केवलः संवत्सरः॥

(९) अथ नवममाह। "सर्व्वं भूतं सर्व्वं भव्यम्। यच्चातोऽधिभविष्यति। सर्व्वास्ता इष्टकाः कृत्वा। उप कामदुघा दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाङ्गिरस्वद्ध्रुवासीद" इति॥४॥ 'भूतं' अतीतं, 'भव्यं' वर्त्तमानं, 'अतः' उभयस्मात्, 'अधि' उपरि, 'यद्भविष्यति' त्रिविधकालवर्त्तिजगद्रूपाः, ताः सर्व्वाः 'कामदुघा' 'इष्टकाः' कृत्वा उपदधे इष्टके 'तेनर्षिणा' मन्त्रदर्शिना, 'तेन ब्रह्मणा' मन्त्रेण तया त्वदभिमानिन्या 'देवतया' उपहिता त्वमङ्गिरोभिः उपहिते च निश्चला अत्र तिष्ठ॥

इति अष्टमोऽनुवाकः।

---

अथ नवमोऽनुवाकः।

(१) अभ्यन्तरलेखाया मुपधानार्था मन्त्रा अष्टमेऽभिहिताः। नवमे ब्रह्मणा पठनीया मन्त्रा उच्यन्ते। यदुक्तं बोधायनेन। दक्षिणाकाले ब्रह्मासदस्यांसीनो वैश्वसृजं व्याचष्टे ऋचां प्राचीमहतीदिगुच्यते इति ऋचुपचोऽर्द्धर्चशो ब्राह्मणं वाक्यशस्तस्मा

अध्वर्युः प्रतिगृणात्यों ब्रह्मन्। ऋतं ब्रह्मन् सत्यं ब्रह्मन् इति। तत्र प्रथमं मन्त्रमाह। "ऋचां प्राची महती दिगुच्यते। दक्षिणामाहुर्यजुषामपाराम्। अथर्वणामङ्गिरसां प्रतीची। साम्नामुदीची महती दिगुच्यते" इति। ऋगभिमानिदेवतानां प्राचीदिक्प्रियेत्यभिज्ञैः 'उच्यते', अत एव सा दिक् 'महती'। यजुरभिमानिदेवतानां दक्षिणादिक्प्रिया, सा च पाररहिता अतिविस्तीर्णा। अथर्वाङ्गिरोनामकद्विविधमन्त्राभिमानिदेवतानां प्रतीचीदिक्प्रिया। सामाभिमानिदेवतानां उदीचीदिक्प्रिया, सा च 'महती' गुणैरभ्यधिका। एताश्चतुर्वेदाभिमानिदेवता आदित्यस्य प्राच्यादिदिक्षवस्थाय सेवन्ते। एतच्छन्दोगा असौ वा आदित्यो देवो मध्वित्यस्यां मधुविद्यायां बहुप्रपञ्चेनामनन्ति॥

(२) अथ द्वितीयमाह। "ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः" इति। 'दिवि' वर्त्तमान आदित्यो देवः, 'पूर्वाह्णे' काले ऋग्देवताभिः सह गच्छति। 'अह्नः' मध्यमे भागे यजुर्वेद देवतायाः समीपे अवतिष्ठते। 'अस्तमयकाले' सामवेददेवतया पूज्यते। तदेवं त्रिभिर्वेदैरभियुक्तः 'सूर्यः' सर्व्वदा गच्छति॥

(३) अथ तृतीयमाह। "ऋग्भ्यो जाताꣳ सर्वशो मूर्त्तिमाहुः। सर्व्वा गतिर्याजुषी हैव शश्वत्॥ १॥ सर्व्वं तेजः सामरूप्यꣳ ह शश्वत्। सर्व्वꣳ हेदं ब्रह्मणा हैव सृष्टम्" इति।

या या 'मूर्त्तिः' आदित्यस्य वा देवतान्तरस्य वा तां सर्वाम-प्यभिज्ञा 'ऋग्भिः' सम्पाद्यां 'आहुः'। या या 'गतिः' प्राणिनां विद्यते सा 'शश्वत्' सर्वदैव, 'याजुषी' 'हैव' यजुषैव सम्पादिता। यद्यत् 'तेजः' देहेषु विद्यते तत् 'सर्वं' 'शश्वत्' सर्वदा 'साम-रूप्यं' ह साम्नैव निरूपणीयं। तदेतं सर्वमपीदं दृश्यमानं जगत् 'ब्रह्मणा' 'हैव' वेदेनैव 'सृष्टं'॥

(४) अथ चतुर्थमाह। "ऋग्भ्यो जातं वैश्यं वर्णमाहुः। यजुर्वेदं क्षत्रियस्याहुर्योनिम्। सामवेदो ब्राह्मणानां प्रसूतिः। पूर्व्वे पूर्व्वेभ्यो वच एतदूचुः" इति। यथा देवव्यवहारस्य सर्व्वस्य हि वेदत्रयमेव कारणं एवं मनुष्यव्यवहारस्यापि इति 'एतद्' 'वचः' 'पूर्व्वे' सृष्ट्यादावुत्पन्ना महर्षयः। 'पूर्व्वेभ्यः' तदानीन्तनेभ्यः स्वशिष्येभ्य 'ऊचुः'॥

(५) अथ पञ्चममाह। "आदर्शमग्निं चिन्वानाः। पूर्व्वे विश्वसृजोऽमृताः। शतं वर्षसहस्राणि। दीक्षिताः सत्रमासत" इति॥ २॥ सर्व्वैर्दर्शनीयं सर्वाग्निं 'चिन्वानाः' पूर्व्व-कल्पवर्त्तिनो वर्त्तमानस्य त्रिकस्य स्रष्टारः, 'अमृता' देवाः, 'दीक्षिताः' सन्तः लक्षसंख्याकान् संवत्सरान् सत्रमन्वतिष्ठन्॥

(६) अथ षष्ठमाह। "तप आसीद्गृहपतिः। ब्रह्म ब्रह्माभवत् स्वयम्। सत्यꣳ ह होतैषामासीत्। यद्विश्वसृज आसत" इति। 'तप' आदि शब्दाः तदभिमानिदेवतावाचकाः। तस्मिन् विश्वसृजां सत्रे तपः 'गृहपतिः' यजमानेषु मुख्यः 'आसीत्'। 'ब्रह्म' मन्त्रजातं ब्रह्माख्यऋत्विग् 'आसीत्'। 'यत्'

सत्यवदनं 'विश्वसृजः' अनुष्ठितवन्तः। तदेव 'सत्यं' एषां विश्व-सृजां होताख्यऋत्विग् आसीत्॥

(७) अथ सप्तममाह। "अमृतमेभ्य उदगायत्। सहस्रं परिवत्सरान्। भूतꣳ ह प्रस्तोतैषामासीत्। भविष्यत् प्रति चाहरत्" इति। यदेतत् 'अमृतं' देवैः पेयं पीयूषं तदेतत् 'एभ्यः' विश्वसृड्भ्यः सहस्र, सङ्ख्याकान् 'परिवत्सरान्', उद्गाता-भूत्वा औद्गात्रमकरोत्। यत् 'भूतं' अतीतकालस्वरूपं, तत् 'एषां' विश्वसृजां प्रस्तोताख्यऋत्विग् 'आसीत्'। यत् तु 'भविष्यत्'कालरूपं तत् प्रतिहर्ता भूत्वा प्रतिहरणाख्य-सामांशगानरूपं कर्म्म अकरोत्॥

(८) अथाष्टममाह। "प्राणो अध्वर्य्युरभवत्। इदꣳ सर्वꣳ सिषासताम्॥ ३॥ अपानो विद्वानावृतः। प्रतिप्रातिष्ठदध्वरे" इति। 'इदं' 'सर्व्वं' कृत्स्नमेतत् सत्रं 'सिषासतां' अन्तपर्य्यन्तं कर्त्तुमिच्छतां विश्वसृजां, 'प्राणः' वायुरेव 'अध्वर्य्युरभवत्'। योऽयं 'अपान'वायुः, 'विद्वान्' प्रयोगाभिज्ञः, सोऽयं 'आवृतः' साकल्येन आर्त्विज्यार्थं वृतः सन्, 'अध्वरे' सोमयागे, स्वयं प्रति-प्रस्थाता भूत्वा 'प्रतिप्रातिष्ठत्' प्रतिप्रस्थातृकर्म्म अकरोत्॥

(९) अथ नवममाह। "आर्त्तवा उपगातारः। सद-स्या ऋतवोऽभवन्। अर्द्धमासाश्च मासाश्च। चमसाध्वर्य्यवोऽभ-वन्" इति। 'आर्त्तवाः' तत्तदृतुयोग्याः पदार्थाः 'उप-गातारः' 'अभवन्'। सामगेषु गायत्सु तदुत्साहार्थं हो इति शब्दमुच्चारयन्तः 'उपगातारः', ये तु वसन्तादयः 'ऋतवः', ते

'सदस्याः' यज्ञसदस्यवस्थिता बहुविधा ब्राह्मणाः कर्मोपदेष्टारः, 'अभवन्'। चतुर्विंशतिः 'अर्द्धमासा' द्वादशमासाश्चमसैर्होतारः 'चमसाध्वर्युसञ्ज्ञका 'अभवन्' ॥

(१०) अथ दशममाह। "अशंसद्ब्रह्मणस्तेजः। अच्छावाको-ऽभवद्यशः। ऋतमेषां प्रशास्तासीत्। यद्विश्वसृज आसत" इति। ॥ ४ ॥ विश्वसृजां यत् 'तेजः' तद्ब्राह्मणाच्छंस्याख्यऋत्विग्भूत्वा ब्रह्मसम्बन्धिशास्त्राणि 'अशंसत्'। विश्वसृजां सम्बन्धि यत् 'यशः', तत् 'अच्छावाकाख्यऋत्विग्' 'आसीत्'। विश्वसृजां सम्बन्धियदृ-ताख्यं मानसं यथार्थचिन्तनं तदेषामृत्विजां प्रशास्त्राख्य-ऋत्विग् 'आसीत्' ॥

(११) अथैकादशमाह। "ऊर्ग्राजानमुदवहत्। ध्रुवगोपः सहोऽभवत्। ओजोभ्यष्टौद्ग्रावणः। यद्विश्वसृज आसत" इति। या इयं 'ऊर्ग्' विश्वसृजां सम्बन्धीरसः, सोऽयं 'राजानमुदवहत्' आसन्दीरूपेण सोममूर्द्धं धृतवान्। यदेषां 'सहः' बलं तत् 'ध्रुवगोपनामकः' भूत्वा ध्रुवाख्यग्रहस्य रक्षकः 'अभवत्'। 'विश्व-सृजः' 'यदोजः' सामर्थ्यं 'आसत' सम्पादितवन्तः तत् 'ओजः' ग्रावण्स्तदाख्यऋत्विग्भूत्वा अभिषवहेतूनां ग्रावणां स्तुतिमकरोत् ॥

(१२) अथ द्वादशमाह। "अपचितिः पोत्रीयामयजत्। नेष्ट्रीयामयजत्त्विषिः। आग्नीध्राद्विदुषी सत्यम्। श्रद्धा हैवा-यजत्स्वयम्" इति। येयं विश्वसृजां 'अपचितिः' पूजा सेयं पोत्राख्यऋत्विग्भूत्वा पोतृसम्बन्धिनीं याज्यां पठितवान्। या च विश्वसृजां 'त्विषिः' दीप्तिः, सेयं नेष्ट्राख्यऋत्विग्भूत्वा नेष्टृस-

स्विनीं याज्यामपठत्। या विश्वसृजां 'श्रद्धा' सा 'स्वयं' आग्नीध्राख्यऋत्विग्भूत्वा 'आग्नीध्रात्' निमित्तभूतात् यत्' 'सत्यं' अवश्यानुष्ठेयं कर्म तत् 'विदुषी' सती 'अयजत्' याज्यामपठत्॥

(१३) अथ त्रयोदशमाह। "इरा पत्नी विश्वसृजाम्। आकूतिरपिनड्ढविः॥ ५॥ इध्मꣳ ह क्षुच्चैभ्य उग्रे। तृष्णा चावहतामुभे" इति। येयं 'इरा' अन्नभूता सेयं 'विश्वसृजां' 'पत्नी' बभूव। येयं 'आकूतिः' एषां सङ्कल्परूपा सेयं 'हविः' 'अपिनट्' दासीभूत्वा पेषणमकरोत्। या 'क्षुत्' या च 'तृष्णा' ते उभे उग्ररूपे सत्यौ 'इध्मं' 'आवहतां' भारेण समानीतवत्यौ॥

(१४) अथ चतुर्दशमाह। "वागेषाꣳ सुब्रह्मण्यासीत्। छन्दोयोगान् विजानती। कल्पतन्त्राणि तन्वानाहः। सꣳस्थांश्च सर्वशः" इति। येयं 'एषां' विश्वसृजां 'वाक्' सेयं सुब्रह्मण्याख्या देवता 'आसीत्', तदुपलक्षितः सुब्रह्मण्याख्यऋत्विग् अपि 'आसीत्'। कीदृशी 'सुब्रह्मण्या'। 'छन्दोयोगान्' 'विजानती', गायत्र्यादिछन्दसां सम्बन्धिविशेषान् विजानती, तथा 'कल्पतन्त्राणि' कल्पेषु प्रोक्तान् प्रयोगविशेषान्, 'अहः' 'संस्थांश्च' अग्निष्टोमोक्थ्यादिरूपान् सर्वात्मना 'तन्वाना' विस्तारयन्ती॥

(१५) अथ पञ्चदशमाह। "अहोरात्रे पशुपाल्यौ। मुहूर्त्ताः प्रेष्या अभवन्। मृत्युस्तदभवद्धाता। शमितोग्रो विशां पतिः" इति॥६॥ यावेतौ अहोरात्राख्यौ कालविशेषौ तावत्रापेक्षितानां पशूनां पालकौ सम्पन्नौ। ये च मुहूर्ताख्याः कालविशेषाः ते

नानाविधेषु व्यापारेषु प्रेषणीयाः पुरुषाः 'अभवन्'। 'तत्' तस्मिन् सत्रे योऽयं 'मृत्युः' सोऽयं 'शमिता' अभवत्। कीदृशः 'शमिता', 'ध्राता' यथा पशुः शब्दं न करोति तथा तन्मुखं धारयितुं समर्थः, अतएव 'उग्रः', सत्रोपयुक्तानां 'विशां' प्रजानां 'पतिः' अमारणेन पालकः॥

(१६) अथ षोडशमाह। "विश्वसृजः प्रथमाः सत्रमासत। सहस्रसमं प्रसुतेन यन्तः। ततो ह जज्ञे भुवनस्य गोपाः। हिरण्मयः शकुनिर्ब्रह्मनाम" इति। पूर्व्वेषु मन्त्रेषु लक्षसंवत्सरसत्रं निरूपितं। उत्तरेषु मन्त्रेषु सहस्रसंवत्सरसत्रं निरूप्यते। विश्वं सृजन्तीति 'विश्वसृजः', ते च 'प्रथमाः' सृष्ट्यादावुत्पन्नाः, 'सत्रं' अनुष्ठितवन्तः। कीदृशं सत्रं, 'सहस्रसमं' सहस्रसङ्ख्याकाः समाः संवत्सरा यस्मिन् सत्रे तत् सहस्रसमं। किं कुर्व्वन्तः, 'प्रसुतेन यन्तः' प्रतिदिनमभिषुतः सोमः प्रसुतः सो नानुतिष्ठन्तः। 'ततः' संवत्सरसत्रानुष्ठानात्, 'शकुनिः' 'जज्ञे' ज्ञानशक्तिक्रियाशक्तिरूपद्वयवान् पंची समुत्पन्नः। स च 'भुवनस्य गोपाः' सर्व्वस्य लोकस्य पालकः, 'हिरण्मयः' ज्योतिर्म्मयः, 'ब्रह्मेति' तस्य 'नाम'। परब्रह्मैव विश्वसृजामनुष्ठानं पालयितुं हिरण्मयशकुनिरूपं स्वीचकार, तं हिरण्यगर्भ इत्याचक्षते। तथा च मन्त्रान्तरमाम्नायते, हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् इति॥

(१७) अथ सप्तदशमाह। "येन सूर्य्यस्तपति तेजसेद्धः। पिता पुत्रेण पितृमान् योनियोनौ। नावेदविन्मनुते तं बृह-

न्तम्। सर्व्वानुभूमात्मानꣳ सम्पराये" इति। 'येन' परब्रह्म-रूपेण, 'तेजसा' चैतन्येन, 'इद्धः' प्रकाशितः सन्, 'सूर्य्यः' लोके 'तपति', अतएव ज्योतिषां ज्योतिरित्युपनिषद्याम्नायते। किञ्च 'येन' 'तेजसेद्धः' प्रकाशितः, 'पिता' 'योनियोनौ' तत्तज्जन्मनि 'पुत्रेण' युक्तो भवति। पुत्रश्च 'पितृमान्' भवति, सूर्य्यतापः पितृपुत्रादिव्यवहारः, सर्व्वोऽपि परब्रह्माधीन इत्यर्थः। 'सर्व्वानुभूं' सर्व्वस्य जगतः साक्षित्वेन प्रकाशकत्वादनुभवितारं, 'तं', 'बृहन्तं' परिपूर्णं परमात्मानं, 'सम्पराये' परलोकगमनवेलायां, 'अवेदवित्', 'न मनुते' अजानाति, तस्य वेदव्यतिरिक्तप्रमाणान्तरागोचरत्वात्॥

(१८) अथाष्टादशमाह। "एष नित्यो महिमा ब्राह्मणस्य। न कर्म्मणा वर्द्धते नो कनीयान्॥ ७॥ तस्यैवात्मा पदवित्तं विदित्वा। न कर्म्मणा लिप्यते पापकेन" इति। 'ब्राह्मणस्य' परब्रह्मरूपस्य यो 'महिमा', सत्यं ज्ञानमनन्तं ब्रह्मेति प्रतिपादितस्वरूपविशेषः, स 'एष नित्यः' विनाशरहितः। तत् कथमिति तदेवोच्यते। ज्योतिष्टोमाश्वमेधादिरूपेण पुण्येन 'कर्म्मणा' 'न' 'वर्द्धते' नोत्कृष्टं जन्म प्राप्नोति। महापातकोपपातकरूपेण 'कर्म्मणा' 'नोकनीयान्' निकृष्टं जन्म न प्राप्नोति। 'तस्यैव' ब्रह्मणः, 'पदवित्' स्वरूपज्ञानी, 'तस्यैवात्मा' भवति, ब्रह्मवित् ब्रह्मैव भवतीत्यादि श्रुतिभ्यः। अतः 'तं' बृहन्तं परमात्मानं वेदमुखात् 'विदित्वा' 'पापकेन' अत्यन्तकुत्सितेन 'कर्म्मणा' 'न' 'लिप्यते'। पुण्यं पापं चेत्युभयमपि कर्म्म शरीरप्रदत्वादत्यन्त-

कुत्सितं तदुभयलेपस्तत्वविदो नास्ति। तदेवं विश्वसृजां सहस्र-संवत्सरप्रसङ्गेन परमार्थत्वं निरूपितं मन्त्रास्तु समाप्ताः॥

(१९) अथ सहस्रसंवत्सरसत्रस्वरूपप्रतिपादकं ब्राह्मण-मुच्यते। "पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः। पञ्चपञ्चाशतः पञ्चदशाः। पञ्चपञ्चाशतः सप्तदशाः। पञ्चपञ्चाशत एक-विंशाः। विश्वसृजाꣳ सहस्रसंवत्सरम्" इति। सार्द्धशत-द्वयसंवत्सराः सहस्रचतुर्थांशरूपाः, 'त्रिवृतः' कार्य्याः त्रि-वृत्स्तोमयुक्तेन सोमयागेन तावन्तः 'संवत्सराः' नेतव्याः, सोऽयं सहस्रसंवत्सरसत्रस्यैकोऽशः। पुनस्तावन्त एव संवत्सराः 'पञ्चदश'स्तोमयुक्तेन सोमयागेन नेतव्याः, सोऽयं द्वितो-यांशः। पुनरपि तावन्तः संवत्सराः 'सप्तदश'स्तोमयुक्तेन सोमयागेन नेतव्याः, सोऽयं तृतीयांऽशः। पुनरपि तावन्तः संवत्सराः 'एकविंश'स्तोमयुक्तेन सोमयागेन नेतव्याः, सोऽयं चतुर्थोऽशः। तदेतत् सर्व्वं मिलित्वा 'विश्वसृजां' देवानां सहस्रसंवत्सरसत्रमित्युच्यते॥

(२०) तस्य सत्रस्य विश्वनिष्पत्तिहेतुत्वं दर्शयति। "एतेन वै विश्वसृज इदं विश्वमसृजन्त। यद्विश्वमसृजन्त। तस्माद्विश्व-सृजः" इति। पुरा 'विश्वसृजः' देवाः, 'एतेन' एव सत्रेण, सत्य-सङ्कल्पाः सन्तः 'विश्वं' सर्व्वं जगत्, 'असृजन्त'। यस्मात् सत्य-सङ्कल्पाः सत्यसङ्कल्पमात्रेणेदं 'विश्वमसृजन्त' 'तस्मात्' एते 'विश्वसृजः' इत्यभिधीयन्ते॥

(२१) तदेवं संवत्सरसत्रं प्रशंस्य मनुष्यान् प्रतिविधत्ते।

"विश्वमेनाननु प्रजायते। ब्रह्मणः सायुज्यꣳ। सलोकतां यन्ति। एतासामेव देवतानाꣳ सायुज्यम्। सार्ष्टिताꣳ समानलोकतां यन्ति। य एतदुपयन्ति। येचैनत् प्राहुः। येभ्यश्चैनत् प्राहुः" इति॥ ८॥ 'ये' मनुष्याः 'एतत्' सहस्रसंवत्सरसत्रं 'उपयन्ति' अनुतिष्ठन्ति, 'ये' च अध्यापकाः एतद्ग्रन्थजातं 'आहुः'। 'येभ्यः' च शिष्येभ्यः एतद्ग्रन्थजातमाहुः, एताननुष्ठातॄनध्यापकान् शिष्यांश्च 'अनु'सृत्य'विश्वं' 'प्रजायते'। तत्रानुष्ठातारः साक्षाद्विश्वस्य कर्त्तारः अध्यापकास्तदनुष्ठानद्वारा कर्त्तारः शिष्यास्तु प्रथमतस्तदनुष्ठान-प्रकारान्तरं विदित्वा तथानुष्ठाय पश्चाद्विश्वस्य कर्त्तारः तदेवं साक्षात् परम्परया वा तान् सर्व्वाननुसृत्य विश्वं प्रजायते। किञ्च देहपातादूर्द्ध्वं 'ब्रह्मणः' चतुर्मुखस्य, 'सायुज्यं' तादात्म्यं, 'सलो-कतां' समानलोकनिवासं, वा प्राप्नुवन्ति। किञ्च 'एतासामेव' आदित्यानां 'देवतानां', 'सायुज्यं' तादात्म्यं, 'सार्ष्टितां' समानै-श्वर्य्योपेतत्वं, 'सलोकतां' समानलोकनिवासं, वा प्राप्नुवन्ति। तत्र कर्म्मानुष्ठानात् वृत्तितारतम्यानुसारेण फलभेदो द्रष्टव्यः। यदेतद्दर्शपौर्णमासादि सहस्रसंवत्सरान्तं कर्म्मजातमुक्तं, तस्य सर्व्वस्य वैकल्यपरिहारार्थं पुरुषार्थपर्य्यवसानार्थञ्च दर्शयितुं परतत्त्वप्रतिपादकं प्रणवमन्त्रं पठति ओमिति। अतएव महर्षय आहुः——

यस्य स्मृत्या च नामोक्त्या तपो यज्ञक्रियादिषु।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतं॥

ब्रह्मार्पणं ब्रह्मह‌विर्ब्रह्माग्नौ ब्रह्मणाहुतं।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्म समाधिना इति ॥

अत्र मीमांसाषष्ठाध्यायस्य सप्तमपादे चिन्तितं।

सहस्रसंवत्सरं सत्रं गन्धर्वादेर्नृणामुत।
रसायनेन सिद्धानां कुलकल्पोऽथवोक्तितः॥
तदायुर्वाथमासूर्द्धदिनतानामुतमाससगा।
वत्सरोक्तिस्तद्द्वादशरात्रिषु दिनेषु वा॥
आद्योदीर्घायुषः सत्वात् नृणामेवाग्निसम्भवे।
द्वितीयोऽस्तु रसस्यायुर्हेतुत्वे तृतीयकः॥
कृत्स्नकर्त्तुः फलित्वेऽस्तु तुर्य्योऽर्थासम्भवे सति।
पञ्चमोऽस्तु चतुर्विंशत्युत्तमाः सत्रिणो यदि॥
षष्ठोऽस्तु यो मास एष संवत्सर इतीरणात्।
सहस्रमासानाधानादूर्द्धं चेदस्तु सप्तमः॥
वत्सरप्रतिमाद्वादशरात्रय इति श्रुतेः।
न रात्रिस्वब्दशब्दोऽत्र प्रतिमाया विशेषणात्॥
स्वारस्यात्त्रिवृदाद्युक्तेरष्टमः पत्र दृश्यते।
त्रिवृदादिपदैः स्तोमविशिष्टमह उच्यते॥
नाहः स्वङ्गः ततोऽहःसु गौणी संवत्सराभिधा।
तस्मादिश्वसृजां सत्रे सहस्रदिनमिष्यते॥

इदमाम्नायते। पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः। पञ्चपञ्चाशतः पञ्चदशाः। पञ्चपञ्चाशतः सप्तदशाः। पञ्चपञ्चा-

शत एकविंशाः। विश्वसृजाᳪ सहस्रसंवत्सरं इति। तत्र स-
हस्रसंवत्सरसत्रे गन्धर्वादीनामेवाधिकारः, तेषां दीर्घायुषः
सद्भावादित्याद्यः पक्षः वसन्ते ब्राह्मणोऽग्निमादधीत, इत्या-
दिविधानात् मनुष्याणामेव आहवनीयाद्यग्नयः सम्भवन्ति,
नान्येषां गन्धर्वादीना इति चेत्। तर्हि रसायनेन सिद्धानां
दीर्घायुषां मनुष्याणां अधिकार इत्यस्तु द्वितीयः पक्षः।
रसस्यारोग्यपुष्ट्यादिजनकत्वमेव न त्वायुर्हेतुत्वं इति चेत्। तर्हि
एकस्मिन् कुले समुत्पन्नानां पितृपुत्रपौत्रादीनां बहूनां सह-
स्रायुः सम्भवात् कुलाधिकारः, तृतीयः पक्षोऽस्तु, कृत्स्नकर्त्तुः
फलं भवति। न च पितृपुत्रादिषु एकोऽपि कृत्स्नं करोति
तस्मात् नास्ति फलं इति चेत्। तर्हि सत्रविधायकवचनबला-
देव सत्रिणां दीर्घायुर्भविष्यति इति चतुर्थः पक्षोऽस्तु। नहि
अस्य वचनस्य सोऽर्थः सम्भवति तद्वाचकपदाभावात्, न च
कल्पयितुं शक्यते, सम्भावितायुष्याणामपि सत्रान्तरेषु प्रवृ-
त्तानां दैवात् म्रियमाणानां तत् तत् सत्रविधिबलात् आयु-
र्वृद्ध्यदर्शनात् इति चेत्। तर्हि पञ्चपञ्चाशत इत्यस्य शब्दस्य
पुरुषपरत्वं अङ्गीकृत्य सार्द्धद्विशतानां पुरुषाणामधिकारेऽभिहिते
वत्सरचतुष्टयेन सत्रस्य सहस्रसंवत्सरत्वं सम्पद्यते इति पञ्चमः
पक्षोऽस्तु। चतुर्विंशति परमाः सत्रमासीरन् इति वचनात्
अभ्यधिकानां न तत्राधिकार इति चेत्। तर्हि यो मासः स
संवत्सर इति वचनात् संवत्सरशब्दस्य मासपरत्वे सति सहस्र-
मासं सत्रमित्येष षष्ठः पक्षोऽस्तु। अष्टमे वत्सरे उपनीतो द्वादश-

वर्षाणि वेदमधीत्य विंशतिवयस्को विवाहं कृत्वा जातपुत्रोऽग्निमादधीत तस्मात् आधानादूर्द्धमस्यायूंषि न सन्ति सहस्रं मासा इति चेत्। तर्हि संवत्सरप्रतिमा वै द्वादशरात्रय इति वचनात् संवत्सरशब्दो द्वादशरात्रिपरः तथा सति रात्रीणां द्वादश सहस्राणि सम्पद्यन्ते। तासु च रात्रिषु षष्ठ्युत्तरशतत्रयदिवसरूपसंवत्सरत्वेन गण्यमानासु त्रयस्त्रिंशत् संवत्सरेभ्य ऊर्द्धमासचतुष्टयं भवति। तावत् परिमितं आयुराधानादूर्द्धमपि सम्भवति इति सप्तमः पक्षोऽस्तु। संवत्सरप्रतिमा वै द्वादशरात्रय इत्यस्मिन् वाक्ये संवत्सरशब्दो न रात्रिपरः किन्तु तेन शब्देन प्रतिमा विशेष्यते, तस्मात् सप्तमः पक्षोऽयुक्त इति चेत्। एवं तर्हि संवत्सरशब्दोऽपि दिनपर इति अष्टमः पक्षोऽस्तु। तथा सति त्रिवृतः संवत्सरा इत्यादिवाक्यानां स्वारस्यं भवति त्रिवृत्पञ्चदशः सप्तदश एकविंश इत्येते शब्दाः स्तोमवाचकाः सन्तः स्तोमयुक्तएकैकस्मिन् अहनि यागरूपे लक्षणया वर्त्तन्ते, सत्रेषु तथाविधप्रयोगबाहुल्यात्, नतु सत्रे क्वचिदपि त्रिवृदादिशब्दाः प्रयुक्ताः, तैश्च शब्दैः सामानाधिकरण्यात् संवत्सरशब्दः स्वावयवभूतेऽहनि लक्षणया वर्त्तते। त्रिवृतः संवत्सरा इत्युक्ते त्रिवृत्स्तोमकयागयुक्तानि अहानि इत्युक्तं भवति। तस्माद्विश्वसृजां ऋषीणां इदं सत्रं सहस्रदिनं इति राद्धान्तः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्दिव्ययोगीन्द्र-श्रीविद्यातीर्थमुनीश्वरापरावतार-श्रीमद्राजाधिराजपरमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कमहाराजस्याज्ञापालकेन माधवमात्येन विरचिते वेदार्थप्रकाशे यजुर्ब्राह्मणे तृतीयकाण्डे द्वादशप्रपाठके नवमोऽनुवाकः॥ ९ ॥

॥*॥ समाप्तश्च प्रपाठकः ॥*॥ समाप्तञ्च काण्डम् ॥*॥

संवत् १८५१ आश्विन शुद्ध १ गुरौ तद्दिने लिखितं ॥

---

# तैत्तिरीय-ब्राह्मण-तृतीयकाण्डस्य सूचीपत्रम्।

---

## प्रथमप्रपाठके नक्षत्रेष्ट्युक्तिः।

### १ अनुवाके देवनक्षत्रयाज्यानुवाक्याकथनम्।

विषयः। पृष्ठे।



---

२ अनुवाके यमनक्षत्रेष्टिगतयाज्यानुवाक्योक्तिः।

---

## ३ अनुवाके चान्द्रमसादीष्टियाज्यानुवाक्याकथनम्।

---

## ४ अनुवाके देवनक्षत्रेष्टिविधानम् ।

---

## ५ अनुवाके यमनक्षत्रेष्टिविधिः।



---

## ६ अनुवाके चन्द्रमायुज्यादिप्रापकेष्टिविधिः।



---

# द्वितीयप्रपाठके दर्शयागविधिः।

## १ अनुवाके वत्सापाकरणम्।

२ अनुवाके बर्हिराहरणम्।

३ अनुवाके अमावास्यारात्रिकर्त्तव्यदोहोक्तिः।

---

## ४ अनुवाके हविर्निर्वापकथनम्।

---

## ५ अनुवाके व्रीहितुषापनयनार्थोऽवघातः ।

विषयः । पृष्ठं ।

---

६ अनुवाके तण्डुलपेषणम्।

विषयः पृष्ठे ।



---

७ अनुवाके कपालोपधानम् ।

---

## ८ अनुवाके कपालेषु पुरोडाशश्रपणम्।

D

---

९ अनुवाके वेद्युक्तिः।

---

१० अनुवाके प्रोक्षिण्यासादनादिकर्तव्यम्।

## तृतीयप्रपाठके पौर्णमासेष्टिः।

### १ अनुवाके आज्यहविर्ग्रहणम्।

विषयः । पृष्ठे ।



---

४ अनुवाके आज्याधिश्रयणोक्तिः ।

---

५ अनुवाके आज्यावेक्षणं ग्रहणञ्च ।

---

६ अनुवाके इध्मबर्हिःपूर्वकहविरासादनम् ।

---

७ अनुवाके प्रज्वलिताग्नौ होतुं आघाराख्याज्यभागद्वयस्योक्तिः।

---

८ अनुवाके इडाभक्षणपुरोडाशादिविध्युक्तिः।

विषयः। पृष्ठं।

## ९ अनुवाके स्रुग्व्यूहनादिकार्योक्तिः ।

## १० अनुवाके पत्नीविषयकमन्त्रोक्तिः ।

## ११ अनुवाके उपवेषपरित्यागः।



इति तृतीयप्रपाठकः।

# चतुर्थप्रपाठके नरमेधपशुकथनम् ।







५ अनुवाके कैवर्त्तादिनरपशूक्तिः ।



६ अनुवाके कुब्जादिनरपशुनिर्देशः ।



७ अनुवाके चौर्यतात्पर्ययुक्तादिनरपशुकथनम् ।



८ अनुवाके इन्धनाहर्त्रादिनरपशुनिर्देशः ।



९ अनुवाके गजपालकादिनरपशुकथनम् ।

## १० अनुवाके लोहकारादिनरपशुविस्तारः ।





## ११ अनुवाके यमप्रस्वादिनरपशुकथनम् ।





## १२ अनुवाके मत्स्यग्राह्याद्दिनरपशुविवेकः ।





## १३ अनुवाके देशराजवार्त्ताकथनशीलादिनरपशुविनियोगः ।





## १४ अनुवाके अतिनिकृष्टजातियुक्तादिनरपशुकथनम् ।





१५ अनुवाके पुंश्चल्यादिनरपशुविस्तारः ।



१६ अनुवाके द्यूतकुशलादिनरपशुकथनम् ।



१७ अनुवाके पीठसर्प्यादिनरपशुव्याहारः ।



१८ अनुवाके स्थूलशरीरादिनरपशुकथनं ।



१९ अनुवाके अतिह्रस्वादिनरपशूक्तिः ।



इति चतुर्थः प्रपाठकः ।

## ३ काण्डे ५ प्रपाठके इष्टिहौत्रमन्त्रकथनम्।

### १ अनुवाके होतृजप्यसामिधेनीमन्त्रोक्तिः।



### २ अनुवाके अवशिष्टैकादशसामिधेनीमन्त्रप्रपञ्चः।

६ अनुवाके आग्नेयाज्यभागद्वयसम्बन्धिपुरोनुवाक्योक्तिः ।



---

७ अनुवाके विशेषेण आग्नेययागसम्बन्धियाज्यानुवाक्याकथनम् ।

८ अनुवाके यजमानार्थं इडोपाह्वानविधिः।



९ अनुवाके अनूयाजमन्त्राणां कथनं।



१० अनुवाके सूक्तवाकमन्त्रोक्तिः।

१ १ अनुवाके शंयुवाकमन्त्रोक्तिः।



१ २ अनुवाके पत्नीसंयाजमन्त्रोक्तिः।

१३ अनुवाके पत्न्यर्थमृत्तरेडाया उपाह्वानं।



इति तैत्तिरीयब्राह्मणस्य पञ्चमप्रपाठकस्य सूची समाप्ता।

## ६ प्रपाठके पाशुकहौत्रनिरुक्तिः।

१ अनुवाके यूपसंस्कारः।

५३

२ अनुवाके प्रयाजविषयकमैत्रावरुणप्रैषोक्तिः ।



---

३ अनुवाके आप्रीसञ्ज्ञकप्रयाजयाज्योक्तिः ।



---

४ अनुवाके पर्यग्निकरणीयानामृचामुक्तिः ।



---

५ अनुवाके मैत्रावरुणप्रैषोक्तिः ।



---

६ अनुवाके अध्रिगुप्रैषकथनम् ।



---

७ अनुवाके स्तोकविषयकमैत्रावरुणानुवचनोक्तिः ।



---

८ अनुवाके वपापुरोडाशस्विष्टकृतां मैत्रावरुणपाठ्यप्रैष-पुरोनुवाक्योक्तिः।



९ अनुवाके वपापुरोडाशस्विष्टकृतां याज्योक्तिः।



१० अनुवाके मनोतासूक्तोक्तिः।



११ अनुवाके मैत्रावरुणप्रवक्तव्यहविर्वनस्पतिस्विष्टकृत्प्रैष-पुरोनुवाक्यानामुक्तिः।

## ७ प्रपाठके अच्छिद्रकाण्डकथनं ।



### १ अनुवाके दर्शपौर्णमासयागविषयकप्रायश्चित्तोक्तिः ।





२ अनुवाके अग्निहोत्रसान्नाय्यसाधारणप्रायश्चित्तम्।



---

३ अनुवाके मुख्याग्नेरलाभेऽनुकल्पहोमाधाराः।

विषयः। पृष्ठे।



---

४ अनुवाके ऐष्टिकयागीययजमानमन्त्रोक्तिः।

विषयः। पृष्ठे।

---

५ अनुवाके अनुक्तदर्शपौर्णमासाङ्गीभूतकतिचिन्मन्त्रोक्तिः ।

६ षष्ठेऽनुवाके चतुर्थपञ्चमानुवाकानुक्तेष्टिमन्त्राः ।

विषयः। पृष्ठे।



---

७ अनुवाके सोमाङ्गभूता दीक्षाङ्गमन्त्राः।

८ अनुवाके पशुविषयमन्त्रोक्तिः।



अनुवाके अभिषवादिविषयमन्त्रोक्तिः।

१० अनुवाके प्रायश्चित्तमन्त्रोक्तिः।

११ अनुवाके दार्शिकप्रायश्चित्तमन्त्रोक्तिः ।





१२ अनुवाके यजमानजपार्थमन्त्रोक्तिः ।





१३ अनुवाके ऋजीषप्रोक्षणकथनम् ।





१४ अनुवाके अवभृथादिषेचनमन्त्रोक्तिः ।





## ८ प्रपाठके चिराचाश्वमेधस्य प्रथमदिनकृत्यम्।



### १ अनुवाके यजमानसंस्कारकथनं।



### २ अनुवाके ब्रह्मौदनोक्तिः।

३ अनुवाके अश्वबन्धनम्।



४ अनुवाके रशनाबद्धाश्वस्यावगाहनोक्तिः।

## ५ अनुवाके अश्वप्रोक्षणोक्तिः ।



## ६ अनुवाकेऽश्वशरीरपतितविन्द्वनुमन्त्रणम् ।

७ अनुवाके अध्वर्युकर्तृकाश्वप्रोक्षणम्।





८ अनुवाके अश्वचरिताश्वरूपयोर्होमः।





## ९ अनुवाके अश्वनामवाचनाद्युक्तिः।



---

## १० अनुवाके दीक्षाभिधानम्।

---

११ अनुवाके वैश्वदेवमन्त्रव्याख्या।



---

१२ अनुवाकेऽश्वमेधचरणकाले देवयजनदेशे कर्त्तव्ये-ष्टिचयोक्तिः।



---

## १३ अनुवाके उखास्थाग्न्युपस्थानमन्त्रव्याख्योक्तिः ।



## १४ अनुवाके अन्नहोमोक्तिः ।



## १५ अनुवाके अन्नहोमप्रकारविशेषोक्तिः ।

---

१६ अनुवाके पूर्वोक्तानुवाकस्य विस्तरेण व्याख्या।



---

१७ अनुवाके अन्नहोममन्त्रानुवाकव्याख्या।



---

१८ अनुवाके अन्नहोमानुवाकावशिष्टव्याख्या।

## १६ अनुवाके यूपप्रयोगाभिधानं।

## २० अनुवाके यूपस्थानादिनिरूपणं ।



---

## २१ अनुवाके चेतव्याग्न्यादिविशेषोक्तिः ।

२२ अनुवाके अश्वमेधद्वितीयदिनकर्त्तव्यवहिष्पव-मानविशेषोक्तिः।



२३ अनुवाके अश्वे पर्य्यग्न्यपशूनियोजनं।

## ९ प्रपाठके रोहितादिपश्वालम्भनं ।



### १ अनुवाके रोहिताद्यष्टादशपश्वालम्भोक्तिः ।



### २ अनुवाके चातुर्मास्यपशुप्रयोगकथनं ।

३ अनुवाके रोहितादिपशूनां वपाहोमसाहित्योक्तिः ।



---

४ अनुवाके अश्वस्य रथयोजनाद्युक्तिः ।

५ अनुवाके ब्रह्मोद्याख्यसंवादकथनं।



६ अनुवाके मृताश्वोपचारकथनं।

विषयः । पृष्ठे ।



---

७ अनुवाके मृताश्वोपचारविषयमन्त्रोक्तिः ।

८ अनुवाके अश्वमेधतदीयपशुविषयप्रशंसा।



९ अनुवाके त्रिरात्रान्त्यदिवसीयपशूक्तिः।

## १० अनुवाके महिमाख्यग्रहोक्तिः ।



## ११ अनुवाके शरीरहोमस्विष्टकृदाहुतिकथनं ।



## १२ अनुवाके अश्वस्तोमीयहोमोक्तिः ।

## १३ सावित्रमष्टाकपालमित्याद्यनुवाकोक्तेष्टिषु संवत्सरानुष्ठानरूपविशेषकथनं ।



---

## १४ अनुवाके पूर्वानुवाकोक्तेष्टिषु गानविधिः ।



---

## १५ अनुवाके अवभृथविषयकहोमविशेषोक्तिः ।

१६ अनुवाके उपाकरणमन्त्रव्याख्यानाद्युक्तिः।

१७ अनुवाके अश्वस्य रोगादिनिमित्तकप्रायश्चित्तोक्तिः ।



---

१८ अनुवाके ब्रह्मौदनोक्तिः ।



---

१९ अनुवाके विभुत्वादिद्वादशगुणैः अश्वमेधप्रशंसा ।



---

## १० प्रपाठके सावित्रचयनोक्तिः ।



### १ अनुवाके नवसु रेखासु इष्टकोपधानोक्तिः ।

२ अनुवाके स्वयमातृणोपधानोक्तिः।



३ अनुवाके चित्युपस्थानोक्तिः।



४ अनुवाके यजमानकृतोपस्थानोक्तिः।



५ अनुवाके होतुरनुशंसनोक्तिः।



६ अनुवाके यजमानमुखविमार्जनोक्तिः।

७ अनुवाके होमविधानं।



८ अनुवाके मृत्युग्रहोक्तिः।



९ अनुवाके सावित्राग्निचयनब्राह्मणकथनं।

## १० अनुवाके सावित्राग्निविद्यावयवविशेषवेदनोक्तिः ।



## ११ अनुवाके विद्याप्रशंसा ।

## ११ प्रपाठके नाचिकेताग्निचयनोक्तिः।

### १ अनुवाके इष्टकोपधानप्रकारकथनं।



### २ अनुवाके होमविशेषमन्त्रोक्तिः।



### ३ अनुवाके होमविशेषमन्त्रोक्तिः।



### ४ अनुवाके होमविशेषमन्त्रोक्तिः।



### ५ अनुवाके होमविशेषमन्त्रकथनम्।

## ६ अनुवाके अग्न्युपस्पर्शनादिमन्त्रविशेषोक्तिः ।



---

## ७ अनुवाके नाचिकेताग्निदेवतोपासनोक्तिः ।



---

## ८ अनुवाके ब्रह्मलोकप्राप्तिलक्षणमृत्युराहित्यरूपतत्-फलस्योपाख्यानेन दर्शनं ।

---

## ९ अनुवाके नाचिकेताग्निचयनप्रयोगोक्तिः।



---

### १० अनुवाके नाचिकेताग्निचयनप्रयोगप्रशंसा ।



## १२ प्रपाठके चातुर्होत्रवैश्वसृजचयनद्वयोक्तिः ।

### १ अनुवाके चातुर्होत्रचयनविध्युक्तिः ।



---

### २ अनुवाके दिवःश्येनीष्टिकथनं ।

---

२ अनुवाके आपाद्याख्येष्टियाज्यानुवाक्याकथनं।



---

## ४ अनुवाके आपाद्याख्येष्टिकथनं ।



---

## ५ अनुवाके चातुर्होत्रचयनोक्तिः ।

---

६ अनुवाके विश्वसृजचयनोक्तिः ।



---

७ अनुवाके विश्वसृजचयने मध्यमलोकोपधानार्थमन्त्रोक्तिः ।



---

अनुवाकेऽन्तरसीमासम्बन्ध्युपधानमन्त्रोक्तिः ।



---

९ अनुवाके ब्रह्मपठनीयमन्त्रोक्तिः ।



तृतीयकाण्डस्य सूची समाप्ता ।

---